मासाभ्यां वसन्तश्च्युतः त्यक्त्वायमयवाग्निमम् ।
अतोऽथते विकल्पो हि सौरमासेषु युज्यते ॥
न तु चान्द्रेषु युक्तोऽसौ मलमासानुवर्त्तिषु ।
द्वादशैव हि ते मासाः सूर्य्यसंक्रान्तिलक्षिताः ॥
द्वौ द्वौ मासाविहैकैकमृतुं कृत्वा तु गण्यते ।
ऋतवश्च मीनाद्या मेषाद्या वा षडेव हि ॥
चान्द्रस्तु मलिने मासे प्राप्ते मासाश्रयोदश ।
विकल्पोऽपि यत्किञ्चिन्मासमारभ्य युज्यतः ॥
ऋतुषु क्रियमाणेषु मास एकोऽतिरिच्यते ।
किमसावनृतुर्मासः किमृतुः सप्तमो भवेत् ॥
प्रकृततुषु वा क्वापि प्रविशत्विति चिन्त्यते ।
ऋतुशून्यो न कालोऽस्ति नाप्यृतुः सप्तमः श्रुतौ ॥
तत्रर्त्तुस्त्वंहसस्पतिः इत्यृतुशून्यता ।
षड् वा ऋतव इत्येषा श्रुतिः सप्तमवारिका ॥
अतः श्रुतेः स्मृतिर्बाध्या द्वौ मासावृतुरित्यसौ ।
तस्मादधिकमासः स्यात्तेष्वेवर्त्तुषु कुत्रचित् ॥
यत्रैवोऽन्तर्भवेन्मासः स ऋतुः स्यात् त्रिमासिकः ।
यदा षष्टिदिनैर्मास एक एवोभयात्मकः ।
अतोऽत्रापि वसन्तत्वं स्याद्द्वयोरेव मासयोः ॥

अयनञ्च सौरमृतुत्रयेण तथा च सौरमानमधिकृत्य विष्णुधर्मोत्तरे "ऋतुत्रयञ्चायनं स्यादिति, तथाच संवत्सरोऽपि चान्द्रैर्मासैश्चान्द्रः सावनैः सावनः सौरैः सौर इति त्रिविधः। तथाचोक्तं ब्रह्मसिद्धान्ते ।

चान्द्र-सावन-सौराणां मासानान्तु प्रभेदतः ।
चान्द्र-सावन-सौराख्यास्त्रयः संवत्सरा अपि ॥

ते च द्वादशमासात्मकाः "द्वादश मासाः संवत्सर इति श्रुतेः। चान्द्रस्तु संवत्सरः कदाचित्त्रयोदशमासात्मको भवति, अस्ति त्रयोदशो मास इत्याहुरिति श्रुतेः । चान्द्रमास एव त्रयोदशमासस्य सम्भवात् ।

तथाच विष्णुधर्मोत्तरे ।

सौरसंवत्सरस्यान्ते मानेन शशिनो यदा ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ॥

चान्द्रसंवत्सरस्य चैत्रशुक्लप्रतिपदुपक्रमः ।

तथा ब्रह्मपुराणे संवत्सरारम्भविधिक्रमे ।

चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तथा सूर्य्योदये सति ॥
प्रवर्त्तयामास तथा कालस्य गणनामिह ।
ग्रहान्नागानृतून्मासान् वत्सरान् वत्सराधिपान् ॥

ब्रह्मसिद्धान्ते ।

चैत्रसितादेरुदयात् भानोर्दिन-मास-वर्ष-युग-कल्पाः सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य सौरः संवत्सरः, पुनर्मीनादिर्मेषादिर्वा वसन्तस्य विकल्पेन मीनादिलस्य मेषादिलस्य चोभयत्वात् वसन्तस्य च ऋतुमुख्यत्वात् संवत्सरमुखस्यैव ऋतुमुखत्वोपपत्तेः ।

यत्तु विष्णुधर्मोत्तरे ।

माघशुक्लसमारम्भे चन्द्रार्कौ वासवर्क्षगौ ।

जीवयुक्तौ यदा स्यातां पञ्चाब्दादिस्तदा स्मृतः ॥

इति माघशुक्लप्रतिपदुपक्रमत्वं संवत्सराणां, तज्ज्योतिःशास्त्र-प्रसिद्धशुभाशुभफलप्रतिपादनार्थं न तु धर्मानुष्ठानार्थमिति मन्तव्यं। प्रभवादिषष्टिसंवत्सराणां आदितः पञ्चानां पञ्चानां युगसंज्ञकानां यथाक्रमं संवत्सर-परिवत्सरेदावत्सरानुवत्सरोद्वत्सराख्याः ।

तथा ब्रह्मवैवर्त्ते ।

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।

इदावत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ।

उद्वत्सरः पञ्चमस्तु कालस्तु युगसंज्ञित इति ॥

तथाच कालस्य यथोक्तप्रकारेणावच्छेदसम्भवादनादिनिधनस्यापि यथायथं व्रतादिधर्मानुष्ठानात्फलमुपपद्यत इति निर्णयः क्रियते। तत्र संवत्सरादेः कालस्य संवत्सरव्रतादौ यथायथमुपयोगो द्रष्टव्यः ।

अयनस्य तु स एवाह ।

देवताराम-वाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।

दक्षिणाभिमुखे कुर्वन्न तत्फलमवाप्नुयात् ॥

सौर-सावन-चान्द्र-नाक्षत्राणां मासानां पुनः कुत्र कस्योपयोग इत्यपेक्षायामुक्तं विष्णुधर्मोत्तरे ।

एवं कालस्य सूक्ष्मस्य प्रोक्तं मासचतुष्टयम् ।

येन येन च मासेन यच्च कार्य्यं निबोध तत् ॥

अथायनर्तु-यज्ञचारकर्म्म

सौरेण मानेन सदाभ्यवस्येत् ।

यज्ञाद्युपाश्रान्यथ सावनेन

सौरस्य चस्मात् व्यवहारकर्म्म ॥
स्यात् पूर्वकालक्षयपूरणाभ्याम्
चान्द्रेण मानेन युगस्य राशेः ।
गवयवयाख्ययनानि चेन्द्रो-
मानेन कुर्य्याद्गुगणात्मकेन ॥

ऋष्यशृङ्गः ।

विवाह-व्रत-यज्ञेषु सौरं मानं प्रशस्यते ।
पार्वणेऽन्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥

ज्योतिर्गार्ग्ये ।

विवाहोत्सवं-यज्ञेषु सौरं मानं प्रशस्यते ।

तथा स्मृत्यन्तरे ।

एकोद्दिष्टविवाहादौ क्षणादौ सौर-सावनौ ।
सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः ॥

तथाच ज्योतिर्गार्ग्ये ।

सौरमासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्ये च चान्द्रोमासः प्रशस्यते ॥

'आब्दिके' सांवत्सरिकमृताहश्राद्धे । 'पितृकार्य्ये' षाण्मासिकश्राद्धादौ, चशब्दान्मास-संवत्सरसाध्ये यज्ञव्यतिरिक्ते सर्व्वस्मिन् देवकार्य्ये चान्द्रोमासः प्रशस्त इत्युक्तं ।

उक्तञ्च पितामहेन ।

दैवे कर्म्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः ॥

ब्रह्मसिद्धान्ते । -

प्रतिसंवत्सरश्राद्धे मासश्चान्द्रमसः स्मृतः॥

बृहस्पतिः।

रवेरभ्युदये मासं चान्द्रस्य पितृकर्मणि।

यज्ञे सावनमित्याहुराब्दं सर्वव्रतादिषु॥

ज्योतिर्गार्ग्यः।

आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा।

सावनेनैव कर्त्तव्या शत्रूणां वाप्युपासना॥

यथा पाण्डवैः कौरवाणां ब्रह्मसिद्धान्तात्।

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु।

संक्रान्ति-पौर्णमासाभ्यां तथैव नृप-वैश्ययोः॥

अयादिशब्दार्थः श्रीधरेण दर्शितः।

विवाहोपनयन-चूड़ा-व्रत-नियम-प्रतिष्ठा-व्रतकरण-क्षौर-यात्रा-महाषष्ठी—महासप्तमी-विजयदशमी-दशहरा-युगादि-महाज्येष्ठा—प्रभृत्यादिशब्देनोपादीयते, यज्ञादावित्यादिशब्देन याग-दान-होम-गर्भाधान-सीमन्तोन्नयन-जातकर्म-ऋण-क्रय-विक्रय-व्यवहार—ग्रहणं। तथा—"सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः" इत्यत्र पितृकृत्यादावित्यादिशब्देन राज्याभिषेक-संवत्सरश्राद्ध-पार्वणाष्टकादे-वप्रयन-चूड़ा-व्रतनियम-प्रतिष्ठा-व्रतकरण-क्षौर-यात्रा-ग्रहोत्सवा-दिग्रहणं। तथाच प्रथमराशितः प्रभृतिगोचराष्टवर्गानुसरणक्रमेण तत्तद्राशिभोगसम्बन्धेन शुभाशुभोपभोगात्।

मङ्गलेषु विवाहेषु कन्यासंवरणेषु च।

दश मासाः प्रशस्यन्ते चैत्र-पौषविवर्जिता इति॥

मासोपदेशे सौरमासाश्रयणं सावनस्य च मासस्य नियतचिंश-द्दिवसत्वाभिषेकदिवसात् प्रभृतिषु षष्ठाष्टमासेषु पुंसवनादेर्विधानात् "मासमग्निहोत्रं जुहोतीति "चातुर्मास्येन यजेतेत्यादिष्वनियतदिवस-मासपरिग्रहानुपपत्तेर्नियतपदेन सावनग्रहणं । तथा "मासि मासि पितृपितृयज्ञेन चरन्तीति । "नभस्यस्यापरे पक्षे तिथिषोड़शकाश्च यत्" इत्यादितिथिसम्बन्धेन विहितपितृकार्य्यसिताभितविधिनियम-मन्तरेण सांवत्सरिकं प्रति नियमानुपपत्तेः सर्वत्र तिथिभोगे चान्द्र-मासाश्रयणमिति । अत्र पण्डितपरितोषकृतोक्तं आदिशब्देन अव-सिताः यथा परिगणिता विवाहादयो गृहीतव्या इति कुतोऽवगतं अव्यवस्थितपदार्थबाधकप्रमाणाभावात्तथा हि सौरोद्देवशयनादिषु विहितश्चान्द्रमासाश्रयणं च द्वादश्यादितिथिविशेषेण शयनादिषु क्रियायां दृश्यते, यदाह गार्ग्यः ।

दिराषाढ़ा क्रिया तावद्यावद्विष्णोः प्रबोधनम् ।
प्रबुद्धे तु हरौ कार्य्या सूर्य्यगत्येव सा क्रिया ॥

अत्र च "विष्णुः स्वपिति कर्कट इति दिराषाढ़ेऽपि रात्रिभोग-पुरस्कारो दृश्यते, न चोपनयनान्नप्राशनादिषु सौरमास इत्यैकान्ति-कगर्भादिसंख्या वर्षाणां "गर्भाष्टमे ब्राह्मणमुपनयीतेति, "षष्ठेऽन्नप्राशनं मासि" "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी" इत्यादिगौतमव-चनैः सावनमासपुरस्काराच्च सावने मासि सितासितपक्षपरिहरण-मस्ति । सति च तिथिपरिग्रहे चान्द्रमासाश्रयणमपि शक्यते वक्तुं । किञ्च "यासौ वैशाख्यमावास्या रौहिण्या सम्पद्यते तस्यामादधीतेति चान्द्रे मासाधानविधानादृश्याद्यौ सावनविधिरनैकान्तिकः ।

विवाह-व्रत-यज्ञेषु सौरमानं प्रशस्यत इति।

यज्ञेष्वपि सौरं मानं दर्शयति।

अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्।

कन्या-कुम्भ-वृषस्थेऽर्के कृष्णपक्षेषु सर्वदा॥

कन्यायोगात्सवितरि पितृयज्ञानुशासनात्।

तावत्पितृपुरी शून्या यावद्वृश्चिकदर्शनमिति॥

सौरमानेनापि पितृकार्य्योपदेशात् न च सांवत्सरश्राद्धे चान्द्रत्वैकान्तिकं।

यस्मिन् राशौ गते सूर्य्ये विपत्तिं यान्ति मानवाः।

तेषां तत्रैव कर्त्तव्याः पिण्डदानोदकक्रियाः

इति व्याघ्रवचनं हि सौरमानं दर्शयति।

प्रचेताः पुनराह।

प्रेतमासस्य यः पक्षस्तिथौ प्रतिवत्सरम्।

यावत् स्मरति पौत्रोऽपि तेषां तत्रैव दापयेदिति॥

न च व्रतनियमादिकं सौरे क्रियते इत्यैकान्तिकं, चातुर्मास्यव्रतानां हरिशयनवशेनारम्भसमाप्त्युपदेशात् मासोपवासस्य चाश्विनपक्षशुक्लैकादश्यामुपक्रान्तस्य तथाविधैकादश्यन्तमुपवासात् सावनचान्द्रयोरेकतममपि नियतं, न च देवशयनऽश्वोत्सवादि चान्द्रमासे विहितमप्यैकान्तिकं, विष्णुः स्वपिति कर्कटे।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम्।

कन्यायामम्बिकां देवीं सिंहे चैव पुरन्दरम्॥

तस्मिन् सुप्ते यदा विष्णुस्तुलायामपि वृश्चिके।

इत्यादि बौधायनवचनबलेन हि सौरं प्रतीयते ।

यदपि पठन्ति ।

दक्षिणायनगेऽर्के ह्येतत्तवर्त्वपि युगादिषु ।

उपाकर्म तथा यच्च्या स्रोतदिष्टं वपादित इति ॥

तदप्यनैकान्तिकं प्रौष्ठपद्यां हस्तेनोपाकरणं श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधीत्यादिगोभिलादिवचनाच्चान्द्रमासावगतेः ।

यदपि पितामहवचनम् ।

कार्त्तिकस्य तु यत्स्नानं माघे मासि विशेषतः ।

कृच्छ्रादिनियमाश्चैव चान्द्रमानं प्रमाणतः ॥

इति तदनैकान्तिकं "तुला-मकर-मेषेषु प्रातःस्नानं विधीयते" इति पद्मपुराणवचनात्। न च कृच्छ्रादिनियमे चान्द्रमानमनैकान्तिकं तथा हि चान्द्रायणं प्रक्रम्य मनुः ।

यथाकथञ्चित् पिण्डानां तिस्रोऽशीतिसमाहितः ।

मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥

इति वदन् सावनमासं पुरस्करोति । "तिथिवृद्ध्या चरेत्पिण्डा-निति याज्ञवल्क्यचान्द्रायणं दर्शयति । तथा

पतितेन तु सम्पर्कं मासं मासार्द्धमेव वा ।

गोमूत्र-यावकाहारो मासार्द्धेन विशुध्यति ॥

इति सावनं मासं दर्शयति। अन्यथा तु कतिपयदिनाधिके मासंसर्गनिमित्तप्रायश्चित्तकल्पनामूलमासानुसारेण सौरचान्द्रयो-रनियतदिवसतया कल्पनानुपपत्तेर्नियतदिनसावनमासाश्रयो युज्यते। एवं वर्षमितेऽपि प्रायश्चित्ते सावनमासग्रहणं । तस्मात् सौरो मासो

विवाहादाविति। विवाहशब्देन यथापरिगणितेन विवाहादयो गृह्यन्त इत्यन्यथा वर्णनीयं। तथा हि यत्र मेषादिराशिभोगव्यपदेशेन कर्मविधिः तत्र सौरमासाश्रयणेन कर्माण्यनुष्ठेयानि, भाद्रपदादिव्यपदेशेन यदि तान्येव यथा "द्वादश्यां शुक्लपक्षे च मासि भाद्रपदे" इति,

तथा "शक्रमुत्थापयेद्राजेति, तथा "सिंहे शक्रध्वजक्रियेति। तत्र सिंहभाद्रपदयोः सामान्य-विशेषन्यायेनाविरोधादुभयसमावेशः सुकरः। यत्र सामान्येन "दश मासाः प्रशस्यन्ते चैत्र-पौषविवर्ज्जिताः" इति श्रूयते तत्र चैत्रादिशब्दानां सौर-चान्द्रसाधारणत्वात् सन्देहे विवाहे सौरराशिर्गम्यते। तद्राशिवशेन हि शुभाशुभफलं श्रूयते। "सौरोमासोविवाहादाविति वचनात् सौर एव युज्यते। सौरे च वैशाखे गृह्यमाणे यदि तत्र चित्रायुक्तपौर्णमासीसम्बन्धो दृश्यते तदा चैत्रव्यपदेशोर्हत्वात् निषेधविषयत्वं सौरस्यागमवचनीयत्वेन निषेधस्य च पौर्णमाससम्बन्धेनाप्युपपत्तेः।+ यदपि चैत्रत्वमयत्नकल्पमेव तथा "गर्भादिसङ्ख्या वर्णानामिति यद्यपि सावनपरिग्रहः तथाप्युपनयनादिषु राशिभोगजन्यशुभाशुभफलानुसारेण सौराद्युपपादनवशात् सौरपक्षोविरोधादुपपद्यत-इत्यभिप्रेत्योक्तं। "सौरमासो विवाहादाविति न पुनरन्यस्य मासस्य विवाहादौ निराकरणमवगम्यते। तथाच वराहमिहिरः। "वृहस्पतौ शोभनगोचरस्थे विवाहमिच्छन्ति हि दाक्षिणात्याः" इति वृहस्पतेः शुद्धिं वदंश्चान्द्रमासं पुरस्करोति "संवत्सरं गुरुस्तिष्ठति" "पञ्चघ्नं भूमिजः" इति च सावन-चान्द्रमानं वचनत्वेवं नियतदिवसकममासवादशावच्छिन्न-

त्वात् सावनवर्षस्य इष्टस्तिराश्विनतभोगस्य च नियतदिवसकम-मासवादप्यावच्छिन्नत्वादङ्गारकषष्ठ्यादेरपि चापेक्षितत्वात्तथाश्विभोगेऽपि चान्द्रमासग्रहणमेव तथा “संहृते भृगुतनये कन्या क्रियत इति, “इष्टस्ततौ पुष्य इत्यादिवचनं क्वचित्सावनं क्वचिच्चान्द्रमानं पुरस्करोति । एवं यज्ञादेरपि सावनमासादेरनियम इति दर्शितं तस्माच्च तद्वचनवशेन सर्वेष्वेव कर्मसु सर्वेषामेव चान्द्रादिमासानां सम्भवः किन्तु क्वचित् क्वचित्प्रशस्तं तदुक्तं प्रशस्यते इति । यत्र तु एकस्मिन् विषये. चान्द्रप्रशंसा तत्रैव च सौरस्य यथा कार्त्तिकस्नाने, तत्रोदितानुदित-होमनिन्दा-प्रशंसान्यायेन व्यवस्थितशास्त्राविकल्पवदनुष्ठानं तस्मादादिशब्देन व्यवस्थिता विवाहादयो ग्रहणन्त इति वचनमशोभनं यथोक्तमेव साधीय इति। वयन्तु ब्रूमः यस्मिन् क्रियान्तरे वचनान्तरेण सौरादिमासा विनियुक्तास्तत्कार्य्यमादिशब्देनोपादीयते। यत्र तु मासविशेषग्रहणे कारणं न विद्यते तत्र चान्द्र एव ग्राह्यः। चैत्र-वैशाखादिपदानां चान्द्र एव मुख्यत्वादिति ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-सकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये संवत्सरायण-मासविशेषाणां कार्य्यविशेषोपयोगनिरूपणं नाम प्रथमोऽध्यायः ॥

---

# अथ द्वितीयोऽध्यायः।

## अथ मलमासनिर्णयः।

तत्र मलमासस्वरूपं लघुहारीतेन दर्शितम्।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः इति॥

'इन्द्राग्नी यत्र हूयेते' इति शुक्लप्रतिपदुपलक्षणं, 'अग्नीषोमाविति कृष्णप्रतिपदः, पितृसोमकाविति दर्शस्य। एतेन चान्द्रमास उपलक्षितः तं मासमतिक्रम्यान्यस्मिन् मासे यदा सूर्यो राश्यन्तरं गच्छेत्तदा पूर्वो मलिम्लुचः उत्तरः प्राकृतः।

तथाच ब्रह्मसिद्धान्ते।

चान्द्रो मासोऽप्यसंक्रान्तो मलमासः प्रकीर्त्तितः।

नन्दिपुराणे।

अमावास्यामहोरात्रं यदा संक्रमते रविः।
स तु मासः पवित्रः स्यादतीते त्वधिको भवेत्॥

अमावास्यां प्राप्य यदाहनि वा रात्रौ वा रविः संक्रामति तदा स चान्द्रो मासः पवित्रः स्यात्। यदा पुनरमावास्यायास्ते अहोरात्रे व्यतीते सति प्रतिपदि संक्रामति तदा चान्द्रोमासोऽधिमासः स्यात्।

ज्योतिःशास्त्रे।

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम्।

मलिम्लुचः स विज्ञेय उत्तरश्चूत्तमाभिधः ।
रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ॥
वरुणः सूर्यो भानुस्तपनश्चण्डो रविर्गभस्तिश्च
अर्यमा हिरण्यरेता दिवाकरो मित्र-विष्णू च ।
एते द्वादशनामानः सूर्या मासादिषूदयन्ति मासेषु
निःसूर्योऽधिकमासो मलिम्लुचाख्यस्ततः पापः ॥
मासेषु द्वादशादित्यास्तपन्ते हि यथाक्रमम् ।
नपुंसकेऽधिके मासि मण्डलं तपते रविः ॥
असंक्रान्तो हि यो मासः कदाचित्किंचिदूहितः ।
कालान्तरात् समायाति स नपुंसक उच्यते ॥

स तु कदा भवतीत्यपेक्षायां वशिष्ठसिद्धान्ते उक्तम् ।

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्यधिकमासकः ॥

अतीताधिकमासादारभ्य द्वात्रिंशन्मासादुपरि षोडशदिनेषु घटिकाचतुष्टयाधिकेषु गतेष्वधिकमासो भवतीत्यर्थः ।

यत्तु विष्णुधर्मोत्तरेऽभिहितम् ।

सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।
सावने तु तदा माने दिनषट्कं प्रपूर्यते ॥
जन्तरावाश्च ते राम प्रोक्ताः संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समाहृत्ये वाहमासे तस्मान्मासोऽतिरिच्यते ।

स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ॥

तथा काठकगृह्ये "मासे चिंशत्तमे भवेदिति।

महाभारते।

पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायते।

तेषां कालातिरेकेण ग्रहाणामतिचारतः॥ इति।

तदेतत्सर्वमर्वाङ्मलमासो न सम्भवत्येवं परं। ननु एकस्मिन् वत्सरे संक्रान्तिरहितं मासद्वयं ज्योतिःसिद्धान्तेऽभिहितम्। "असंक्रान्तमासोऽधिमासः स्फुटः स्यात् द्विसंक्रान्तिमासः कदाचित् क्षयाख्यः। क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽपि मासद्वयं चेति तत्कथमुच्यते त्रिंशन्मासादर्वाङ्मलमासो न सम्भवतीति, उच्यते यद्यप्येकस्मिन् वत्सरे संक्रान्तिरहितं मासद्वयं भवतीति तथापि तयोरेक एव मलमासः त्रिंशन्मासादूर्द्धं यः सम्पद्यते, अपरः संक्रान्तिरहितोऽपि न मलमासः अकालाधिक्यात्कालाधिक्यस्यैव मलत्वात्। तथाच ब्रह्मपरिशिष्टे।

मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति।

तथाच विष्णुधर्मोत्तरे।

स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हित इति।

अधिशब्देनावयवेनाधिकस्यावयवाधिक्यप्रतीतेः यथोक्तमिति क-शब्देन मांसवाचककालशब्दस्य यथा मांसस्य तनस्य मासत्वं तुल्य एवासौ

तथाच ज्याबालिः।

एकस्मिन्नपि वर्षे च द्वौ मासावधिमासकौ।

पूर्वीमासः प्रमत्तः स्यादपरस्त्वधिमासकः॥

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥

इत्यादिपूर्वाधिकमासादारभ्य द्वात्रिंशन्मासादूर्द्धं पूर्वं योऽसंक्रान्तः स प्राकृतः शुद्ध इत्यर्थः, यस्ततः परः सोऽधिमासो मलमास इत्यर्थः । तथाच द्वात्रिंन्मासादूर्द्धं योऽसंक्रान्तोमासः सोऽधिमासः, ततोऽर्वाग्यो-ऽसंक्रान्तोमासः स प्राकृतोनाधिमास इत्यर्थः, न तत्र मासपौर्वापर्यं विवक्षितं वक्ष्यमाणवचनविरोधात् । यत्तु तदा वर्षमध्ये चाधिमासद्वयं चेत्यभिधानं तदसंक्रान्तत्वादसंक्रान्तोमासः“रविणा लङ्घितोमास इत्या-दिवचनात् न तु कर्मानर्हत्वादिति । यदा त्वेकस्मिन् वत्सरे आश्वि-नादिषट्कमध्ये संक्रान्तिशून्य एकोमासः चैत्रादिषट्कमध्ये त्वपरः, तदा द्वात्रिंशन्मासादूर्द्धमपि भवेत् पूर्वोमासोनाधिकोमासः परस्तु भवति।

तथाच ब्रह्मसिद्धान्ते ।

चैत्रादर्वाङ्नाधिमासः परस्मादधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु तस्मिन्मूर्त्तिस्तथोदग्नी ॥

तस्मिन्नुत्तरस्मिन्नेव मासे यथोदग्नी मूर्त्तिः न तु पूर्वस्मिन्नपि विरोधादिति भावः । “चैत्रादर्वागित्याश्विनादारभ्येति द्रष्टव्यम् । उक्तं हि ज्योतिःसिद्धान्ते ।

घट-कन्यागते सूर्ये दृश्चिके वाथ धन्विनि
मकरे वाथ कुम्भे वा नाधिमासो विधीयते इति ॥

यदि तु सामान्यतोऽधिमासमात्रनिषेधपरं वचनद्वयं तदा

मास कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्त्तुरक्षयम् ॥

इति ज्योतिःपितामहस्मरणं विरुध्येत बहुबाधश्च स्यात्, तस्मादाद्ययो-स्तविषयमेवेति । यदा त्वेकस्मिन्नाश्विनादिषट्के संक्रान्तिरहितमास-द्वयं भवति तदा

प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ।

इत्येतदेव द्रष्टव्यं चैत्रादिषट्के त्वधिकमासद्वयं न भवत्येव तस्य क्षयमासोभयपूर्व्वपार्श्वस्थत्वात् क्षयस्य च कार्त्तिकादित्रयनियतत्व-श्रोतत्वादिति । तथा द्विसंक्रान्तोऽपि क्षयाख्योमलमासः ।

तथाच काठकगृह्ये ।

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।

मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेदिति ॥

अत्र केचिन्मासमस्यापि लक्षणान्तर्गतेत्याहुः, तन्न, स विज्ञेय इति लक्षणवाक्ये समाप्ते त्रिंशत्तम इत्यभिधानात् पूर्वोदाहृतवचनाच्च । अपि च यत्किञ्चिदपेक्ष्य त्रिंशत्तमत्वमत्र लक्षणं मलमासापेक्षया वा नाद्यः अतिव्याप्तेः, न द्वितीयः आत्माश्रयात् क्षयादिमासे व्यापकत्वाच्च तस्य त्रिंशत्तमत्वाभावादमलमासत्वाच्च तदुत्तरः सर्वो न मलमासः स्यादिति लक्षणव्याघातान्न लक्षणं, यत्रैकस्मिन् वत्सरेऽसंक्रान्तं मास-द्वयं संक्रान्तिद्वययुतोमासश्च तत्र यावसंक्रान्त-द्विसंक्रान्तौ तौ संस-र्पांहस्पतिसंज्ञौ अन्यस्त्वधिमासः ।

तथा वार्हस्पत्यज्योतिर्ग्रन्थे ।

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव च ।

संसर्पांहस्पती मासावधिमासश्च निन्दितः ॥

श्रुतिरपि "संसर्पोऽस्यंहस्पतये त्वेत्याह अस्ति त्रयोदशोमास-

इत्याहुस्तमेव तत्रोचातीति। अत्र ज्योतिःशास्त्रे प्रतिष्ठाविवाहादि-कर्मसु त्रयोऽपि निन्दिताः क्षयाधिकमासौ तु श्रौत-स्मार्तकाम्यकर्म-स्वपि निन्दितौ क्षयस्यांहस्पतित्वेन कालमलरूपत्वादंहसश्च मल-त्वात् अधिकमासस्य कालाधिक्येनाऽपवित्रत्वात् ।

तथाच स्मृत्यन्तरे ।

अमावास्यामहोरात्रे यदा संक्रमते रविः ।
स तु मासः पवित्रः स्यादतीते ह्यधिको भवेत् ॥

अत्र केचिदाहुः विश्वप्रकाशमतदूषणायोपन्यस्तेऽधिमासस्याव-चैत्रादिसंज्ञां लभते। ननु चैत्रादिमाससंज्ञानां मेषादिसङ्क्रान्ति-निबन्धनत्वादधिमासस्य सङ्क्रान्तिरहितत्वाच्चैत्रोऽधिमासो वैशाखो-ऽधिमास इत्यादिव्यवहारो न स्यात्, तथापि चैत्रादिरूपजात्या तावच्चैत्रादिशब्दप्रवृत्तावनुगतः कश्चिदुपाधिः स्वीकार्यः, यौगिक-त्वेऽपि चित्रायुक्तपौर्णमासीयुक्ते चैत्रपदप्रयोगार्थं उपाध्याश्रयणं तुल्यं। न च मेषादिसंक्रान्तियोगातिरिक्त उपाधिर्दृश्यते, न च फा-ल्गुनोत्तरत्वं उपाधिः, वैशाखपूर्वत्वस्यापि प्रसङ्गादविशेषात् द्वयोपा-धिकत्ववैयर्थ्यात् विकल्पेनोपाधित्वे अनेकार्थत्वापातात् फाल्गुना-नन्तरमधिमासे च तदुत्तरस्य चैत्रत्वं स्यात्। किञ्च चैत्रवत् फाल्गु-नस्य माघोत्तरत्वं तस्य पुष्योत्तरत्वमिति क्रमेण चैत्रोत्तरत्वं वैशा-खस्येति चक्रकदोषः अतो मेषादिसंक्रान्तियोग एवोपाधिः। किञ्च वेदे मधुश्चेति द्वादशमासाः संवत्सर इति द्वादश संज्ञा अनुक्रम्य संसर्पोऽसीति संज्ञान्तरमर्थान्तरवियुक्तं त्रयोदशमासाः संवत्सर इति सङ्ख्या पृथक्त्वे युक्ता तेन चैत्राद्याधिक्यात् तत्संज्ञ इति, उच्यते

यदि अधिकमासः शुद्धात् पृथग्भूतः स्यात् स्यादेवं; न त्वेवमस्ति, किन्त्वसौ शुद्धान्तर्भूत एव ।

तदुक्तं ।

“षष्ट्या तु दिवसैर्मासः कथितो बादरायणैरिति ।

“एवं षष्टिदिनो मासस्तदर्द्धं च मलिम्लुच इति च । न च वाच्यं अत्र मासशब्दः एकशेषवृत्तिः यत् द्विवचनाभावेऽपि मासद्वित्वावगतेरेकवचनमेव संज्ञाभियोगोपाधिः तेनाधिमासो न चैत्रादिरिति, सकललोकसिद्धचैत्रादिव्यवहारस्याभावप्रसङ्गात् संसर्पशब्दस्यैकदेशवचनस्यार्थान्तरविषयत्वमस्य तत्पक्षेऽपि विद्यत एव । श्रुतिश्च त्रिंशद्दिनतन्मासविवक्षयेति । अतो यदा यदा यदन्तर्भूतोऽसौ तदा तत्संज्ञया व्यपदिश्यत इति न दोषः । नन्वेवमधिमासस्य शुद्धमासद्वयमध्यपातित्वात् किमसौ पूर्वस्योत्तरार्द्धं किं वोत्तरस्य पूर्वार्द्धमिति निर्द्धारणकारणाभावात् संज्ञानिर्द्धारो दुर्घटः, उच्यते अधिमासस्योत्तरमासपूर्वार्द्धत्वादुत्तरमाससंज्ञा ।

तदुक्तम् ।

आद्यो मलिम्लुचोज्ञेयो द्वितीयः प्राकृतः स्मृतः ।

षष्टिदिनात्मकमासस्य ‘आद्यः’ पूर्वभागः, ‘मलिम्लुचः’ अशुद्धः कर्मानर्हो ज्ञेयः, ‘द्वितीयः’ उत्तरोभागः, ‘प्राकृतः’ शुद्ध इत्यर्थः ।

ज्योतिःशास्त्रे पितामहोऽपि ।

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते ॥

एवं सर्वत्राधिमासस्योत्तरमासपूर्वार्द्धत्वे प्राप्ते क्वचिदपवादमाह ।

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः ॥

एकस्मिन् वर्षे यदा द्वौ मासावसंक्रान्तौ भवतस्तदा वैपरीत्यं, षष्टिदिनात्मकस्य मासस्य पूर्वोभागः 'प्राकृतः' शुद्धः, उत्तरोभागो मलिम्लुच इत्यर्थः। एकाब्दमध्यवर्त्तिनौ द्वावधिमासौ पूर्वमासोत्तराद्धत्वात् पूर्वमाससंज्ञावित्यभिप्रायः। युक्तं चैतत् अधिमासस्य पूर्वभागः प्राकृतः उत्तरोभागो मलिम्लुचः तस्य वृद्धित्वाद्वृद्धेश्च पूर्वनिष्ठत्वनियमात् । अन्यथा तिथिवृद्धेरप्युत्तरतिथिसंज्ञत्वापत्तेः एकाधिमासस्य तु "इन्द्राग्नी यत्र हूयेते" इत्यादिन्यायादृष्यौचित्या वचनेनोत्तरमाससंज्ञत्वमभिहितं । अतएवोक्तं ।

एकत्र मासद्वितयं यदि स्यात्
वर्षेऽधिकं तत्र परोऽधिमासः ।

नन्वेकस्मिन् संवत्सरे चतुर्दश मासाः स्युरित्यत आह,
चयोदशं तु मुनिराह मासं चतुर्दशः क्वापि न चैव दृष्टः ।

एकस्मिन्वर्षेऽधिमासद्वयेऽपि मासास्त्रयोदशैव "यद्वर्षमध्येऽधिकमासयुक्तं तत्कार्त्तिकादिचितये चयास्य इति वचनादित्यभिप्रायः। केचित् "मासद्वयेऽब्दमध्ये त्वित्यादिवचनानामेवं व्याख्यानं कृतं यदेकस्मिन्वर्षे द्वौ मासावसंक्रान्तौ भवतस्तत्र तयोरसंक्रान्तयोर्मध्ये यः पूर्वोऽसंक्रान्तः स प्राकृतः शुद्धः कर्मार्हः, उत्तरस्त्वसंक्रान्तो मलिम्लुचः कर्मानर्हः, दुर्गेन्द्रस्थापनोत्थाने न च वर्जितः, "पूर्ववत्प्रतिषिद्धानि परतो न च दैविकम्" इति, तदुक्तं "एकत्र मासद्वितयमित्यादिनेति तदयुक्तं अनेकवचनविरोधात् । तथा हि,

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयः सर्वधर्मवहिष्कृतः ॥
त्रिंशीयाशीमतिक्रम्य यदा संक्रमते रविः ।
भानुना लङ्घितो मासो मलर्दः सर्वकर्मसु ॥
यस्मिन्वर्षे द्विसंक्रान्तोऽधिकमासद्वयं तदा ।
तद्धि मासत्रयं दुष्टं सर्वेषु शुभकर्मसु ॥
संवर्पांश्वलती मासावधिमासश्च निन्दिताः ।
यद्वर्षमध्येऽधिकमासयुग्मं
तत्कार्त्तिकादित्रितये यथाख्ये ।
मासत्रयं त्याज्यमिदं प्रयत्नाद्-
विवाह-यज्ञोत्सवमङ्गलेषु ॥
यन्नन्यानुदिते सूर्य्ये परतश्चाष्टमी भवेत् ।
तत्र दुर्गोत्सवं कुर्य्यान्न कुर्य्यादपरेऽहनि ॥
इति निर्णयामृतवचनमित्यादि । तस्मात् पूर्वा व्याख्या न्याय्यी ।
यत्तु वचनम् ।
चैत्रादर्वाङ्गाधिमासः परतश्चाधिको भवेत् ।
दृष्टा हि सर्वमासेषु तस्मिन्मूर्त्तिक्षयोद्गमौ ॥
यदपि ।
घटकन्यागते सूर्य्ये वृश्चिके वाथ धन्विनि ।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते ॥
इति तदुभयमप्याश्विनादीनां फाल्गुनान्तानां पूर्वभागा अधि-
मासा न भवन्तीत्येवंपरं, न तु यस्येवाधिमासा न भवन्तीत्येवंपरं

"दर्शानां फाल्गुनादीनां प्रायोमासस्य तु कचित् नपुंसकत्वं भवतीति वचनविरोधादिति तदयुक्तं विश्वप्रकाशमतं दूषयति वाक्यानार्जव-त्वात् पूर्वोत्तरशब्दाभ्यामुपात्तभागपरित्यागेनानुपात्तभागग्रहणस्या-युक्तत्वात् । यत्तूक्तं "चैत्रादर्वाङ्नाधिमास इति "घटकन्यागते सूर्य्ये इति वचनद्वयमाश्विनादीनां फाल्गुनान्तानां पूर्वभागा अधिमासा न भवन्तीत्येवंपरमिति तन्न। वचनाध्याहारादिप्रसङ्गात् "दर्शानां फाल्गु-नादीनामिति वचनविरोधस्यास्मत्पक्षेऽप्यभावाच्च स्वरूपतोऽधिमास-निषेधस्यानङ्गीकारात्। यत्त्वस्मत्पक्षे दूषणमभिहितं तदयुक्तं असंक्रान्त-मासनिषेधस्य सामान्यशास्त्रस्य विशेषशास्त्रेण बाधस्य युक्तत्वादस्य दोषस्य भवत्पक्षेऽपि समानत्वात् सामान्यशास्त्रप्राप्तोत्तरमासपूर्वार्द्ध-त्वापवादाङ्गीकारान्मासद्वयस्य दुष्टत्वप्रतिपादकवचनस्य ज्योतिःशास्त्र-प्रसिद्धविवाहादिशुभकर्मविषयत्वात्, तथाच तत्रैवोक्तं "विवाह-यज्ञोत्सवमङ्गलेष्वित्यादि, तस्मात्पूर्वैव व्याख्या ज्यायसी ।

संक्रान्तिद्वयसंयुक्तः स मासोंऽहस्पतिः स्मृतः ।
चैत्रादिसप्तमासेषु न कदाचिद्भवेदयम् ॥
ऊर्जादिपञ्चमासेषु कदाचन भवेद्यदा ।
तदा द्वावधिकौ स्यातां तस्मिन्वर्षादिपञ्चके ॥

इति मलमासस्वरूपनिर्णयः ।



## अथ मलमासे कार्य्याकार्य्यनिर्णयः।

तत्र शातातपः।

वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत्।
नैर्ऋत्य-यातुधानाद्यैः समाक्रान्तोऽधिमासकः॥
मलिम्लुचैः समाक्रान्तिं सूर्य्यसंक्रान्तिवर्जिताम्।
मलिम्लुचं विजानीयाद्गर्हितं सर्वकर्मसु॥

सत्यव्रतः।

मलिम्लुचस्तु यो मासः स मासः पापसंज्ञकः।
वर्जितः पितृदेवानां सर्वकर्मसु तं त्यजेत्॥

पैठीनसिः।

श्रौत-स्मार्त्तक्रियाः सर्वा द्वादशे परिकीर्त्तिताः।
त्रयोदशे तु सर्वास्ता निष्फला इति संज्ञिताः॥
तस्मात् त्रयोदशे मासि कुर्य्यात्ता न कथञ्चन।
कुर्वन्ननर्थमेवाशु कुर्य्यादात्मविनाशनम्॥

भृगुः।

एकराशिस्थिते सूर्य्ये यदा दर्शद्वयं भवेत्।
हव्य-कव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः॥ इति
भविष्योत्तरेऽपि।

असंक्रान्तं तथा मासं दैवे पित्र्ये च कर्मणि।
मलीमसमशौचं तु वर्जयेदतिमात्सरः॥

सुमन्तुः।

न कुर्य्यादधिके मासि काम्यं कर्म कदाचन ।
मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति ।

गृह्यपरिशिष्टेऽपि ।

मलिम्लुचस्तु मासो वै मलिनः पापसम्भवः ।
गर्हितः पितृदेवेभ्यः सर्वकर्मसु तं त्यजेत् ॥

ब्रह्मसिद्धान्ते ।

यदा शशी याति गभस्तिमण्डलं
दिवाकरः संक्रमणं करोत्यनु ।
तदाधिमासः कथितो विरिञ्चिना
विवाह-यात्रोत्सव-यज्ञदोषकृत् ॥

ज्योतिःशास्त्रान्तरे ।

रविमण्डलमेति यदा शशी
तदनुसंक्रमणं कुरुते रविः ।
मलमहोत्सवनाशकरस्तदा
मुनिवरैः कथितोऽधिकमासकः ॥

तथा ।

सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
भानुना लङ्घितोमासो गर्हः सर्वकर्मसु ॥

एवं सामान्यतः सकलकर्मनिषेधप्राप्तौ विशेषो वक्ष्यते तत्र ग्रह्यः ।

न कुर्य्यादधिके मासे कर्माकर्म कथञ्चन ।
कृत्वा नैमित्तिकं कर्म तद्धि तथैव कीर्त्तितम् ॥

'कर्म्माकर्मेति'शब्देन काम्यकर्म्मोच्यते, तद्धि फलकामैः क्रियमाण-त्वात्कर्म, अफलकामैरक्रियमाणत्वादकर्म, कर्म च तदकर्म चेति कर्म-धारयः। तथैवाह प्रजापतिः।

न कुर्य्यादधिके मासि काम्यकर्म कदाचन।
मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्त्तितं॥

अत्र केचिदाहुः काम्यस्य कर्मणोऽधिमासे प्रारम्भः समाप्तिश्च निषिध्यते। आरब्धे तु काम्ये कर्मणि समाप्तिकालादर्वाक् मध्यपति-तेऽधिमासेऽपि काम्यं कर्म कार्य्यं। तथा चातुर्मास्यव्रतानामाषाढे-ऽधिमासे नारम्भः कार्त्तिके चाधिमासे न समाप्तिः। अन्तरापतिते त्वधिमासेऽप्यनुष्ठानं। अतएवान्तराधिमासपातेऽपि संक्रान्तियुक्ताषाढ-शुक्लैकादश्यां चातुर्मास्यव्रतानामारम्भोऽभिहितः संक्रान्तियुक्तका-र्त्तिकशुक्लैकादश्यां समाप्तिरुक्ता। यथोक्तम्।

एकादश्यां तु शुक्लायात् संक्रान्तौ कर्कटस्य च।
आषाढादौ नरोभक्त्या चातुर्मास्यव्रतक्रियाम्॥
ततो विबुध्यते देवः शङ्ख-चक्र-गदाधरः।
कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः॥
अन्येन चैव राजेन्द्र देवमुत्थापयेद्विजः।
अधिमासे च पतिते एष एव विधिक्रमः॥
अधिमासनिपातेऽपि क्रमाद्विश्वामिका-हरीन्।
कन्या-तुला-वृश्चिकेषु नृप उत्थापयेद् ध्रुवम्॥

न चैवं सति मासपञ्चकं व्रतानुष्ठानप्राप्तौ चातुर्मास्यव्रतमिति समाख्याविरोधः

वार्षिकांश्चतुरो मासान् मद्यं मांसं परित्यजेत् ।
वर्जयेद्धरिशुद्ध्यर्थं स भवेद्वेदविद्द्विजः ॥
यः क्षिपेत् कृष्णपादेन आषाढादिचतुष्टयम् ।
विष्णुपूजनकर्मार्थं स भवेत्तज्जितेन्द्रियः ॥

मैत्रादिपादे स्वपितीह विष्णु-
र्वैष्णवमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥

इत्यादिवचनविरोधश्चेति वाच्यं ।

यथा तु दिवसैर्मासः कथितो बादरायणैः ।

इति वचनान्मासचतुष्टयोपपत्तेः ।

ब्रह्मसिद्धान्ते ।

प्रारब्धं कर्म यत्किञ्चिन्न तु कार्यं मलिम्लुचे ।
असूर्य्या नाम ये मासा न तेषु मम यज्ञताः ।
व्रतानाञ्चैव यज्ञानामारम्भाश्च समाप्तयः ॥

इत्यारम्भ-समाप्त्योरेवाधिमासे प्रतिषिद्धत्वात् चकारात् सर्व-काम्यकर्मग्रहणमिति तदयुक्तम् ।

प्रवृत्तं मलमासात्प्राक्काम्यमसमापितं ।
आगते मलमासेऽपि तत्समाप्यमसंशयम् ॥

इति काठकगृह्यपरिशिष्टवचनेन काम्यकर्मसमाप्तेरपि मल-मासेऽपि विधानात्तदादेवं विषयव्यवस्था, "असूर्य्या नाम ये मासा इति वचनेन काम्यव्रत-यज्ञानां आरम्भः समाप्तिश्च प्रतिषिध्यते न तु

नित्यव्रत-यज्ञानां, "नित्य-नैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे" इत्यादिवक्ष्यमाणनित्य-नैमित्तिकविधायकवचनवैयर्थ्यप्रसङ्गात् । तस्मादुक्तैवैकस्य काम्यव्रत-यज्ञविषयतयावस्थापनोपयुक्तः । ननु किमत्र मलमासात् प्रागारब्धस्य समाप्तिः प्रतिषिध्यते, उतापूर्वारब्धस्य, न प्रथमः "प्रवृत्तं मलमासात् प्रागिति वचनविरोधात्, न द्वितीयः आरम्भनिषेधादेव च समाप्तेरप्रसक्तेर्निषेधायोगादिति । उच्यते । मलमासप्रारब्धस्यैव समाप्तिस्तत्र निषिध्यते यो ह्यज्ञानान्मलमासेऽपि काम्यं कर्म प्रारभते तेन तत्र समाप्तौ कृतायां दोषाधिक्यं स्यादित्येतदर्थमिदं वाक्यमिति न दोषः ।

वृद्धमनु-बृहस्पति-पैठीनसि-ज्योतिः-पराशराः ।
अन्याधेयं प्रतिष्ठाञ्च यज्ञ-दान-व्रतानि च ।
वेदव्रत-वृषोत्सर्ग-चूडाकरण-मेखलाः ।
माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत् ॥

क्वचिद्यज्ञ-दान-प्रतिग्रहानिति पाठः ।

अत्रापवादः ।

चन्द्र-सूर्य्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकमिति ॥
बाले वा यदि वा वृद्धे शुक्रे वास्तमुपागते ।
मलमास इवैतानि वर्ज्जयेद्देवदर्शनं ॥ इति

"अन्याधेयं प्रतिष्ठाञ्चेत्यावश्यकत्वे सतीति शेषोऽध्याहार्य्यः तेन मलमासेऽपि प्रायश्चित्तभूतमन्याधेयमन्यनुगतयनन्तरं कर्त्तव्यं न प्रतिषिध्यते, एवं प्रतिमादिसंस्कारनाशे पुनः प्रतिष्ठा न प्रतिषिध्यते

यस्याः काम्या नित्या अपि वसन्तादिसम्बन्धेन विधीयमाना उत्तरे असंक्रान्तेऽपि क्रियमाणा स्वकाले एव कृता भवन्ति, 'दानानि' महादानानि। केचिद्व्रतानामपि महतामेव प्रतिषेधमाहुः वृषोत्सर्गस्य च नैकादशाहिकस्य च प्रतिषेधः षोडशश्राद्धादिवत्तस्यापि प्रेतोपकारित्वात्कालसमयादावपि अनावश्यकत्वे सति अन्याधेयादि प्रतिषिध्यते "मलमास इवेत्यभिधानात्। 'देवदर्शनं' अदृष्टपूर्वदेवतादर्शनं।

तत्रापि प्रथमं विवक्षितं, "अनादिदेवता दृष्टा न शुभं नष्टभार्गवे" इति स्कन्दपुराणवचनात् मलिम्लुचेऽप्यनाहूततीर्थस्नानं विवर्जयेत्।

अत्र केचिदाहुः। मल इवेति सिद्धवद्दृष्टान्तीकरणान्यथानुपपत्त्या मलमासे प्रथमदेवतादर्शननिषेधः सिद्धः। अपरे तु "मलमासइवेत्यग्न्याधेयादिष्वेव योजयन्ति। यथा मलमासे चन्द्र-सूर्यग्रहादिकालव्यतिरेकेणैतेषां निषेधस्तथैव वास्त्वादिष्वपि यथा स्यादिति, तस्मिन् पक्षे मलमासे देवतादर्शनस्य न प्रतिषेधः।

वापी-कूप-तडागादिप्रतिष्ठां यज्ञकर्म च।
न कुर्यान्मलमासे तु महादान-व्रतानि च॥

महादानानि मत्स्यपुराणे दर्शितानि।

मनुरुवाच।

महादानानि यानीह पवित्राणि शुभानि च।
रहस्यानि प्रदेयानि तानि मे कथयाच्युत॥

मत्स्य उवाच।

लोकानि यानि पुण्यानि महादानानि षोड़श ।
तानि ते सम्प्रवक्ष्यामि यथावदनुपूर्व्वशः ॥
आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुञ्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥
द्वादशं विश्वचक्रञ्च ततः कल्पलतात्मकम् ।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत्षोड़शः परिकीर्त्तितः ॥

कूर्म्मपुराणे त्वन्यान्यपि दश महादानानि दर्शितानि ।

कनकाश्व तिला नागा दासी-रथ-मही-गृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

काठकगृह्ये ।

चूड़ां मौञ्जीबन्धनञ्च अन्याधेयं महालयं ।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते ॥

कौथुमिः ।

अधिमासे न कर्त्तव्यं श्राद्धं सांवत्सरादिकम् ।
वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिके न तु ॥

हारीतः ।

अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।

तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥
सपिण्डीकरणादूर्द्धं यत्किञ्चित् श्राद्धिकं भवेत् ।
इष्टं वाप्यथ वा पूर्त्तं तन्न कुर्य्यात् मलिम्लुचे ॥

आभ्युदयिकं श्राद्धं आद्यवत्सरान्तर्गतजातकर्मादिनिमित्तव्यतिरिक्तं। अन्ये त्वेवं व्याचक्षते 'वत्सरात्प्रथमादृत इति प्रथमं वत्सरं विहाय आभ्युदयिकं श्राद्धं मलमासे न कर्त्तव्यं प्रथमे तु संवत्सरे मलमासे प्राप्ते सपिण्डीकरणं विहितं तदुत्तरदिने यदाभ्युदयिकं विहितं तन्मलमासेऽपि कर्त्तव्यं। यथोक्तं।

भ्राता वा भ्रातृपुत्त्रो वा सपिण्डः शिष्य एव च।
सपिण्डकक्रियां कृत्वा कुर्य्यादाभ्युदयं ततः ॥

इत्यत्र वचने आभ्युदयशब्देन आभ्युदयिकं श्राद्धं विभागप्रकरणे विश्वरूपाचार्य्येण व्याख्यातं। अन्ये तु उत्तरश्लोकबलेनैवं व्याचक्षते सपिण्डीकरणादूर्द्धं यत्प्रथमे संवत्सरे प्रतिमासं पुनः क्रियमाणं पैतृकं मासिकं श्राद्धं तन्मलिम्लुचेऽधिमासे कार्य्यमिति वक्तुं 'वत्सरात्प्रथमादृत इत्युक्तं एतच्चोपरिष्टाद्वक्ष्यते। असंक्रान्तं प्रकृत्य ज्योतिःशास्त्रे ।

तत्र दत्तमदत्तं स्याद्धुतं चाहुतमेव च ।
सुप्रजप्तमजप्तं स्याच्चोपवासः कृतोभवेत् ॥
न यात्रां न विवाहञ्च न च वास्तुनिवेशनम् ।
न प्रतिष्ठाञ्च देवानां प्रासाद-ग्राम-भूरुहाम् ।
न क्षिरणं सुवासांसि कारयेदिति निश्चयः ॥

पराशरः ।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।

तत्र यद्विहितं कर्म उत्तरे मासि कारयेत् ॥

प्रजापतिः ।

उपाकर्म च हव्यञ्च कव्यं पर्व्वोत्सवं तथा ।

उत्तरे नियतः कुर्य्यात् पूर्व्वे तन्निष्फलं भवेत् ॥

पराशरः ।

पक्षद्वयेऽर्कसंक्रान्तिर्यदा न स्यात् सितासिते ।

तदा तन्मासिकं कार्य्यमुत्तरे मासि कारयेत् ॥

एवं षष्टिदिनो मासस्तदर्द्धञ्च मलिम्लुचः ।

त्यक्त्वा तदुत्तरे कार्य्याः पितृदेवादिकाः क्रियाः ॥

सत्यव्रतः ।

मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।

तत्रोत्तरोत्तमा ज्ञेया पूर्वा तु स्यान्मलिम्लुचः ॥

तत्राधिमासे यत्कर्त्तव्यं तदाह शातातपः ।

एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।

तत्राद्ये पितृकार्य्याणि देवकार्य्याणि चोत्तरे ॥

अङ्गिराः ।

द्वौ मासावेकनामानावेकस्मिन् वत्सरे यदि ।

पूर्वस्मिन् पितृकार्य्याणि देवकार्य्याणि चोत्तरे ॥

ज्योतिःशास्त्रे ।

षष्टिभिर्दिवसैर्मासः कथितो वादरायणैः ।

देवकार्य्याणि पूर्वस्मिन् पितृकार्य्याणि चोभयोः ॥

एवमादीनि मलमासे देवकार्य्य-पितृकार्य्यप्रतिपादकानि वच-

नान्यावश्यकदैवकार्य्य-पितृकार्य्यविषयाणि द्रष्टव्यानि ।

बृहस्पतिः ।

नित्य-नैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे ।

तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च ॥

नित्यमावश्यकं यन्मासविशेषणामनिरपेक्षमेव विहितं यस्याकरणे कालात्ययनिमित्तं प्रायश्चित्तमाम्नायते तद्यथा "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् योदर्श-पूर्णमासयाजी स अमावास्यां वा पौर्णमासीं निर्वपेदिति। तथाभूतस्य नित्यस्य ग्रहणं न तु नित्य-मात्रस्य। तेन दर्श-पूर्णमासाग्निहोत्र-पञ्चमहायज्ञादेरनुष्ठानं मलिम्लुचे कर्त्तव्यं स्वकालातिक्रमे प्रायश्चित्ताम्नानात्। एवं च नित्याऽपि सोम-यागक्रिया मलिम्लुचे मासि न कार्य्या मलिम्लुचमासातिक्रमेऽपि वस-न्तादिकालस्य सोमयागाङ्गभूतस्यानतिक्रान्तत्वेनाच प्रायश्चित्तप्राप्ते-रसम्भवात्। एवं यस्य नैमित्तिकस्य गृहदाहेष्ट्यादेर्निमित्तानन्तरकाले कर्त्तव्यस्य न मासान्तरे विहितकाललाभः तथाभूतावश्यक्रियाविषयं, एवं "मलिम्लुचे मासि कुर्य्यादिति विधानं जातेष्ट्यादेर्नैमित्तिकस्यापि शिशुदुरघणार्थं निमित्तानन्तरकालमपहाय कालान्तरे कर्त्तव्यस्य यथा दशरात्रादिसूतककालस्य मध्येऽनुष्ठानमन्याय्यं तथा मलिम्लुचका-लमध्येऽपि सति च मलिम्लुचेऽनुष्ठानं, एवञ्च नित्यत्वं नैमित्तिकत्वं चाविवक्षितं यस्यातिक्रमे प्रायश्चित्तप्राप्तिर्यस्य च मासान्तरे विहित-काललाभेनावश्यकं मलिम्लुचेऽनुष्ठानं तत्सर्वं मलिम्लुचे कुर्य्यादिति बार्हस्पत्यवचनतात्पर्य्यार्थः प्रेतव्यः ।

तथा च स्मृत्यन्तरे ।

अनन्यगति यन्नित्यं कुर्यान्नैमित्तिकं तथेति।

यस्य नित्यस्य मुख्यकालातिक्रमे अधन्यस्य कालान्तरस्यानभ्यनुज्ञातत्वादत्यन्तलोपे प्रायश्चित्तं प्रसज्यते तत्कर्मानन्यगतित्वान्मलमासेऽपि कार्यं।

दृश्यपरिशिष्टमपि।

मलं वदन्ति कालस्य मासकालविदोऽधिकं।
नेक्षेताच विशेषेष्वामन्यथावश्यकादिधेः॥

आवश्यकाद्दर्शपूर्णमासादिविधेरन्यत्र विशेषेष्वं मलमासे 'नेक्षेत' नाचरेत्, यस्यां शुद्धे मासि क्रियमाणायां नास्ति विधिलोपः सा विधिविशेषेष्वा यथा "वसन्ते वसन्ते ज्योतिषा यजेतेति, वसन्ते विहितस्य ज्योतिष्टोमस्य मलमासवैशाखपरित्यागेन शुद्धवैशाखे क्रियमाणस्य वसन्त एव कृतत्वान्नास्ति विधिलोपः अनेनावश्यको विधिरधिकमासेऽनुष्ठेय इत्यर्थादुक्तं।

उशना साक्षादपि तथैव।

अवषट्कारहोमाश्च पर्व चाग्रयणं तथा।
मलमासे तु कर्त्तव्यं काम्या इष्टीर्विवर्जयेत्॥

'अवषट्कारहोमाः' अग्निहोत्रोपासनवैश्वदेवादयः, 'पर्व' दर्शपौर्णमासौ पार्वणस्थालीपाकश्च, 'आग्रयणं' आग्रयणेष्टिः, यद्यप्याग्रयणं वर्षासु श्यामाकैर्यजेतेति मासद्वयात्मकवर्षाख्यकालविहितं मलिम्लुचमासेऽपि स्वकालसम्भवादनन्यगतिकं न भवति तथापि दुर्भिक्षेण श्यामाकव्यतिरिक्तधान्यासम्भवे जीवनार्थं श्यामाकान्नभोजनमकृत्वाग्रयणेनावश्यकर्त्तव्यमित्याग्रयणानुष्ठानं जीवनार्थमावश्यकमिति युक्तमुक्त-

माग्रयणं तथेति, यदा तु दुर्भिक्षाभावादनावश्यकं तदाधिमासे श्यामाकाग्रयणं न कर्त्तव्यम् ।

अनेनैवाभिप्रायेण पैठीनसिना ।

संक्रान्तिरहिते मासि कुर्य्यादाग्रयणं न वा ।

इति विकल्प उक्तः ।

काठकगृह्यपरिशिष्टे ।

मलेऽनन्यगतिं नित्यां कुर्य्यान्नैमित्तिकीं क्रियां ।
सोमयागादिकर्म्माणि नित्यान्यपि मलिम्लुचे ॥
पुष्टौष्ण्याग्रयणाधान-चातुर्मास्यादिकान्यपि ।
महालयाष्टकाश्राद्धोपाकर्म्माण्यपि कर्म यत् ।
स्पष्टं मासविशेषाख्याविहितं वर्ज्जयेन्मले ॥

'महालयः' भाद्रपदस्यापरपक्षः ।

प्रेतमासादिमारभ्य श्राद्धपिण्डोदकक्रियाः ।
सपिण्डीकरणान्ताश्च यथाकालमुपस्थिताः ॥
यव-व्रीहि-तिलैर्होमो जातकर्म्मादिकाः क्रियाः ।
मघात्रयोदशीश्राद्धं प्रत्युपस्थितिहेतुकम् ।
अनन्यगतिकत्वेन कर्त्तव्यं स्यान्मलिम्लुचे ॥

भृगुस्मृतावपि ।

वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयं ।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते ॥

ज्योतिःपितामहेऽपि ।

मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।

दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयं ॥

ज्योतिःपराशरेऽपि ।

यातुधानप्रियोमासः कन्यार्कं जायते यदा ।

दैवं पित्र्यं तथा कर्म उत्तरे मासि युज्यते ॥

देवलः ।

अर्के नभस्य-कन्यास्थे श्राद्धपक्षः प्रकीर्त्तितः ।

सिनीवालीमतिक्रम्य यदा कन्यां व्रजेद्रविः ।

तदा कालस्तु मुख्यत्वाद्दतीतैव पितृक्रिया ॥

'अतीता' पञ्चमं पक्षमतिक्रान्ता, एवञ्च यत्कैश्चिदुक्तं कन्यासंक्रान्तिनिमित्तानां श्राद्धानां षोड़शसु दिवसेषु नैमित्तिकत्वान्नैमित्तिकस्य च श्राद्धस्य मलमासे प्रतिषेधाभावात्तानि कार्य्याणि तदुक्तं प्रजापतिना "मुक्त्वा नैमित्तिकं श्राद्धमिति ।

ब्रह्मसिद्धान्ते ।

सूर्य्यस्य लङ्घितोमासो न कर्मार्हः स्मृतोबुधैः ।

तस्मात्तत्र न कुर्वीत श्राद्धं नैमित्तिकादृते ॥

निमित्तत्वञ्च श्राद्धं प्रति कन्यासङ्क्रान्तेः पुराणोक्तम् ।

कन्यागते सवितरि यान्यहानि तु षोड़श ।

क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ॥

इति तन्निरस्तं । यथा च शाट्यायनिः ।

नभस्यस्यापरे पक्षे तिथिषोड़शकस्तु यः ।

कन्यागतान्वितस्तेषास्तु कालः श्राद्धकर्मणि ॥

तथाच नागरखण्डेऽपि पितॄन् प्रति ब्रह्मवचनम् ।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम् ।
नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यथैव तु पञ्चमः ॥

यत्तु श्राद्धकाण्डवचनं ।

आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
श्राद्धं तत्र प्रकुर्वीत कन्याङ्गच्छतु वा न वा ॥

तत् पूर्वप्रदर्शितवाक्यविषयपर्य्यालोचनया पक्षोपक्रमाभिप्रायं । तथाच कार्ष्णाजिनिः ।

अन्ते वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् ।
पक्षस्तु पञ्चमः पूज्यः श्राद्धषोडशकं प्रति ॥

हृहन्मनुरपि ।

मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूर्णः श्राद्धं तत्र विधीयते ॥

तेन "कन्यागते सवितरीत्यादि पुराणवचनं पक्षमध्ये यस्मिन् कस्मिंश्चिदहनि कन्यासङ्क्रमणे सति प्रतिपदादिषोडशाप्यहान्युपादेयानीत्येवं व्याख्येयं न तु सङ्क्रमणात् पूर्वाणि हेयानीत्येवं, पञ्चमपक्षस्य प्राधान्यार्थं वा तद्वचनं, तीर्थश्राद्धं गजच्छायाश्राद्धं तदुभयं न नित्यं अकरणे प्रत्यवायाभावाच्चापि नैमित्तिकं तीर्थसम्बन्धस्य गजच्छायासम्बन्धस्य च निमित्तस्य पुरुषप्रयत्नसाध्यत्वात्तयोः पृथग्ग्रहणं । गजच्छाया च गजस्येव छाया या पूर्वस्यान्दिशि वर्त्तते सा मुख्या यास्त्रा विश्वामित्रोक्ता ।

परमान्नन्तु योदद्यात् पितृणां मधुना सह ।
छायायान्तु गजेन्द्रस्य पूर्व्वस्यां दक्षिणामुखः ॥
यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत्सापि गजच्छाया प्रकीर्त्तिता ॥

इति या परिभाषिता गजच्छाया सा असुख्या असम्भाविनी च "मलमासे हंसश्चैव करे स्थित इति वचनात् । 'हंसः' सूर्य्यः, 'करे' हस्ते, 'स्थित इति कन्यासङ्क्रान्तेर्वर्त्तमानत्वात् मलमासत्वाभावात्, प्रेतश्राद्ध-नित्यत्वेन मलमासेऽपि प्राप्ते यत्तत् पुनर्विधीयते तत् संवत्सरमध्यप-तिते मलिम्लुचे एकं मासिकं कृत्वा द्वितीये मासि शुद्धेऽपि अन्य-दधिकं कुर्य्यादित्येतदर्थं ।

यदाह वशिष्ठः ।

संवत्सरमध्ये यद्यधिमासो भवेन्मासिकार्थं दिनमेकं वृद्धिं नयेत् ।

वृद्धवशिष्ठः ।

आद्वीयेऽहनि सम्प्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्व्वीत एवं कुर्व्वन्न मुह्यति ॥

कौथुमिः ।

अन्नमम्बुघटं दद्यादन्नं वापि सुसञ्चितं ।
संवत्सरे विवृद्धेऽपि प्रतिमासञ्च मासिकं ॥

गभस्तिः ।

न कुर्य्यान्मलमासेऽपि काम्यं कर्म कदाचन ।
मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्त्तितं ॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।

तत्कार्य्यं पूर्वमासेऽपि कालाधिक्येऽपि धर्मतः ॥

विष्णुः ।

मासिकार्द्धं चेद्धिमासपातो मासिकार्थं दिनमेकं वर्द्धयेत् । कश्चिदेतद्वचनमेवं व्याचष्टे 'वर्द्धयेत्' खण्डयेदिति, तत् प्रागुदाहृत-वचनाद्ग्रंथनिबन्धनमित्युपेक्षणीयं । स्मृत्यन्तरेऽपि "संवत्सरविवृद्धेऽपि प्रतिमासश्च मासिकं" एतत् सपिण्डीकरणात् प्राक्तनमासिकविषयं, एकोद्दिष्टमासिकविषयत्वादिति केचित्तदयुक्तं सपिण्डीकरणोत्तर-मासिकानामपि वैकल्पिकैकोद्दिष्टत्वविधानात् ।

यदाह कात्यायनः ।

सपिण्डीकरणादूर्ध्वं न दद्यात् प्रतिमासिकं ।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः ॥

अत्र च सपिण्डीकरणोत्तरमेकोद्दिष्टविधानेन "न दद्यात् प्रति-मासिकमित्येकः पक्षः, दद्यादित्यपरः, न तु सपिण्डीकरणोत्तर-कालमासिकं न दद्यादित्येकः, एकोद्दिष्टविधानेन दद्यादित्यपरः ।

तथाच आद्धकर्षः ।

पितुः पितृगणस्थस्य कुर्य्यात्पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासञ्च विधिर्ज्ञेयः सनातनः ॥

'पितृगणस्थः' सपिण्डीकृतः ।

ऋष्यशृङ्गः ।

संवत्सरातिरेको वै मासश्चैव चयोदशः ।
असुराणान्तु मासोऽसौ तस्मादेव विगर्हितः ।
तस्मात् चयोदशे श्राद्धं न कुर्य्यान्नोपतिष्ठति ॥

यस्मात् त्रयोदशीमाघो मधुरसम्बन्धेन गर्हितस्तस्मात् त्रयोदश्यां मलमासे श्राद्धं न कुर्य्यात् कृतमपि यतो नोपतिष्ठते। केचित् त्रयोदश्यां श्राद्धं न कुर्य्यादिति पठित्वा त्रयोदश्यं वार्षिकं मलमासे प्राप्तं तत्र कार्य्यमिति व्याचक्षते तदयुक्तं संवत्सरमध्ये यद्यधिकमासो भवेदित्यादिप्रागुदाहृतवचनविरोधात्। अपरे तु "तस्मात् त्रयोदश्यां श्राद्धं न कुर्य्यादिन्दुसङ्क्षये" इति पठन्ति तदप्ययुक्तं। "जातकर्म्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च। मलमासेऽपि तत्कार्य्यं व्यासस्य वचनं यथा" इति व्यासवचनविरोधात् पिण्डपितृयज्ञवत्तदनन्तरमवश्यानुष्ठेयस्यामावास्याश्राद्धस्य प्रतिषेधानर्हस्य प्रतिषेधप्रसङ्गाच्च। "तस्मात् त्रयोदश्यां श्राद्धं न कुर्य्यान्नोपतिष्ठते" इत्येव बह्वृचग्रन्थदृष्टः काश्मीरलिखितश्च पाठो ज्यायान्। तथाच हरि-हरादिग्रन्थेऽप्ययमेव पाठो दृश्यते।

माण्डव्यः।

गर्भे वार्द्धुषिके प्रेतश्राद्धे भृत्ये तु मासिके।
प्रथमे चाब्दिके चैव नाधिमासो विधीयत इति॥

यमः।

गर्भे वार्द्धुषिके भृत्ये श्राद्धकर्म्मणि मासिके।
सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत्॥
तीर्थस्नानं जपो होमो यव-व्रीहि-तिलादिभिः।
जातकर्म्मान्त्यकर्म्माणि नवश्राद्धं तथैव च॥
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश।
चन्द्र-सूर्य्यग्रहे स्नानं श्राद्ध-दान-जपादिकं।
कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथेति॥

'गर्भे' गर्भमासप्रथमा विहितपुंसवनादौ, 'वार्द्धुषिके' अग्नीति-भागेत्यादिविहिते वृद्धौ, 'अत्ये' संवत्सरादिपर्य्यन्तकालकृते, 'मासिके' इति द्वादशमासिकविषयत्वेन केचिद्व्याचक्षते तदयुक्तं श्राद्धान्यपि च षोडशेत्यनेनैव तस्य श्राद्धस्य मलमासेऽपि विधानात् तस्य षोडश-श्राद्धेषु गणनात् ।

श्राद्धकर्णः ।

द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव इत्येतच्छ्राद्धषोडशं ॥

'षाण्मासिकाब्दिक इत्यनेन विहितयोः श्राद्धयोः निरूपणार्थमाह,

एकेनाह्ना तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा ॥

एकेनाह्ना त्रिभिर्वा यदा षण्मासाः न्यूनाः स्युः संवत्सरश्च तदा षाण्मासिकाब्दिके श्राद्धे कार्य्ये इत्यर्थः ।

भविष्यत्पुराणे ।

अखिलस्याप्यनश्राद्धे त्रिपक्षे मासिकानि च ।
रिक्तयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश ॥

रिक्तयोस्तिथ्योरित्येकैकेनाह्ना न्यूने षष्ठे द्वादशे च मास-इत्यर्थः ।

ब्रह्मपुराणे ।

मृतानां त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसङ्ख्यया ।

कर्त्तव्याः श्रुतितस्तेषां तत्र विप्रांस्तु तर्पयेत् ॥

तेन 'मासिके श्राद्धकर्मणि' अमावास्याश्राद्धकर्मणीत्यर्थः, 'नित्ये' नित्यदाने, 'होमः' अग्नौपासनहोमः, यव-व्रीहि-तिलादिभिस्तत्र होतव्यद्रव्योपादानात्, 'अन्यकर्माणि' दन्तोदकपिण्डदानाग्निसन्धयनादीनि । जातकर्मवज्जातश्राद्धमपि कर्त्तव्यं ।

श्राद्धजातकनामानि ये च संस्कारसम्मताः ।
मलिम्लुचेऽपि कर्त्तव्याः काम्या इष्टीश्च वर्जयेत् ॥

'संस्काराः' अन्नप्राशन-निष्क्रमणाद्यः, जनार्द्दनशयनादारभ्य यावदुत्थानं धारण-पारणादिकं करिष्यामीत्येवं सङ्कल्पसहिताः सम्मताः काम्या अपि, इष्टिग्रहणं काम्यपश्वन्धादिधर्म्मोपलक्षणार्थं सर्व्वेषामपि काम्यानामनावश्यकत्वेन वर्जनीयत्वात् । अत एव स्मृत्यन्तरं "इष्ट्यादिकर्म काम्यन्तु मलमासे विवर्जयेत्" ।

हारीतोऽपि ।

अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।

"तथैव काम्यं यत्कर्मेति यत्काम्यं कर्म इष्ट्यादिकं तन्मलमासे न कर्त्तव्यमित्यर्थः ।

यत्तु ज्योतिःपाराशरेणोक्तं ।

उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
माससद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकं ॥

'पराः कार्य्याः' उत्तरे मासि कार्य्या इत्यर्थः । तत्र 'प्रसवाहोत्सवशब्देन जातेष्टिरेवावरुध्यते न पुनराभ्युदयिकं श्राद्धं जातकर्म च, तयोरपि ग्रहणे "श्राद्धजातकनामानीत्यादिस्मृतिविरोधापत्तेः

पैतृकग्रहणमावश्यकविषयं, न तु केवलसांवत्सरिकविषयं अमावास्यादिश्राद्धस्यापि मलमासे विधानात् ।

मत्स्यपुराणे ।

चन्द्र-सूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकं ॥

क्वचिच्छ्राद्धमक्षयमिति पाठः ।

शातातपस्मृतौ ।

प्रतिसांवत्सरे श्राद्धे नाधिमासं विवर्जयेत् ।

पैठीनसिः ।

मलमासेऽपि कर्त्तव्यं श्राद्धं यत् प्रतिवत्सरं ।
सांवत्सरं न वर्द्धेत श्राद्धं तच्च मृताहनि ॥
जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च ।
प्रतिसंवत्सरं यच्च पूर्वभागे प्रकीर्त्तितं ॥

'पूर्वभागे' अधिमासे ।

मासस्त्रयोदशो यत्र तत्र श्राद्धं कथं भवेत् ।
पूर्वापरावधौ तत्र कथं कुर्याद्विचक्षणः ॥
यस्मिन् राशौ गते सूर्ये विपत्तिः स्याद्द्विजन्मनः ।
तद्राशावेव कर्त्तव्यं पितृकार्यं मृताहनीति ॥

एतानि मलमासमृतविषयाणि ।

यदाह पैठीनसिः ।

मलमासे मृतानान्तु श्राद्धं यत् प्रतिवत्सरं ।
मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचनेति ॥

भृगुरपि ।

मलमासे मृतानान्तु यच्छ्राद्धं प्रतिवत्सरं ।
मलमासे तु कर्त्तव्यं नान्येषान्तु कदाचनेति ॥

व्यासः ।

मलिम्लुचे तु सम्प्राप्ते ब्राह्मणो म्रियते यदि ।
अनाभिधेयोमासोनु कथं कुर्य्यादथाब्दिकं ॥
यस्मिन् राशौ गते सूर्य्ये विपत्तिः स्याद्विजन्मनः ।
तस्मिन्नेव प्रकुर्व्वीत पिण्डदानोदकक्रियाः ॥
अधिमासे मृतानान्तु सौरं मानं समाश्रयेत् ।
स एव तस्य मासोऽपि श्राद्धपिण्डक्रियादिषु ॥

सत्यन्तरे तूत्तराद्धमन्यथा पठ्यते,

स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु ।

अन्ये तु ।

मास-पक्ष-तिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दन्तु तथा भूते क्षयाहं तस्य तं विदुः ॥

इत्यादिवचनपर्य्यालोचनया शातातपादिवचनानि मलमासमृतविषयाणीत्याहुः । मलमासमृतस्य मलमाससम्भवे सति मलमासस्पृष्ट एव मृताहस्तथाभूतो न तु शुद्धमासस्पृष्ट इति । मलमासगतक्षयाह एवाब्दिकं श्राद्धं कर्त्तव्यं, न तु शुद्धमासगतक्षयाहे, अतथाभूतत्वात् मलमाससम्भवे तद्गुणलोपन्यायान्मलमासस्पृष्टेऽपि क्षयाहे मृताहश्राद्धं कर्त्तव्यमित्यवगन्तव्यं । प्रथमाब्दिकं मलमासे कार्य्यं ।

तथा च वृद्धवशिष्ठः ।

असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥

केचिदेवं व्याचक्षते आब्दिकं प्रथमं न्यूनाब्दिकं तदाब्दिकं मृताहात् पूर्वदिने क्रियते मासिकन्तु मृताहन्येव, यदाब्दिकसंज्ञं क्रियत इति पूर्वमेव द्वादशाहादौ सपिण्डीकरणं कृतं, यदा तु पूर्णे संवत्सरे तत् क्रियते तदा पृथगाब्दिकं नास्ति सपिण्डीकरणेनैव तस्यापि सिद्धेस्तदुक्तं ।

पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्त्तितः ।
तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते ॥

पिण्डशब्देन श्राद्धं पूर्णे संवत्सरे लभ्यते 'षोडशः पिण्डः' षोडश-श्राद्धमित्यर्थः, तदयुक्तं 'आब्दिकं प्रथममित्यनेन न्यूनाब्दिकग्रहणे मासिकशब्देनाब्दिकग्रहणे प्रमाणाभावात् द्वादशमासिकस्य च द्वादशमासोपक्रम एव कर्त्तव्यत्वाच्च। एतच्च षोडशश्राद्धकालनिर्णयप्रस्तावे दर्शयिष्यते । यत्तु सत्यव्रतेनोक्तं ।

वर्षे वर्षे च यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न कर्त्तव्यं व्याघ्रस्य वचनं यथा ॥

तदधिमासादन्यत्र मृतस्य प्रथमाब्दिकान्यश्राद्धविषयं। अत्र मलमासशब्देनाधिमासो ग्राह्यः ।

एक एव यदा मासः संक्रान्तिद्वयसंयुतः ।
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यत इति ॥

शुद्धमासमृतस्यापि प्रतिसंवत्सरश्राद्धस्य क्षयमासे विधानात् ।

एवञ्च चयमासात् पूर्वभाव्यसंक्रान्तश्राद्धं "प्राकृतस्तत्र पूर्वः स्यादिति शुद्धत्वात् पूर्वासंक्रान्ते, "एक एव यदा मास इतिवचनात् तत्र चयमासे च कार्यं, तेन मलमासमृतस्य यदा मरणमासो मलमासो भवति तदा प्रतिसंवत्सरश्राद्धं मलमास एव कार्यं न शुद्धे नाप्युभयोः, शुद्धमासमृतस्य तु यदा मरणमासो मलमासो भवति तदा प्रथमाब्दिकं चेन्मलमासे एव कार्यं न शुद्धे नाप्युभयोः, द्वितीयाब्दिकं चेत् शुद्धे एव कार्यं न मलमासे नाप्युभयोः,

तस्मिंस्तु प्राकृते मासे कुर्याच्छ्राद्धं यथोदितं ।
तथैवाभ्युदयं सर्वं नित्यमेकं हि सर्वदा ॥

'प्राकृते' शुद्धे, सर्वं श्राद्धं नित्यं नियमेनैकमेव कुर्यात् न द्वितीयं मलमासेऽपीत्यर्थः। तथा "सांवत्सरं न वर्द्धेत श्राद्धं तत्र मृताहनीति-वचनादपि न सांवत्सरिकमुभयत्रानुष्ठेयं ।

अत्र केचिदाहुः ।

मलमासे सांवत्सरिकं श्राद्धं कृत्वा तदुत्तरमासे पुनस्तदेवावर्त्तनीयं :

तथाच यमः ।

आब्दिकं प्रथमं यत्स्यात्तु कुर्वीत मलिम्लुचे ।
त्रयोदशे तु सम्प्राप्ते कुर्वीत पुनराब्दिकं ॥

त्रयोदशे तु सम्पूर्णे सति चतुर्दशमासप्रवेशदिने पुनरप्याब्दिकं कुर्वीतेत्यर्थः। 'सांवत्सरं न वर्द्धेतेत्यस्यायमर्थः, 'न वर्द्धेत' न विच्छि-द्येतेति। तेनैतदपि मासद्वये श्राद्धमनुष्ठेयमिति प्रतिपादयतीति, तदयुक्तं उभयत्र श्राद्धानुष्ठाने प्रमाणाभावात्। यमवचनस्य त्वयमर्थः प्रथमाब्दिकं मलिम्लुचे कुर्वीत, 'पुनराब्दिकं' द्वितीयाब्दिकं, तत्तु

त्रयोदशे मासि सम्पूर्णे सति चतुर्दशमासप्रवेशदिने कुर्वीतेति, 'आब्दिकं प्रथममिति 'सांवत्सरं न वर्द्धतेति वचनद्वयस्यास्मदुक्तोऽर्थो-वचनान्तरसंवादी तथाच तन्मूलभूतया श्रुत्योपपत्तेर्न मूलान्तरकल्पना, भवदुक्तस्त्वर्थो न तथेति मूलभूतस्य श्रुत्यन्तरकल्पनाप्रसङ्गः। किञ्च भवत्पक्षे तु 'त्रयोदशे तु सम्प्राप्त इत्यत्राब्दिकशब्दवैयर्थ्यं प्रसज्यते। त्रयोदशे तु सम्पूर्णे पुनः कुर्वीतेत्युक्तेऽपि प्रकृतत्वेन प्रथमाब्दिकस्याश्रयात् द्वितीयाद्याब्दिकविषयत्वे तु नायं दोषः। तेन "आह्नीयाहनि सम्प्राप्ते इतिवर्षिष्ठवचनं मासिकविषयमिति ज्ञेयं। किञ्च सांवत्सरिकविषयत्वेऽपि किं मलमासमृतसांवत्सरिकविषयं असमलमासमृतप्रथमाब्दिकविषयं वा। न प्रथमः, "तद्राशावेव कर्त्तव्यं" "तस्मिन्नेव प्रकुर्वीत" "स एव तस्य मासोऽपि स एव दिवसस्तस्येति प्रागुदाहृतसाधारणबहुवाक्यविरोधात्। 'मलमासेऽपि कर्त्तव्यमिति पैठीनसिवचनगतोपि शब्दस्त्वेवमप्युपपद्यते यदा शुद्धस्त्रयोदशो भवति तदा तत्र सांवत्सरिकं कार्यं यदा मलमासस्त्रयोदशो भवति तदा तत्रापीति। यद्वा प्रागुदाहृतबहुवचनविरोधादपिशब्द एवकारार्थे भविष्यति एकस्मिन्नेवाहनि श्राद्धद्वयप्रसङ्गाच्च। अथवा वचनान्तरपर्यालोचनयैकं मलमासे अपरन्तु शुद्ध इत्युच्यते तर्हि तत्पर्यालोचनयैव मासिकविषयता प्रसज्येत। नापि द्वितीयः, उक्तादेव हेतोः "प्रत्यब्दं द्वादशे मासीति वक्ष्यमाणालघुहारीतवचनाच्च, अथासंक्रान्तेऽपि कर्त्तव्यमित्यपिशब्दादुभयत्रापि कर्त्तव्यं श्राद्धमित्युच्यते तर्हि मलमासे एकमाब्दिकं कृत्वा पुनः शुद्धे क्रियमाणं न प्रथमाब्दिकं स्यात्। यदा शुद्धस्त्रयोदशो भवति तदा

तत्र प्रथमाब्दिकं कार्यं। यदा मृतमासः असंक्रान्तस्त्रयोदशो भवति तदा तत्रापीत्येवमपिशब्दोपपत्तेश्च।

अन्ये तु "आब्दिकं प्रथमं यत्स्यात्र कुर्वीत मलिम्लुचे" इति पाठमुदाहृत्य मलमासमृतविषयत्वेनैवं व्याचक्षते, मलिम्लुचमृतस्य यत् प्रथमाब्दिकं तन्मलिम्लुचे न कुर्वीत तस्य प्रथमाब्दिकसमये मलिम्लुचासम्भवात्। तृतीये हि वर्षे पूर्वस्मान्मलमासादन्यो मलमासो भवति तस्मान्मलमृतस्य प्रथमाब्दिकं मलमासे कदाचिदपि न प्राप्नोति, अतः पूर्वार्द्धं नित्यानुवादः। यदा गच्छता कालेन यदि मलमासमृतस्य पुनराब्दिके प्राप्ते स एव मलमासो भवति तदा तस्मिन्नेव मलमृतस्य पुनराब्दिकं प्रतिसंवत्सरं विहितं श्राद्धं कुर्वीतेत्यर्थः।

मलमासेऽपि कर्त्तव्यं श्राद्धं यत् प्रतिवत्सरं।
सांवत्सरं न वर्द्धेत श्राद्धं तच्च मृताहनि॥

अत्रापि पूर्वार्द्धं मलिम्लुचमृतविषयं, 'सांवत्सरं' प्रथमाब्दिकं, 'न वर्द्धेत' न विच्छिद्येत, शुद्धेऽपि मासे इत्येतावाननुवादः, तदयुक्तं। निष्प्रयोजननित्यानुवादस्यायुक्तत्वात् श्लोकवैयर्थ्यप्रसङ्गात्। तस्मात् "आब्दिकं प्रथमं यत्स्यात्तत् कुर्वीत मलिम्लुचे" इत्येवं बहुग्रन्थदृष्टः पाठो युक्तः। "मलमासे न कर्त्तव्यमिति वचनस्य चास्मदुक्त एवार्थो युक्तः, तस्मान्मलमासमृतसांवत्सरिकं मलमाससम्भवे तत्रैव कार्यं अमलमासमृतस्य प्रथमाब्दिकं चेति सिद्धं। इदमिह विचार्यते, किमन्तराधिमासनिपातेऽपि प्रथमाब्दिकं त्रयोदशे मासि कार्यं, उत यदा अधिमासस्त्रयोदशो भवति। तत्र केचिदाहुः। अन्तरा त्वधिमासनिपाते त्रयोदशे मासि प्रथमाब्दिकं कार्य्यमित्येवंपरत्वेनैतद्वाक्यमिति।

यदाह लघुहारीतः ।

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः ।
क्वचित् त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरं ॥

'पिण्डक्रिया' मृताहश्राद्धक्रिया, द्वादशे मासि परिपूर्णे सति त्रयोदशे मासीति यावत् क्वचिदधिमासयुक्तसंवत्सरे त्रयोदशे मासि परिपूर्णे सति चतुर्दशे मासीति यावत् आद्यमाब्दिकं त्वधिकमासवत्यपि संवत्सरे द्वादशे मासि परिपूर्णे सति कार्यं त्रयोदशे मासि कार्यमित्यर्थः । तदयुक्तं, यदि हि क्वचिदित्यस्या-धिमासवति संवत्सर इत्यर्थः स्यात्तदान्तराधिमासे सति कार्त्तिकमृत-प्रथमाब्दिकस्याश्विने मासि प्राप्तौ "मास-पक्ष-तिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि। प्रत्यब्दन्तु तथाभूतं क्षयाहन्तस्य तं विदुः" इति व्यास-वचनं बाध्येत । यदि तु क्वचिदित्यस्य त्रयोदशाधिमास इत्यर्थः स्यात्तदा नास्य वाक्यस्य सङ्कोचलक्षणो बाध इत्ययमेवार्थो युक्तः । किञ्च "प्रत्यब्दं द्वादशे मासीत्यस्य वाक्यस्याभ्युक्तार्थस्वीकारे "संक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः" इत्येतन्मूलतयैव मुत्युपपत्तेर्न मूलान्तरकल्पना, भवत्पक्षे तु साप्यापद्येत । एवं तावत् क्वचिच्छब्दे-नैतस्यार्थस्य सिद्धत्वात्, "प्रत्यब्दं द्वादशे मासीत्यस्य वाक्यस्यासत्यपि सङ्कोचो नास्तीत्युक्तमिदानीमङ्गीकृत्योच्यते, कार्त्तिकमृतस्यान्तराधि-मासे सति चाश्विने मासि श्राद्धे क्रियमाणे "मास-पक्ष-तिथिस्पृष्टे इतिवचनसङ्कोचः । अधिमासे क्षयमासे च मासिकस्य विधानाद-धिमासवति संवत्सरे त्रयोदशमासिकानि जातानि, ततश्च त्रयोद-शमासप्रवेशदिने मासिकं सांवत्सरिकं च प्राप्नोति तथाप्युक्तं,

"नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचिदितिवचनादन्यान्य-विषयत्वे च भवत्पक्षे वाक्यद्वयसङ्कोचः, अस्मत्पक्षे तु चयोदशपद-स्याधिमासविषयत्वेन सङ्कोच इति विशेषः। किञ्च श्राद्धद्वयं युगप-दनुष्ठीयते क्रमेण वा। न तावद्युगपत् कर्ममध्ये कर्मान्तरानुष्ठाननि-षेधादन्यान्यविषयत्वे च भवत्पक्षे वाक्यत्रयसङ्कोचः, अस्मत्पक्षे नैकस्मे-ति च स एव पूर्वः, द्वितीयेऽपि किमादौ मासिकं सांवत्सरिकं वा न तावन्मासिकं एकस्य विहितकालबाधप्रसङ्गात्। तस्यान्यविषयत्वे तु स एव परिहारः। नापि सांवत्सरिकं उक्तादेव हेतोः। किञ्च मासि-कोत्तरकालमाह्निकविधानात्तद्बाधोऽपि प्रसज्यते। तस्यान्यविषयत्वे च भवत्पक्षे वाक्यचतुष्टयसङ्कोचः, अस्मत्पक्षे नैकस्मेति महान् विशेषः।

ननु "संवत्सरविवृद्धौ च यदि स्यादधिमासकः। तदा द्वाद-शके मासि कार्यन्तदधिकं भवेत्"॥ इति सत्यव्रतवचनेन चयोदश-मासिकं द्वादशे मासि विहितं अतोनायन्दोषः इति चेत्, उच्यते "संवत्सरविवृद्धौ च प्रतिमासञ्च मासिकमित्यादिवचनेन प्रतिमा-सम्मासिकविधानाद्विकल्पः, ततश्च चयोदशमासेषु प्रतिमासम्मासिका-नुष्ठानपक्षे प्रागुक्तो दोष इत्यवधेयं। किञ्च "प्रत्यब्दं द्वादशे मासी-त्यस्य द्वादशे मासि अधिके इत्ययमर्थः "मास-पक्ष-तिथिस्पृष्ट इति वाक्यपर्यालोचनया वर्णनीयः। ततश्चोपजीव्याबाधेनास्य वाक्य-स्योपपत्तौ नोपजीव्यबाधा युक्तेति। किञ्च "यस्मिन्मासे दिने यस्मिन् विपत्तिरुपजायते। पर्वान्तः स तु विज्ञेयोमासोनैमित्तिकं प्रति"॥ इति ज्योतिर्गार्ग्यादिवचनसङ्कोचोऽपि प्रसज्यते। किञ्चा-स्मत्पक्षे मलमासकार्याकार्यनिरूपणप्रसङ्गस्य प्रकृतत्वात् प्रकृतप्रश्न-

मिदं वाक्यं भवेत्, भवत्पक्षे त्वधिमासवति संवत्सरेऽपि मासान्तरगतकार्यनिरूपणाच्च तथा युक्तमित्यपरो विशेषः । किञ्च चैत्रे मृतस्य ज्येष्ठादावधिमासे फाल्गुने श्राद्धं स्यात्तच्च प्रतिसंवत्सरमिति वाक्येन संवत्सरभेदाभावात् । द्वितीये चाभावात् प्रतिसंवत्सरमिति व्याप्तिबाधः ।

अन्ये तु पूर्वोक्तदूषणभियैवं व्याचक्षते न तु द्वादशमासादर्वागपि "मृतेऽहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरमिति विधानमस्ति तच्चाद्यमिति द्वितीयादिसंवत्सरे त्वयं नियम इत्यर्थः । एवं हि सर्वशास्त्राविरोधः । अन्यथाप्यन्यथासिद्धेन मृताहविशेषेण मासबाधप्रसङ्गादाद्यशब्दस्य द्वितीयपरः स्यादिति, तस्माद्यदाधिमासस्त्रयोदशो भवति तदैव त्रयोदशे मासि प्रथमाब्दिकं न त्वन्तराधिमाससन्निपातेऽपीति ज्ञेयं ।

अन्ये तु "आब्दिकं प्रथमं यत्स्यात्तु कुर्वीत मलिम्लुचे इति यमवचनपाठमुदाहृत्य अन्तरा पतितेऽप्यधिमासे त्रयोदशे मासि प्रथमाब्दिकं कार्यमित्येवम्परत्वेनैतद्वाक्यं व्याचक्षते । अन्तरा मलिम्लुचे सत्याब्दिकं यत् यच्च कस्मिन्मासे पक्ष-तिथि-स्पृष्टे मृताहनि विधानवशात्स्यात्तत्र पुनराब्दिकं द्वितीयाद्याब्दिकं कुर्वीत न प्रथमं, प्रथमन्तु द्वादशे मासेऽतीते त्रयोदशे मासि सम्प्राप्ते प्रवेशदिने कुर्वीतेत्यर्थः, तदयुक्तं अनेकाध्याहारादिदोषप्रसङ्गात् अस्य वाक्यस्य वचनान्तरादप्रतीतेरस्मिन्नर्थे अध्याहाराद्यङ्गीकारेण तात्पर्यकल्पने प्रमाणाभावाच्च । तस्मादस्य वाक्यस्य "आब्दिकं प्रथमं यत्स्यात् तत् कुर्वीत मलिम्लुचे इत्ययमेव बहुग्रन्थदृष्टः पाठो युक्तः, तस्माद्यदा मलमासस्त्रयोदशो भवति तदैव त्रयोदशे मासि प्रथमाब्दिकं न त्वन्तराधिमाससन्निपातेऽपीति सिद्धं ।

पैठीनसिः ।

प्रथमत्वान्यधिमासे तु न कार्याणि मखात्मभिः ।

अप्रशस्तं न कर्तव्यमात्मनः श्रेय इच्छता ॥

अथयच काम्यव्रतादीनि मलमासमात्रे प्रतिषिध्यन्ते तथाप्यधि-मासे तेषामारम्भ-समाप्ती प्रतिषिध्येते। क्षयमासे तु प्रथमारम्भ एव, अन्यथा कार्त्तिकस्य क्षयमासान्तःपाते प्राप्ते प्रारब्धानां चातुर्मास्य-व्रतानामसमाप्तिः प्रसज्येत पौषस्य[१] च क्षयमासान्तःपाते पूर्वस्मिन् पक्षे प्रारब्धस्य माघस्नानव्रतस्य पुनरारम्भः प्रसज्येत। क्षयमासात् पूर्वस्मिन्नुत्तरस्मिन्वा मासे तत्समाप्तौ तदारम्भे च कार्त्तिके समाप्ति-विधानं पुष्ये चारम्भविधानं विरुध्यत। प्रारब्धकर्मस्वासमाप्तावने-कवर्षसाध्यस्य च मासव्रतस्यारब्धस्यान्यस्मिन्वर्षे पुनरारम्भसङ्कल्पवि-रोधः, "आरम्भाद्विषमोदोषस्त्वसमाप्तौ स्यादिति कात्यायनवचन-विरोधश्च। अधिमासे तु आद्ये शुद्धमासान्तरसद्भावादारम्भ-समा-प्योश्चोपपत्तेरधिमासे तयोः प्रतिषेधे न कश्चिद्विरोधः। प्रथमार-म्भोऽपि क्षयमासेऽपि शुद्धमासान्तराभावात् कस्मान्न स्यादिति चेत्, न, "न कुर्यान्मलमासे तु महादान-व्रतानि चेति वचनविरोधात्। अस्य प्रथमारम्भव्यतिरिक्तसमाप्त्यादिनिषेधपरत्वे सङ्कल्पादिविरो-धस्योक्तः स्यात् काम्यव्रतादीनां क्षयमासे प्रारम्भनिषेधपरत्वे संकल्पा-दिविरोधस्योक्तत्वात् काम्यव्रतादीनां क्षयमासे प्रथमारम्भनिषेधप-रत्वे विरोधाभावाच्चेति। नन्वेवं सति यदा कार्त्तिकोऽधिमासो भवति तदा कार्त्तिकव्रतानां शुद्धाश्विन एवारम्भाच्छुद्धकार्त्तिके च समाप्ते मासोपवासव्रतस्यापि मासद्वयमनुष्ठानं प्राप्नोति तच्चायुक्तं। उच्यते

(१) पुष्यस्य इति क०।

यदि हि मासोपवासव्रतस्याश्विने प्रारम्भविधानं शुक्लकार्त्तिके च समाप्तिविधानं स्यात् स्यादेवं न त्वेवमस्ति, किन्त्वश्विनशुक्लद्वादश्यामारम्भमभिधायोपरितनशुक्लद्वादश्यां समाप्तिर्विष्णुरहस्येऽभिहिता ।

आश्विनस्यामले पक्षे एकादश्यामुपोषितः ।
व्रतमेतत्तु गृह्णीयात् यावत् त्रिंशद्दिनानि तु ॥
अन्यूनाधिकमेवन्तु व्रतं त्रिंशद्दिनैरिदं ।
कृत्वा मासोपवासन्तु संयतात्मा जितेन्द्रियः ॥
ततोऽर्च्चयेत वै पुण्यं द्वादश्याङ्गरुड़ध्वजं ।
पूजयेत् पुष्पमालाभिर्गन्ध-पुष्प-विलेपनैः ॥
वस्त्रदानादिभिश्चैव भोजयेत द्विजोत्तमान् ।
दद्याच्च दक्षिणान्तेभ्यः प्रणिपत्य समापयेदिति ॥

ततः शुद्धाश्विनशुक्लद्वादश्यामेतद्व्रतमारभ्योपरितनशुक्लद्वादश्यां समापनीयं न मासद्वयमनुष्ठेयं मासोपवासव्रतस्य च काम्यत्वात्काम्यस्य च मलमासात् प्रागारब्धस्य मलमासेऽपि समाप्तिविधानान्न कश्चिद्दोषः । ननु क्षयमासस्थतानां उत्पन्नानां च द्वितीयाब्दिकं वर्द्धापनं च कस्मिन्मासे कार्य्यमित्यपेक्षायां तन्निर्णयार्थं क्षयमासान्तर्गतमासद्वयविवेकमाह ।

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

प्रथमे तिथ्यर्द्धे पूर्वमासः द्वितीये तिथ्यर्द्धे तदुत्तरो मास इत्येव क्षयमासस्य मध्यगतौ मासौ बुधैश्चिन्तनीयावित्यर्थः । अतः प्रथमे

तिथ्यर्द्धे मृतस्याब्दिकं तत्रोत्पन्नस्य च वर्द्धापनञ्च पूर्वे मासि कार्यम् द्वितीये तिथ्यर्द्धे मृतस्याब्दिकं तत्रोत्पन्नस्य वर्द्धापनमुत्तरे मासि कार्यमिति विवेकः ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-सकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परि-शेषखण्डे कालनिर्णये मलमासनिर्णयः समाप्तः ।

---

# अथ तृतीयोऽध्यायः ।

## अथ सामान्यतः सर्वतिथिनिर्णयः ।

तिथिश्च द्विःप्रकारा सम्पूर्णा खण्डा च। तत्र सम्पूर्णा स्कन्दपुराणे दर्शिता। "प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद्रवेः। सम्पूर्णा इति विख्याता हरिवासरवर्जिताः" ॥ हरिवासरस्य सम्पूर्णत्वमेकादशीनिर्णये वक्ष्यते। असम्पूर्णा दिनद्वयसम्बन्धिनी खण्डा, तस्यां दिनद्वयसम्बन्धिन्यां सत्यां व्रताद्यनुष्ठाने पूर्वा परा वोपादेयेति सन्देहे निर्णयः क्रियते। तत्र निगमः।

युग्माग्नि-युग-भूतानां[1] षण्मुन्योर्वसु-रन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या तु पूर्णिमा ॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलं ।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति ॥

'युग्मं' द्वितीया, 'अग्निः' तृतीया, 'युगं' चतुर्थी, 'भूतं' पञ्चमी, 'षट्' षष्ठी, 'मुनिः' सप्तमी, 'वसुः' अष्टमी, 'रन्ध्रं' नवमी, 'रुद्रः' एकादशी, तिथ्योर्युग्ममित्यभिधानात् द्वितीयादिप्रतिपदन्तासु तिथिषु क्रमेण द्वयोर्द्वयोस्तिथ्योः परस्परमेव युग्मं महाफलं न पुनर्व्यस्तं तिथ्यन्तरयुग्ममित्यर्थः, अनेनोक्तयुग्मपक्षे पूर्वा तिथिरुत्तरविद्धा कार्या उत्तरा तु पूर्वविद्धेत्युक्तं भवति ।

---

(१) युग्माग्नि-युग-भूतानामिति क० ।

भविष्यत्पुराणे।

शाङ्खलिकल्पे तु "युग्माद्य कृतरामाब्धीति पठ्यते, 'कृतं' चतुर्थी, 'रामः' तृतीया, तथैव "युग्मानि कृतपुण्याग्नीति पाठान्तरं, तथा 'कृत-भूतानीति च।

अत केचिदाहुः।

शुक्लप्रतिपदमावास्यायुता ग्राह्या "प्रतिपद्यमावास्येति वचनात्। यत्तु "प्रतिपत् सद्वितीया स्याद्द्वितीया प्रतिपद्युतेत्यापस्तम्ब-भविष्यत्पुराणशाङ्खलिकल्पयोर्वचनं तत्कृष्णप्रतिपद्विषयं "प्रतिपद्यमावास्या तिथ्योर्युग्मं महाफलमिति शुक्लप्रतिपदः पूर्व्वयुताया एव प्रतिपादनात्। अपरे त्वाहुः अत प्रतिपदमावास्या युता ग्राह्या "प्रतिपद्यमावास्येति वचनात्।

पञ्चमी सप्तमी चैव दशमी च चतुर्दशी।
प्रतिपन्नवमी चैव कर्त्तव्या संमुखा तिथिः॥

इति पैठीनसिवचनाच्च।

अत केचित्संमुखा सायाह्नव्यापिनीति व्याचक्षते "संमुखा नाम सायाह्नव्यापिनी दृश्यते यदीति स्कन्दपुराणवचनात् तदयुक्तं वक्ष्यमाणवचनविरोधात् स्कन्दपुराणवचनस्यान्यविषयत्वोपपत्तेश्च तस्माद्‌च संमुखा पूर्वविद्धा क्वचिता सापि चापराह्णव्यापिन्येव "प्रतिपत् संमुखा कार्या या भवेदापराह्णिकीति स्कन्दपुराणवचनात्। अन्या शुक्ला कृष्णा वा द्वितीयायुतैव ग्राह्या प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युतेत्यापस्तम्बवचनात्, न तु शुक्लप्रतिपत्पूर्वा ग्राह्येत्युक्तं। तत्रैवायं विशेषः कस्मात् भवति "प्रतिपत्संमुखा कार्या या भवेदापराह्णिकी।

प्रतिपत्सद्वितीया स्यादिति तु कृष्णपक्षविषयमेव। तत्र च नापराह्णि-कनियमः, पैठीनसिवचनमपि शुक्लप्रतिपद्विषयमित्युच्यते, एवं सति "पञ्चमी सप्तमी चेति, "प्रतिपत्सम्मुखा कार्य्येतिवचनद्वयस्य केवल-शुक्लप्रतिपद्विषयत्वेन सङ्कोचः प्रसज्येत, "प्रतिपत्सद्वितीया स्यादिति वाक्यसङ्कोचस्तु पक्षद्वयेऽप्यविशिष्टः भवता युग्माग्निवाक्यविषयपरित्या-गाश्रयणात् अस्माभिः "प्रतिपत्सम्मुखा कार्य्येतिवाक्यविषयपरित्यागा-श्रयणात्। ननु "पञ्चमी सप्तमीचैव इति वचनसङ्कोचो न दोषाय सामान्यशास्त्रस्य विशेषशास्त्रेणोपसंहारस्य युक्तत्वात् सङ्कोचभयाद-नुपसंहारे सर्वत्रोपसंहारोच्छेदापत्तेः। सत्यमेवं "प्रतिपत्संमुखा कार्य्या इति वचनसङ्कोचे तावत्कारणं न विद्यते तेनैतदुभयत्रापि प्रवर्त्तते, एवञ्च "पञ्चमी सप्तमी चैवेति वाक्यसङ्कोचोऽप्यस्मत्पक्षे न भविष्यति, "प्रति-पत्सम्मुखा कार्य्येतिवचनसङ्कोचः सोऽप्यापद्यत इति नास्य सङ्कोचोयुक्त-इत्युच्यते। ननु कृष्णप्रतिपदः पूर्वविद्धत्वमप्राप्तं अतश्च सा पूर्वविद्धा ग्राह्या सा चापराह्णिकीत्यर्थद्वयविधानात् गौरवं स्यात्, शुक्लप्रति-पदस्तु पूर्वविद्धत्वं प्राप्तमिति तद्विषयत्वेन गौरवमिति चेत्, उच्यते, आपराह्णिकी तावत्प्रतिपत्सत्पत्तो विद्यते ततश्च आपराह्णिकी प्रति-पत्सम्मुखा कार्य्येति विधीयत इति न गौरवं, अतश्चोऽप्यप्रतिपद्वि-षयमिदं तेनापराह्णिकी प्रतिपत्पूर्वविद्धा अन्या तूत्तरविद्धेति व्यवस्था सिद्धा। तदेतदयुक्तं प्रतिपदः संमुखायाः कर्तुमशक्यत्वात्। ततश्च संमुखायां प्रतिपदि कर्म कार्य्यं तच्चापराह्णव्यापिन्यामिति विधाने गौरवं शुक्लप्रतिपद्विषयत्वे तु नायं दोषः। एवञ्च "पञ्चमी सप्तमी चैवेति वाक्यसङ्कोचोऽपि बलादापतितो न दोषाय तस्मात् शुक्ल-

प्रतिपत् पूर्वा ग्राह्या यथापराह्णिकी तथा प्रतिपत्पूर्वाह्णेऽप्यपरैवेति व्यवस्था। तेन यत्कैश्चिदुक्तं "प्रतिपत्सद्वितीया स्यादिति वचनं तिल-काशोक-करवीरव्रतविषयं तेषां पूर्वाह्ण एव विधानादिति तन्निरस्तं कर्मान्तरस्यापि पूर्वाह्ण एव विधानात् केवलतद्विषयत्वेन सङ्कोचे का-रणाभावाच्च। अथ पूर्वाह्णविहितसकलकर्मविषयमुच्यते, तदयुक्तं।

यस्मिन् काले तु यत्कर्म तत्कालव्यापिनी तिथिः।

इति सामान्यवचनेनैवार्थस्य सिद्धत्वात्। किञ्चैवं सति "प्रतिपत् संमुखा कार्य्येति वचनमपराह्णविहितकर्मविषयं प्रसज्येत। ततस्तस्यापि वैयर्थ्यं स्यात् सामान्यवचनेनैव सिद्धेः। किञ्चैवं पूर्वविद्ध-परविद्धग्रहण-प्रतिपादकसर्ववाक्यवैयर्थ्यं प्रसज्येत। प्रातिस्विकपूर्वाह्णादिविधायक-वाक्येभ्यः प्रदर्शितसामान्यवचनाच्च तस्यार्थस्य सिद्धत्वात् दिनद्वयेऽपि कर्मकालव्यापितिथ्यभावे पूर्वविद्ध-परविद्धग्रहणप्रतिपादकवाक्यप्रवृत्ते-र्वक्ष्यमाणत्वाच्च तस्मादस्मदुक्तैव व्यवस्था युक्ता। अपरे त्वेवमाहुः।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥

इति वचनात् प्रतिपदः पूर्वविद्धत्वमुपवासविषयं "प्रतिपत्सद्विती-या स्यादिति तु तद्व्यतिरिक्तविषयमिति। नन्वेवं सति "प्रतिपद्यप्यमा-वास्येति, "पञ्चमी चैवेति, "प्रतिपत्संमुखा कार्य्येति वचनसङ्कोचः प्रस-ज्येत अस्मत्पक्षे तु "प्रतिपत्सद्वितीया स्यादित्यस्यैव सङ्कोच इति विशेषोविद्यते, अतः कथमियं विषयव्यवस्थेति चेत्, उच्यते, बहु-वाक्यसङ्कोचोऽपि स्वीक्रियते सामान्यशास्त्रस्य विशेषशास्त्रेणोपसंहारस्य युक्तत्वात्। न चात्र सङ्कोचोऽपि विद्यते, युग्मादिवचनेन हि प्रति-

पदः पूर्वविद्धत्वमभिहितं "प्रतिपत्सद्वितीया स्यादित्यनेन प्रतिपदः परविद्धत्वं एवंविरोधे सति कर्मविशेषानुपादानात्, कस्याच कर्मणो-ग्रहणमित्यपेक्षायामुपवासे प्रतिपदः पूर्वविद्धत्वाभिधानात्, युग्मवाक्ये स एव गृह्यते "प्रतिपत्सद्वितीया स्यादिति वचने तूपवासव्यतिरिक्त-कर्मग्रहणमिति कुतः सङ्कोचः, तदयुक्तं "प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युतेत्यचोत्तरपादे प्रतिपद्द्वितीये कृष्णे एवेति वक्ष्यते। तेन पूर्वपादेऽपि ते एव प्रक्रान्ते ग्राह्ये ।

द्वितीया पञ्चमी चैव दशमी च चयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वापरे तिथी ॥

इति वचनेन प्रतिपन्मात्रस्य पूर्वविद्धस्योपोष्यत्वाभिधानाद्युग्म-वाक्यस्योपवासविषयत्वे केवलशुक्लप्रतिपदः पूर्वविद्धत्वाभिधानमनुप-पन्नं स्यात् । अथ तदपि शुक्लप्रतिपद्विषयं, तर्हि "द्वितीया पञ्चमी-वेधादित्यच द्वितीया-तृतीये अपि शुक्ले एव ग्राह्ये तेन शुक्लतृतीया परयुतोपोष्येत्यर्थः स्यात्तच ।

रम्भाख्यां वर्ज्जयित्वा तु तृतीयां द्विजसत्तम ।
अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते ॥

इति वचनेन रम्भाख्यव्रतव्यतिरिक्तसर्वकार्य्येषु तृतीयामात्रस्य परयुतत्वविधानं न स्यात् पूर्वविद्धप्रतिपत्प्रतिपादकबहुवाक्येभ्यः सा-मान्यतः पूर्वविद्धत्वं प्रतीयमानं "द्वितीया पञ्चमीवेधादितिवचने द्वितीयादिशब्दानां साधारण्यं प्रतीयमानं विना कारणेन बाधितं स्यादिति तस्मादस्मदुक्तैव व्यवस्था युक्ता, द्वितीयां केचिदाहुः शुक्ल-द्वितीया पराश्रिता "युग्माग्नीतिवचनात्, अस्य च शुक्लपक्षविषयत्वं

पक्षान्ते चतुर्दशी-पूर्णिमायुग्मेन साहचर्य्यादवगन्तव्यम्। यत्तु ब्रह्मवैवर्त्तवचनं "द्वितीया प्रतिपद्युतेति तत्कृष्णद्वितीयाविषयं। अन्ये त्वाहुः।
शुक्लद्वितीया परयुता ग्राह्या कृष्णद्वितीया पूर्वा।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः॥

इति मार्कण्डेयवचनात्। यच्च शुक्लैकतिथिरेकेन वचनेन पूर्वविद्धा ग्राह्येत्युच्यते अपरेणापरयुतेति तत्रानेन वाक्येन व्यवस्था क्रियते एवं सत्यपेक्षितार्थप्रतिपादनं भवति न तु शुक्ल-कृष्णव्यवस्थया व्यवस्थितचतुर्दश्यादितिथिविषयत्वं। यत्तु केषाञ्चिद्व्याख्यानं युगादिविषयमेतद्वचनम्।

द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः।
शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके॥

इति वचनादिति तदपि निरस्तं। उक्तप्रकारेणाकाङ्क्षितसमर्पणेनार्थवत्त्वे सम्भवति केवलयुगादिविषयत्वेन सङ्कोचे कारणाभावात्। यत्तु व्याख्यानं शुक्लपक्षशब्देन देवकार्य्यमुपलक्ष्यते तस्य प्रायेण शुक्लपक्षे विहितत्वात् कृष्णपक्षशब्देन च पितृकार्य्यं तस्य प्रायेण कृष्णपक्षे विधानात्।

देवकार्य्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।
पितृकार्य्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः॥

इति वृद्धयाज्ञवल्क्यवचनात्।

पूर्वविद्धा पितृभ्यस्तु हर्षदा कीर्तिता तिथिः।
न प्रशस्ता विबुधेभ्यस्तु मुक्त्वैकां भास्करप्रियाम्॥

वचनाच्च तद्वचनं विना कारणं लक्षणाप्रसङ्गात् । वाक्यान्तरकार्य्यार्था-न्तेनैव यथाश्रुतोपपद्यमानेन प्रतिपाद्यत इति वचनं प्रामाणिकं, तस्मात् कृष्णद्वितीया पूर्वाह्णव्यापिनी शुक्लद्वितीया तूत्तरेति व्यवस्थेति ।

अपरे त्वेवमाहुः द्वितीया तु सर्वा तृतीयायुता ग्राह्या "युग्मा-ग्नीतिवचनात् ।

यत्तु ब्रह्मवैवर्त्ते ।

प्रतिपत्संमुखा कार्य्या द्वितीया द्विजसत्तमेति ।

आपस्तम्बेन "द्वितीया प्रतिपद्युतेति, तत्पूर्वद्दिनपूर्वाह्णव्यापिनी-द्वितीयाविषयं ।

तथाच स्कन्दपुराणे ।

प्रतिपत्संमुखा कार्य्या या भवेदापराह्णिकी ।
पूर्वाह्णिकी च कर्त्तव्या द्वितीया तादृशी विभो ॥

'तादृशी' संमुखा पूर्वविद्धेत्यर्थः । ननु कृष्णद्वितीया पूर्वा ग्राह्या, तत्रैवायं विशेषः "पूर्व्वाह्णिकी च कर्त्तव्येति । शुक्लद्वितीया तूत्तरैव न तत्र पूर्वाह्णिकत्वनियम इति व्यवस्था किं न स्यात् उच्यते एवं सति "पूर्वाह्णिकी च कर्तव्येति वाक्यसङ्कोचः प्रसज्येत, "प्रतिपत्संमुखा कार्य्या द्वितीयेति, "द्वितीया प्रतिपद्युतेति वचनद्वयसङ्कोचस्तु पक्षद्वयेऽप्यवि-शिष्टः, भवता "युग्माग्नीत्यस्य शुक्लद्वितीयाविषयत्वमङ्गीकृत्य तद्विषय-त्वपरित्यागाश्रयणात् । अस्माभिस्तु "पूर्वाह्णिकी च कर्त्तव्येत्येतद्विषयप-रित्यागाश्रयणात् । वस्तुतस्तु पूर्वाह्णिकी द्वितीया विद्यते तस्याः पूर्ववि-द्धत्वं विधीयत इति पूर्वबद्गौरवपरिहारः "शुक्लपक्षे तिथिर्ग्राह्येति तु वचनं वाक्यान्तरविषयं । तस्मात् पूर्वाह्णिकी द्वितीया पूर्वविद्धा

सन्ध्या तूत्तरविद्धेति व्यवस्था, तदेतदयुक्तं पूर्ववदेव गौरवस्य परिहर्तुमशक्यत्वात् तस्मात् कृष्णद्वितीया पूर्व्वा ग्राह्या यदि पूर्वाह्णिकी, शुक्लद्वितीया तु सर्वाप्युत्तरेति व्यवस्था। एतेन यत् कैश्चिदुक्तं द्वितीयायाः प्रतिपद्युक्तत्वं तत् यमद्वितीयाविषयं तस्यां हि भगिनीभिर्भ्रातरो भोज्यन्ते, नैकभक्तायाचितनक्तविषयं, तेषां स्वकालव्यापिन्यां नियतत्वात्। नाप्युपवासविषयं तस्यापि परविद्धायामेव विहितत्वादिति तन्निरस्तं। पूर्वाह्णिक्या द्वितीयायाः पूर्वविद्धाया उपादेयत्वमुक्तं तच्चैकभक्तादिचतुष्टयव्यतिरिक्तकर्मान्तरविषयमप्युपपद्यत इति यमद्वितीयाविषयत्वेन निष्प्रामाणिकसङ्कोचाश्रयणस्यायुक्तत्वात्। तस्मादस्मदुक्तैव व्यवस्थितेति।

अन्ये त्वेवं व्यवस्थामाहुः "एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। अमावास्या तृतीया च उपोष्याः स्युः परान्विताः" इति विष्णुधर्मोत्तरशिवगीतावचनं "युग्माग्नी"तिवचनमुपवासविषयं, "द्वितीया प्रतिपद्युते"त्यादि पूर्वविद्धद्वितीयाप्रतिपादकमुपवासव्यतिरिक्तविषयं। तत्र चायं विशेषः "पूर्वाह्णिकी च कर्तव्ये"ति, पूर्ववचनान्तु "प्रतिपत्संमुखा कार्या" "द्वितीया प्रतिपद्युते"ति वचनद्वयस्योपवासव्यतिरिक्तकर्मविषयत्वेन शुक्लपक्षेऽप्युपपद्यमानस्य कारणं विना सङ्कोचः प्रसज्येत। ननु युग्माग्निवाक्यस्योपवासव्यतिरिक्तविषयत्वेनापि शुक्लपक्ष एवोपपद्यमानस्य भवन्मतेऽपि सङ्कोचः प्रसज्येत। उच्यते। एतद्वाक्यसङ्कोचस्तु त्वत्पक्षेऽपि विद्यते कृष्णद्वितीयोपवासविषयत्वेनाप्युपपद्यमानस्यास्य केवलशुक्लद्वितीयाविषयताश्रयणात्। ननु पक्षद्वये सङ्कोचाविशेषेऽपि भवत्पक्षे शुक्लद्वितीयोपवासव्यतिरिक्तसकलकर्मत्यागादस्मत्पक्षे तु कृष्णद्वितीयोपवासमात्रत्यागात् सकल-

कोविशेषो विद्यते । सत्यमेवं, किन्तु भवत्पक्षे प्रदर्शितवाक्यस्य सङ्कोचः, अस्मत्पक्षे तु युग्माग्निवाक्यस्यैवेति विशेषः । किञ्च सङ्कोचोऽपि न विद्यते । तथाहि "युग्माग्निवाक्येन द्वितीया परविद्धा ग्राह्येत्युक्तं, "द्वितीया प्रतिपद्युतेत्यादिना च पूर्वविद्धत्वं । न चात्र कर्म्मविशेष उपात्तः, अतस्तत्र कस्य कर्मणो ग्रहणमित्यपेक्षायामुपवासे द्वितीयायाः परविद्धत्वाभिधानात् । एवं युग्मवाक्ये गम्यते "द्वितीया प्रतिपद्युतेत्यादिवचनैरुपवासव्यतिरिक्तकर्मग्रहणमिति कुतः सङ्कोच इति तदयुक्तं प्रतिपद्युताया अपि द्वितीयाया उपोष्यत्वस्योपवासतिथिनिर्णये दर्शितत्वात् । तस्मात् पूर्व्वोक्तैव व्यवस्था स्वीकार्य्येति । तृतीया तु द्वितीयायुता ग्राह्या "युग्माग्नीतिवचनात् सापि च रम्भाख्यतृतीयैव ।

तथा च ब्रह्मवैवर्त्ते ।

रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ।
अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते ॥

'गण:' चतुर्थी ।

स्कन्दपुराणे ।

द्वितीयया तु या विद्धा तृतीया न कदाचन ।
कर्त्तव्या मतिभिस्तात धर्म-कामार्थतत्परैः ॥
विहायैकान्तु रम्भाख्यां तृतीयां पुत्रवर्द्धनीम् ।
तत्राच ऋषिभिः प्रोक्तं वचनं कृत्तिकासुत ॥
हरजया तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता च कर्त्तव्या सम्मुखा तिथिः ॥

तथा ।

कृष्णाष्टमी तथा रम्भा तृतीया वटपैतृकी ।
ह्यस्तनया तथा ब्रह्मन् कर्त्तव्या संयुता तिथिः ।
नान्येषु संयुता कार्या तृतीया चाष्टमी द्विज ॥

अन्या सर्वा तृतीया च चतुर्थीयुतैव ।

तथाच ब्रह्मवैवर्त्ते ।

चतुर्थीसंयुता या च सा तृतीया फलप्रदा ॥

आपस्तम्बः ।

चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्र-पौत्रप्रदायिनी ॥

ब्रह्मवैवर्त्ते ।

तृतीया तु न कर्त्तव्या द्वितीयोपहता विभो ।
द्वितीयया युतां तान्तु यः करोति नराधमः(१) ।
संवत्सरकृतेनेह नरो धर्मेण मुच्यते ॥

तथा ।

द्वितीयाशेषसंयुक्तां तृतीयां कुरुते नृप ।
स याति नरकं घोरं कालसूत्रं भयङ्करम् ॥
द्वितीयां शेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥

स्कन्दपुराणे ।

तृतीया तु न कर्त्तव्या द्वितीयासंयुता तिथिः ।
या करोति विमूढा स्त्री पुरुषो वा श्रियमिच्छता ॥

---

(१) नरोऽधम इति ग० ।

द्वितीयासंयुतान्नाथ पूर्वधर्माद्विमुच्यते ।
विधवात्वं दुर्भगत्वं भवेन्नैवात्र संशयः ॥
कलाकाष्ठापि या चैव द्वितीया सम्प्रदृश्यते ।
सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ।
य इच्छेत्परमं गुह्यं व्रतकर्त्ता शिखिध्वज ॥

भविष्यत्पुराणे द्वादशीकल्पे।

कार्या द्वितीयया सार्द्धं न तृतीया कदाचन ॥

ननु द्वितीयायुततृतीयायाः विधिः शुक्लतृतीयाविषयः निषेधस्तु कृष्णतृतीयाविषय इति व्यवस्था किं न स्यात्, न च वाच्यं, एवं सति रम्भावाक्यानर्थक्यं प्रसज्यते सर्वेषामपि व्रतानां तत्र प्राप्तेः पूर्वविद्ध-तृतीयावाक्यस्य कृष्णपक्षे बाधः द्वितीयाविद्धनिषेधवाक्यस्य शुक्लपक्षे इत्यपरं दूषणद्वयमिति । उपवासे तु तृतीयायाः परयुतायाः शुक्लपक्षेऽपि ग्रहणात् तदपवादकतया रम्भावाक्यस्यार्थवत्त्वोपपत्तेः। न चापवादेऽप्युत्सर्गस्य बाधादस्यैव दूषणमिति वक्तव्यं, यतो भवत्पक्षेऽपि सर्वव्रतविषयतया चतुर्थीयुतातृतीयाग्रहणे प्राप्ते तदपवादकरम्भा-वाक्यमुच्यते भवत्पक्षे वचनद्वयगतपाक्षिकबाध एकस्मिन्नपि वचने विद्यत एव तथाहि "युग्माग्नि-युगभूतानामिति वाक्यं शुक्लकृष्ण-पक्षसाधारणं सत्केवलशुक्लपक्षविषयं, तत्रापि व्रतमात्रसाधारणं सद्र-म्भैकव्रतविषयमुच्यते इति तुल्योबाधः । किञ्च "अमावास्या तृतीया च ता उपोष्याः परान्विता इत्युपवासपदमविवक्षितं स्यात् व्रतान्तरेऽपि चतुर्थीविद्धतृतीयाग्रहणे, तस्माद्द्वितीयायुततृतीयाविधि-निषेधौ शुक्ल-कृष्णद्वितीयाविषयाविति तदेतदपेशलं, एवं हि सति

द्वितीयायुततृतीयानिषेधप्रागुदाहृतमत्स्यवाक्यसङ्कोचः प्रसज्येत, "चतुर्थीसंयुता चेत्यापस्तम्ब-ब्रह्मवैवर्त्तवचनस्य "कर्त्तव्या गणसंयुतेति स्कन्दपुराणवचनस्य सङ्कोचः प्रसज्येत। अस्मत्पक्षे तु न तथा सङ्कोचः रम्भाव्रतपरित्यागेन द्वितीयाविद्धतृतीयानिषेधानां चतुर्थीयुततृतीयाविधीनाञ्च शुक्लपक्षेऽपि प्रवृत्तेराश्रयणात्। "अन्येषु सर्वकार्य्येष्विति "विहायैकान्तु रम्भां चेति वचनबाधोऽपि भवत्पक्षे प्रसज्येत। अस्मत्पक्षे तु "युगाग्नीत्यस्यैव रम्भाव्रतविषयत्वेन सङ्कोच इति महान् विशेषः। "अमावास्या तृतीया चेति वचनं तिथिविशेषाणामुपवासे परविद्धत्वप्रतिपादकं न तु कार्यान्तरे परविद्धत्वनिषेधकं। एतेनैतन्निरस्तं द्वितीयानिषेधाच्चतुर्थीयुततृतीयाविधयश्चोपवासविषयाः "अमावास्या तृतीया च ता उपोष्याः परान्विता इति वचनात् द्वितीयाविद्धतृतीयाविधिस्तु तद्व्यतिरिक्तविषय इति, "अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते इत्यादिवचनेनोपवासव्यतिरिक्तकार्य्येऽपि परविद्धत्वाभिधानात्। ननु युग्मवाक्यस्य रम्भातृतीयाविषयत्वे वैरूप्यं प्रसज्येत शुक्लद्वितीयान्तरस्यापि तृतीयायुक्तत्वाङ्गीकारात् तदर्थमपिशब्देन तृतीयान्तरस्यापि ग्राह्यत्वात् अन्यथा रम्भातृतीयाया एव परविद्धत्वं प्रसज्येत, तदयुक्तं अत्र कर्मविशेषानुपादानाच्छुक्लतृतीया रम्भाव्रते पूर्वविद्धापि ग्राह्या शुक्लद्वितीया तु सर्वस्मिन्नपि कार्य्ये परयुतेत्यस्मिन्नर्थे वचनान्तरपर्यालोचनया स्वीक्रियमाणे दोषाभावात्तस्मादस्मदुक्तैव व्यवस्था युक्ता। चतुर्थी तु पञ्चमीयुता ग्राह्या "युग्मभूतानामिति वचनात्।

वह्निविष्णुपुराण-ब्रह्मवैवर्त्तयोर्वचनं।

चतुर्थीसंयुता कार्य्या तृतीया च चतुर्थिका ।
तृतीयया युता नैव पञ्चम्या कारयेत् क्वचित् ॥

तथा स्कन्दपुराणे ।

चतुर्थी चैव कर्त्तव्या तृतीयासंयुता विभो इति ।

चतुर्थ्यास्तृतीयायुक्तत्ववचनन्त्वादि विनायकव्रतविषयं ।

तथाच ब्रह्मवैवर्त्ते ।

चतुर्थीसंयुता या तु तृतीया सा फलप्रदा ।
चतुर्थी च तृतीयायां महापुण्यफलप्रदा ।
कर्त्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ॥

अत्र च गणनाथं सुतरां तोषयतीति गणनाथसुतोषिणीति चतुर्थीविशेषणसामर्थ्यादिनायकव्रतविषयत्वं प्रतीयते। अन्ये तु सुतरां शब्दपर्य्यालोचनया वरचतुर्थीविषयत्वमाहुस्तच भाद्रपदशुक्लचतुर्थ्यङ्गा-रकचतुर्थ्यादीनामपि सुतरां तोषकत्वाद्भवत्पक्षे चोदाहततृतीयायुत-चतुर्थीविधिद्वयस्य पञ्चमीयुतचतुर्थीनिषेधस्य च चतुर्थीमात्रविषयत्वेन बाधे गौरवं। अस्मत्पक्षे तु युगभूतानामित्यस्यैव सङ्कोच इति विशेषः।

श्रीमद्दत्तस्त्वाह । भक्तिश्रद्धातिशयवशेन सर्व्वा अपि सुतरां तोषिकाः तद्राहित्ये तु न वरचतुर्थ्यपि भाद्रशुक्लचतुर्थ्यपीति सर्व्व-विनायकचतुर्थीविषयतैव युक्तेति, तस्मात् तृतीयायुतचतुर्थी सुतो-षिणी न पञ्चमीयुतेत्यर्थः ।

अन्ये त्वेवमाहुः शुक्लचतुर्थी परयुता, कृष्णचतुर्थी पूर्व्वयुता "शुक्ल-पक्षे तिथिर्ग्राह्या इत्युदाहृतवचनादिति तदयुक्तं तृतीयायुतचतुर्थीपर-वचनस्याप्युदाहृतब्रह्मवैवर्त्तवचने विनायकव्रतविषयत्वप्रतीतेः "शुक्लपक्षे

तिथिर्ग्राह्या इति तु वचनमन्यविषयं। तस्मात् पूर्वोक्तव्यवस्था न्याय्या।
"यथा च यदि सम्पूर्णा चतुर्थी दृश्यते पुनः। सा यथा चैव कर्त्तव्या नाग-विद्धां न कारयेत्॥ इति वचनं विनायकव्रतव्यतिरिक्तविषयं, उभय-विषयत्वे बाध-गौरवप्रसङ्गात् तथैव पञ्चमीयुतचतुर्थीप्राप्तेर्निषेधस्या-नवकाशाच।

पञ्चमी चतुर्थीयुता ग्राह्या। तथा च युग्मवाक्ये "युगभूतानामिति।

स्कन्दपुराणे।

पञ्चमी तु तथा कार्य्या चतुर्थीसंयुता विभो।

पद्मपुराण-भविष्यत्पुराणयोर्नागपञ्चम्याम्:।

पञ्चमी सचतुर्थी च कार्य्या षष्ठ्या न संयुता॥

यत्तु ब्रह्मवैवर्त्तवचनं।

पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारदेति।

तत् शुक्लपक्षविषयं "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितोरवि-रितिवचनात्।

अन्ये त्वाहुः यदा कृत्स्नकालव्यापिनी द्वितीयेऽहनि पञ्चमी भवति तदैतद्वचनमिति।

अपरे त्वाहुः पञ्चम्याः षष्ठीयुक्तत्वं नागपूजाविषयं तस्याः पूर्वाह्ण एव विधानादिति तदुभयमप्ययुक्तं "प्रतिपत्सद्वितीया स्यादि-तिवचनस्य तिलकाशोककरवीरव्रतविषयत्वभङ्ग उक्तन्यायात् तस्माच्छु-क्लपञ्चमी परविद्धा कृष्णपञ्चमी तु पूर्वविद्धेति व्यवस्था।

अन्ये त्वेवमाहुः पञ्चम्याश्चतुर्थीयुतत्वप्रतिपादकानि निगमादि-वचनान्युपवासविषयाणि "एकादशी तथा षष्ठी अमावास्या चतु-

र्थीका । उपोष्याः परसंयुक्ताः पराः पूर्व्वेण संयुताः” ॥ इति वचनेनैवोपवासे पञ्चम्यास्तुर्थीयुक्तत्वस्याभिधानात् । किञ्च पूर्व्ववचनानां “पञ्चमी तु प्रकर्त्तव्येतिवाक्यस्योपवासव्यतिरिक्तविषयत्वेन ह्यन्यपक्षेऽप्युपपन्नत्वान्नच कारणं विना सङ्कोचः प्रसज्येत । न च युग्मादिवाक्यानामुपवासविषयत्वेन सङ्कोचोद्दोषाय, सामान्यशास्त्रस्य विशेषशास्त्रोपसंहारस्य युक्तत्वात् । भवन्मतेऽपि केवलान्यपक्षविषयत्वेन सङ्कोचस्याविशिष्टत्वात् । न चैवंविधे विषये सङ्कोचोविद्यते, इत्युक्तं प्राक् ।

षष्ठी तु सप्तमीयुता ग्राह्या तथाच युग्मवाक्ये “षण्मुन्योरिति ।

स्कन्दपुराणेऽपि ।

नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन ।
सप्तमीसंयुता कार्य्या षष्ठी धर्म्मार्थचिन्तकैः ॥

ब्रह्मवैवर्त्तेऽपि ।

न च षष्ठी नागविद्धा कर्त्तव्या तु कदाचन ।
नागविद्धा तु या षष्ठी कृता पुण्यक्षयोभवेत् ।
सप्तम्या सह कर्त्तव्या महापुण्यफलप्रदा ॥

निगमः ।

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्तेऽपि वासराः ॥

‘नागः’ पञ्चमी । ‘रुद्रः’ अष्टमी । ‘दिवाकरः’ सप्तमी । ‘कामः’ त्रयोदशी । ‘विष्णुः’ द्वादशी ।

सप्तमी तु षष्ठीयुता ग्राह्या । तथाच युग्मवाक्ये “षण्मुन्योरिति ।

स्कन्दपुराणेऽपि ।

षष्ठ्या युता सप्तमी तु कर्त्तव्या तात सर्व्वदा।
षष्ठी च सप्तमी यत्र तत्र सन्निहितो रविः॥

भविष्यत्पुराणे द्वादशीकल्पपुराणेऽपि।

षष्ठी च सप्तमी तात ते अन्योन्यं समाश्रिते।

तथा।

पूर्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी सदा।

अष्टमी नवमीयुता ग्राह्या। तथाच युग्मवाक्ये "वसु-रन्ध्रयोरिति।

ब्रह्मवैवर्त्तेऽपि।

सप्तमी नाष्टमीयुक्ता सप्तम्यापि सदाष्टमी।
सर्व्वेषु व्रतकल्पेषु अष्टमी परतः शुभा॥

क्वचित्तु सप्तम्या युताष्टमीति पाठः।

स्कन्दपुराणेऽपि।

अष्टमी नवमीमिश्रा कर्त्तव्या भूतिमिच्छता।
सप्तमीसंयुता चैव न कर्त्तव्या शिखिध्वज।
एका कृष्णाष्टमी तात कर्त्तव्या रविसंयुता॥

पद्मपुराणेऽपि।

नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता।
नवम्या सह कार्य्या स्यादष्टमी नात्र संशयः॥
एतच्च शुक्लाष्टमीविषयं।

तथाच निगमः।

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्द्दशी।
पूर्व्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता।

उपवासादिकार्य्येषु एष धर्म्मः सनातन इति ॥

क्वचित्तूपवासेषु कार्य्येष्विति पाठः। कृष्णाष्टमी तु सप्तमीयुतैव तथाच तत्रैव ।

कृष्णपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्द्दशी ।

पूर्व्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित् ।

उपवासादिकार्य्येषु एष धर्म्मः सनातनः ॥

अष्टमीनवम्योर्युग्म एव पक्षद्वयेऽपि शिव-शक्त्योः शिवक्षेत्रे महोत्सवः कर्त्तव्यः ।

तथाच पद्मपुराणे ।

अष्टमी नवमीविद्धा नवम्या चाष्टमी युता ।

अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥

अष्टमी-नवमीयुग्मे महोत्साहे महोत्सवः ।

शिव-शक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि ॥

नवमी त्वष्टमीयुतैव ग्राह्या तथाच युग्मवाक्ये "वसु-रन्ध्रयोरिति"।

अष्टमी नवमीविद्धा कर्त्तव्या फलकाङ्क्षिभिः ।

स्कन्दपुराण-भविष्यत्पुराणद्वादशीकल्पयोः ।

न कुर्य्यान्नवमीं तात दशम्या च कदाचन ।

पद्मपुराणे ।

नवम्येकादशी चैव दशविद्धा यदा भवेत् ।

तदा वर्ज्या विशेषेण गङ्गाम्भश्च सतौ यथा ॥

भविष्यत्पुराणे द्वादशीकल्पे ।

नवम्या सह कार्य्या स्यादष्टमी नवमी तथा ।

दशमी च पूर्वविद्धा ग्राह्या।

तथाच स्कन्दपुराणे।

दशमी चैव कर्त्तव्या सदुर्गा द्विजसत्तम।

यदा दशमी दिनद्वयेऽपि कर्मकालव्यापिनी भवति तदा पूर्वापरा वा विकल्पेन ग्राह्या।

तथाचाङ्गिराः।

सम्पूर्णा दशमी कार्य्या पूर्वया परयाथ वा।

युक्ता न दूषिता यस्मादतः सा सर्वतोमुखी॥

भविष्यत्पुराणे द्वादशीकल्पेऽपि।

सम्पूर्णा दशमी कार्य्या परया पूर्वयाथ वा।

युक्ता न दूषिता यस्मादतः सा सर्वतोमुखी॥

एकादशी परयुता ग्राह्या "रुद्रेण द्वादशीयुक्तेति युग्मवाक्यवचनात्।

एकादशी न कर्त्तव्या दशम्या च कदाचन।

एकादशी न कर्त्तव्या दशमीसंयुता विभो।

इति ब्रह्मवैवर्त्ते स्कन्दपुराणे निषेधाच्च।

भविष्यत्पुराणे द्वादशीकल्पेऽपि।

पूर्वविद्धा न कर्त्तव्या तृतीया षष्ठिरेव च।

अष्टम्येकादशी भूप धर्मकामार्थवाञ्छिना॥

शेषमेकादशीनिर्णये वक्ष्यते। द्वादशी चैकादशीयुता ग्राह्या "रुद्रेण द्वादशीयुक्तेतियुग्मवाक्यात्।

द्वादशी च प्रकर्त्तव्या एकादश्या युता प्रभो।

तदा कार्य्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥

इति स्कन्दपुराणवचनाच्च ।

चयोदशी तु पूर्व्वविद्धा ग्राह्या "चयोदशी तु कर्त्तव्या द्वादशी-सहिता मुने" इति ब्रह्मवैवर्त्तवचनात् ।

स्कन्दपुराणेऽप्युक्तं ।

चयोदशी तु कर्त्तव्या भवेद्या चापराह्निकी ।

'अपराह्निकी' पूर्व्वविद्धेत्यर्थः ।

पद्मपुराणेऽपि ।

एवमेकादशी ग्राह्या द्वादश्या तु चयोदशी ।

एतच्च शुक्लचयोदशीविषयं । यतः कृष्णपक्षचयोदश्याश्चतुर्द्दशी-युताया ग्राह्यत्वं स्मर्य्यते ।

तथाच निगमवाक्यं ।

षष्ठ्यष्टमी त्वमावास्या कृष्णपक्षे चयोदशी ।

एताः परयुताः पूज्याः पराः पूर्व्वयुतास्तथा ॥

यदा तु नोत्तरेद्युः कृष्णचयोदशी किन्तु पूर्व्वद्युर्निषिद्धतिथि-विद्धैव तथाच वृद्धवशिष्ठः, "एकादशी तृतीया चेति, तेन शुक्लचयोदश्यपि पूर्व्वद्युः सम्भवन्ती न पूर्व्वा ग्राह्येति । अन्ये तूभय-चयोदशीविषयमेतद्वाक्यमित्याहुः तदुभयमप्ययुक्तं यदि चयो-दशी परेद्युः सम्भवेत्तां तदा न पूर्व्वयुते ग्राह्ये । तथा निगम-वाक्ये "कृष्णपक्षे चयोदशी" अत्र कृष्णपक्ष इति विशेषणवैयर्थ्यं प्रसज्येत । किञ्च कृष्णचयोदशीविषयमिदमुत शुक्लचयोदशीविषय-मिति सन्देहे कृष्णचयोदश्याः परयुतायाः ग्रहणाभिधानात् शुक्ल-

त्रयोदश्याश्च पूर्वयुताया ग्रहणादेकादश्यादीनाञ्च परविद्धानामुपादानात्सामर्थ्यात् त्रयोदशीग्रहणमपि परविद्धविषयं सत्कृष्णत्रयोदशीविषयं ज्ञायते। तस्मात् पूर्वोक्तैव व्यवस्था न्याय्या।

शुक्लचतुर्दशी तु पूर्णिमायुता ग्राह्या। तथाच युग्मवाक्ये "चतुर्दश्या च पूर्णिमेति।

भविष्यत्पुराणे द्वादशीकल्पेऽपि।

एवमेकादशी कार्य्या द्वादश्या तु त्रयोदशी।
सदा कार्य्या त्रयोदश्या न तु युक्ता चतुर्दशी।
पौर्णमासीयुता सा स्यात् चतुर्दश्या तु पूर्णिमा॥

नारदीयपुराणेऽपि।

तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता॥

पद्मपुराणेऽपि।

एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी।
एताः परयुताः कार्य्याः[१] पराः पूर्वेण संयुताः॥

वराहपुराणे।

एकादश्यष्टमी षष्ठी शुक्ला चैव त्रयोदशी।
ग्राह्या परेण संयुक्ता न तु पूर्वेण संयुता॥

तथा।

तृतीयैकादशी षष्ठी अष्टमी च चतुर्दशी।
पूर्वविद्धाः प्रकुर्वाणे धनापत्यहराः स्मृताः॥

(१) ग्राह्या इति ग०।

तथा ।

एकादशी दशम्या तु सप्तम्या चाष्टमी तथा ।
पञ्चम्या च यदा षष्ठी त्रयोदश्या चतुर्दशी ।
आसु क्रियां न कुर्वीत पूर्वविद्धासु मानव इति ॥
नागविद्धा तथा षष्ठी भानुविद्धो महेश्वरः ।
चतुर्दशी कामविद्धा मिश्राख्या मलिनाः स्मृताः ॥

'महेश्वरः' अष्टमी ।

अत्राष्टमी-चतुर्दश्यौ शुक्ले ग्राह्ये । चैत्र-श्रावणचतुर्दश्यौ शुक्ले अपि रात्रियोगिन्यौ ग्राह्ये "मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी ।सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी"॥ इतिवचनात् ।

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तस्यां चतुर्दश्यां सत्यान्तत्पूजनं भवेदिति च ॥

कृष्णचतुर्दशी पूर्वयुतैव ।

तथापस्तम्बः ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥

यत्तु ब्रह्मवैवर्त्ते ।

चतुर्दशी दर्शयुक्ता पौर्णमास्या युता विभो इति ।

यच्च नारदीयपुराणे ।

अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी ।
अमावास्या तृतीया च कर्त्तव्या परसंयुतेति ॥

तदुभयमुपवासविषयं ।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्द्दशी ।
अमावास्या तृतीया च ता उपोष्याः पराम्बिताः ॥

इति पद्मपुराणवचनात् ।

यदा तु शुक्ल-कृष्णद्वयेऽपि चतुर्द्दशी पूर्वदिनापराह्णं व्याप्नुत-स्तदा त्रयोदशीयुते एव ग्राह्ये ।

तथाच स्कन्दपुराणे ।

चतुर्द्दशी तु कर्त्तव्या त्रयोदश्या युता विभो ।
मम भक्तैर्महावाहो भवेद्या चापराह्णिकी ।
दर्शविद्धा न कर्त्तव्या राकाविद्धा कदाचनेति ॥

पूर्णमासी च चतुर्द्दशीयुता ग्राह्या तथाच युग्मवाक्ये "चतुर्द्दश्या तु पूर्णिमेति ।

पद्मपुराणेऽपि ।

पूर्वविद्धा तु कर्त्तव्या सप्तमी व्रतिभिर्नरैः ।
पूर्णमासी महीपाल पुराणे निश्चयस्त्विता ॥

एतच्च सावित्रीव्रतविषयं ।

भूतविद्धा न कर्त्तव्या दर्शा पूर्णा कदाचन ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमं ॥

इति ब्रह्मवैवर्त्तवचनात् ।

ननु "एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्द्दशी। अमावास्या तृतीया च ता उपोष्याः पराम्बिताः" ॥ इति प्रतिपत्युक्तायां पौर्ण-मास्यां उपवासविधानात् सावित्रीव्रतोपवासव्यतिरेकेणापि पूर्वेद्युः सायकालत्वात् । उच्यते ।

"एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी" "पूर्णमासी महोपा-सेति वाक्ययोर्युग्म-सावित्रीवाक्ययोश्च न प्रतिपद्युग्मवाक्येन बाधो-युक्तः "विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वमिति न्यायात्। सावित्रीव्रतादन्यत्र प्रतिपन्मिश्रैव "शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितोरविरितिवचनात् ।

अमावास्या तु प्रतिपद्युतैव ग्राह्या । तथाच युग्मवाक्ये "प्रतिपद्यमावास्येति ।

पद्मपुराणेऽपि ।

षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे चयोदशी ।

एताः परयुताः पूज्याः पराः पूर्व्वयुताः शुभाः ॥

प्रचेताः ।

नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी।

दशम्येकादशीविद्धा चयोदश्या चतुर्दशी ॥

भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुङ्गव ।

उत्तरोत्तरविद्धास्ताः कर्त्तव्याः काठकी श्रुतिः ॥

"सप्तम्या च तथाष्टमीति,"चयोदश्या चतुर्दशीति शुक्लपक्षविषयम्।

यत्तु नारदीयपुराणवचनम् ।

दर्शञ्च पूर्णमासञ्च पितुः सांवत्सरं दिनम् ।

पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यत इति ॥

तत्सावित्रीव्रतविषयम् । "भूतविद्धा न कर्त्तव्येति ब्रह्मवैवर्त्तवचनात् ।

भूतविद्धा ह्यमावास्या कर्त्तव्या न कदाचन ।

वर्जयित्वा तु सावित्रीव्रतन्तु शिखिवाहनेति ॥

स्कन्दपुराणवचनाच्च ।

अन्ये त्वाहुः अमावास्यायाः प्रतिपद्युतत्वमुपवासविषयं उपवासे तस्याः परयुतत्वाभिधानादुपवासव्यतिरिक्तसर्व्वकार्य्ये तु पूर्वयुतैवेति तदयुक्तं "भूतविद्धा न कर्त्तव्येति, "भूतविद्धा अमावास्येति वचनविरोधात् ।

नागविद्धा च या षष्ठी दृश्यस्येकादशी तथा ।

भूतविद्धा सिनीवाली न तु तत्र व्रतञ्चरेदिति ॥

निषेधविरोधाच्च । एतान्युपवासविषयाणीति चेत् । न । बहुवाक्यसङ्कोचप्रसङ्गात् सावित्रीवाक्ययोरनार्जवप्रसङ्गाच्च । किञ्चैवं देवकार्य्याणि भूतविद्धायाममावास्यायां प्राप्नुवन्ति ।

ततश्च ।

सिनीवाली तथा पित्र्ये दैवे च सततं कुहूः ।

इति जाबालवचनं विरुध्येत ।

प्रतिप्रत्यगमावास्या पूर्वाह्णव्यापिनी यदि ।

भूतविद्धैव सा कार्य्या पित्र्ये कर्मणि सर्वदेति ॥

वचनादपि देवकार्य्यं प्रतिपन्मिश्रायामपि गम्यते तस्मात् पूर्वैव व्यवस्था न्याय्यी । एवं तिथिद्वैधे पूर्वोत्तरग्रहणनियमः प्रतिपादितः इदानीमेतद्विरुद्धानां वाक्यानां विषयव्यवस्था क्रियते । तत्रोक्तमाः व्यासश्च ।

खर्वोदर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।

खर्व-दर्पौ महादर्पौ हिंसा स्यात् पूर्वकालिकी ॥

'खर्व्वः' साम्यं । आचारसारकृता तु तिथिच्छेदोऽल्पः खर्व इति व्याख्यातं । 'दर्पः' वृद्धिः, 'हिंसा' क्षयः । साम्य-वृद्धि-क्षयाः पूर्वतिथ्यपेक्षया । पितामहः ।

खर्वोदर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्व-दर्पौ परौ पूज्यौ हिंसां पूर्वत्र पूजयेत् ॥

भविष्यत्पुराणे तूत्तरार्द्धमेवं पठ्यते ।

खर्वं दर्पौ परौ कार्यौ हिंसा स्यात् पूर्वकालिकी ।

तत्रैवं विरोधे व्यवस्थामाह व्यासनिगमवाक्यम् ।

द्वितीयादिषु युग्मानां पूज्यता नियमादिषु ।
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥

नियमादिष्वित्यादिशब्देन पितृकर्मव्यतिरिक्तव्रतोपवासादिसकलकर्मणां ग्रहणं, एकोद्दिष्टादीत्यादिशब्देन विवाहादिमङ्गलाङ्गभूतश्राद्धव्यतिरिक्तश्राद्धस्य, वृद्ध्यादावित्यादिशब्देन माङ्गलिकश्राद्धस्य । एवं च पितृकार्य्ये ह्रासवृद्ध्यादिचोदनेत्युक्तं भवति ।

अस्यापवादः स्कान्दे ।

यस्मिन् काले तु यत्कर्म तत्कालव्यापिनी तिथिः ।
यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः ॥

वृद्धयाज्ञवल्क्यः ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम् ॥
पूर्वाह्णिकास्तु तिथयो देवकार्य्ये फलप्रदाः ।
अपराह्णिकास्तथा ज्ञेयाः पित्र्ये तु शुभावहाः ॥

इत्येतन्निगमब्रह्मवैवर्त्तवचनमपि "कर्मणो यस्य यः कालः इत्यनेन समानविषयं। ननु यदा अयुग्मदिने कर्मकालव्यापिनी युग्मदिने तु विपरीता तदा का ग्राह्या ।

अत्र केचिदाहुः ।

युग्मा तिथिरेव ग्राह्या तिथ्योर्युग्मं महाफलमित्यभिधानात् "एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति युग्मातिक्रमे दोषश्रवणाच्च घटिकादिपरिमिताया अपि सम्पूर्णत्वाभिधानाच्च। उदाहृतकर्मकालव्याप्तिशास्त्रस्य युग्मवाक्यविषयपरिहारेणैवोपपत्तेश्च शिष्टाचारानुगमाच्च युग्मादर एव युक्तः। तदयुक्तं। यद्यपि कर्मकालव्याप्तिशास्त्रं युग्मवाक्यविषयपरिहारेणाप्युपपद्यते युग्मवाक्यञ्च कर्मकालव्याप्तिशास्त्रविषयपरित्यागेन, तथापि युग्मवाक्यस्यैव कर्मकालव्याप्तिशास्त्रविषयपरित्यागो युक्तः अन्यथा प्रातिस्विकप्रतिपदादिविधीनामपि बाधप्रसङ्गात्। केषुचिद्व्रतेषूत्पत्तिवाक्य एव प्रतिपदादितिथिश्रुतेस्तद्बाधोऽप्युत्पन्नशिष्टगुणावरोधेन प्रसज्येत, सम्पूर्णत्वाभिधानेनारोपितकर्मकालीनतिथिग्रहणस्य मुख्यकर्मकालीनतिथिसम्भवे अन्याय्याश्रयणाच्च। शिष्टाचारश्चात्र नियतो न विद्यते उभयथा आचरणात् । किञ्च यदा भाद्रपदशुक्लषष्ठी दिनमात्रपर्याप्ता द्वितीयदिने च सप्तमी त्रिमुहूर्त्ताना तदा अमुक्ताभरणसप्तमी द्वितीयैव "अष्टम्यादयः पुण्या इति वक्ष्यमाणवचनात् भवत्पक्षे दूर्वाष्टमीव्रतमपि तत्रैव कार्यं अस्याः पूर्वविद्धाया अभिधानात्। ततश्च विरोधः प्रसज्येत अमुक्ताभरणसप्तम्यामग्निपक्वविशेषस्यैव भोज्यताभिधानात् दूर्वाष्टम्यां चाग्निपक्वभोजनाविधानात्। ततश्च

स्वीकृतोभयमतानां विरोधः स्यात् । अस्मत्पक्षे तु नायं दोषः कर्मकालव्याप्तिग्राह्यपर्यालोचनया द्वितीयेऽह्नि दूर्वाष्टमीम चरमाह्नेवे कर्मणि पूर्वाह्णविधानात् । एवमन्यास्वपि तिथिषु विरोध उद्भावनीयः । तस्मात् प्रातिस्विकप्रतिपदाद्यवस्थितपूर्वाह्णादिकालस्य कर्मणामावश्यकत्वाद्युग्मानादरेण कर्मकालव्यापिनी तिथिर्ग्राह्येति । तथा चैवं व्यवस्था यदा दिनद्वयेऽपि नियमादिकर्मकालव्यापिन्यास्तिथेरसम्भवः सम्भवो वा तद्विषयं युग्मादिवाक्यं एकोद्दिष्टादिकर्मकालव्यापिन्यास्तिथेः सम्भवे असम्भवे वा ह्रास-वृद्ध्यादिवाक्यं । यदा त्वेकस्मिन् दिने मताद्येकोद्दिष्टादिकर्मकालव्यापिनी तिथिः परस्मिन्नास्ति तदा "कर्मणो यस्य यः काल इत्यादिवचनात् कर्मकालव्यापिनी तिथिर्ग्राह्येति ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितोरविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितोरविः ॥

इति मार्कण्डेयवचनमपि ।

यच्चैकैव तिथिरेकेन वचनेन पूर्वा ग्राह्येत्युच्यते अपरेणापरयुतेति तत्र विरोधे सति व्यवस्थापकं द्रष्टव्यं, तथाच तत्र दर्शितं व्याख्यानान्तरं च पूर्वमेव निराकृतम् ।

यत्तु विष्णुधर्मोत्तरवचनम् !

वर्द्धमानेन्दुपक्षस्य उदये पूज्यते तिथिः ।
यदा चन्द्रः क्षयं याति तदा स्यादापराह्णिकीति ॥
कृष्णपक्षे तिथिर्ज्ञेया यस्यामस्तमितोरविः ।
तथा कर्माणि कुर्वीत ह्रास-वृद्धी न कारणमिति ॥

तदुभयमपि पूर्ववद्व्याख्येयम् ।

यत्तु बौधायनवचनं ।

या तिथिस्तच्च नक्षत्रं यस्यामभ्युदितोरविः ।
वर्द्धमानस्य पक्षस्य हानौ त्वस्तमय प्रति ॥

यच्च वृद्धवसिष्ठस्य ।

वर्द्धमानस्य पक्षस्य उदये पूज्यते तिथिः ।
यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी ॥

तत्सर्वं दर्पवचनेन समानविषयं ।

अन्ये तु "शुक्लपक्षे तिथिर्ग्राह्येति वचनसमानविषयमिति वदन्ति तदयुक्तं चन्द्रक्षय-वृद्ध्योः पक्षे उपचारप्रसङ्गात् ।

यत्तु व्याख्यानं यदा पक्षो वर्द्धते षोडशदिनात्मको भवति यदा पक्षः क्षीयते चतुर्दशदिनात्मको भवति तदा पूर्वैवेति तदप्ययुक्तं, उभयथा वाक्यस्योपपत्तौ वचनान्तरसम्बन्धादिन्यर्थे तात्पर्य्यकल्पना-युक्तत्वादेवं मूलभूतश्रुत्यन्तरकल्पनापि न भविष्यति, भवत्पक्षेऽपि सा स्यात् । तस्मात् पूर्वैव व्याख्या युक्ता ।

अन्ये त्वेवं व्यवस्थामाहुः प्रतिपदादिविशेषेण पूर्वाह्णादिविशेषेण च विहिते धर्म्मे पूर्वाह्णादिव्यापिनी तिथिर्ग्राह्या "कर्म्मणो यस्य यः कालः इत्यादिवचनात्। ननु कालद्वयविधिवाक्याभ्यामेव प्राप्तोऽयमर्थः सत्यं, किन्तु ह्रास-वृद्ध्यादिवाक्यैर्बाधितः। अत एवोक्तं "ह्रास-वृद्धी न कारणमिति, कुत तर्हि ते कारणमिति उच्यते यदा द्वे तिथी तत्कालव्याप्ते भवतस्तदा तिथिक्षये पूर्वा ग्राह्या वृद्धौ परा ग्राह्या "सर्वा-दर्पस्या विद्धेतिवचनात् । तिथिसाम्ये तु शुक्लपक्षे परा कृष्णपक्षे

पूर्वा "शुक्लपक्षे तिथिरिति मार्कण्डेयवचनात् । ननु यथाकामप्रवि-
शेषेण बाधे प्राप्ते किमिति सर्व एव बाध्यते अत्र ब्रूमः, प्रथमप्रवृत्त-
त्वाद्बाधकाभावात् "ह्रास-वृद्धी न कारणमिति ह्रास-वृद्ध्योः सर्व-
तिथिविषयत्वानुवादाच्च । कस्तर्हि सर्वबाधकाग्रः, अमावास्या ।

तथा च प्रचेताः ।

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।
साम्येऽपि च कुहूर्ज्ञेया वेद-वेदाङ्गवेदिभिः ॥

यदा तु द्वे अपि तिथी तत्कालव्याप्ते न भवतस्तदा युग्मवाक्य-
पर्यालोचनया निर्णय इति तद्युक्तं, "द्वितीयादिषु युग्मानामिति
व्यासनिगमवचनविरोधात् "शुक्लपक्षे तिथिर्ग्राह्येति वचनस्य चास्म-
दुक्तप्रकारेणोपपत्तेः सर्वबाधकत्वे प्रमाणाभावाच्च, खर्व-दर्प-वचनेष्वेक-
वाक्यत्वेनोपात्तेषु खर्व-दर्पौ सर्वतिथिविषयौ, सर्वसमावास्याविषय
इति वैषम्यापत्तेश्चोक्तप्रकारेण वाक्यस्योपपत्तौ अनुचितत्वात् ।
तस्मात् पूर्वैव व्यवस्था न्याय्या । यदा नैकस्मिन् दिने प्राप्यकर्मकालं
स्पृशति तिथिरन्यस्मिन् दिने नाप्यमपि तदा "कर्मणो यस्य यः
कालः इत्यनेन कर्मकालसम्बन्धिन्येव ग्राह्या । यदा तु दिनद्वयेऽप्यत्र-
कर्मकालसम्बन्धिनी तदा ह्रास-वृद्धिवाक्यैर्युग्मादिवाक्यैश्च यथायथं
पूर्वा परा वा ग्राह्या ।

एकस्मिंश्च पक्षद्वये सम्पूर्णकर्मकालव्यापिविहिततिथिसंख्याभावे-
ऽप्यनुष्ठितं कर्म सगुणं भवतीति दर्शयितुमाह, देवलः ।

यान्तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु ॥

पण्डितपरितोषे तु "स्नान-दान-व्रतादिष्विति पठितं, विष्णुधर्मोत्तरे "स्नान-दानादिकर्मस्विति पाठः ।

व्यासः ।

उदयन्नेव सविता यां तिथिं प्रतिपद्यते ।

सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥

देवलः ।

यान्तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।

सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥

पण्डितपरितोषे तु "स्नान-दानादिकर्मस्विति पठितम् ।

भविष्यपुराणेऽपि ।

व्रतोपवासनियमे घटिकैका यदा भवेत् ।

सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी ॥

विष्णुधर्मोत्तरे ।

या तिथिस्तदहोरात्रं यस्यामस्तमितो रविः ।

तथा कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम् ।

पद्मपुराणेऽपि ।

व्रते स्नाने तथा दाने पितृकार्ये विशेषतः ।

यस्यामस्तं गतो भानुः सा तिथिः पुण्यभाग्भवेत् ॥

व्रतोपवासनियमे घटिकैका यदा भवेत् ।

उदये सा तिथिस्तत्र विपरीता तु पैतृके ॥

'विपरीता' अस्तमयसम्बन्धिनी ।

विष्णुधर्मोत्तरे ।

व्रतोपवास-स्नानादौ घटिकैका यदा भवेत् ।
उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी ॥

व्यासः ।

व्रतोपवास-स्नानादौ घटिकैका यदा भवेत् ।
तामेव तिथिमाश्रित्य कुर्य्यात् कर्माण्यतन्द्रितः ॥

बौधायनोऽपि ।

आदित्योदयवेलायां या स्तोकापि[१] तिथिर्भवेत् ।
पूर्णा सा लवगन्तव्या प्रभूता नोदयं विना ॥

अस्तसमयकालीनतिथेः सम्पूर्णत्वाभिधानं पूर्वविद्धोपादेय-तिथिविषयं, उदयकालीन-तिथिसम्पूर्णत्वाभिधानञ्च परविद्धोपादेयतिथिविषयमिति ज्ञेयं ।

अत्रापि विशेषः स्कान्देऽपि ।

यान्तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः ।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्तापि या भवेत् ॥

शिवरहस्य-सौरपुराणयोः ।

यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्त्तिका ।
धर्मकृत्येषु सर्व्वेषु सम्पूर्णान्तां विदुर्बुधाः ॥
क्षये पूर्वा तु कर्त्तव्या वृद्धौ कार्य्या यदोत्तरा ।
तिथेस्तत्त्वाभिज्ञताया: क्षय-वृद्धौ तु कारणं ॥

'त्रिक्षणायाः' त्रिमुहूर्त्तायाः । स्कन्दपुराणे तु "तत्रास्य त्रिमुहूर्त्ताया इति द्वितीयः पादः पठितः ।

(१) या या कापि तिथिर्भवेदिति ग० ।

वृद्धवशिष्ठः ।

यां तिथिं समनुप्राप्य सूर्योऽस्तं त्रिमुहूर्त्तके ।
याग-दान-जपादिभ्यस्तामेवोपक्रमेत्तिथिं ॥

अत्रापवादमाह वशिष्ठः ।

त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी ।
द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी ॥

अत्र त्रिमुहूर्त्ततिथिग्रहण-परित्यागे वृद्धि-ह्रासयोः कारणत्वं वशिष्ठवचनेनोक्तं शिवरहस्य-सौरपुराणवचनेन च प्रतिषिद्धं तथैवं व्यवस्था पितृकार्ये वृद्धि-ह्रासयोः कारणत्वं न नियमादिषु, "द्वितीयादिषु युग्मानामिति व्यासनिगमवचनात्। विष्णुधर्मोत्तरे बौधायनप्रोक्ते च ।

उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्य-कव्ययोरिति ॥

अस्यार्थः। भानावुदिते सत्युत्तरकाले अह्नो मुहूर्त्तद्वयं 'दैवतं' देवदैवत्यं, तस्मिंश्चास्तमिते तत्पूर्वकालीनमह्नोमुहूर्त्तत्रयं 'पित्र्यं' पितृदैवत्यं, अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमात् हव्य-कव्ययोर्ग्राह्येति ।

अत्र केचिदाहुः ।

द्विमुहूर्त्तमित्यनुकल्पः ।

त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी ।
द्विमुहूर्त्ता न कर्त्तव्या या तिथिर्वृद्धिगामिनी ॥

इति ह्रव्यकव्यम् ।

एतच्चोदयसम्बन्धितिथिविषयं अस्तमयसम्बन्धिन्याश्चित्पूर्वाया एव याह्यत्वाभिधानात्, अनुकल्पत्वावश्यककर्मार्थः, यदा तु युग्मदिने-ऽस्तमयसम्बन्धिनी अयुग्मदिने तु उदयास्तमयसम्बन्धिनी तयोभयसम्बन्धिन्योः प्राप्तत्वात्सैव याह्या युग्मदिनसम्बन्धिन्याः क्रियानर्हाया अनुकल्पत्वात् । यदा तु युग्मदिने अस्तमयात् प्राक् न दृश्यते अयुग्मदिनेऽस्तमयात् प्रागेव समाप्यते तयोक्तं आपस्तम्ब-हृद्गौतमाभ्यां ।

अहःसु तिथयः पुण्याः कर्मानुष्ठानतो दिवा ।
नक्तादिव्रतयोगेषु रात्रियोगोविशिष्यते ॥

अहोरात्रसाध्यं व्रतं उभययोगिन्यामेव कार्य्यं न तु युग्मत्वात्पाद्दरः ।

तथा च हृद्धयाज्ञवल्क्यप्रोक्तपद्मपुराणयोः ।

दिवारात्रौ व्रतं यच्च एकस्मेकतिथौ गतं ।
तच्चाप्युभययोगिन्यामाचरेत्तद्व्रतं व्रती ॥

नन्वेवं सति षष्ठी-सप्तम्यादियुग्मे सप्तमीव्रतसङ्कल्पः कदा, न तावत्सप्तम्यादिकाले, "प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकमिति तत्र प्रातःकालविधानात् । न च प्रातः, "शुक्लपक्षे रविदिने प्रवृत्ते चोत्तरायणे । पुन्नामधेयनक्षत्रे गृह्णीयात् सप्तमीव्रतं" इत्यादिवचनैः सप्तम्यादिकाले सङ्कल्पश्रवणात् । न चायुग्मदिने, युग्मपुण्यत्वाभिधानात्तदतिक्रमे दोषश्रवणाच्च ।

अत्र केचिदाहुः ।

युग्मदिने एव प्रातः सङ्कल्पः करणीयः युग्मपुण्यत्वाभिधानात् पूर्वापरयोरपि तिथ्योः सङ्कल्पविधायकवचनानामपि दर्शविषयता-

प्रमात् जीवज्जीवकार्यकरणाईत्वातिरिक्तस्याकस्याभावात् तेन षष्ठ्या-दिकाले सप्तम्यादिकार्यमित्यवगम्यते। न च प्रातः सङ्कल्पग्रहणमिति नियमः, भौमवारादृज्ञादिव्रतेषु वाथं तदुपदेशात्, तस्माद्युग्मतिथावेव सङ्कल्पः स च प्रातरेव, न च सप्तम्यादितिथिकाल इति ज्ञेयं।

अपरे त्वेवमाहुः यदा एकस्मिन्दिने कर्मोपक्रमकालसम्बन्धिनी तिथिर्नापरस्मिन्दिने तदा कर्मोपक्रमकालसम्बन्धिन्येव ग्राह्या।

तथाच बौधायनः।

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
विद्यमानो भवेदङ्गं नोच्छ्रितोपक्रमेण तु ॥

इति युग्मपुराणाभिधानं शाकल्याभिधानञ्च बौधायनादिवचन-विषयपरित्यागेनाप्युपपद्यते।

अन्ये त्वाहुः यदेकस्मिन्दिने कर्मोपक्रमकालसम्बन्धिनी अपर-स्मिन्दिने च कर्मसमाप्तिकालसम्बन्धिनी तद्विषयमेव बौधायना-दिवचनमिति। एवं युग्मादिवाक्यैस्त्रिमुहूर्त्तायाः लाभे अयुग्मति-थियोगिनी वेधयोगदोषादग्राह्येत्यर्थादुक्तं। दोषश्च नारदीयपुराणे दर्शितः।

दानवा ऊचुः।

अस्माकं वसतिर्ब्रह्मन् कस्मिन् स्थाने भविष्यति।
निराधाराः स्थिताः सर्वे क्व नु भोक्ष्याम भोजनं ॥

ब्रह्मोवाच।

द्वितीयान्ते स्थितिर्ज्ञेया नागान्ते तु द्वितीयका।
षष्ठ्यादौ तृतीया तु दशम्यन्ते चतुर्थिका ॥

प्रतिपदादितः कृत्वा पञ्चमी भवतां स्थितिः ।
षष्ठी त्रयोदशीप्रान्ते श्रादौ कृत्वा चतुर्दशीं ॥
एषोऽपि भवतां वासः सुदृढः परिकीर्त्तितः ।
एवं प्रोक्तास्तु तिथयः प्रदत्ता ब्रह्मणा पुरा ॥
तेषां संमिश्रिता दत्ताः पितृभ्यस्तास्तथैव हि ।
शेषो हि विविधः कालः कीर्त्तितः पापनाशनः ॥
अष्टम्यादौ महीपाल पूर्णादौ श्रेयसः स्थितः ।
विपरीतोऽसुरेभ्यस्तु प्रदत्तो ब्रह्मणा पुरेति ॥

वेध-योगौ ब्रह्मवैवर्त्ते दर्शितौ ।

कीदृशस्तु भवेद्योगो वेधोविप्रेन्द्र कीदृशः ।
योग-वेधौ समाचक्ष्व याभ्यान्दुष्टमुपोषणं ॥

इति पृष्टे ।

या तिथिः स्पृशते राजन् प्रातर्वेलावलोकिनी ।
सा वेध इति विज्ञेयोयोगः सूर्य्योदयो मतः ॥

इति कथितं ।

यत्तु ब्रह्मवैवर्त्ते व्यास उवाच ।

चतस्रो घटिका भूप अरुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकाद्वयं ।
अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्य्योदये बुधैः ॥

तत् प्रकरणादेकादशीव्रतविषयं।

यत्तु।

नागो द्वादशनाडीभिर्दिक्-पञ्च-दशभिस्तथा।
भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति॥

तद्दिनद्वयेऽपि कर्मकालव्यापितिथिसम्भवे द्रष्टव्यं, उपवासविषयता तु न युक्ता।

अविद्धानि निषिद्धेषु लभ्यन्ते दिनानि तु।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः॥
तदूर्द्धं विद्धान्यन्यानि दिनान्युपवसेन्नरः।
अविद्धानामलाभे तु पयोदधि-फलानि वा।
सकृदेवाल्पमश्नीयादुपवासव्रती भवेत्॥

इति ऋष्यशृङ्गवचनात्।

उपवासे च घटिकामात्रवेधोऽपि "दूषयत्युत्तरां तिथिमिति वचनान्तरसिद्धः। न चैतन्नक्तैकभक्तायाचितविषयं, तेषां प्रदोषदिनव्यापिन्यान्तिथौ नियमेन कर्त्तव्यताभिधानात् द्वितीयेऽहनि च तदसम्भवात्तल्लोपः प्रसज्येत। यत्तु षट्त्रिंशन्मतवचनं "घटिकार्द्धं त्रिभागं वा स्वल्पं वा दूषयेत्तिथिं। पञ्चगव्यघटे पूर्णे सुराया विन्दुकोयथा"॥ इति तदुक्तादेव हेतोरुपवासविषयं। एतेन यत् कैश्चिदुक्तं "घटिकार्द्धं त्रिभागं वेति वचनं वेदनिन्दार्थवादतया अवधेयं अन्यथा "नागो द्वादशनाडीभिरित्यनर्थकं स्यादिति तन्निरस्तं। उक्तप्रकारेण वाक्योपपत्तौ लक्षणया अर्थवादत्वकल्पनाया अन्याय्यत्वात्।

अन्ये त्वेवमाहुः एकादशी तावद्दिनद्वयेऽपि कर्मकालव्यापित्वे

क्षये पूर्वा प्राप्ता षष्ठी-पूर्णिमे तु युग्मवाक्यैरपि तत्र साध्वर्यादेकादशीप्राप्तिरेव तत्र निषिध्यत इति तदयुक्तं दिनद्वयेऽपि कर्मकालव्याप्तित्वेऽपि युग्मादिवाक्यप्रवृत्तेरुक्तत्वात् युग्मवाक्यचयवृद्धिसाम्यवाक्यकर्मकालव्याप्तिवाक्यविषयव्यवस्थायास्तदुक्तायानिराकृतत्वाच्च तस्माद्दिनद्वयेऽपि कर्मकालव्यापितिथिसम्भवे इदं द्रष्टव्यं ।

अन्ये तु दिनद्वयेऽपि कर्मकालव्याप्त्यभाव इदं वचनमित्याहुः ।

अन्ये तूभयविषयमङ्गीकुर्वन्ति ।

तस्माद्यासान्तिथीनां केवलानां पुण्यत्वम्तासामेव वेधव्यवस्था यासान्तिथीनां वार-नक्षत्रयोगेन पुण्यत्वन्तासान्वेधदोषो न भवति, तत्र वेधदोषेऽङ्गीक्रियमाणे द्वितीयेऽहनि वारादियुक्ततिथेरभावात् कर्मैव लुप्येत ।

उक्तञ्च चतुर्थीं प्रकृत्य ब्रह्मवैवर्त्ते ।

अङ्गारकयुता या तु सा तथैव फलप्रदेति ।

'तथैव' युग्मगुणनिरपेक्षवारादिगुणेन ।

लिङ्गपुराणे ।

दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः ।

श्रवणेन च संयुक्ता सा शुभा सर्वकामदा ॥

गोभिलः ।

या तिथिर्ऋक्षसंयुक्ता या च योगेन नारद ।

मुहूर्त्तद्वयमात्रापि सापि सर्वा प्रशस्यते ॥

सर्वापि दुष्टयुग्मस्थापीति प्राप्ते न केवलं तिथिविषय एव वेधदोषः तस्मान्निषिद्धतिथिविद्धा परित्याज्या अन्या तूदयमत्वभिन्यस्त-

मयसम्बन्धिनी वा "सा तिथिः सकला ज्ञेयेति वचनादुपादेयेति सिद्धं।

अत्रापवादमाह नारदीयपुराणे वशिष्ठः।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।
पित्र्येऽस्तमयवेलायाः स्पृष्टा पूर्णा निगद्यत इति॥

पारणे मरणे वा तात्कालिक्येव तिथिर्न पुनः सा तिथिः सकला ज्ञेयेत्येतद्भवतीत्यर्थः।

स्कन्दपुराणे।

अभ्यङ्गे चोदधिस्नाने दन्तधावन-मैथुने।
जाते च निधने चैव तत्कालव्यापिनी तिथिः॥
मन्वादौ च युगादौ च ग्रहणे चन्द्र-सूर्य्ययोः।
व्यतीपाते च वैधृत्यां तत्कालव्यापिनी क्रिया॥

मन्वादौ या स्नान-दान-श्राद्धादिका क्रिया सा मन्वादिकालव्यापिनी कार्य्या न कालान्तर इत्यर्थः। एवं युगादौ चेत्यादि व्याख्येयं, "नक्तव्रते च सम्प्राप्ते तत्कालव्यापिनी तिथिरिति। तत्र नक्तव्रतस्य यः कालः प्रदोषाख्यः तद्व्यापिनी तिथिर्ग्राह्येत्यर्थः।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते
चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये
तिथिसामान्यनिर्णयः समाप्तः।

# चतुर्थोऽध्यायः ।

## अथ व्रतविशेषेण तिथिविशेषनिर्णयः ।

अथ ब्रह्मवैवर्त्ते ।

कृष्णाष्टमी तथा रम्भातृतीया वटपैतृकी ।
दूर्व्वतपा तथा ब्रह्मन् कर्त्तव्या संमुखा तिथिः ॥
नान्येषु संमुखा कार्य्या तृतीया चाष्टमी द्विज ।
षष्ठी चैकादशी ब्रह्मन्नित्येवं शास्त्रनिर्णयः ॥

'सम्मुखा' पूर्वविद्धा, 'कृष्णाष्टमी' कृष्णाष्टमीव्रतसम्बन्धिन्यष्टमी । केचित्तु कृष्णाष्टमी जन्माष्टमीति व्याचक्षते, अत्रापि पूर्वदिन एव रोहिणीयुक्तायाः पूर्वविद्धायाः उपोष्यत्वात्। 'रम्भातृतीया' रम्भा-व्रतसम्बन्धिनी तृतीया। 'दूर्व्वतपा' दूर्व्वतपव्रतसम्बन्धिनी तिथिः, तच्च व्रतं शिवरहस्ये प्रतिपादितं। भरतं प्रति उतङ्क उवाच ।

शृणुष्वैकं महाराज दूर्व्वतपद्दतिव्रतम् ।
कृतेन येन विश्वात्मा शिवः शीघ्रं प्रसीदति ।
दूर्व्वतपोव्रतमिदं ब्रह्महत्यादिशोधनम् ॥ इत्यादिना।

केचिदेतद्व्रतमपश्यन्तो दूर्व्वत्वपमितिपाठमुत्प्रेक्ष्याशून्यशयनं द्वि-तीयाव्रतार्थत्वेन व्याचक्षते, तत्कथंचिदपि श्रुति-स्मृतीतिहास-पुराण-तन्निबन्धनादिष्वदृश्यमानत्वान्न प्रमाणपदवीमुपारोढुमर्हति ।

संवर्त्तः ।

कृष्णाष्टमी हृहत्तपा सावित्री वटपैतृकी ।
अनङ्गचयोदशी रम्भा कर्त्तव्या पूर्वसंयुता ॥
'अनङ्गचयोदशी' कामव्रतसम्बन्धिनी चयोदशी ।
हृहत्तपा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता च कर्त्तव्या सम्मुखा तिथिः ॥
ब्रह्मवैवर्त्ते ।
चतुर्थी तु तृतीयायां महापुण्यफलप्रदा ।
कर्त्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ॥
'चतुर्थी' विनायकव्रतसम्बन्धिनी चतुर्थी ।
पैठीनसिः ।
कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥
'स्कन्दषष्ठी' स्कन्दव्रतसम्बन्धिनी षष्ठी ।
स्कन्दपुराणे ।
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्त्तव्या तिथि-भान्ते च पारणम् ॥
हृहद्यमः ।
श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनं ॥
'श्रावणी' श्रावणपूर्णिमा । 'दुर्गनवमी' दुर्गव्रतादिसम्बन्धिनी नवमी। 'दूर्वा' दूर्वाष्टमी। 'हुताशनी' होलिका पूर्णिमा, वह्निव्रत-सम्बन्धिनी तिथिश्च, 'बलेर्दिनं' बलिप्रतिपत् ।

पद्मपुराणे ।

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनं ॥

स्कन्दपुराणे प्रभासखण्डे ।

आश्वयुक्शुक्लपक्षे या अष्टमी मूलसंयुता ।
सा महानवमी प्रोक्ता त्रैलोक्ये तु सुदुर्लभा ॥
कन्यागते सवितरि शुक्लपक्षेऽष्टमीयुता ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाश्विने मासि विशोको जायते हि सः ॥

दूर्वाष्टमी च सिंहस्थे सूर्ये भाद्रपदशुक्लाष्टमी भवति । यदि चाष्टम्याः पूर्वमगस्त्य उदेति तदा प्राग्भवत्ते पक्षे कार्य्या ।

तथाच शौनकः ।

उद्यानिका शिवपवित्रकमेघपूजा
दूर्वाष्टमी फलविरूढकजागरापि ।
स्त्रीणां व्रतानि निखिलान्यपि वार्षिकाणि
कुर्य्यादगस्त्य उदिते न शुभानि विष्णुः ॥

इति व्रतविशेषेण तिथिविशेषनिर्णयः ।

---

## अथैकभक्ततिथि-कालनिर्णयः ।

तत्रैकभक्तलक्षणं स्कन्दपुराणे ।

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥

देवलः ।

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमूनं ग्रासत्रयेण तु ॥

तच्च मध्याह्नव्यापिन्यां कार्य्यं ।

तथाच पद्मपुराणे ।

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः ।

बौधायनः ।

उदये तूपवासस्य नक्तस्यास्तमये तिथिः ।
मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः ॥

अत्र च त्रिधा विभक्तस्याह्नो मध्यमोभागो मध्याह्नः । ननु चतुर्धा विभक्तस्याह्नो द्वितीयभागेऽपि मध्याह्नशब्दः प्रयुक्तः ।

पूर्वाह्नः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा ।
आ तृतीयादपराह्णः सायाह्नश्च ततः परम् ॥

इति गोभिलवचनात् । तथा पञ्चधा विभक्तस्य तृतीयभागेऽपि ।

लेखाप्रभृतावादित्ये त्रिमुहूर्त्तं गते रवौ ।
प्रातस्तु स स्मृतः कालोभागश्चाह्नस्तु मध्यमः ॥
सङ्गवस्त्रिमुहूर्त्तस्तु मध्याह्नस्तत्समः स्मृतः ।
ततस्त्रयोमुहूर्त्तास्तु अपराह्णोविधीयते ॥
पञ्चमोदिनभागो यः स सायाह्न इति स्मृतः ।
यद्यदेतेषु विहितं तत्तु कार्यं विजानता ॥

इति पराशरवचनात् । तत्कथं निर्णयः । उच्यते । सरस्वत्यावक्तमध्याह्नशब्दः पूर्वोत्तरभागद्वयापेक्षो मध्यमभागे वर्त्तते, भागान्तरापेक्षया चतुर्द्धा विभक्तद्वितीयभागे पञ्चधा विभक्ततृतीयभागे च विलम्बितप्रतीतिरित्यतोऽन त्रिधा विभक्तस्य तृतीयभागे मध्याह्नशब्दोऽयं, तथाच शतपथश्रुतिः । "तस्मै च स पूर्वाह्ने देवा अशनमभिहरन्ति मध्यन्दिने मनुष्याः अपराह्णे पितरः" इति ।

अतः पूर्वाह्नवचनपर्य्यालोचनया द्विनाड्यादुपरितनो मध्याह्नोमुख्यः कालः, तदूर्ध्वमस्तमानावधिर्गौणः "द्विनाडीसमयेऽतीते इति वचनात्, "द्विवेत्यभिधानाच्च ।मध्याह्नव्यापित्वं च "कर्मणो यस्य यः काल इत्यादिवचनपर्य्यालोचनयैकदेशलक्षणया द्विनाड्यादुपरितनमध्याह्नव्यापित्वं विवक्षितं पटोदग्ध इतिवत्, यदा तु द्वे मुख्यकालैकदेशं समं व्याप्नुतः एका गौणमपि तदोभयव्यापिनी ग्राह्या, ननु तिथिद्वासे भवत्वेवं न तु साम्ये वृद्धौ वा "खर्वोदर्पस्तथा हिंसा त्रिविधं तिथिलक्षणं। खर्व-दर्पौ परौ पूज्यौ हिंसा स्यात् पूर्वकालिकी" ॥ इति व्यासवचनादिति चेत्, उच्यते । यथा समयकर्मकालव्यापिन्याः पूर्वायाः "कर्मणोयस्येत्यादि-वचनबलेन ग्रहणेन "खर्व-दर्पाविति वचनविरोधस्तथा द्विविधकर्मकालैकदेशव्यापिन्याः पूर्वाया ग्रहणेऽपीति। किञ्च व्रतविषये युग्मवाक्यमेव प्रवर्त्तते न खर्व-दर्पवाक्यमिति सामान्यतिथिनिर्णयप्रस्तावे दर्शितं । यदा तूत्तराधिकमुख्यकर्मकालैकदेशं व्याप्नोति पूर्वा तु ततोन्यूनं व्याप्यमपि गौणमपि तदोत्तरैव ग्राह्या बहुमुख्यकर्मकालव्यापकत्वात् ।

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।
विद्यमानोभवेदङ्गं नोज्झितोपक्रमेण च ॥

इति वचनानुरोधाच्च । सर्व-दर्पवचनविरोधपरिहारन्यायेनाच "हिंसा पूर्वकालिकौति वचनविरोधः परिहरणीयः। यदा तूभे अपि मुख्यकालैकदेशमपि न व्याप्नुतः पूर्वा गौणैकदेशं व्याप्नोति तदा पूर्वैव याह्या मुख्यकालैकदेशास्पर्शेऽपि गौणकर्मकालस्पर्शात् ।

अत्र केचिदाहुः गौणकाल एवैकभक्तं कार्यं तथा सत्युभयोरनुग्रहो भविष्यति, एकभक्ततिथेर्गौणकालस्य च मध्याह्ने त्वेकभक्ते क्रियमाणे उत्पत्तिशिष्टमध्याह्नलक्षणगुणानुरोधेनोत्पत्तिशिष्टतिथिविशेषो-बाधितो भवति, तथाप्युक्तं मुख्यासम्भवे च सर्वत्र गौणकालग्रहणमाश्रितं तस्माद्गौणकाल एवैकभक्तं कार्यमिति, तदयुक्तं ।

तिथ्यादिषु भवेद्यावान् ह्रासोवृद्धिः परेऽहनि ।
तावान्याह्यस्तु पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

इति वचनाद्यस्यान्तिथौ यद्विहितं कर्म तत्तस्याः स्वकर्म तेन मध्याह्नकालेऽपि तत्तिथिलाभात् तत्रैवैकभक्तं कार्यमिति ।

यदा तु दिनद्वयेऽपि कर्मकालव्यापिनी तदा युग्मादिवचना-न्निर्णयः। अयञ्च कालः स्वतन्त्रैकभक्तविषयः, यत्त्वन्यव्रताङ्गमेकभक्तं तत्स्वयमङ्गत्वेन दुर्बलादङ्गगुणविरोधन्यायेन न प्रधानकालं बाधते । उपवासस्याङ्गीभूतन्त्वेकभक्तं उपवासतिथावेव कार्यं। ननु स्वतन्त्रैकभक्तव्रते मध्याह्नव्यापिन्यां गृह्यमाणायां निषिद्धतिथियुक्तापि प्रसज्येत, निषिद्धतिथित्यागे तु मध्याह्नव्यापिनी न लभ्यते तत्र किं क्रियतां मध्याह्नग्रासस्य बाधोनिषेधस्य वेति, उच्यते। तत्र निषेधबाध एव

युक्तः "नागविद्धा तु या षष्ठीत्यादिनिषेधे व्रतविशेषानुपादानान्मध्याह्नशास्त्रस्य व्रतविशेषवतोबलीयस्त्वादिति। ननु निषेधबाधे युग्मवाक्यस्यापि बाधाद्गौरवमिति चेत् ।न। तुल्यशास्त्राणां बाधगौरवे गौरवञ्चतो निषेधो भवति न सामान्य-विशेषशास्त्रयोः, विशेषशास्त्रस्यैव बलीयस्त्वादिति।

ननु

उपवासव्रतादीनां घटिकैकापि या भवेत्।

उदये सा तिथिस्तत्र विपरीता तु पैतृके॥

इत्यादिविशेषशास्त्रस्य निषेध-युग्मवाक्याभ्यां बाधो यथा एवमिहाप्यस्तु, उच्यते।

उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः।

इत्यादिवचनान्तरविरोधाद्य युग्मवाक्यतो व्यवस्थेति वैषम्यं।

नागोद्वादशनाड़ीभिर्दिक्पञ्च-दशभिस्तथा।

भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिं॥

इति वचनात् द्वितीयेऽहनि मध्याह्नाभावेऽप्येकभक्तं कार्यमिति केचित्, तदयुक्तं कर्मकालव्यापिन्यां लभ्यमानायां वचनस्य अनाश्रयणात्।

यस्मिन् काले तु यत्कर्म तत्कालव्यापिनी तिथिः।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः॥

इति वचनात् तस्मादत्रत्रैव व्यवस्था युक्तेति।

इत्येकभक्तकाल-तिथिनिर्णयः।

## अथ नक्तकालनिर्णयः।

तत्र दक्षः।

नक्तव्रते च सम्प्राप्ते तत्कालव्यापिनी तिथिः।
प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा।
एकादशीं विना सर्वाः शुक्ल-कृष्णसमाः स्मृताः॥

एकादशी तु नक्ते न प्रदोषव्यापिनी ग्राह्या तत्रोपवासासामर्थ्येन नक्तविधानादत उपवासदिन एव तत्कार्यमित्यर्थः।

प्रदोषपरिमाणन्तु स्कन्दपुराणे उक्तम्।

उदयात्प्राक्तनी सन्ध्या घटिकाद्वयमुच्यते।
सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः।
त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तं गते सतीति॥

यत्त्वमरसिंहेनोक्तं "प्रदोषो रजनीमुखमिति तत्र रजनीमुखशब्देन मुहूर्त्तद्वयमुच्यते पूर्वाचार्य्यानुसारात् अनेकार्थत्वान्नाम्नश्च।

मिताक्षरायां तु

प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमुच्यते। इत्युक्तं,

अत्र केचिदाहुः प्रदोषादौ पूर्वघटिकाद्वयं सन्ध्याशब्दवाच्यं तत्र च भोजनं निषिद्धं "चत्वारीमानि कर्म्माणि सन्ध्यायां परिवर्ज्जयेत्। आहारं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकं"॥ इत्यादिना, अतः प्रदोषोत्तरघटिकाद्वये भोजनं कर्त्तव्यमिति।

तदयुक्तं मुख्यसन्ध्याप्रत्यवायपरित्यागे कारणाभावात् तत्रैव निषेध-
प्रवृत्तेः । तथाहि आदित्यास्तमयादितारकोदयान्तः सर्वजनप्रसिद्धो
मुख्यः सन्ध्याकालः किञ्चिदाकाशतारकाकाशात् सूर्यदर्शनावधिश्च
तस्मिंश्च काले भोजनं निषिद्धं ।

तथाच स्मृत्यन्तरं ।

उदयात्प्राक्तनी सन्ध्या घटिकाद्वयमुच्यते ।
सायं सन्ध्या त्रिघटिका अस्तादुपरिभास्वतः ॥

विधिश्च ।

नक्षत्रदर्शनात्सन्ध्या सायं तत्परतः क्षितम् ।
तत्परा रजनी ज्ञेया तत्र धर्मान् विवर्जयेत् ॥

अस्तु वा घटिकात्रयं सन्ध्याप्रत्यवायः तथापि न तत्र निषेधः
तस्य रागप्राप्तभोजनविषयत्वात् । यदा तु दिनद्वयेऽपि प्रदोषव्यापिनी
न भवति तदापि स्कन्दपुराणोक्तम् ।

प्रदोषव्यापिनी न स्याद्दिवानक्तं विधीयते ।
आत्मनो द्विगुणच्छाये मन्दीभवति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियां ।
कुर्वन्नक्तव्रती नक्तं फलं भवति निश्चितम् ॥

अत्र केचिदाहुः 'प्रदोषव्यापिनी न स्यादित्युपलक्षणं आदित्य-
वारादौ रात्रिभोजननिषेधात् तेन तथापि दिवानक्तं कार्यमिति
तदयुक्तं निषेधस्य रागप्राप्तभोजनविषयत्वात् विधिप्राप्तनिषेधाभाव-
स्य तैत्ताभ्युदयकालनिर्णयप्रस्तावे दर्शितत्वात् अन्यथाप्रत्यवाय तस्या-

हादित्यवाराद्दौ रात्रावेव नक्तं कार्यमिति।

बौरधर्मे तु।

यदा तु द्विगुणाच्छायां कुर्वंस्तपति भास्करः।
तच नक्तं विजानीयात्र नक्तं निशि भोजनम्॥

एतदपि पूर्ववत्समानविषयं।

भविष्यत्पुराणे।

मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप॥

नक्षत्रदर्शनादूर्द्धं नक्तस्य मुख्यः कालः "अहं मन्ये इति वचनात्, इतरोगौणः परमततेनोपदेशात्, एतद्वचनपर्य्यालोचनया यावन्न-क्षत्रदर्शनोपरितनप्रदोषव्यापित्वं नक्तवाक्ये विवक्षितं। अथ केचित् प्रथमातिक्रमे कारणाभावाद्गौणनक्तकालविधानाच नक्षत्रदर्शनात् पूर्वं "नक्तमहं मन्ये" इति व्याचक्षते। तच्चोच्यते किमच नक्तशब्देन कालोविवक्षितः भोजनं वा, न तावत्कालः नक्षत्रदर्शनात् पूर्वकालस्य सन्ध्यात्वात् तस्याश्च "न दिवानक्तमिति वेदे नक्तकालशब्दवाच्यत्व-निषेधात्। नापि भोजनं "नक्तव्रते च सम्प्राप्ते तत्कालव्यापिनी तिथिः" इति नक्षत्रवचनात् नक्तकालसंयोगाच्च भोजने न नक्तशब्दः प्रवर्त्तते। तथाऽस्मिन् काले क्रियमाणं न नक्तं स्यात् तस्मान्नक्षत्रदर्शना-दूर्द्धं भोजनं मन्ये इत्येवार्थः, शिष्टसमाचारश्च तथैव दृश्यते तस्मान्न-क्षत्रदर्शने सति नक्तं।

देवलः।

नक्षत्रदर्शनान्नक्तं ग्रहस्थस्य बुधैः स्मृतम्।

यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥

भविष्यत्पुराणे ।

नक्षत्रदर्शने नक्तं गार्ह्यस्याभ्यन्तरागमम् ।

शेषमेकभक्तकालनिर्णयवदवसेयम् ॥

इति नक्तकालनिर्णयः ।

---

## अथोपवासतिथिनिर्णयः ।

तत्र वृद्धवसिष्ठः ।

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।

चतुर्दशी चोपवासे हन्युः पूर्वापरे तिथी ।

उपवासे सप्तमी तु वेधाद्धन्युत्तरं दिनम् इति ॥

द्वितीयाद्यास्तिथयोवेधादुपवासे यथापूर्वोत्तरे तिथी हन्युः सप्तमी चोत्तरामेवेत्यर्थः। अनेन प्रतिपत्तृतीया च द्वितीयाविद्धा नोपोष्या इत्युक्तं भवति एवं पञ्चम्याद्यास्वपि द्रष्टव्यं ।

वाराहीयपुराणे तु "द्वितीया पञ्चमी वेधादिति श्लोकं पठित्वेदं उच्यते ।

तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः ।

वेधादधस्ताद्धन्युस्ता उपवासे तिथीस्त्विमाः ॥

उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् ।

पञ्चम्योरुभयोरेव उपवासविधिः स्मृतः ॥

द्वितीयाद्यास्तु तिथयस्तृतीयादियुता नोपोष्या इत्यर्थः । अत्र

तृतीयायुतायां द्वितीयायामुपवासो निषिद्धः भृगुस्मृति-विष्णुध
र्मोक्त विहितः ।

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।

अमावास्या तृतीया च ता उपोष्याः पराग्निताः ॥

विष्णुधर्मोत्तरे प्रकीर्णितास्वपि ।

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।

त्रयोदशी अमावास्या उपोष्याः स्युः पराग्निता इति ॥

तथैवं व्यवस्था शुक्लद्वितीया परयुतोपोष्या कृष्णद्वितीया :
पूर्वयुता ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।

कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति विष्णुधर्मोत्तरवचनात् । अत्र द्वितीयाविद्धतृतीयानिषेध
रम्भाव्रतव्यतिरिक्तविषयः ।

तथाच निगमः ।

कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी ।

अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुता इति॥

रम्भातोऽन्यत्र तृतीया चतुर्थीयुतैव ।

तथाच गार्ग्यः ।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।

उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

'पराः' अनन्तराः। अत्र पञ्चमीयुतायां चतुर्थ्यामुपवासः "द्वि
तीया पञ्चमी वेधादिति वचनेन निषिद्धः गार्ग्यवचनेन तु विहितः

अथ केचिदाहुः शुक्लचतुर्थी परयुतोपोष्या कृष्णचतुर्थी पूर्वयुता "शुक्लपक्षे तिथिर्ग्राह्येति वचनादिति तु तदयुक्तं ।

चतुर्थी तु तृतीयायां महापुण्यफलप्रदा ।
कर्त्तव्या व्रतिभिर्वत्स गणनाथ सुतोषिणी ॥

इति ब्रह्मवैवर्त्तवचनात् पञ्चमीयुतायां चतुर्थ्यामुपवासनिषेधे-नार्थात् तृतीयायुतायामुपवासविधानस्य विनायकव्रतविषयत्वप्रतीतेः अन्यव्रतविषयत्वे हि "गणनाथ सुतोषिणीत्यसङ्गतं स्यात् । सर्वं च शिष्टास्तृतीयायुतायां चतुर्थ्यां विनायकव्रतमाचरन्ति "शुक्लपक्षे तिथिर्ग्राह्येति वचनस्य विषयः सामान्यतिथिनिर्णयप्रस्तावे दर्शितः । तस्माद्विनायकव्रतचतुर्थी पूर्व्वयुतोपोष्या अन्या तु परयुतेति व्यवस्था । पञ्चमी तु चतुर्थीयुतोपोष्या "एकादश्यष्टमी षष्ठीति गार्ग्यवचनात् "तृतीयैकादशी षष्ठीति नारदीयपुराणवचनेन षष्ठीयुतायामुपवासनिषेधाच्च : षष्ठी तु परयुतोपोष्या "द्वितीया पञ्चमीत्यादिवचनात् ।

तथा शिवरहस्य-सौरपुराणयोः ।

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा नोपोष्या स्यात् कथञ्चन ।
ज्ञात्वैवं सूर्य्य-चन्द्राभ्यां तिथिं स्फुटतरां व्रती ।
एकादशीं तृतीयाञ्च षष्ठीञ्चोपवसेत्सदा ॥

अत्र पञ्चमीयुतायां षष्ठ्यां उपवासनिषेधः स्कन्दषष्ठीव्यतिरिक्तविषयः सप्तमीयुतायामुपवासविधिश्च ।

तथाच पद्मपुराणे ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्द्दशी ।

एताः पूर्व्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥

सप्तमी तु षष्ठीयुतापेक्ष्या "एकादश्यष्टमी षष्ठीति गार्ग्यवचनात् "नागविद्धा तु या षष्ठीति शिवरहस्य-सौरपुराणयोरष्टमीयुतायामुपवासनिषेधाच्च ।

षष्ठ्येकादश्यमावास्या पूर्व्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥

इति स्कन्दपुराणे निषेधाच्च । अष्टमी तु पक्षद्वयेऽपि परयुतैव पक्षयोरुभयोरित्यभिधानात् ।

कृष्णपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्द्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित् ।
उपवासादिकार्य्येषु ह्येष धर्मः सनातनः ॥

इति वचनं रुद्रव्रतविषयं ।

रुद्रव्रतेषु सर्व्वेषु कर्त्तव्या सम्मुखा तिथिः ।
अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत् ॥

इति वचनात् । नवमी तु पूर्वयुतैव "द्वितीया पञ्चमी वेधादिति वचनात् । दशम्यपि पूर्वयुतैव "तृतीयैकादशी षष्ठीति भविष्यत्पुराणवचनात् । एकादशी तु परयुता "द्वितीया पञ्चमी वेधादित्यादिना दशमीविद्धायामुपवासनिषेधात् "एकादश्यष्टमीति अग्न्यादिवचनैः परयुतायामुपवासविधानाच्च । शेषमेकादशीनिर्णयप्रस्तावे वक्ष्यते । द्वादशी तु पूर्वयुतैव "एकादशी तथा षष्ठीति गार्ग्यवचनात् ।

यच्च केचिदाहुः शुक्लपक्षोदशी पूर्वयुता कृष्णपक्षोदशी परयुतेति सामान्यतिथिनिर्णयप्रस्तावे दर्शितं तथैवोपवासेऽपि ज्ञेयं । ननु "एका-

दश्यष्टमी षष्ठीति[१] विष्णुधर्मोत्तर-भट्टारगीतावचनात् शुक्लचयोदश्युपवासविषये द्वितीया कस्मान्न गृह्यते उच्यते, "द्वितीया पञ्चमी वेधादिति चतुर्द्दशीयुक्तायां चयोदश्यां उपवासप्रतिषेधाद्वचनस्याविशिष्टाद्दशीयुक्तायां तस्यामुपवासे "पक्षाष्टमी त्वमावास्या कृष्णपक्षे चयोदशी। एताः परयुताः पूज्याः" इति निगमवचनात् कृष्णचयोदश्युपवासे पराण्विता शुक्लचयोदशी तु पूर्व्वाण्वितेति प्रतान्तरवदेषा व्यवस्था स्वीक्रियते।

अपरे त्वाहुः अच चतुर्द्दशीयुतायां चयोदश्यां उपवासनिषेधोऽनङ्गचयोदशीविषयः, चतुर्द्दशीयुतायां चयोदश्यां उपवासविधानमनङ्गचयोदशीव्यतिरिक्तविषयं "कृष्णाष्टमी हरत्तपेति निगमवचनात्, एतद्वचनपर्य्यालोचनया पूर्वव्यवस्था नाश्रयणीया चयोदशीयुतचतुर्द्दशीनिषेधस्तु पक्षद्वयेऽपि। तदाह हङ्कवशिष्ठः।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्द्दशी।
अमावास्या तृतीया च ता उपोष्याः पराण्विताः॥

निगम-ब्रह्मपुराणयोः।

एकादश्यष्टमी षष्ठी अमावास्या चतुर्द्दशी।
तृतीया पूर्वविद्धा च ता उपोष्याः परेऽहनीति॥

एकादश्यादयः परयुता उपोष्याः, तृतीया पूर्वविद्धा च, तथापि व्यवस्था रम्भातृतीया पूर्वविद्धा अन्या तूत्तरविद्धेति। चतुर्द्दशीयुतयोः पौर्णमास्यमावास्ययोरुपवासनिषेधः सावित्रीव्रतव्यतिरिक्तविषयः, प्रतिपद्युतयोरुपवासविधिश्च "कृष्णाष्टमी हरत्तपेति निगमवचनात्। यत्तु पद्मपुराणे।

(१) "एकादशी तथा षष्ठीतीति ख०।

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ।
पूर्णिमा परविद्धा च नोपोष्यैव पञ्चकम् ॥

इति तत्सावित्रीव्रतविषयं ।

स्कन्दपुराणेऽपि ।

भूतविद्धा सिनीवाली न तु तत्र व्रतञ्चरेत् ।
वर्जयित्वा तु सावित्रीव्रतन्तु शिखिवाहन ॥

विष्णुधर्मोत्तरे ।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ।
अन्याश्च तिथयः सर्वा उपोष्याः पूर्वसंयुताः ॥

"अन्याश्च तिथयः कार्याः" इति वचनान्तरविहितपरविद्धोपोष्य-तिथिव्यतिरिक्तविषयं यच्च सामान्यशास्त्रत्वेन विशेषशास्त्रावरुद्धे विषये प्रवृत्त्यनुपपत्तेः। न हिदं युक्तं सर्वशब्दवैयर्थ्यप्रसङ्गात् "अन्याश्च तिथयः सर्वाः" इत्यनेन वचनान्तरविहितपरविद्धोपोष्यतिथिव्यति-रिक्ततिथ्यलाभात्। यदि तु वचनान्तरविहितपरविद्धोपोष्यतिथी-नामपि विकल्पेन पूर्वविद्धानामुपोष्यतार्थं सर्वशब्दः तदा सप्रयोजनः, तेनैतदपि विशेषशास्त्रमित्येकादश्यादितिथिव्यतिरिक्ताखिलतिथयो-विकल्पेन पूर्वयुताः परयुता वोपोष्याः तत्र च आचल्याधिकरणसि-द्धान्ते आचम्याव्ययोर्विकल्पे वार्त्तिककृतोक्ते अवश्येनेोक्तं इदमिह-वक्तव्यं कथं सामान्यविहितेनाप्येन विशेषविहितस्यास्य विकल्पः सर्वत्र सामान्य-विशेषशास्त्रयोर्बाध्य-बाधकभावोच्छेदप्रसङ्गात्, नैतद्वयोरपि विशेषशास्त्रत्वात्। तथा हि यदि सामान्यविधौ वाक्यशेषेतावन्मात्रं

श्रूयते, अन्यच्च च पत्नीसंयाजरूपो विशेषस्तथा भवत्येव सामान्यविशेषन्यायः, किन्तु "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति, यज्ञायेति सामान्यमभिधायापि पुनस्तत्समानाधिकरणसर्वशब्दोच्चारणं, तेनैतत् ज्ञायते यदुत्पत्तिशिष्टद्रव्यानवरुद्धप्रकृतसकलयागविषयत्वमेवाध्ययनविध्यभिमतं यज्ञशब्दस्येति तेन द्वयोरपि विशेषविषयत्वाद्विकल्प इति तदयुक्तं। यदि हि वचनान्तरविहितपरोपोष्यतिथिष्वेतद्वाक्यं प्रवर्त्तते तदैकत्र शास्त्रान्तरबाधसापेक्षोनिषेधः अन्यत्र निरपेक्ष इति विधिवैषम्यं प्रसज्येत। किञ्च पूर्वोपोष्यतिथिषु नित्यवद्विधिः परोपोष्यतिथिषु च विकल्पेनेत्यपि वैषम्यं स्यात्। "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यं" इत्यत्राप्यविहितद्रव्यके यागे आज्यविधानं उक्तादेव हेतोः। किञ्च यागोद्देशेनाज्यविधौ अविहितद्रव्यकयागलाभार्थं "सर्वस्मै" इति विशेषणे विशिष्टानुवादाद्वाक्यभेदः प्रसज्येत। तस्मात् सर्वशब्दो यथाप्राप्तानुवादार्थस्तस्य च सर्वयज्ञसम्बन्धप्रतिपादनद्वारा आज्यस्तुतिः प्रयोजनं। कथं तर्हि आज्यान्याज्ययोर्विकल्प उक्तः, उच्यते "यदाज्येन प्रयाजा इज्यन्ते आज्येन पत्नीसंयाजा इति तैत्तिरीयवचनात् पत्नीसंयाजेष्वाज्यप्राप्तेः। अथोच्येत अनगुवचनविधिशेषोऽयमर्थवादः न तु पत्नीसंयाजेष्वाज्यविधिः, एवं हि श्रूयते "जामि वा एतद्यज्ञस्य क्रियते यदाज्येन प्रयाजा इज्यन्ते आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायेति, तदयुक्तं विद्धवदनुवादान्यथानुपपत्त्या च विधेराश्रयणात् उपरि हि दर्वेभ्यो धारयतीतिवत्। तन्त्रवार्त्तिकनिबन्धकारास्तु "आज्येन पत्नीसंयाजान् यजतीति श्रुत्यन्तरादाज्यप्राप्तिं मन्यन्ते तेन

युक्तं तत्र विकल्पाभिधानं। ननु भवतु तथैवं सर्वग्रहणस्य स्तुत्यर्थत्वेन सप्रयोजनत्वात्, अत्र तु न तथेति कथमेतदिति चेत्, उच्यते सर्वशब्दो यथाप्राप्तानुवादः "यज्ञोभयं हविरार्त्तिमार्च्छेत्" इत्यत्रो-भयपदवत्। अथ तत्र प्रथमं वा नियम्येतेत्याग्नेयहविरार्त्तिवद्भ्रमा-पनोदार्थमुभयग्रहणं तर्ह्यत्रापि बहुवचनस्य त्रित्वेव चरितार्थत्वात्। प्रतिपदादितिथित्रयग्रहणमिति भ्रमापनोदार्थं सर्वं ग्रहणं भविष्यति। अथात्र भ्रमापनोदनार्थस्य प्रकारान्तरेणापि सिद्धेर्न प्रयोजनता, तर्ह्युभयपदस्यापि न चेति तुल्यत्वार्थः। यद्वा किमनेन प्रयोजनगवेष-णेन उभयपदे या गतिः सैवेहापीत्यलमतिप्रसङ्गेन। यदपि वृद्ध-गार्ग्यवचनं तिथ्युपोषणे पूर्वापरपक्षयोः पूर्वा परेव परा पूर्वैवोपोष्या, तदपि वचनान्तरविरुद्धविषयं वेदितव्यं। अथेदं विचार्य्यते यदो-दयादारभ्योदयान्तरं व्याप्यानन्तरं तिथिर्वर्द्धते सा च परोपोष्या, यथोदयादिर्भवति तदा किं पूर्वोपोष्या उत परेति तत्र केचिदाहुः परैवोपोष्या युग्मादिवचनात्।

ननु

दिवारात्रौ व्रतं यच्च एकमेकतिथौ गतं।
तस्यामुभययोगेऽन्यामाचरेत्तद्व्रतं व्रती॥

इति वचनात् युग्मतिथिपरित्यागेन पूर्वेद्युरेव व्रतानुष्ठानं युक्तं। मुख्यकालस्यासम्भवे अहोरात्रादिसाध्यव्रतादेः खण्डतिथौ कर्त्तु-मशक्यत्वेन तत्प्रत्यासन्नानियततिथ्यन्तरग्रहणे प्राप्ते "युग्माग्नि-युग-भूतानामित्यादिवाक्यैस्तिथिविशेषा नियम्यन्ते तत्कथमुच्यते सम्पूर्ण-तिथिपरित्यागेन युग्मवाक्यबलात् खण्डतिथेरपि ग्रहणमिति। उच्यते।

तिथ्यादिषु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।
तावान् ग्राह्यस्तु पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

इति वचनपर्य्यालोचनयोत्तरेद्युर्यावती तिथिर्वर्द्धते तावती पूर्वेद्युरपीतरा तिथिर्विद्धत एव । ततश्च पूर्वतिथेरपि खण्डत्वात् परित्यागेन युग्मवाक्यानुग्रहाच्च परेद्युरेवानुष्ठानं युक्तम् ।

तदुक्तं विष्णुधर्मोत्तरे ।

तिथिः शरघ्ना परिवर्जनीया
धर्मार्थकामेषु बुधैर्मनुष्यैः ।
विहीनशस्त्रापि विवर्जनीया
यद्यायतीवृद्धिमुपैति पक्ष इति ॥

स्मृत्यन्तरमपि ।

यथा मलिम्लुचः पूर्वो मासो देवस्तथोत्तरः ।
त्याज्या तिथिस्तथा पूर्वा वृद्धौ कार्य्या यदोत्तरा इति ॥

अदृयुक्तं उपवासो ह्यहोरात्रसाध्यत्वेन पूर्वस्यां च कार्य्यः तस्याः सकलकर्मव्यापित्वात् । "यस्मिन् काले तु यत्कर्म तत्कालव्यापिनी तिथिः" इति वचनात् । यन्तूक्तं पूर्व्वापि खण्डतिथिरेव "तिथ्यादौ तु भवेद्यावानिति वचनाद्यावती परेऽह्नि वृद्धिः तावत्याः पूर्वतिथेरुदयाद्र्ध्वप्राप्तेरिति, तदप्ययुक्तं तत्र हि स्वकर्मणीत्युक्तं यस्यां च तिथौ यद्विहितं कर्म तत्तस्याः स्वकर्म तेन त्रयोदश्यां विहितमुपवासव्रतं तस्या एव कर्म न द्वादश्यास्तेन स्वकर्मविहितद्वावृद्धिग्रहणं त्रयोदशीव्रते द्वादश्यां निष्प्रमाणकं "दिवारात्रौ व्रतं चरेति वचनस्योपवासव्यतिरिक्तविषयत्वे वह्वोपकारकाभावाच युग्मा-

दिवाकथपर्य्याप्तोपवासतया सङ्कोचरूपवासव्यतिरेकोऽपि भवेत्। अथोच्यते "प्रातःसङ्कल्पयेद्विद्वानुपवासव्रतादिकम् इति वचनात् सङ्कल्पः प्रातरेव करणीयः। एवञ्च द्वितीयदिने सङ्कल्पयोग्याया अपि तिथेरलाभे पूर्वतिथिग्रहणं,लाभे तु सर्वस्मिन्नप्यहोरात्रव्यापके कर्मणि द्वितीयाया एवेति, तदप्ययुक्तं "दिवारात्राविति विशेषणानर्थक्यप्रसङ्गात् तथा सर्वव्रतानां पूर्वेद्युरेवाचरणात्।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रास-वृद्धी[1] न कारणम् इति॥

कर्मकालव्यापिन्यां लभ्यमानायां ह्रास-वृद्ध्योः तिथेः पूर्वत्वपरत्वे प्रति कारणत्वनिराकरणाच्च अविद्यमानह्रास-वृद्धिग्रहणप्रयोजनस्य सर्वतिथिसामान्यनिर्णयप्रस्तावे दर्शितस्याचासम्भवाच्च। "तिथिः सशल्येतिवचनं त्वेकादशीविषयं। 'सशल्या' दशमीविद्धा, 'विहीनशल्या' सम्पूर्णैकादशी, सा द्विविधापि त्याज्या। यदोत्तरेद्युरेकादशी किञ्चिद्वर्द्धते तेन "सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सेत्यादिवचनेन समानविषयमिदमिति ज्ञेयं। एवञ्च वचनान्तरविरोधः परिहृतो भवति,मूलभूतश्रुत्यन्तरकल्पना च न भविष्यति, सर्वतिथिविषयत्वे तु साप्यापद्यते,"यथा मलिम्लुचः पूर्वं इति वचनं"खर्व-दर्पौ परौ पूज्यावित्यनेन समानविषयं न सम्पूर्णतिथिबाधनाय प्रभवति, तस्मादेवंविधे विषये पूर्वैव ग्राह्येति सिद्धं। यदा तु परा उपोष्याः द्वितीयेऽहनि घटिकामात्राः विद्यन्ते तदा ता एवोपोष्या न तु खण्डतिथि-निषिद्धतिथिविद्धाः।

---

(१) ह्रास-वृद्धी इति ग०।

तथाच भविष्यत्पुराणे।

व्रतोपवासनियमे घटिकैका यदा भवेत्।

सा तिथिः सकला ज्ञेया पित्र्ये चापराह्णिकी॥

वह्निपुराणेऽपि।

घटिकार्द्धं त्रिभागं वा खण्डं वा दूषयेत् तिथिम्।

पञ्चगव्यघटं पूर्णं सुराया विन्दुको यथा इति॥

यदा तु नोत्तरेद्युरुदयव्यापिनी किन्तु पूर्वेद्युर्निषिद्धतिथिविद्धैव तदाह ऋष्यशृङ्गः।

अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु।

मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः।

तदूर्द्धविद्धान्यन्यानि दिनान्युपवसेन्नरः इति॥

निषिद्धैर्दिनैरविद्धानि दिनानि यदि न लभ्यन्ते तदोक्तलक्षणानि ग्राह्याणीत्यर्थः। "मुहूर्त्तैः पञ्चभिर्विद्धेति अरुणोदयघटिकाचतुष्टयाद्यभिवेधेन। अस्मादधिकवेधो यदा भवति दिनान्तरे च शुद्धतिथ्यभावः तदापि स एवाह।

अविद्धानामलाभे तु पयो दधि फलानि च।

यद्वद्देवाव्ययमश्नीयात् उपवासव्रती भवेत् इति॥

केचिदाहुः अयमेकादशीवर्जमुपवासप्रत्याम्नायो वेदितव्यः एकादश्यां तन्नुपानमेवोपवासप्रत्याम्नायः भोजनस्य निषेधात् अन्नुपानमपि उपवासप्रत्याम्नायत्वेन दर्शितम्।

वायुप्रोक्ते।

उपवासनिषेधेषु भक्ष्यं किञ्चित्प्रकल्पयेत्।

न दुष्यत्युपवासे तदुपवासफलं लभेत् ॥

नक्तं हविष्यान्नमनोदनं वा
तिलाः फलं क्षीरमथाम्बुपानम्।
यत्पञ्चगव्यं यदि वाथ वायुः
प्रशस्तमत्रोत्तरमुत्तरं यत् इति ॥

तदयुक्तं रागप्राप्तलाभे विधिप्राप्ते निषेधाप्रवृत्तेः।

इत्युपवासतिथिनिर्णयः ॥

## अथ नक्षत्रोपवासादिकालनिर्णयः।

विष्णुधर्मोत्तरे।

राम उवाच।

नक्षत्रं देवदेवेश तिथिर्वापि विनिर्गता।
दृष्टा कथन्तु कर्त्तव्यमिति मे संशयं हर ॥

देवदेव उवाच।

उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः।
यत्र वा युज्यते राम निशीथः शशिना सह ॥

क्वचित्त्वन्यथा पाठः।

उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः।
येन वा युज्यते राम निशीथः शशिना सहेति ॥

यत्र वा निशीथोऽर्द्धरात्रं शशिना नक्षत्रेण संयुज्यते तदा नक्षत्रमुपोषितव्यमित्यर्थः।

तथाच सुमन्तुः

यथार्द्धरात्राद्‌र्वाक्तु नक्षत्रं प्राप्यते तिथौ।

नक्षत्रान्तं कुर्य्यादतीते पारणं भवेत् ॥

'प्राप्यते' प्रारभ्यते इत्यर्थः। अतीते तस्मिन्नक्षत्रे इति शेषः। इत्यमपेताः।

नक्षत्राणि समस्तानि पूरयित्वा तु पारणम्।

अत्र केचिदाहुः पारणमत्र व्रतस्य समाप्तिर्न तु भोजनम् तस्य पुरुषधर्मत्वात्तथाच पार-तीर-कर्मसमाप्ताविव्यस्य धातोः रूपं पारणमिति। तत्र च दान-होम-देवपूजात्मकत्वादेवाच राहु-दर्शनादिना रात्रौ कर्त्तव्यतायाः प्रतिषिद्धत्वादतो नक्षत्रमुपोषितव्यमिति। एतच्च नक्षत्रोपोषण एव नक्षत्रपुरुषादौ द्रष्टव्यं। यदा नक्षत्रच्छेदो दिवा न कथञ्चनापि प्राप्यते तदा प्राङ्नक्षत्रपुटेर्देवपूजादिकं विधाय नक्षत्रविच्छेदे भोजनं कर्त्तव्यमित्येव युज्यते इति, तदयुक्तं,

राहुदर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु।
स्नान-दानादिकं कुर्युर्निशि काम्यव्रतेषु च॥

इत्यादिना वचनेन रात्रावपि काम्यव्रतेषु दानादिविधानान्नक्षत्र-पुरुषव्रतादीनाञ्च काम्यत्वात्। यदप्युक्तं यदा नक्षत्रच्छेदो दिवा कथञ्चनापि प्राप्यते इत्यादि तदप्ययुक्तं एवंविधे विषये भवन्मतेन द्वितीयदिनसम्बन्धिनक्षत्रपारणस्य युक्तत्वात्। तस्मादेवं व्यवस्था यदा पूर्वस्मिन्नेव दिने अस्तमयसम्बन्धिनक्षत्रं तदा तदेवोपोष्यं, यदा तु दिनद्वयेऽपि नास्तमयसम्बन्धि तदापि तथैव, यदा तु पूर्वेद्युरर्द्धरात्रसम्बन्धि द्वितीयदिने चास्तमयसम्बन्धि तदा द्वितीयदिनसम्बन्धि "यो यस्य विहितः कालः कर्म्मणस्तदुपक्रमे। विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु" इति वचनात्।

यत्तु विष्णुधर्म्मोत्तरे वचनम् ।

सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः ।
तया कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम् ॥

तदुपवासव्यतिरिक्तव्रतविषयम् ।

यदपि बौधायनवचनम् ।

सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः ।
वर्द्धमानस्य पक्षस्य हानौ लग्नमयं प्रति ॥

तत्पित्र्यकार्य्यविषयमिति ज्ञेयम् । विष्णुधर्म्मोत्तर-बौधायनवचनयो-रेकविषयत्वे विरोधप्रसङ्गात् एकत्र ह्रास-वृद्ध्योः कारणत्वाभ्यनुज्ञानात् अन्यत्र च तन्निषेधात् । न च वैपरीत्यं, तिथिसाधर्म्येण तद्वदेव नक्षत्रनिर्णयस्य युक्तत्वात् । तिथिनिर्णयस्यैव पित्र्यकार्य्ये ह्रास-वृद्धिचोदना नान्यत्रेति, नाप्युभयमुपवासविषयम् तस्य च विशेषशास्त्रावरुद्धत्वात् । तस्मादस्मदुक्तैव व्यवस्था युक्ता ।

इति नक्षत्रोपवासादिकालनिर्णयः ।

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये चतुर्थोऽध्यायः समाप्तः ।

---

## पञ्चमोऽध्यायः ।

### अथ जन्माष्टमीनिर्णयः ।

सा च या रोहिणीयुक्ता पूर्व्वापरा वा सैवोपोष्या ।

तथा च विष्णुरहस्ये ।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला ॥
मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते ।
अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत् ॥

किञ्च या रोहिणीयुक्ता सा चोपवासादौ महाफला इति सैव ग्राह्या ।

तथाच विष्णुधर्मोत्तरे ।

रोहिण्यृक्षं यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्व्वपापहरा तिथिः ॥
यद्बाल्ये यच्च कौमारे यौवने वार्द्धके तथा ।
बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिः ॥

सनत्कुमारसंहितायाम् ।

प्रयुक्तावहितो राजन् कथ्यमानं मया तव ।
मासस्य तु नभस्य कृष्णाष्टम्यां नराधिप ।
रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः ॥

स्कन्दपुराणे ।

प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत् ।
श्रावणे बहुले सा तु सर्वपापप्रणाशिनी ।
जयं पुण्यञ्च कुरुते जयन्ती तेन तां विदुः ॥

विष्णुरहस्ये ।

अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता ।
भवेत् प्रौष्ठपदे मासि जयन्ती नाम सा तिथिः ॥

'प्रौष्ठपद' इति कृष्णप्रतिपदादिमासविवक्षया, 'श्रावण'इति च शुक्लप्रतिपदादिमासविवक्षया, एवं सत्यष्टमी एकैव प्रतिपादिता भवति ।

भविष्यविष्णुधर्मयोः ।

जयन्त्यामुपवासश्च महापातकनाशनः ।
सर्व्वैः कार्य्यो महाभक्त्या पूजनीयश्च केशवः ॥

वह्निपुराणे ।

कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यता ।
जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः ॥
सप्तजन्मकृतं पापं राजन् यत् त्रिविधं नृणाम् ।
तत् क्षालयति गोविन्दस्तिथौ तस्यां सुभावितः ॥
उपवासश्च तत्रोक्तो महापातकनाशनः ।
जयन्त्यां जगतीपाल विधिनाच न संशयः ॥
त्रेतायां द्वापरे चैव राजन् कृतयुगे पुरा ।
रोहिणीसंयुता चेयं विद्वद्भिः समुपोषिता ॥

तथा ।

रोहिणी तु कलायैका कृष्णाष्टम्यां यदा निशि ।

यदोभयत्रार्द्धरात्रं विहाय रोहिणीयोगः तदोत्तरैवोपोष्या "अ-त्रापि न कर्त्तव्या सप्तमीसंयुताष्टमीति वचनात् । यदा तु पूर्व्वस्याम-र्द्धरात्रे रोहिणीयोगः उत्तरस्यां तदर्द्धरात्रं विहाय तदा पूर्व्वैवोपोष्या ।

तथाच भविष्यद्विष्णुधर्म्मयोः ।

रोहिण्यामर्द्धरात्रे च[१] यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
सोपवासो हरेः पूजां तत्र कृत्वा न सीदति ॥
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा ।
रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ॥
अर्द्धरात्रादधश्चोर्द्धं कलयापि यदा भवेत् ।
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ॥

वह्निपुराणे ।

सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।
भविता साष्टमी पुण्या यावच्चन्द्र-दिवाकरौ ॥

तथा ।

समायोगे तु रोहिण्या निशीथे राजसत्तम ।
समजायत गोविन्दो बालरूपी चतुर्भुजः ।
तस्मात्तं पूजयेत्तत्र यथावित्तानुसारतः ॥

---

(१) अर्द्धरात्रे च रोहिण्यामिति ग० ।

भविष्यत्पुराणे।

मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके।
प्राजापत्ये सवराशिस्थे चन्द्रे रोहिणीसंस्थिते॥

योगेऽस्मिन् वसुदेवाद्धि देवकी मामजीजनत्।
तस्यां पूजयेत्तत्र शुचिः सम्यगुपोषितः॥

अग्निपुराणेऽपि।

तस्मात् कृष्णाष्टमी पूज्या सप्तम्या नृपसत्तम।
रोहिणीसंयुतोपोष्या सर्व्वाघविनाशिनी॥

तथा।

अर्द्धरात्रादधश्चोर्द्धं कलया वा यदा भवेत्।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी॥

पद्मपुराणेऽपि।

कार्य्या विद्धा च सप्तम्या रोहिणीसहिताष्टमी।
तत्रोपवासं कुर्व्वीत तिथि-भान्ते च पारणम्॥

विष्णुधर्म्मे च।

जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते।
कृत्वोपवासं तिथ्यन्ते तदा कुर्य्यात्तु पारणम्॥

भृगुरपि।

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च।
पूर्वविद्धैव कर्त्तव्या तिथि-भान्ते च पारणम्॥

यदार्द्धरात्रादूर्द्धं कलामप्यतिक्रम्य अष्टमी प्रवृत्ता, रोहिणी च द्वितीयेऽह्नि मुहूर्त्तार्द्धं मुहूर्त्तं वा तदा द्वितीयैव ग्राह्या।

तथाच स्कन्दपुराणे ।

सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम ।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि ।
तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा ॥ इति ।

पाद्मेऽपि ।

मुहूर्त्तेनापि संयुक्ता सम्पूर्णा साष्टमी भवेत् ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥

यदा तिथि-नक्षत्रयो दिनद्वयेऽर्द्धरात्रे रोहिण्यष्टमीयोगः तदा परदिने जयन्तीव्रतम् ।

तथाच ब्रह्मवैवर्त्ते ।

वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।
सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी ॥

यदा तु द्वितीयदिवस एव रोहिण्यष्टमीयोगः तदा तत्रैव जयन्तीव्रत।मित्युक्तं । तत्रैव बुधवारादियोगे प्राशस्त्यातिशयः ।

तथाच स्कन्दपुराणे ।

उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ।
अपि वर्षशतेनापि लभ्यते वाथ वा न वा ॥

पद्मपुराणेऽपि ।

प्रेतयोनिगतानान्तु प्रेतत्वं नाशितं नरैः ।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ।

किं पुनर्नवमीयुक्ता कुलकोट्याः समुद्धिता ॥

अन्ये त्वेवमाहुः, यदा पूर्व्वार्द्धरात्रे रोहिणीयुक्ता नोत्तरा वा चेद् बुधवारे सोमवारे वा भवति तदोत्तरैवोपोष्या न पूर्व्वा "उदये चाष्टमी किञ्चिदिति स्कन्दपुराणवचनात् "प्रेतयोनिगतानामिति पद्मपुराणवचनाच्च। "सप्तमीसंयुताष्टम्यामिति "मुहूर्त्तेनापि संयुक्तेति वचनद्वयञ्च बुध-सोमवारव्यतिरिक्तविषयमिति। तदयुक्तं। यद्यपि "अर्द्धरात्रे तु रोहिण्यामित्यादिवाक्यं बुध-सोमवारयुक्ताष्टमीव्यतिरिक्तविषयत्वेन सावकाशं बुध-सोमवारवाक्यं च द्वितीय एव रोहिणीयोगे, तथापि बुध-सोमवारवाक्यसङ्कोचे कर्म्मकालव्यापितिथित्वबाधाद्दर्द्धरात्रवाक्यसङ्कोचे तद्बाधप्रसङ्गात् बुध-सोमवारवाक्यस्यैव सङ्कोचः नार्द्धरात्रवाक्यस्य उभयविषयत्वेन "सप्तमीसंयुताष्टम्यामिति "मुहूर्त्तेनापि संयुक्तेत्येतद्वचनद्वयस्योपपत्तेः। बुध-सोमवारविषयत्वेन सङ्कोचे प्रमाणाभावात्। यत्तु कैश्चिदुक्तं। एतद्वचनद्वयं नोपवासविषयम् उपवासशब्दाश्रवणात् सम्पूर्णत्वाभिधानात्, किन्तु "अर्द्धरात्रादधश्चोर्द्ध्वमितिवाक्यपर्य्यालोचनया पूर्व्वस्मिन् दिने उपवासे कृते द्वितीये दिने यत्तु ब्राह्मणभोजन-दक्षिणादि विहितं तदतिक्रम्यापि क्रियमाणं सकलत्वाभिधानेन अष्टमी-रोहिण्योरेव कृतं भवति इति महाफलत्वमुपवासस्य प्रापयतीति। तदयुक्तं सम्पूर्णत्वाभिधानस्योपवासविषयत्वेनाप्युपपत्तेः, "अर्द्धरात्रादधश्चोर्द्ध्वमिति वचनविरोधस्य परिहृतत्वात्। तस्मादुक्तैव विषयव्यवस्था युक्ता।

अत्र केचिदाहुः, अल्पकालरोहिणीयोगे जयन्ती नामाष्टमी अर्द्धरात्रयोगे रोहिण्यष्टमीति। तद्वत् जयन्तीशब्दश्चार्द्धरात्रयोगे-

ऽपि प्रवृत्तेः "अर्द्धरात्रादधश्चोर्द्ध्वं कलया वा यदा भवेत् । जयन्ती नाम सा प्रोक्तेत्युदाहृतवचनात् ।

यत्तु जयन्तीं प्रकृत्योक्तं "मुहूर्त्तमपि लभ्येतेति, तदर्द्धरात्र-योगेऽप्युपपद्यते जयन्तीशब्दस्य व्यापककालरोहिणीयुक्ताष्टमीवचनत्वे प्रमाणाभावात् प्रागुदाहृतसकलवाक्यपर्य्यालोचनया रोहिणीघटित-कृष्णाष्टमीवचनत्वप्रतीतेः । यद्वा जनार्द्दन-जन्मोपलक्षित-रात्रिविशे-षवचनो जयन्तीशब्दः ।

अभिजिन्नाम नक्षत्रं जयन्तीनाम शर्वरी ।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः ॥

इति ब्रह्माण्डपुराणवचनात् । यदा तु न रोहिण्यष्टमीयुक्ता तदा ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित् ॥

इत्यादिवचनेभ्यः पूर्वविद्धैव ग्राह्या । अत्र केचित् सूक्ष्मानयनेन वक्तव्याः, ताश्च सूक्ष्मानयनेन सिद्धक्षणिकोत्तरार्द्धमध्यवर्त्तिन्यस्तदा-भिप्रेताः । न च तासां रोहिणीत्वं मुख्यं सम्भवति, न ह्यन्यदन्यद्-भवति, विरोधात् । यथा दिनार्द्धं दिनमेव न रात्रिस्तस्मात् क्षणि-कार्द्धस्य सूक्ष्मानयनात् यद्रोहिणीत्वं तद्गौणरोहिणीपक्षलक्षणेन रोहिणीतुल्यत्वाद्देवदत्तस्य सिंहत्वमिव । एवञ्च सति मुख्यया सम्भवन्त्या रोहिण्या रोहिणीघटितत्वमष्टम्या ग्राह्यं मुख्यसम्भवे गौणा-श्रयणस्यान्याय्यत्वात् । किञ्च प्रथमप्रतीतत्वेन स्थूलमार्गसिद्धस्य तिथि-नक्षत्रादेर्ग्रहणं युक्तं । ज्योतिःशास्त्रमपि सूक्ष्मानयनेन सूक्ष्मकालमे-वानयति न मुख्यस्वरूपत्वम् ।

यदाह। सूक्ष्मं हतं भागवनं वदेत-
ज्ज्योतिर्विदां संव्यवहारहेतोः।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतम्
विवाह-यात्रादि फलप्रसिद्ध्यै इति॥

किञ्च सूक्ष्मादन्येन प्रकारेणादृष्टार्थेषु विधि-निषेधेषु नक्षत्र-ग्रहणे व्यवस्था स्यात् वार-नक्षत्रादिविशेषविहितस्य प्रति-सूक्ष्मागमनसिद्धेः, तदंशेषु प्रसङ्गात् अविगीतशिष्टाचारविरुद्धं तस्मात् सूक्ष्मागमनमेवाश्रयणीयम्॥

इति जन्माष्टमीनिर्णयः।

---

## अथ जयन्तीपारणकालनिर्णयः।

तत्र तिथिभान्ते च कर्त्तव्यं प्रागुदाहृतवचनात्। यदा तु पारण-दिने अर्द्धरात्रादुपरि भान्तस्तिथ्यन्तो वा भवति तदार्द्धरात्रे पारणं कार्य्यम्।

तिथ्यृक्षयोर्यदा च्छेदो नक्षत्रान्तमवाप्य वा।
अर्द्धरात्रेऽथ वा कुर्य्यात् पारणं त्वपरेऽहनि॥

इति वचनात्।

अत्र केचिदाहुः।

"नक्षत्रान्तमवाप्य वेति यच्चो जयन्ती-अवव्रतादन्यव्यतिरेकेण।
याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः।
ऋक्षान्ते पारणं कुर्य्याद्विना श्रवण-रोहिणीम्॥

इति वचनात्।

ब्रह्मवैवर्त्तेऽपि ।

अष्टम्यामथ रोहिण्यां न कुर्य्यात् पारणं क्वचित् ।
हन्यात् पुरा कृतं कर्म्म उपवासार्ज्जितं फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात् प्रयत्नतः कार्य्यं तिथि-भान्ते च पारणमिति ॥

तदयुक्तं केवलतिथ्यन्ते भान्ते वा जयन्तीव्रतप्रकरण एव वह्नि पुराणे पारणविधानात् ।

भान्ते कुर्य्यात्तिथेर्वापि व्रतं भारत पारणमिति ।

तथा ।

रोहिणीसंयुता चेयं विद्वद्भिः समुपोषिता ।
वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः ॥
सांयोगिके व्रते प्राप्ते यत्रैकापि वियुज्यते ।
तत्र पारणकं कुर्य्यादेवं वेदविदो विदुः ॥

तस्मात् केवलतिथ्यन्ते भान्ते च पारणविधानमसमर्थविषयं इत रन्तु समर्थविषयमिति ज्ञेयम् ।

इति जयन्तीपारणकालनिर्णयः ।

---

## अथ प्रसङ्गाज्जयन्तीव्रतनित्यत्वनिर्णयः ।

प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी ।
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः ॥

इत्येतद्वचनात् "वसन्ते वसन्ते ज्योतिषा यजेतेतिवत् वीप्सायुक्तत्वात् नित्यत्वमवगम्यते, तेन ज्योतिष्टोमादिवदेकस्य तूभयत्वे संयोग-

पृथक्त्वमितिन्यायेन नित्यत्वमपि स्वीक्रियते। यच्चोक्तं कैश्चित् नैतत्तेन तुल्यं। तत्र हि वाक्यान्तरेण फले विहिते ज्योतिष्टोमादिफलरहितमेव वीप्सया युक्तं वसन्तकाले विधीयते, तेन तस्य वाक्यस्य नित्यत्वावबोध एव फलं। इदन्तु "तुष्ट्यर्थं चक्रपाणिनः" इति तुष्टिलक्षणे फल एव व्रतं विधत्ते, तेन काम्यस्य सतो न शक्नोति नित्यतां बोधयितुं उभयपरत्वे वाक्यभेदप्रसङ्गात्। तस्मात् "वर्षे वर्षे" इति वीप्सा फलभूयस्त्वार्था न नित्यत्वार्था, अन्यथार्थसङ्गत्यभावात् प्राजापत्यर्क्षसंयुक्ताष्टमी वर्षे वर्षे यतो न सम्भवतीति, तद्युक्तं वीप्साश्रुतेरानर्थक्यप्रसङ्गात्। न च फलभूयस्त्वार्था चेति वाच्यं। फले तद्विधानं तद्भूयस्त्वे च तदावृत्तिविधानमिति भवन्मतेऽपि वाक्यभेदप्रसङ्गात्। अथ फले व्रतविधिरेव न व्रतावृत्तौ, फलभूयस्त्वसिद्धेर्न तत्परता वीप्साश्रुतेरिति मन्यसे। तथा सत्यानर्थक्यं दुष्परिहरं फलभूयस्त्वार्थत्वे च प्रतिवर्षमवश्यकर्त्तव्यतारूपस्य मुख्यार्थस्य हानिप्रसङ्गात्। न च तद्धानौ कारणमस्ति, यतोऽस्य वाक्यस्यायमर्थः, यच्छ्रावणस्यासिताष्टम्यां प्राजापत्यर्क्षसंयुक्तायां चक्रपाणिनस्तुष्ट्यर्थं व्रतं वाक्यान्तरेण विहितं तद्वर्षे वर्षे कर्त्तव्यमिति। न च मुख्यार्थपरित्यागेनाष्टमीशब्देन लक्षणया व्रताभिधानमयुक्तमिति वाच्यं। अनुवादस्य प्राप्त्यनुरूपत्वात् भवतोऽपि समानत्वाच्च फले व्रतविधानाङ्गीकारात्। इयांस्तु विशेषः तव विधौ लक्षणा ममानुवादे, उक्तञ्च भाष्यकारेण "विधौ हि न परः शब्दार्थः प्रतीयत इति। अतोऽन्यथार्थसङ्गत्यभावादित्ययुक्तं तत्परित्यक्तं नित्यस्यापि तुष्टिफलत्वोपपत्तेश्च।

वर्णाश्रमाचारवता पुरुषेण परः पुमान्।

विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥

इति विष्णुपुराणवचनात् । किञ्च किञ्चित्पापदुरितक्षयफलं नित्यस्याकरणनिमित्तप्रत्यवायपरिहारार्थं, तत्रापि पक्षे नित्यत्वमप्यावश्यकमिष्टम् ।

अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥

इति वचनात् । द्वितीये पक्षेऽपि नित्यत्वमविरुद्धं ।

तुष्ट्यर्थं देवकीसूनोर्जयन्तीसम्भवं व्रतं ।
कर्त्तव्यं वित्तमानेन भक्त्या भक्तजनैरपि ।
अकुर्व्वन् याति निरयं यावदिन्द्राश्चतुर्दश ॥

इत्यकरणे महादोषश्रवणात् ।

यत्तूक्तं कैश्चित् नैतन्नित्यत्वमवबोधयितुमलं अन्यथैवोपपत्तेः, तथाहि ।

अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥

इत्यादि । अनेन त्रिजन्मसञ्चितपापक्षयफलमुक्तं प्रायश्चित्तवत् व्रतस्य तस्याकरणे पापक्षयाभावे तस्मादेव त्रिजन्मसञ्चितात्पापान्नरकं यातीत्यर्थः ।

यथा याज्ञवल्क्यवाक्ये ।

प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥

इत्यत्र प्रायश्चित्ताकरणजनितात् पापान्न नरकपातः, किन्तु तदकरणे पापक्षयकरणाभावेन विद्यमानात्पापात्,एवमिहापीति । तद-

युक्तं वीप्सावाक्येन नित्यत्वावधारणात्। व्रतस्याकरणे प्रत्यवायसिद्धौ तदकरणे दोषविधायकवचनस्य मुख्यार्थत्वसम्भवात्। तत्परित्यागेनार्थान्तरकल्पनायां प्रमाणाभावात्। यदि चैतच्छ्रवणद्वादशीव्रतमेकमेव पापक्षयकरं स्यात्तदेवं भवेन्नाम, यदा त्वन्यान्यपि प्रायश्चित्तादीनि पापक्षयकारीणि सन्ति तदा तस्यैवाकरणे कथं निरयपातः। एवं प्रायश्चित्तेऽपि प्रायश्चित्तं चरितव्यमतोनित्यमिति, "कृते निःसंशये पापे न भुञ्जीतानुपस्थितः। भुञ्जानो वर्द्धयेत्पापं यावन्नाख्याति पर्षदि"॥ इत्यादिवाक्यैरावश्यकत्वावगमादकरणे प्रत्यवायसिद्धौ तदकरणे दोषाभिधायकस्य "प्रायश्चित्तमकुर्वाणाः" इत्यादिवाक्यस्य मुख्यार्थत्वसम्भवात्तत्परित्यागेनार्थान्तरकल्पने प्रमाणाभावात्। यदप्युक्तं यदि व्रतस्य नित्यत्वेनाकरणे निरयपातः तर्हि तच्छुद्ध्यर्थं प्रायश्चित्तमपि श्रूयते, यथा व्रात्यतानाहिताग्नितयोः। तथाच नित्यैकादशीव्रतस्याकरणे।

अष्टम्याञ्च चतुर्दश्यां दिवा भुक्त्वैन्दवञ्चरेत्।

एकादश्यां दिवा रात्रौ नक्तं चैव तु पर्वणि॥

इति तदप्ययुक्तं सर्वत्रौपदेशिकप्रायश्चित्ताभावात्तथा सति।

प्रायश्चित्तं प्रकल्प्यं स्यात् यत्र चोक्ता न निष्कृतिः।

प्राणायामशतं कार्यं सर्वपापापनुत्तये।

उपपातकजातानामनादिष्टस्य चैव हि॥

इत्यादिवचनानर्थक्यप्रसङ्गात्। यच्चान्यदुक्तं कैश्चित् यद्यकरणे प्रत्यवायोऽभविष्यत् अनुकल्पोऽपि व्यधास्यत।

यथा।

एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः।

तथैकादशीव्रते नित्ये ।

एकभक्तेन नक्तेन क्षीण-वृद्धातुरः क्षिपेत् ।

इत्यसमर्थं प्रत्यनुकल्पो विधीयते न तथात्राष्टम्यामुक्तं । तद्यद्युक्तं अनुकल्पविधानाभावेऽपि नित्याकरणे प्रत्यवायस्यावश्यम्भावित्वात् । पुराणान्तरे साधारणोऽनुकल्पो दर्शितः ।

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।

तावद्धनादि वा दद्याद्भुक्तश्चेद्द्विगुणं तथा ॥

सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमात् ।

कुर्याद्द्वादशसंख्याकान् यथाशक्त्यातुरो नर इति ॥

तस्मान्निरयगमनवचनस्य नित्यतावबोधः फलमिति सिद्धं ।

स्कन्दपुराणे । अनाचरणे दोषबाहुल्यप्रतिपादनेन नित्यत्वमेव स्पष्टीकृतं । तथाहि ।

शूद्रान्नेन तु यत्पापं शवसूतकभोजने ।

तत्पापं लभ्यते पुंभिर्जयन्त्याभोजने कृते ॥

गृध्रमांसं खरं काकं श्येनञ्च मुनिसत्तम ।

मांसं वा द्विपदां भुक्तं कृष्णजन्माष्टमीभवे ॥

कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।

त्रैलोक्यसम्भवं पापं भुक्तं तेन न संशयः ॥

ब्रह्मघ्नस्य सुरापस्य गोवधः स्त्रीवधोऽपि वा ।

न लोको मुनिशार्दूल जयन्तीविमुखस्य च ॥

ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतं ।

ते भवन्ति महाप्राज्ञ व्यालाः सुघ्ने हि कानने(१) ॥

---

(१) व्यालाः खले हि इति ग० ।

12-3

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति क्रूरराक्षसः ॥
श्रावणे बहुले पक्षे न करोति यदाष्टमीं ।
क्रूरायुधाः क्रूरमुखा हिंसन्ति यमकिङ्कराः ॥
न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम् ।
यमस्य वशमापन्नः सहते नारकीं व्यथां ॥
जयन्तीवासरे प्राप्ते करोत्युदरपूरणम् ।
पीड्यते तिक्तमासाद्य यमदूतैः कलेवरम् ॥
यो भुञ्जीत विमूढात्मा जयन्तीवासरे नृप ।
नरकोत्तारो न तस्यास्ति द्वादशीन्तु प्रकुर्वतः ॥
यदा सह जयन्त्या तु करोति द्वादशीव्रतम् ।
तस्य शौरिपुरे वासो यावदाभूतसंप्लवम् ॥
रटन्तीह पुराणानि भूयो भूयो महामुने ।
अतीतानागतं तेन कुलमेकोत्तरं शतम् ।
पातितं नरके घोरे भुञ्जता कृष्णवासरे इति ॥

यत्पुनरुक्तं भोजनवाक्यं तत्तेतद्भोजनप्रतिषेधः "न हिंस्यात् सर्वा-भूतानीतिवत्, तेन जयन्त्यां कथं नित्यता तन्माहात्म्ये च कथं तस्य पाठः तयोरसम्बन्धात् । अथ जयन्तीप्रकरणपाठात्तदर्थत्वं प्रतिषेध-स्येष्यते । तथापि तेन न जयन्त्या नित्यता प्रशक्यते बोद्धुं, न हि खलु "नानृतं वदेदित्यनेन क्रत्वर्थप्रतिषेधेन क्रतोर्नित्यत्वं सिद्ध्यति । किञ्च उपवासो नाम चेतिकर्त्तव्यताकोऽभोजनसङ्कल्पः तन्निर्वाहार्थमेव भो-जननिवृत्तौ सिद्धायां कोऽर्थः प्रतिषेधेनेति, तत् प्रतिषेधानभ्युपगमे-

नैव परिहृतं, तस्मात् "न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीतिवत् प्राप्त्यभावात् यथा नित्यानुवादत्वेनास्य हिरण्यनिधानस्तुत्यर्थता-भूत् एवमिहापि भोजनप्रतिषेधस्य नित्यजन्माष्टमीव्रतस्तुत्यर्थता वेदितव्या प्रकरणे दोषाभिधायकत्वेन काम्यव्रतविधिस्तुत्यर्थतानुप-पत्तेः, भोजननिन्दावाक्यानान्तु नित्यविधिव्रतप्रेषत्वं स्पष्टमेव, फल-सम्बन्धश्रवणात् काम्यत्वमप्येतद्व्रतस्यावगम्यते ।

तद्यथा विष्णुरहस्ये ।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्त्तमपि लभ्येत सोपोष्या वा महाफला ॥

स्कन्दपुराणे ।

व्रतेनाराध्य तं देवं देवकीवन्दितं हरिं ।
त्यक्त्वा यमपथं घोरं याति विष्णोः परं पदम् ॥
जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः ।
कारयन्ति च विप्रेन्द्र लक्ष्मीस्तेषां सदा स्थिरा ॥
स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने ।
सिध्यन्ति सर्वकार्याणि कृते कृष्णाष्टमीव्रते ॥
धर्ममर्थञ्च कामञ्च मोक्षञ्च मुनिपुङ्गव ।
ददाति वाञ्छितान् कामान् ये चान्ये चातिदुर्लभाः ॥

तथा ।

अमावास्या कुरुष्व त्वं जयन्तीं मुक्तयेऽनघ ।

भविष्योत्तरे ।

प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन ।

नरो वा यदि वा नारी यथोक्तफलमाप्नुयात् ॥
पुत्त्रसन्तानमारोग्यं सौभाग्यमतुलं भवेत् ।
इति धर्म्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयात् ॥
तत्र दिव्येन मानेन वर्षलक्षं युधिष्ठिर ।
भोगान्नानाविधान् भुक्त्वा पुण्यशेषादिहागतः ॥
सर्व्वकामसमृद्धे तु सर्व्वासुखविवर्जिते ।
सर्व्वधर्म्मयुते पार्थ सर्व्वगोकुलसङ्कुले ॥
कुले नृपवरिष्ठानां जायते कृष्णयोपमः ।
यस्मिन् सदैव देशे तु लिखितं वा पटार्पितम् ॥
मम जन्मदिनं पुण्यं सर्वालङ्कारशोभितम् ।
पूज्यते पाण्डवश्रेष्ठ जनैरुत्सवसंयुतैः ॥
परचक्रभयं तत्र न कदाचिद्भवत्युत ।
पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥
गृहे वा पूज्यते यस्मिन् देवक्याश्चरितं मम ।
तत्र सर्वसमृद्धिः स्यान्नोपसर्गादिकं भयम् ॥
पशुतो नकुलाद्व्यालात्पापरोगाच्च पातकात् ।
राजतश्चोरतो वापि न कदाचिद्भयं भवेत् ॥
तस्मादेतद्व्रतं नित्यं काम्यं चेति सिद्धम् ।

इति जयन्तीव्रतनित्यत्वनिर्णयः ।

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये जन्माष्टमीनिर्णयो नाम पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः ।

## अथैकादशीनिर्णयः ।

तत्रैकादशीमहिमा तत्त्वसागरे ।

मातेव सर्वबालानां औषधं रोगिनामिव ।
रक्षार्थं सर्वलोकानां निर्म्मितैकादशी तिथिः ॥

तथा ।

एकादश्युपवासी यः स धन्यः स च बुद्धिमान् ।

तथा ।

एकादशीं परित्यज्य योऽन्यद्व्रतमुपासते ।
स करस्थं महारत्नं त्यक्त्वा लोष्टं हि याचते ॥

तथा ।

एकामेकादशीं वापि समुपोष्य जनार्द्दनम् ।
कामेनापि समभ्यर्च्य संसारान्मुक्तिमाप्नुयात् ॥

पुराणान्तरे तु तोयेनापि समभ्यर्च्येति पाठः ।

प्रसङ्गाद्वाथ वा दम्भाल्लोभाद्वा चिदशाधिपम् ।
एकादश्यां नमस्कृत्य सर्वदुःखाद्विमुच्यते ॥
संसाराख्यमहाघोरादुःखिनां सर्वदेहिनां ।
एकादश्युपवासोऽयं निर्म्मितं परमौषधम् ॥
संसाररोगदष्टानां नराणां पापकर्म्मणाम् ।

एकादश्युपवासेन सर्व एव सुखं भवेत् ॥

नारदीयपुराणे वशिष्ठः।

एकादशीसमुत्थेन वह्निना पातकेन्धनम्।
भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ॥
नेदृशं पावनं किञ्चिन्नराणां भूप विद्यते।
यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥
तावत् पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप।
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो।
एकादश्युपवासेन तत् सर्वं विलयं व्रजेत् ॥
एकादशीसमं किञ्चित्परित्राणं न विद्यते।
स्वर्ग-मोक्षप्रदा ह्येषा राज्य-पुत्रप्रदायिनी।
सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ॥
न गङ्गा न गया भूप न काशी न च पुष्करम्।
न चापि कौरवं क्षेत्रं न रेवा न च देविका।
यमुना चन्द्रभागा च तुल्या भूप हरेर्दिनात् ॥
यत्नेनापि कृता राजन् दर्शयति सान्तकम्।
अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम् ॥
चिन्तामणिसमा ह्येषा अथवापि निधेः समा।
सङ्कल्पपादपप्रख्या वेदवेदोपमा तथा ॥

ब्रह्मवैवर्त्ते ।

सर्वप्रायश्चित्तमिदं संसारोत्तारकारकम् ।
एकादशीव्रतं विप्र कुर्वन्मुक्तिमवाप्नुयात् ॥
नरो दिनैर्दशभिश्चतुर्भिश्च करोत्यघम् ।
उपोष्य पञ्चदशमं दिनं विष्णोर्हि मुच्यते ॥
इति सर्वपुराणेषु मुनीनां निश्चितं मतम् ।
उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः ॥
कलावश्चिन्नशौनामहिंसापापितात्मनाम् ।
एकादशीं विना विप्र न संसाराद्विमोचनम् ॥

पद्मपुराणात् ।

उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः ।
न याति यातनां यामीमिति नो यमतः श्रुतम् ॥

तथा ।

एकादशेन्द्रियैः पापं यत्कृतं वैश्य मानवैः ।
एकादश्युपवासेन तत् सर्वं विलयं व्रजेत् ॥
एकादशीसमं किञ्चित् पुण्यं लोके न विद्यते ।
व्याजेनापि कृता येस्तै वशं यान्ति न भास्करेः ॥

स्कन्दपुराणे ।

विना हि चक्रसंयोगात् सदैवैकादशी नृणाम् ।
विनिहन्तीह एनांसि कुनृपो विषयं यथा ॥
कुपुत्रस्तु कुलं यद्वत् कुनारी च पतिं यथा ।
अधर्मेण यथा धर्मः कुधर्मेण यथा नृपः ॥

कुज्ञानेन यथा ज्ञानं कुशीचे शुचिता यथा।
असद्वादे यथा वादः सत्यं चैवानृतेन हि॥
यथोष्णेन हिमं सुभ्रु अनर्थेनार्थसञ्चयः।
यथा प्रकीर्त्तनाद्दानं तपो विस्मयकारणात्॥
अग्निष्टो हि यथा पुत्रो गावो दूरगमाद्यथा।
सङ्केतेन यथा श्राद्धं यथा वित्तमवर्द्धनात्॥
यथा समीरणाज्ज्ञानं फलानां वरवर्णिनि।
तथा दुष्कृतसङ्घानां प्रोक्तेयं द्वादशी शुभे॥
ब्रह्महत्या दुरापानं स्तेयं गुर्व्वङ्गनागमः।
अभावं समुपेष्यन्ति न तथा वै त्रिपुष्करम्॥
न चापि नैमिषं क्षेत्रं न च कौरवसंज्ञितम्।
प्रभासं न गया देवि न रेवा न सरस्वती॥
कालिन्दी यमुना चैव देविका न च काञ्चनी।
तथान्यतीर्थसङ्घातो नैव तुल्यो हरेर्द्दिनात्।
न दानं न जपः स्नानं न चान्यत्सुकृतं क्वचित्।
मुक्तये ह्यभवत्सुभ्रु मुक्त्वैकं हरिवासरं।
सकृदुपोषणे चास्य नश्यन्ते पापराशयः।
एकतः पृथिवीदानमेकतो हरिवासरः।
न समः कविभिः प्रोक्तो वासरो ह्यधिको मतः॥

विष्णुधर्मोत्तरे।

उपवासी हरिं यस्तु भक्त्या ध्यायति मानवः।
तज्जप्यजापी तत्कर्मरतस्तद्गतमानसः।

निष्कामोऽद्वैतवद्ब्रह्म पदमाप्नोत्यसंशयम् ।

भविष्यत्पुराणे ।

एकादशी महापुण्या सर्वपापविनाशनी ।
भक्तेश्चद्दीपनी विष्णोः परमार्थगतिप्रदा ।
यामुपोष्य नरो भक्त्या न संसारे भविष्यति ॥
एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
न स दुर्गतिमाप्नोति नरकाणां न संशयः ॥
कृत्वा पापसहस्राणि एकादश्यामुपोषितः ।
द्वादश्यामर्चयेद्विष्णुं न स दुर्गतिमाप्नुयात् ॥
एषा तिथिः परा पुण्या विष्णोरीशस्य तुष्टिदा ।
तस्याञ्चैव जगन्नाथः स्वमूर्त्त्या मूर्त्तिमान् स्थितः ।
तेन सा सर्वपापघ्नी सर्वदुःखविनाशनी ॥
या सा विष्णुमयी शक्तिरनन्ता सर्वथा स्थिता ।
सा तेन तिथिरूपेण दृष्टैकादशी सती ॥

सनत्कुमारप्रोक्ते ।

कृत्वा पापसहस्राणि ब्रह्महत्याशतानि वै ।
एकामेकादशीं भक्त्या समुपोष्य शुचिर्भवेत् ॥
एकादशीव्रतादन्यद्व्रतं क्रियते नरैः ।
निष्फलं तद्विजानीयादूषरोप्तमङ्कुरम् ॥

नारदीयपुराणे ।

समाप्य वासरं विष्णोर्यो नरः संयतेन्द्रियः ।
उपवासपरो भूत्वा पूजयेन्मधुसूदनम् ।

स हन्ति सर्व्वपापानि किं तपोभिः किमध्वरैः ॥
एकादशीं प्रपन्ना ये नरा नरवरोत्तमाः ।
तदन्न बहवो भूता नागारिकृतकेतनाः ।
अर्घ्येण पीतवस्त्रा हि प्रयान्ति हरिमन्दिरम् ॥
एष प्रभावो हि मया द्वादश्याः परिकीर्त्तितः ।
पापेन्धनस्य घोरस्य पावकाख्यो महीपत इति ॥

देवीरहस्य-स्कन्दपुराणयोः ।

पापञ्च विविधं प्रोक्तं पातकञ्चातिपातकम् ।
उपपातकसंज्ञञ्च महापातकमेव च ॥
प्रकीर्णकञ्च तत्सर्व्वमेकादश्यामुपोषणात् ।
विलयं याति तोयस्थं यथा मृण्मयभाजनम् ॥

भविष्यत्पुराणे वैष्णवे महात्म्ये ।

एकादश्युपवासी यः किं तस्यान्येन कर्मणा ।
नैकादश्युपवासी यः किं तस्यान्येन कर्मणा ॥

सौरधर्म्मेषु ।

एकतश्चाग्निहोत्रादि द्वादशीमेकतः प्रभुः ।
तुलयातोलयत्तच द्वादशी च विशिष्यते ॥

देवीरहस्ये ।

गायत्रीह यथा सर्व्वपापपञ्जरभेदिनी ।
एकादशी तथा सर्व्वपापपञ्जरभेदिनी ॥

स्कन्दपुराणेऽपि ।

अभोज्यभोजनाज्जातं अगम्यागमनाच्च यत् ।

अयाज्ययाजनाच्चैव अभक्ष्याणाञ्च भक्षणात् ॥
अस्पृश्यस्पर्शनाच्चैव परेषां निन्दनाच्च यत् ।
आत्मसंस्तवनाच्चैव पारदार्य्यात्तथैव यत् ॥
विहिताकरणाच्चैव परवित्तापहारतः ।
ज्ञानाज्ञानकृतं यच्च पातकञ्चोपपातकं ।
तत्सर्वं विलयं याति एकादश्यामुपोषणात् ॥

वैष्णवतन्त्रे ।

एकादशी महापुण्या विष्णोरीशस्य वल्लभा ।
तस्यामुपोषितो यस्तु द्वादश्यां पूजयेद्धरिं ॥
तस्य पापानि नश्यन्ति विष्णोर्भक्तिश्च जायते ।
ज्ञानञ्च शाश्वतं येन संसाराच्छिद्यते नरः ॥

स्कान्द-भविष्यत्पुराणयोः ।

ये द्वादशीमुपवसन्त्यनिशाम्बुभक्षाः
ये वा सदम्बुकुसुमैर्हरिमर्च्चयन्ति ।
ते धौतपाण्डुरपयोनिधिराजहंसाः
संसारसागरजलस्य तरन्ति पारम् ॥

वायुपुराणे ।

एकादशीव्रतं यस्तु भक्तिमान् कुरुते नरः ।
सर्वपापविनिर्मुक्तः स विष्णोर्याति मन्दिरम् ॥

विष्णुधर्मोत्तरे ।

एकादश्युपवासं यः श्रद्धया कुरुते नरः ।
स सर्वपातकादिभ्यस्तथैवाधिर्विमुच्यते ॥

न पश्यत्यापदं नापि नरकं न च यातनाम्।
स नमस्यः स पूज्यश्च वासुदेवप्रियो हि सः॥

गरुडपुराणे।

एकादशीव्रतं भक्त्या यः करोति नरः सदा।
स विष्णुलोकं व्रजति याति विष्णोः सरूपताम्॥

आग्नेयपुराणे।

एकादश्यामुपवासं यः सदा कुरुते नरः।
स याति परमं स्थानं यत्र देवो हरिः स्थितः॥

स्कन्दपुराणे।

यः करोति नरो भक्त्या एकादश्यामुपोषणम्।
स याति विष्णुसालोक्यं याति विष्णोः सरूपतां॥

विष्णुपुराणे।

ॐकारः सर्ववेदानां यथैवाद्यः प्रपूजितः।
तथा सर्वव्रतानान्तु द्वादशीव्रतमुत्तमम्॥

इत्येकादशीमहिमा।

---

## अथैकादशीविषये व्रतवाक्यनिषेधनिर्णयः।

तत्रैकादश्यां कानिचिद्वाक्यानि भोजननिषेधपराणि, कानिचिद्व्रतविधिपराणि। तत्र भोजननिषेधपराणि तावदुदाह्रियन्ते।

तत्र देवलः।

न शङ्खेन पिवेत्तोयं न खादेत् कूर्म-शूकरौ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥

नारदीयपुराणे ।

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
तानि पापान्यवाप्नोति भुञ्जानो हरिवासरे ।
रटन्तीह पुराणानि भूयो भूयो वरानने ॥
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ।

स्कन्दपुराणे ।

मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा ।
एकादश्यान्तु भुञ्जानोविष्णुलोकाच्च्युतो भवेत् ॥

नारदीयपुराणात् ।

अष्टवर्षाधिकोमर्त्यो ह्यशीतिर्न हि पूर्य्यते ।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापभाक् ।
स मे दण्ड्यश्च वध्यश्च निर्वास्यो देशतः स मे ॥

विष्णुस्मृतावपि ।

एकादश्यां न भुञ्जीत कदाचिदपि मानवः ।

ब्रह्मवैवर्त्ते ।

स केवलमघं भुङ्क्ते योभुङ्क्ते हरिवासरे ।
दिने तु सर्वपापानि भवन्त्यन्नाश्रितानि तु ।
तानि मोहेन योऽश्नाति न स पापैर्विमुच्यते ॥

विधवायास्त्वेकादश्यां दोषविशेषः प्रदर्शितः कात्यायनेन ।

विधवा या भवेन्नारी भुञ्जीतैकादशीदिने ।
तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिने दिने ॥

अत्र च "न खादेत् कूर्म-शूकरावित्यादिनिषिद्धनिषेधवदभिधानतया "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीत्यादेर्निषेधपरतैवाध्यवसीयते। न चैतेषु वाक्येषु पर्युदासकारणं व्रतशब्दसामानाधिकरण्यादि श्रूयते, अतोभोजननिषेधा इमे।

अत्र केचिदाहुः एतान्यपि वचनान्युपवासपराण्येव क्वचिदुपक्रमे क्वचिदुपसंहारे क्वचिदुपक्रमोपसंहारयोरुपवासस्य प्रतिपादनात् नञर्थविधौ तु मूलभूतवेदान्तरकल्पनाप्रसङ्गाच्च। एकमूलत्वाच्च वचसापि स्मृतितन्त्रप्रसिद्धैव। यत्र "एकादश्यामुपवसेदित्यभिधाय "एकादश्यां न भुञ्जीतेति वचनं देवलादिस्मृतिषु तदुपसंहारार्थं गुणविधानार्थं वा, तथा चोपवासप्रकरणपठनमप्युचितं भवति। तेन स्वतन्त्रनञर्थविधिपरमेवमादिवचनमिति मतमपास्तमिति।

अपरे त्वाहुः नैतद्युक्तं। मुख्यार्थसम्भवे लक्षणाश्रयणस्यानुचितत्वात्। न च मूलभूतवेदान्तरकल्पनाप्रसङ्गात् लक्षणाश्रयणमुचितमिति वाच्यं। सर्वविधि-निषेधानामेकार्थत्वापत्तेः। न चेह व्रतादिशब्दसामानाधिकरण्यं पर्युदासाश्रयणकारणमस्ति।

ननु।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
वनस्थ-यतिधर्मोऽयं शुक्लामेव सदा गृही॥

इति पर्युदासोऽयमभोजनसङ्कल्पमुपवासाख्यं व्रतं विधत्ते "वनस्थ-यतिधर्मोऽयमिति धर्मशब्दसामानाधिकरण्यात्। न हि निषिद्धानां ब्रह्महत्यादीनां परित्यागे कश्चिद्धर्मो जायते। ब्रह्महत्याद्यनुष्ठानादधर्मो भवति तदननुष्ठानादधर्मपरिहारमात्रं न पुनर्धर्मसम्भवः, पापक्षि-

षेधो गृहीतो धर्मो भवेदपि न पुनः स्वतन्त्रो निषेधस्तथा भवति, तस्माद्धर्मशब्दसामानाधिकरण्यादवगम्यते भावरूपं किञ्चिद्विशेषमस्तीति, प्रजापतिव्रतेष्विव नञर्थस्य व्रतशब्दसमानाधिकरण्यादतः सर्वेष्वेकादशीभोजननिषेधवाक्येषु सर्वशाखान्यायेन "वनस्थ-यतिधर्मोऽयमित्यस्योपसंहाराद्धर्मशब्दसामानाधिकरण्यं पर्युदासाश्रयणकारणं भविष्यतीत्युच्यते । सत्यं । यद्येतद्वाक्यविहितं नित्यमेकादश्युपवासव्रतं स्यात्तदन्तरे मुख्यया वृत्त्या मुख्यासंभवाद्वा लक्षणया विधीयते । यथा कात्यायन-देवलस्मृत्योः ।

एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।

विष्णुरहस्य-स्कन्दपुराणयोः ।

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ।

इत्यादिषु ।

यथा च भविष्यत्पुराणे ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।

ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ॥

अग्निपुराणे ।

गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इत्यादिवचनं । तद्येतत्स्मृतिगतस्य च "वनस्थ-यतिधर्मोऽयमिति विशेषस्य तत्स्मृतिगतस्य च "ब्रह्मचारी च नारी चेति "गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव चेति विशेषस्याप कर्मैक्यादुपसंहारो युज्यते। यत्र तु मुख्यार्थसम्भवेन निषेधनित्यत्वादुपवासव्रतविधानं नास्ति

तत्र कथं व्रतगतस्योपसंहारः, न ह्यग्निहोत्रगतोविशेषः। शाखान्तरेऽन्यकर्मण्युपसंह्रियते, उपसंहारादेव व्रतविधानं भविष्यतीति चेत्। न। उपसंहारे सति व्रतविधानं व्रतविधाने च सति कर्मैक्यादुपसंहार इति दुरुत्तरेतरेतराश्रयप्रसङ्गात्। सर्वत्रोपसंहारे च देवलस्मृतौ व्रतविधायकवाक्यान्तरसद्भावात् पौनरुक्त्यप्रसङ्गः। न चैकं व्रतविधानं द्वितीयं तदुपसंहारार्थं गुणविधानार्थं चेति वाच्यम्। "न शङ्खेन पिबेत्तोयमित्यादिनिषेधव्यवधानेनाबुद्धिस्थस्योपसंहारानुपपत्तेर्भिन्नार्थत्वे सम्भवत्युपसंहारार्थत्वस्यानुचितत्वाच्च। नापि गुणविधिः, प्राप्तार्थविषयत्वेन विधित्वस्यैवानुपपत्तेः "न शङ्खेन पिबेत्तोयमित्यादिभिः सम्प्रतिपन्ननिषेधैः साहचर्य्येण पठितत्वाच्च। एतेन क्वचिदुपक्रमे क्वचिदुपसंहारे उपवासप्रतिपादनादित्यपि निरस्तं। एकतिथिसम्बन्धस्योपवासप्रकरणपठनमप्युचितं, तस्मात् स्वतन्त्रनञर्थविधिपरमेवमादिवचनमिति मतं समीचीनं। कथं ब्रह्मचार्य्यादिवाक्येषु मुख्यार्थासम्भवात् लक्षणयोपवासव्रतविधानमिति चेत्, उच्यते मुख्यार्थपरिग्रहे एषां वाक्यानामयमर्थो भवेत्। गृहस्थ-ब्रह्मचार्य्याहिताग्नि-नारीणां पक्षद्वयेऽप्येकादश्यां भोजननिषेधस्तद्व्यतिरिक्तानां भोजने प्रत्यवायाभावः। गृहस्थस्य तु शुक्लायामेव भोजननिषेधः कृष्णायां भोजने प्रत्यवायाभावः इत्यापद्येत विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्। तथा च सति "एकादश्यां न भुञ्जीत कदाचिदपि मानव इत्यादिवचनविरोधः। न च सामान्यस्य निषेधस्य विशेषनिषेधेनोपसंहारः यथा "पुरोडाशं चतुर्द्धा करोतीति सामान्यविधिः "आग्नेयं चतुर्द्धा करोतीति विशेषविधिना भविष्यतीति वाच्यम्।

निषेधस्य निरतिशयत्वेन विशेषानपेक्षत्वादुपसंहारानुपपत्तेः। एव-मनुपसंहारे "न हिंस्यात् सर्वा भूतानीति सामान्यनिषेधस्य "ब्राह्मणो न हन्तव्य इति विशेषनिषेधेनोपसंहारोपपत्तौ क्षत्रियादिवधे प्राय-श्चित्तोपदेशानर्थक्यप्रसङ्गात्। "ब्राह्मणो न हन्तव्य इति च पाप-गौरवख्यापनार्थं विशेषनिषेध इति चेत्। न। तदभावात्। न हि वनस्थ-यतीनामेकादश्यां भोजने न्यूनः प्रत्यवायो गृहस्थादीनामधिकः, गृहस्थस्य च कृष्णायां भोजने न्यूनः शुक्लायामधिक इति सम्भवति, प्रायश्चित्ताधिक्यानभिधानात्। प्रत्युत गृहस्थाद्यपेक्षया वनस्थादीनां "शौचवच्छोधनं प्रोक्तमिति प्रायश्चित्ताधिक्यं चाभिहितं। प्राय-श्चित्तोपदेशादेव नोपसंहार इति चेत्। न। अनुपदिष्टे प्रायश्चित्ते प्रसङ्गात्। सामान्यतोविहितं प्रायश्चित्तं सर्वत्रास्तीति चेत्। न। भवन्मते प्रत्यक्षनिषेधसद्भावेऽपि कल्पनाप्रसङ्गात्। अतएवोपसंहारा-भावमात्रं तस्माद्भविष्यतीति चेत्। न। उपसंहारनिवारणार्थत्वाभावे मानवपदवैयर्थ्यात् मानवस्य मनुष्याधिकारत्वेनैव तत्सिद्धेः। यत्तूक्तं पर्युदासपक्षे "गृहस्थोब्रह्मचारी चेत्यत्र वाक्ये पदद्वयेऽप्युपवासप्रसक्तेर्द्व-ग्रहणमनुपपन्नं स्यात्, "शुक्लामेव सदा गृहीत्याद्विवक्षमाण-विरोधादिति, तदयुक्तं अविरोधस्यानुपदमेवोपपादयिष्यमाणत्वात्।

अपरे त्वाहुः यानि नञादिशब्दसामानाधिकरण्यरचितानि वाक्यानि तानि निषेधपराण्येव। ननु पर्युदासपक्षेऽपि अन्यथा नाख्येव "नक्तभावे च षाडुग्न्ये तद्विद्धु-तदन्ययोरपीति स्मरणादनेन वाक्या-न्तरपर्यालोचनया भोजनविरुद्धमभोजनसङ्कल्पमभिदधदुपवासपरः स्यात्, अन्यथा "नालुपाजेषु ये ग्रामरं करोतीत्यत्रापि कल्पनाभिधा

पर्य्युदासो न स्यात्। निषेधपक्षे अष्टदोषदुष्टविकल्पप्रसङ्गात् लक्षणापि स्वीक्रियत इति चेत्। न। एवं सति "यवैर्यजेतेत्यत्रापि व्रीहिलक्षणाप्रसङ्गात्। न च "व्रीहिभिर्यजेतेत्यत्र यवलक्षणा, व्रीहिभिरित्यस्य बहुषु वाक्येषु पठ्यमानत्वात् अष्टदोषदुष्टविकल्पाच्च, वरं वाक्यद्वयविहितमभ्युदयकारि भवतीति कल्पना। अनेकसंस्कारवाक्यगतयवलक्षणातो वरमेकस्मिन् यववाक्ये व्रीहिलक्षणा युक्ता, तस्माद्विकल्पभयाल्लक्षणाङ्गीकारे अव्यवस्था प्रसङ्गात् न पर्य्युदासपक्षे नञो लक्षणा मुख्यतैव। तेन पर्य्युदास एव भवत्विति चेत्, उच्यते, पर्य्युदासपक्षे लक्षणाभावेऽपि निषेधा एवैते, सर्व्वं हि प्रधानेनैव सति सम्भवे सम्बध्यते, तेन प्रधानाख्यातयोगेन निषेधतैव, नाम-धात्वर्थयोगे च पर्य्युदासो भवति, न तु निषेधः। स त्वाख्यातयोगे, तदुक्तं "नामधात्वर्थयोगात्तु न नञ् प्रतिषेधक इति। तस्मान्निषेधोऽयमङ्गीक्रियते प्रतीयमानप्रधानाख्यातसम्बन्धे बाधकाभावात्, न तु लक्षणाप्रसङ्गभिया। यच्च विकल्पभयात् लक्षणास्वीकारे यववाक्ये सा प्रसज्यते इत्युक्तं, तदयुक्तं व्रीहिवाक्ये यववाक्ये वा सा स्वीकार्य्येति विनिगमने हेतोरभावात्। न च व्रीहिशब्दस्य बहुवाक्यपाठोनियामकः, संस्कारवाक्यगतव्रीहिशब्दस्य यवलक्षणत्वाभावात्, प्रदेयप्रकृतिमात्रलक्षणयोपपत्तेः गृहस्थोब्रह्मचारी चेति वचनमपि निषेधपरमेव, न तु "एकादश्यां न भुञ्जीत कदाचिदपि मानव इति वचनविरोधः उपसंहाराभावात्। न च विशेषणवैयर्थ्यं।

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नतां॥

यो गृहस्थो न भुञ्जीत आहिताग्निस्तथैव च ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः ॥

इत्येवमादिवचनपर्य्यालोचनया मानवपदसंकोचपरिहारार्थत्वात् । न च "एकादश्यां न भुञ्जीतेतिवचनान्येकादशीव्यतिरिक्तविषयाणि, गृहस्थादिविषयभोजननिषेधपर्य्यालोचनया "एकादश्यां न भुञ्जीते-त्यस्यापि तद्व्यतिरिक्तविषयताप्रसङ्गात् । तेनैतद्भ्रमापनोदनार्थं "गृहस्थो ब्रह्मचारी चेति वचनमिति न दोषः । यानि पुनर्वाक्यानि व्रतशब्दवन्ति दृश्यन्ते तानि न निषेधपराणि "नोद्यन्तमादित्यमीक्षेतेतिवत् ।

मत्स्य-भविष्यपुराणयोः ।

एकादश्यां निराहारो भुक्त्वा द्वादशीतिथौ ।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत् ।

आग्नेयपुराणे ।

एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवं ।

एवमन्यान्यपि वाक्यानि व्रतविधिपराणि ज्ञेयानि । यान्युपवास-शब्दवन्ति यानि च फलशब्दवन्ति वाक्यानि वक्ष्यमाणानि तान्यपि व्रतविधिपराण्येव निषेधपरत्वे फलश्रवणानुपपत्तेः । व्रतविधिपरा-ण्यपि वाक्यानि द्विविधानि नित्यव्रतविधिपराणि काम्यव्रतविधि-पराणि च । नित्यव्रतविधिपराणि तावदुदाह्रियन्ते ।

तत्र नारदः ।

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे तु कर्तव्यमेकादश्यामुपोषणं ॥

अत्रोपोषणं नित्यं कर्तव्यमित्यन्वयः ।

आग्नेयपुराणेऽपि।

उपोष्यैकादशीं नित्यं पक्षयोरुभयोरपि।

सनत्कुमारप्रोक्तेऽपि।

एकादशी सदोपोष्या पक्षयोः शुक्ल-कृष्णयोः।

तथा।

एकादश्यामुपवसेन्न कदाचिदतिक्रमेत्।

तथा।

न करोति च यो मूढ़ एकादश्यामुपोषणं।

स नरो नरकं याति रौरवं तमसावृतं॥

एषु वाक्येषु सदा नित्यं नातिक्रमेदिति श्रवणात्पक्षे पक्षे इति वीप्साश्रवणादकरणे दोषसंकीर्त्तनाच्च एकादशीव्रतं नित्यमिति गम्यते।

तथा च विष्णुरहस्ये।

द्वादशी न प्रभोक्तव्या यावदायुः प्रवृत्तिभिः।

आग्नेयपुराणे।

उपोष्यैकादशी राजन् यावदायुः प्रवृत्तिभिः। इति॥

यति-विधवयोरेकादश्युपवासातिक्रमे दोषविशेषः प्रदर्शितो नारदीयपुराणे।

एकादश्यां दिना रण्डा यतिश्च सुमहामुने।

पच्यते सुप्रतामिस्रे यावदाभूतसंप्लवं॥

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

वनस्थ-यतिधर्मोऽयं शुक्लामेव सदा गृही॥

इति गोभिलवचनादपि नित्यत्वमवगम्यते सदाशब्दान्वयात्, 'सदा' सर्वकालम्, "एकादश्यां न भुञ्जीतेति प्रतीतेः न तु व्रतिनैव सदाशब्दान्वयः। एवमितरेष्वपि उपवासविषयत्वस्य नित्य-काम्य-प्रकारविशेषः, न प्रत्यवायपरिहारार्थं, सन्निहितसदाशब्देनान्वयत्वात्।

त्रिकाण्डमण्डनस्त्वाह।

स ब्रह्महा सुरापः सः स स्तेयी गुरुतल्पगः।
विचारयति यो मोहादेकादश्यौ सितासिते॥

इति वचनं नित्यत्वप्रतिपादकं। इदञ्च यद्यप्यर्थवादमात्रं तथापि स्वतन्त्रार्थवादत्वाद्विधिमन्तरेण तदनुपपत्तेर्विधिं कल्पयति "औदुम्बरो यूपो भवतीतिवत्। तथापि दोषश्रवणाद्दोषस्य चावश्यकत्वाज्जातिकमनिमित्तत्वादावश्यकविधिं कल्पयति, तदतिक्रमे दोषश्रवणमुपपद्यते, न पुनः काम्यं कल्पयति। तच्चावश्यकत्वं किंविषयमित्यपेक्षायां अन्यद्वस्तु कल्पयित्वा तस्यां चोत्पत्तिविधिं प्रकल्प्य तद्विषयावश्यकत्वविधानाद्वरं वाक्यान्तरावगतस्यैकादश्युपवासस्य नित्य-काम्यप्रकार-विशेषाकाङ्क्षस्यैवापि वाक्ये एकादशीशब्दश्रवणाद्बुद्धिस्थस्य शब्दापेक्षित आवश्यकत्वविधानेन सम्बन्धः कल्पनालाघवात्। ननु निन्दाश्रवणान्निषेधः किमिति न कल्प्यते, उच्यते, निषेध्य-निषेधोभयकल्पनागौरवापत्तेः। ननु "विचारयति यो मोहादितिविचारो निषेध्योऽवगम्यते किंविषयो विचारः सन्निधानादेकादशीविषय इति ब्रूमः, नैवं, अविचारितस्यानुष्ठातुमशक्यत्वेन विचार-निषेधासम्भवात्, तदुक्तं "अविचार्य किञ्चिदेवोपाददानो नारभेतेति, तस्मादुपवासचर्यं

विचार-निष्ठा किमर्थं विचार्यते विचारितप्रायमेवैतत् तस्मान्नि-र्विचारमेकादश्यामुपवसनीयं अन्यथा ब्रह्महत्यादिदोषापत्तिरिति वाक्यार्थः ।

अथैकादशीव्रतविधिपराणि वाक्यानि ।

तत्र विष्णुरहस्ये ।

य इच्छेद्विष्णुना वासं श्रुतं सम्पन्महात्मनः ।

क्वचित्तु श्रुतपदस्थाने सुतपदं पठ्यते ।

कूर्मपुराणे ।

य इच्छेद्विष्णुसायुज्यं श्रियं सम्पत्तिमात्मनः ।

कात्यायनः ।

संसारसागरोत्तारमिच्छन् विष्णुपरायणः ।
ऐश्वर्यं सन्ततिं स्वर्गं मुक्तिं वा यद्यदिच्छति ॥

एतेषामुत्तरार्द्धं "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति ।

स्कन्दपुराणे ।

यदीच्छेद्विपुलान् भोगान् मुक्तिं चात्यन्तदुर्लभां ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥

नारदीयपुराणे ।

आराधयति गोविन्दमेकादश्यामुपोषितः ।
यः स याति निर्वाणं दाह-प्रलयवर्जितं ॥

विष्णुः ।

मार्गशीर्षे शुक्लैकादश्यामुपोषितो भगवन्तं वासुदेवमर्चयेत् । पुष्प-धूपानुलेपन-दीप-नैवेद्यैर्भक्ष्य-ब्राह्मणतर्पणैश्च व्रतमेतत् सम्पूर्णं

कृत्वा पापेभ्यः पूतो भवति यावज्जीवं कृत्वा मेतवीपत्नेवाप्नोति उभयतो द्वादश्मीत्येवं संवत्सरं स्वर्गं लोकं प्राप्नोति यावज्जीवं विष्णु-लोकमित्यादि ।

नारदीयपुराणे ।

स्वर्ग-मोक्षप्रदा ह्येषा शरीरारोग्यदायिनी ।
सुकलत्रप्रदा ह्येषा राज्यपुत्रप्रदायिनी ॥

न स्वपापश्लोकश्रवणादिवत्परार्थत्वादियं फलश्रुतिरर्थवादोऽवगम्यते, परार्थता नाम पापक्षयार्थता अभिप्रेता, सापि च न स्पष्टं विष्णुद्वेषेऽवगम्यते किन्त्वर्थवादमात्रशरणैव, स चार्थवादः स्वर्गादिफल-विशिष्ट इति तान्येव फलान्यङ्गीक्रियन्ते यथा जातेष्टेरवश्यकर्त्तव्याया-अप्यर्थवादिकफलसम्बन्धोऽङ्गीकृतः। अत्र च "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेनेति तपसो विद्याङ्गत्वावगमात् पारम्पर्येण मोक्षार्थत्वमस्तीति मन्यमानेनोक्तं मोक्षप्रदेति । इत्येकादशीविषयनिषेधवाक्यनिर्णयः।

अथास्मिन् व्रतेऽधिकारी निरूप्यते।

तत्र काम्यत्वपक्षे तत्तत्फलकाम एव। नित्यत्वपक्षे चिकाश्वलक्षणः प्राह। नित्यत्वानुकूलत्वाज्जीवनवानधिकारी कल्प्यते, तथापि त्रैवर्णिकाधिकारत्वाद्धर्मशास्त्राणां त्रैवर्णिकस्युदाहः। ननु वनस्थ-यतिधर्मोऽयमिति स्मरणाद्गृहस्थादिष्युदासोऽपि कस्मान्न भवति, उच्यते, वनस्थ-यत्योराम्नातपदान्वयासम्भवात्। न हि धर्मशब्दोपस-र्जनीभूतयोरेकादश्यां न भुञ्जीतेत्यनेनान्वयः सम्भवति। एवमु-क्तभवति, वनस्थ-यतिधर्मोऽयमेकादश्यां न भुञ्जीतेति, किन्त्वयमसौ

नोपपद्यते धर्मस्याचेतनस्योपवासकर्तृत्वासम्भवात्। न हि वनस्थ-यति-धर्मोऽयमिति भुङ्क्ते येन तस्य निवार्य्यते, तस्मायादृशोऽन्यस्तादृशो-ऽर्थो नास्ति यादृशोऽर्थः सम्भवति तादृशवाचकशब्दो नास्ति तस्मात् स्वत्यर्थं वनस्थादिपदं यस्मादनस्थ-यत्योरुत्तमाश्रमिणोरप्ययन्धर्मः कि-मुतेतरेषामिति। यथा "देवा वै सत्रमासते किमुत नेतरे" इति। नन्वे-वमपि वाक्यशेषादनस्थ-यतिनिर्णयः कस्मान्न भवति सन्देहाभावात् यत्र हि घृत-तैलयोरुपादाने सन्देहस्तत्र "तेजो वै घृतमिति वाक्यशेषाभि-र्णय उक्तः, इह तूपवासे जीवन्माचाधिकारनिश्चयान्न वाक्यशेषापेक्षा, ननु जीवन्नुपवसेदिति न श्रूयते, सत्यं, तथापि कल्प्यते, नन्वधिकार-कल्पनातोवाक्यशेषात्तदाश्रयणं लघीयोराचिनवत्. उच्यते। कल्पना-गौरवभयाद्वाक्यशेषगतयोर्वनस्थ-यत्योरधिकारिणोः श्रीयमाणयो-स्ततोधिकतरो दोषो वाक्यभेदः प्राप्नोति, तथा हि वनस्थ-यत्योरेकत्र पुरुषे युगपत्समावेशासम्भवात् न संहतयोरधिकारिविशेषणत्वं प्रत्येक-मधिकारिविशेषणे गृह्यमाणे वनस्थ उपवसेत् यतिरुपवसेदिति-वाक्यभेदः स्पष्ट एव। ननु प्रत्युद्देशं वाक्यपरिसमाप्तौ को वाक्यभेदः यथा "ग्रहं संमार्ष्टीति ऐन्द्र-वायवादिषु प्रत्येकं सम्मार्गविधानेनापि वाक्यभेदः, सत्यं, तत्रैकस्मिन् शब्दतात्पर्य्ये श्रौते पर्यवसिते सत्यार्थि-को व्यापारः प्रत्येकं ग्रहेषु भिद्यमानोऽपि न वाक्यं भिनत्ति, इह तु न कश्चिदेकस्य शब्दस्य श्रौतो व्यापारो वनस्थ-यतिसाधारणः सम्भवति वनस्थशब्देन यतेरनभिधानाद्यतिशब्देन वनस्थस्य चतो-वाक्यभेदः। ननु राज-पुरोहितयोरिव वनस्थ-यत्योर्भिन्नशब्दोपात्त-योरप्यधिकारसम्बन्धः। मैवं। तत्र हि वायुष्यकामना नामैकमधिकार-

विशेषणं सम्भवति, इह तु वनस्थ-यतित्वाभ्यामन्यदुभयानुस्यूतमेक-मधिकारिविशेषणं न पश्यामः। किञ्च राज-पुरोहितत्वन्यायाश्रयणात्संहतयोरधिकारः प्राप्नोति, तच वनस्थ-यती एकादश्यां न भुञ्जीयातामिति स्यात् पुनरेकादश्यां न भुञ्जीतेति। नन्वनुषङ्गेणो-भयत्र सम्बन्धात् द्विर्वचने निर्देशस्याभावो दोषः। उच्यते यत्र भिन्नवाक्यत्वं निश्चितं तत्र सम्पूर्णाद्वाक्यात् किञ्चिदनुषज्यते न्यूनवाक्यं प्रति यथा "वसन्ताय कपिञ्जलानालभत इति। इह च समासपदगतयोर्वनस्थ-यत्योः प्रत्येकमाख्यातसम्बन्धायोग्यत्वेनानुषङ्गाभावः तस्माद्वनस्थ-यति-शब्दस्य कथञ्चिदप्यधिकारिसमर्पकत्वाभावादुगृहस्थादेरप्यधिकार इति सिद्धं। नन्वेवं सतीदं वाक्यं विरुध्यते "गृहस्थो ब्रह्मचारी वा यो-ऽनश्नंस्तु तपश्चरन्। प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः"॥ इति। उच्यते। किमनेन वाक्येन तपः प्रतिषिध्यते किं वा प्राणाग्निहोत्र-स्यावश्यकत्वं विधीयत इति। न तावत् प्राणाग्निहोत्रविधानं तस्य हेत्वन्निगदाभिहितस्य विधित्वासम्भवात्तेन ह्यन्नं क्रियत इतिवत्। यद्यपि हेतुवन्निगदितार्थो विधीयते, तथापि न प्राणाग्निहोत्रवि-धानलाभः किन्तु तदीयो लोप एव हेतुत्वेन निर्दिष्ट इति तल्लाभा-पत्त्या अग्निहोत्रलोप एव प्रसज्येतेत्यनिष्टापत्तिः। किञ्चाग्निहोत्रना-मधेयश्रवणान्नैयमिकाग्निहोत्रविध्यन्तप्राप्त्या तदीयद्रव्येषु क्षीरादिषु प्रतिदिष्टेषु तेषां मध्येऽवादिद्रव्येणोपवासाविरोधिनापि प्राणाग्निहो-त्रसिद्धेर्नैवोपवासबाधकत्वं प्राणाग्निहोत्रनियमस्य। अथार्थवादगतस्य नाम्नोऽतिदेशकत्वाभावान्नैयमिकाग्निहोत्रद्रव्यस्याप्राप्तेषु प्राणाग्निहोत्रस्य मुखे हूयमानतया मुख्यत्वेन भोजनार्थेन द्रव्येण प्राणाग्निहोत्रं

कर्त्तव्यमिति विधीयते, ततश्च तत्सिद्ध्यर्थं भोजनाक्षेपादुपवास-विरोधः। उच्यते। यदि भोजनार्थेन द्रव्येण प्राणाग्निहोत्रं कर्त्तव्यं तर्हि तत्प्रयुक्तद्रव्योपजीवित्वाच्च स्वयमाक्षेपकत्वं "पुरोडाशकपालेन तुषानावपतीतिवत्। निरूपितश्चायमर्थः शारीरके "तद्यद्भक्तं प्रथममा-गच्छेत्तद्धोमीयं स यं प्रथमामाहुतिं जुहुयात् प्राणाय स्वाहेत्यत्रो-दाहरणात्। तस्माच्च प्राणाग्निहोत्रस्यावश्यकत्वविधायकमिदं वाक्यं "गृहस्थो ब्रह्मचारीति। नापि गृहस्थादेरुपवासप्रतिषेधकं "पूर्वासु-पवसेद्गृही","श्रुक्तामेव सदा गृहीत्यादिविरोधात्। तथादित्यवा-रादिकालविशेषोपयुक्तोपवासपर्युदासादुपवासान्तराभ्यनुज्ञा गम्यते। अतश्च परेऽपि वाक्ये गृहस्थस्य तथानुवादो दृश्यते "प्रजापतिरकामयत प्रजाः सृजेयेति, "स तपोऽतप्यतेति प्राजापत्यादिनाभिहितत्वाद्गृह-स्थस्य सतस्तपोऽनुवादाद्गृहस्थान्तरस्यापि तपोयुक्तमिति तु गम्यते। तथाच वशिष्ठादयः ऋषयो गृहस्था एव सन्तोऽप्युग्राणि तपांसि चक्रिर इति पुराणेषु श्रूयते। तथा विष्णुधर्म-भविष्योत्तर-मत्स्यपुरा-णादिषूपवासप्रचुराणि व्रतानि गृहस्थानां विधीयन्ते। तथा धर्मशा-स्त्रेषु उपवासबहुलानि प्रायश्चित्तानि गृहस्थानां स्मर्य्यन्ते। अद्यत्वेऽपि केचन गृहस्था महात्मानस्तूपवासपरायणा दृश्यन्ते सदाचारादपि गृहस्थानां श्रेयोऽर्थिनां तत्राधिकारो गम्यते। एवं च सति यानि साधारणानि तपोवचनानि तानि गृहस्थे सङ्कोचलक्षणं बाधं न प्रति-पद्यन्ते इत्यपरो लाभः। तथा हि तप इति तपो नानशनात्परं, यद्धि परन्तपस्तद्दुराधर्षं, तस्मात्तपसि रमन्त इति। इह हि प्रकरणे यथा-मतविशेषविवक्षा तत्र तदाश्रमग्रहणं कृतं तस्मात्तत्साधारणं मन्यते।

तथा "तपसा देवा देवतामग्रमायन् तपसर्षयः सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामरातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्तीति, "तपसा ये अनाधृष्यास्तपसा ये स्वर्गतास्तपो ये चक्रिरे महस्तांश्च देवोऽपि गच्छतादिति, "तपसैव च युक्तस्य ब्राह्मणस्य दिवौकसः। पूजां सु प्रतिगृह्णन्ति कामान् संवर्द्धयन्ति चेति॥ यानि तु मोहिनीवचनानि "अहोराजन् रुक्माङ्गद भवतो गृहस्थस्य यतीनोपवासाधिकारोऽस्ति विशेषेण च क्षत्रियस्य किन्तु यतीनां विधवानामेवायं धर्मोयदुपवासादि तदेकादश्यामन्नया भोक्तव्यं भोक्तव्यमित्यर्थप्रतिपादकानि भूयोभूयः कथितानि तानि विधिस्वरूपाणि परमार्थतो न विधायकानि, किन्तु स्वविपरीतार्थस्य विधेरुपवासानुष्ठानपरस्य रुक्माङ्गदकीर्त्तितस्यार्थवादभूतानि, कुतः "मा मैवं वद कस्यापि किन्तु लभ्युपपद्यते। इत्यादिना तदुक्तार्थप्रतिषेधपूर्वकमुपवासविधानात्। यथा "अर्त्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वेति,"पयसाग्निहोत्रं जुहोतीत्यस्यार्थवादः "अनाहुतिर्वै अर्त्तिलाश्च गवीधुकाश्चेति अर्त्तिल-गवीधुकप्रतिषेधपूर्वकं पयोविधानात्। किञ्च यदि मोहिनीपक्ष एव सिद्धान्तः स्यात् किं तर्हि तदुक्तविपरीतकारिणं रुक्माङ्गदं हस्तेनाहृत्य भगवान् वासुदेव आत्मसायुज्येनैवेप्सितवान्। किञ्च यस्योपकारार्थं मनुष्यानरकं प्रापयितुमेव मोहिन्याः प्रवृत्तिरिति उपवासादपि नरकप्राप्तिफलास्येव मोहिनीवचनानि नानुष्ठेयार्थानि। तस्माद्गृहस्थस्योऽप्युपवासादावधिकृत इति सिद्धं। एतेन ब्रह्मचारी व्याख्यातः "तपोविशेषैर्विविधैर्ब्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना"॥ इत्यादिवचनैस्तस्यापि तपःसम्बन्धावगमात्। नन्वेवं तर्हि "ब्रह्मचारी

वेतिवचनस्य को विषयः; प्राणाग्निहोत्रलोपि वेधपरत्वं ब्रूमः । तथाहि प्राणाग्निहोत्रलोपेनेति द्वन्द्वगर्भस्तत्पुरुषः, इत्थंभूतलक्षणा च तृतीया, विहितकर्म्मोपलक्षणार्थस्त्वग्निहोत्रशब्दः, तथाचायमर्थो भवति यो गृहस्थोब्रह्मचारी प्राणबाधया विहितकर्मबाधया वा तपश्चरति सोऽवकीर्णिदोषं प्रतिपद्येतेति । एवं च योजना प्राणश्चाग्निहोत्रं च प्राणाग्निहोत्रे तयोर्लोपेनेति । एतदुक्तं भवति वानप्रस्थादेः प्राणाग्निहोत्राद्युपरोधेनापि तपः कुर्वाणस्य नातीव दोषः, गृहस्थादेस्तु यदि प्राणो वाग्निहोत्रादिकं वा उपरुध्येत तदा दोष इति "धर्मार्थ-काम-मोक्षाणां प्राणाः संस्थितिहेतवः । तान्निघ्नता किं न हतं रक्षता किन्न रक्षितं" ॥ इति "कुर्व्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति वचनाभ्यां प्राणकर्मणामबाधनीयत्वप्रतिपादनात् । यद्यप्युच्यते "शरीरं पीड्यते येन शुभेनापि च कर्मणा । अत्यन्तं तन्न कर्त्तव्यमनाचारः स उच्यते" ॥ इति तदत्यन्तपीडानिवारकं न तु पीडामात्रस्य, तस्माद्गृहस्थ-ब्रह्मचारिणोरुपवासाद्यधिकारोऽस्तीति सिद्धं । नन्वस्तु नामान्येषां गृहस्थानां, आहिताग्नेस्तु नास्ति "आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः। अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नतां" इति स्मरणात् । उच्यते । किमनेन वचनेनाहिताग्नेरशनं विधीयते किं वोपवासः प्रतिषिध्यत इति यद्याप्यशनं विधीयते तदापि किं सर्वदा भोक्तव्यमित्युच्यते, किं वा भोजनेच्छायां सत्यां प्रतिबन्धे चापति लभ्यमाने च भोजने भोक्तव्यं, आहोस्विच्छास्त्रान्तरानुज्ञातेऽपि भोजनप्रतिप्रसवो विधीयत इति, तत्र सर्वदाशनविधानमशक्यत्वादेव नेष्टं । नापि भोजनेच्छायां सत्यां प्रतिबन्धे चापति लभ्यमाने भोजने विधियुक्तः रागतः

शास्त्रत्वात् । तदुक्तं न्यायमञ्जरीकारेण "न हि बुभुक्षितोऽश्नीयात् मलिनः स्नायादिति विधानमुपयुज्यत इति । न च प्रतिबन्धेऽपि भोक्तव्यमिति वाच्यं । अशक्यत्वात् । नापि शास्त्रान्तराननुज्ञातदेश-कालावस्थादावशनं प्रतिप्रसूयते, तथाच सति सप्तम्यादावपि काले श्मशानादावपि देशे वा शुचिनाप्याहिताग्निना पर्युषितादिकमप्यन्नं भोक्तव्यमित्यापद्यते । भवत्विति चेत्, हा कष्टमिदं श्रुतं अहो महत्य-प्यशनलोलुपा येन समस्तशिष्टजनप्रसिद्धिविपरीतं सङ्क्रान्त्यादिष्वपि भोजनमुच्यते, विरुध्यन्ते च बहूनि शास्त्राणि तत्तद्विषयनिषेधकानि "चन्द्र-सूर्य्यग्रहे नाद्यादित्यादीनि । ननु तानि सामान्यशास्त्रत्वादना-हिताग्निविषयाणि, उच्यते, इदं वा निषिद्धव्यतिरिक्तविषयं कि-मिति नेष्यते, यथा निषेधशास्त्राण्याहिताग्न्यनाहिताग्निसाधारणत्वात् सामान्यशास्त्राणीत्युच्यन्ते तथाशनशास्त्रमपि निषिद्धानिषिद्धविषय-साधारणत्वात् सामान्यशास्त्रं, एवं तर्हि विकल्पोऽस्त्विति चेत्; तन्न, विषमशिष्टत्वात् । तथा "अश्नन्त एव सिध्यन्तीति वर्त्तमानापदेशत्वात् कल्प्यो विधिः "चन्द्र-सूर्य्यग्रहे नाद्यादित्यादिषु प्रत्यक्षः, अतो न वि-कल्पः । नन्वस्मिन् क्लिश्यते आयुष्मता यावता सङ्क्रान्त्यादिष्वाहिताग्नेरशनं नोच्यते किन्त्वेकादश्यादावशितव्यमिति, उच्यते, कस्तव पक्षपातः, यथा हि "चन्द्र-सूर्य्यग्रहे नाद्यादिति स्पष्टः शास्त्रविरोधः तथैव "रात्रावप्ये-कादश्यां न भुञ्जीतेति शास्त्रं विद्यत एव । तस्मात् विरोधः, शास्त्रान्त-रावरुद्धे विषये नाशनविधानमेतत्, "अश्नन्त एव सिध्यन्तीति विषया-न्तरे विधायकत्वं पूर्वमेव निराकृतं, तस्मान्न कश्चिदनेनाशनं विधीयते ।

ननु च

सायं-प्रातर्द्विजातीनामशनं श्रुतिचोदितं ।
नान्तरा भोजनं कुर्य्यादग्निहोत्रसमोविधिः ॥

इत्येतदशनविधानं, तर्हि पूर्ववद्विकल्प्य दूषयितुं शक्यते, को ब्रूते तदशनविधानमिति रागतः प्राप्तस्य भोजनस्य सायं-प्रातःकालान्तरे प्रतिषेधमात्रमिह क्रियते सर्वमन्यदनूद्यते, एवमप्यविधिपरत्वे सम्भवति कालविशिष्टभोजनविधानस्यायुक्तत्वात् कालद्वयनियमे वाक्यभेदात् सायं-प्रातरेवाशनं नान्तराले इत्येतावताग्निहोत्रसाम्यस्याप्युपपत्तेर्नावश्यकतया समानत्वं कल्प्यं, धात्वर्थानुवादेनान्यपरा एवैते विधयोऽङ्गीक्रियन्ते यथा "प्राङ्मुखोऽन्नानि भुञ्जीतेत्येवमादयः । ननु दीक्षितव्रतस्य सायं-प्रातरावश्यकता कथं, उच्यते, तथापि शरीरधारणार्थमेव व्रतस्य परिग्रहो न पुनस्तन्निरपेक्षस्यावश्यकतया विधानं ।

अन्ये त्वाहुः आवश्यकमेव व्रतमिति, तथा हि "मध्यन्दिने मध्यरात्रे च व्रतं व्रतयतीति व्रतं विधाय पुनराह "न त्वेवं न व्रतयेदिति पूर्ववचनेनैव व्रतस्य मध्यन्दिन-मध्यरात्रकालसम्बन्धसिद्धेरयं व्रताभावप्रतिषेधोऽनर्थको भवतु, नूनं व्रतितत्वमेवेत्यवगमयति ।

यत्तूच्यते रागप्राप्तत्वाद्विधानमनर्थकमिति, तन्न, क्षुधाद्यभावेऽप्यवश्यं क्रियमाणं प्राशनीयमिति विधानात् शेषभक्षोऽपि प्रतिपाद्यद्रव्यप्रयुक्तत्वाद्रागाद्यभावेऽप्यावश्यक एव, "सायं-प्रातर्द्विजातीनामिति वाक्यस्यान्तरालप्रतिषेधमात्रविधानेनापि गतिरुक्ता आहिताग्निवाक्यस्यापि वक्ष्यते, तस्मात् नेदमशनविधायकं ।

ननु माभूद्विधायकमभ्यनुज्ञान्तु करोत्येव, उच्यते, तथापि पूर्ववद्विकल्पनीयं । न तावदुपवासादिशास्त्रावरुद्धे विषयेऽभ्यनुज्ञा

क्रियते तच्छास्त्रविरोधादेव । नापि शास्त्रानवरुद्धे विषये अभ्यनुज्ञानं, वैयर्थ्यात् । यदि भोक्तुमिष्यते लभ्यते च विधिविरोधश्च नास्ति तदा वचनमन्तरेणापि भुज्यत एव किमभ्यनुज्ञानवचनं करिष्यति, उपवासप्रतिषेधपक्षः पुनरपि पापिष्ठः, तथा हि यच शास्त्रीया ह्युपवासप्राप्तिरयनविधानमाश्रित्यापि न निवारयितुं शक्यते इत्युक्तं, तत्कथं नाम प्रतिषेधेन वार्यते प्राप्तिपरतन्त्रत्वात् प्रतिषेधस्य तत्र हि षोडशिग्रहणाग्रहणवत् विकल्पो वा स्यात् "आहिताग्निरुपवसेन्न वेति, "नानुयाजेषु ये यजामहं करोतीतिवद्वा पर्युदासः, "आहिताग्निवर्जिता उपवसेयुरिति उभयथा न सम्भवति विकल्पस्याष्टदोषत्वात् पर्युदासे लक्षणाप्रसङ्गात् प्रधानाख्याते सम्बन्धाभावप्रसङ्गाच्च । ननु यान्यावश्यकान्युपवासादीनि तानि भवन्त्वाहिताग्नेरपीति यानि तु श्रेयोऽर्थितया क्रियन्ते तानि तस्य निवार्य्यन्ते इदं तु सुभाषितं, तथा हि नित्योऽप्युपवासो निवारयितुं न शक्यते अनेन कथं नाम काम्यो निवार्यते, किमेतच्च श्रुतवानसि "काम्या हि नित्याद्गरीयानिति, वाक्यस्य तर्हि का गतिर्यदा चोदनाभिराहिताग्नेरुपवासाद्यनुष्ठानेनाहिताग्नित्वविरोधो भवति तथाविधस्याहिताग्नेस्ताभिरेव चोदनाभिः काम्यमुपवासाद्यनुष्ठानं निवार्यते, तत्प्रतिपादनार्थमेतद्वाक्यं "आहिताग्निरनड्वांश्चेति । नन्विदमननुवादकं वाक्यं प्राप्नोति, किंतथापि न जानासि स्मृतिवाक्यान्यनुवादकानीति, एवं धर्मान्तरसामर्थ्यानुरोधेन व्याख्यायमाने प्रस्तुतानुसारो भविष्यति, तथा हि "तथा चात्मनोऽनुपरोधं कुर्याद्यथा कर्मसु समर्थः स्यादिति प्रस्तुत्यापस्तम्बेनोक्तं "आहिताग्निरनड्वांश्चेति । तस्मादाहिताग्निनाप्यग्निहोत्रा-

उपवासेनोपवसितुं शक्यते चेदेकादश्यामुपवसनीयमेवेति सिद्धं। तथा चाग्निपुराणेऽपि स्नातकादीनामुपवासो विहितः।

स्नातको ब्रह्मचारी च आहिताग्निस्तथैव च।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति॥

कात्यायनः।

अष्टवर्षाधिको मर्त्यस्त्वपूर्णाशीतिवत्सरः।

एकादश्यामुपवसेत् पक्षयोरुभयोरपीति॥

"उपनयनादिनियमे" इति च सर्वनियमानामुपनयनोत्तरकालत्वस्मरणादष्टवर्षपर्यन्तमनुपनीतस्याप्यनधिकारोऽष्टवर्षाधिकशब्देनोक्तः।

नारदीयपुराणे।

अष्टवर्षाधिको मर्त्यस्त्वशीतिर्न हि पूर्य्यते।

यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापभाक्।

स मे वध्यश्च दण्ड्यश्च निर्वास्यो देशतः स मे॥

एतस्मात् कारणाद्विप्र एकादश्यामुपोषणं।

कुर्य्यान्नरो वा नारी वा पक्षयोरुभयोरपि॥

इदमेकादशीव्रतं माहेश्वरैरप्यनुष्ठेयं।

तथा च विष्णुधर्म्मोत्तरे।

शिवार्च्चनं रुद्रजपो व्रतं शिवदिनस्य च(१)।

वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा॥

इत्युक्तेः।

एकादश्यष्टमी चैव पक्षयोश्च चतुर्दशी।

शिवस्य तिथयः प्रोक्ता मुनिभिः शौनकादिभिः।

(१) शिवदिनव्रतमिति ग०।

तासामाचारानुपचरेद्दिवा नाशात्तयाम्बयोरिति ॥

तथा ।

वैष्णवो वाथ वा शैवो[१] कुर्य्यादेकादशीव्रतं ।

एकादश्यामुपोषणं सौरैरप्यनुष्ठेयं सौरपुराणे तथाभिधानात् ।

वैष्णवो वाथ शैवोवा सौरोऽप्येतत् समाचरेदिति ।

तेन त्रैवर्णिकस्य गृहस्थादेरुपवास इति सिद्धमिति ।

अपरे त्वाहुः नात्र त्रैवर्णिकव्युदासः, "वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः" इति वाक्यपर्य्यालोचनया सर्वेषामधिकाराद्विशेषतश्चाच मर्त्त्यग्रहणात् सर्वेषामधिकारः । यत्तु प्रतिपाद्यमिति वचनेन द्विज-ग्रहणं, तत्तेषां दोषविशेषस्य दर्शनार्थं[२] ।

अन्ये तु ब्रह्मचार्य्यादेरप्यधिकारप्रतिपादनाद्गृहस्थमात्रोपलक्षणार्थ-मित्याहुः, तन्न, वचनाग्रहणात्, अनाश्रमिणामत एवाधिकारो ज्ञातव्यः

तथाच ब्रह्मवैवर्त्ते ।

एकादशीं विना विप्र न संसाराद्विमोचनम् ।
तथाप्ययं विशेषोऽस्ति कार्य्या शक्तिमताच या ॥
न तु देहं विदुः प्राज्ञाः पीडनीयमिहात्ययात् ।
शरीरं पीड्यते येन सुशुभेनापि कर्मणा ॥
अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते ।
धर्म्मसाधनमाद्यं यत् शरीरं यत्नपुष्कलम् ॥
यथाकथञ्चिच्छीर्णोऽपि तत् त्यजेदेकदेशया ।
मूढग्राहेणात्मनो यत् पीडया कुरुते तपः ।

(१) वाथ शैवो वा इति ख० । (२) दोषविशेषप्रदर्शनार्थमिति ग० ।

न च सुखमवाप्नोति न सिद्धिं न परां गतिं ॥

अधिकारिणोऽसामर्थ्ये प्रतिनिधिरुक्तो वाराहपुराणे।

असामर्थ्ये शरीरस्य व्रते तु समुपस्थिते।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितं।
भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते ॥

कात्यायनः।

राज्ञश्च क्षत्रियार्थे च एकादश्यामुपोषितः।
पुरोधास्तु क्षत्रियो वा दयोः समभितोरितं।
उपवासफलं ताभ्यां समयं समवाप्यते ॥
शूद्रस्तु यस्यान्यमुद्दिश्य एकादश्यामुपोषितः।
यमुद्दिश्य कृतं विप्रास्तस्य पूर्णं फलं भवेत्।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः ॥
अशक्ताभावे यदा विप्र एकादश्यामुपोषितः।
उपवासफलं तस्य समयं समवाप्यते ॥
राजरोगाद्यदा विप्र एकादश्यामुपोषितः।
उपवासफलं तस्य सम्यक् भवति निश्चितं ॥
एतस्मात् कारणाद्विप्र एकादश्यामुपोषणं।
कुर्यान्नरो वा नारी वा पक्षयोरुभयोरपि ॥

वायुपुराणे।

उपवासे त्वशक्तस्तु आहिताग्निरथापि वा।
पुत्रान्वा कारयेदाद्यान्ब्राह्मणानापि कारयेत् ॥
अथ वा विप्रमुख्येभ्यो दानं दद्यात्स्वशक्तितः।

उपवासफलं तस्य समग्रं समवाप्यते ।
तच्च भोजनदोषोऽपि तत्क्षणादेव नश्यति ॥

कात्यायनोऽपि ।

पितृ-मातृ-भ्रातृरर्थं आचार्यार्थं विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
समुद्दिश्य कृतः सोऽपि सम्पूर्णं लभते फलं ।
नारी स्वपतिमुद्दिश्य एकादश्यामुपोषिता ॥
पुण्यं शतगुणं प्राहुर्मुनयः पारदर्शिनः ।
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयं ॥

तथा ।

स्वयं कर्तुमशक्तश्चेत्कारयीत पुरोधसा ।
चिरस्य दक्षिणां दद्यात् स्वशक्त्या चानुरूपतः ॥

कात्यायनः ।

एवं करोति यः कश्चित् एकादश्यामुपोषणं ।
पितृ-मातृ-भ्रातृरर्थं गुर्वर्थं च विशेषतः ॥
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ।
दक्षिणा नात्र दातव्या शुश्रूषा विहिता यदा ॥
द्रव्यसम्प्रतिपत्तौ वा एकादश्यामुपोषितः ।
द्रव्यदातोपवासस्य फलं प्राप्नोत्यसंशयं ।
कर्त्ता गमनमवाप्नोति नात्र कार्या विचारणा ॥

मनुनोक्तं ।

इत्थवा वान्यमुद्दिश्य एकादश्यामुपोषितः ।

अनुद्दिश्य व्रतं विप्राखत्र पूर्वव्रतं भवेत् ।
कर्त्ता द्विगुणं पुण्यं प्राप्नोत्यत्र न संशयः ॥

यत्तु मनुनोक्तं ।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं ।

विष्णुनापि ।

पत्यौ जीवति या नारी उपवासव्रतञ्चरेत्[१] ।
आयुः संहरते भर्त्तुर्नरकञ्चैव गच्छति ॥

तद्भर्त्राद्यननुमतोपवासविषयं कर्त्तृस्त्रीविषयञ्च ।

यथा चाहतुः शङ्ख-लिखितौ ।

कामं भर्त्तुरनुज्ञया व्रतोपवासादीनारभेत ।

मार्कण्डेयपुराणे ।

नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन च ।
निष्फलन्तु भवेत्तस्या यत्करोति व्रतादिकं ॥ इति ।

नित्यैकादश्युपवासासमर्थेन एकभक्तादिकं कर्त्तव्यं ।

तथाच मार्कण्डेयः ।

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥
एकभक्तेन नक्तेन बाल-वृद्धातुरः क्षिपेत् ।
पयोमूल-फलैर्वापि न निर्द्वादशिको भवेत् ॥

बौधायनोऽपि ।

उपवासे त्वशक्तानामशीतेरूर्ध्वजीविनां ।
एकभक्तादिकं कार्य्यमाह बौधायनो मुनिः ॥

---

(१) उपोष्य व्रतमाचरेदिति ग० ।

भविष्यपुराणे दाद्शीकल्पे ।

एकादश्यां प्रभुं विष्णुं समभ्यर्च्य कदाचन ।
उपोषितेन भक्तेन तथैवायाचितेन वा ॥
एकभक्तेन वा तात न निर्द्वादशिको भवेत् ।
तदेकनियमी नित्यं न सीदति भवार्णवे ॥
कायप्रक्लिष्टवादेव न यजाधर्ममाचरेत् ।
उपोषितो वा भक्ती वायाचितैकाशनोऽपि वा ॥
हिर्दिनं पूजयेत्तात हरिं संसारपारदम् ।
एकाहारप्रदानेन एकाशनफलं स्मृतम् ॥
अयाचितफलं विद्धि दक्षिणाद्विगुणेन च ॥
नक्तस्य च चतुर्गुण्यं चतुर्गुण्यमुपोषणात् ।
षड्विधं फलं दानाद्व्रतभङ्गेऽपि लभते ॥
एकादश्युपवासी यः पक्षयोरुभयोरपि ।
दुराचारोऽपि च ज्ञेयः स्नातः स सचमच्युतः ॥
नक्तं हतीयमप्युक्तं व्रतं द्वापरकल्पिषम् ।
नवचत्वर्षने पुण्यं प्राग्यामाभ्यन्तराशनम् ॥

व्यासः ।

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत् ॥

भविष्यपुराणे दाद्शीकल्पे ।

सतान्त्वमताम्बूलं सभोजनमभोजनं ।
वाचारच निराहारं चतुर्विधमुपोषणम् ॥

यावत् क्लान्तिको न स्वाध्यायमर्चयते हरिं ।
व्रती ताम्बूलहीनः स्यात् तत् व्रताम्बूलमुच्यते ॥
पूजयित्वाच्युतं पूर्वं पूर्वाभुक्त्वा भुनक्ति यः ।
भद्राभुक्त्वा पुनर्भुङ्क्ते तद्भोजनमुच्यते ॥
द्रव्यधान्यान्नं मूलं पयसाद्येन वा फलैः ।
हरेरनुपवासश्च तदाहारमुदाहृतम् ॥
यद्येतैरर्चितं शुद्धमुपायैः सदुपोषणम् ।
व्रताम्बूलमनाहारमभोजनमतो हितम् ॥

बौधायनोऽपि ।

व्याधिभिः परिभूतानां पित्ताधिकशरीरिणां ।
षिंशद्वर्षाधिकानाञ्च नक्तादिपरिकल्पना ॥

षिषिंशद्वर्षाणामित्यपि क्वचित्पाठः तत्र नवतिवर्षाणामित्यर्थः ।

कूर्मपुराणे ।

एकभक्तेन नक्तेन बाल-वृद्धातुरः क्षिपेत् ।
नातिक्रमेत् द्वादशीञ्च उपवासव्रतेन च ॥

एतच्च व्रतं पक्षयोरुभयोरप्यनुष्ठेयं ।

तथा विष्णुरहस्ये स्कन्द-कूर्म-नारदीयपुराणेषु च ।

यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चनेति ॥

सनत्कुमारप्रोक्तेऽपि ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरेति ।

भविष्यत्पुराणे ।

शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चनेति ।

सौरधर्मेषु ।

एकादशी सदोपोष्या शुक्ला कृष्णा तथैव चेति ।

विष्णुरहस्य-सौरपुराणयोः ।

यथा सुपूजितो गौरः कृष्णो वा वेदविद्द्विजः ।
सन्तारयति दातारं द्वादश्यौ च तथा स्मृते ॥

विष्णुरहस्ये स्कन्दपुराणे च ।

तेषां शुक्लेतराणां वै तिलानां सदृशं यथा ।
कृष्णायाश्च सितायाश्च गोः क्षीरं सदृशं यथा ।
द्वादश्योः सदृशं तद्वत् पुण्यं शुक्लासितोभयोः ॥
दर्शश्च पूर्णमासी च पुण्यतश्च यथा समे ।
तथा सितासिते पुण्ये द्वादश्यौ मुनिभिः स्मृते ॥ इति ।

स्कन्दपुराणे ।

यथोत्तरे दक्षिणे च अयने वै प्रकीर्त्तिते ।
तुल्यं पुण्यमवाप्नोति द्वादश्योश्च तथोभयोः ॥

तथा ।

सोम-सूर्य्यग्रहौ पुण्यौ यथैव मुनिभिः स्मृतौ ।
तथा सितासिते पुण्ये द्वादश्यौ विष्णुतुष्टिदे ॥
सायं प्रातर्यथा सन्ध्या सायं प्रातर्यथाहुती ।
तथा सितासिते पुण्ये द्वादश्यौ धर्म्मतः समे ॥

तथा ।

यथा विष्णुः शिवश्चैव सम्पूज्यौ मुनिभिः स्मृतौ ।
तथा पूज्यतमे प्रोक्ते द्वादश्यौ शुक्ल-कृष्णयोः ॥

वाराहपुराणे ।

एकादश्यामुपवसेत् पक्षयोरुभयोरपि ।
द्वादश्यां योऽर्चयेद्विष्णुं स मुक्तिफलभाग्भवेत् ॥

विष्णुरहस्येऽपि ।

दुस्तराणि भयोग्राणि नरकाणि सहस्रशः ।
यमस्य सदने घोरे यातना यमकिङ्करैः ।
यत्किञ्चित्तद्विधानार्थं यममार्गेण तद्वद् ॥

ब्रह्मोवाच ।

अन्यथापि चिकीर्षन्ति द्वादशीं ये नरोत्तमाः ।
तेऽपि घोरं न पश्यन्ति संसारं दुःखसागरम् ॥
शुक्ले वा यदि वा कृष्णे विष्णुपूजनतत्परः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥
यथा सम्पूजितो गौरः कृष्णो वा वेदविद्द्विजः ।
सन्तारयति दातारं द्वादशी फलतस्तथा ॥
सर्वपापप्रणाशाय विष्णोः सन्तोषणाय च ।
उपोष्या द्वादशी पुण्या वेवेतोभयपक्षयोः ॥

शुक्ल-कृष्णविवेके पाप-दोषश्रवणाय(१) ।

तथा च कूर्मपुराणे विष्णुधर्मोत्तरे च ।

स ब्रह्महा सुरापः स्यात् स्तेयी गुरुतल्पगः ।

स्कन्दपुराणे ।

स ब्रह्महा स गोघ्नश्च सुरापो गुरुतल्पगः ।

---

(१) पापश्रवणादोषायेति ख० ।

कालिकापुराणे ।

सर्वेषामिह पापानामाश्रयः स तु कीर्त्तितः ।

इत्येतेषां उत्तरार्द्धं ।

विवेचयति यो मोहादेकादश्यौ सितासिते ॥

भविष्यत्पुराणे ।

एवं ज्ञात्वा सदोपोष्या द्वादशी शुक्ल-कृष्णजा ।

तयोर्भेदं न कुर्वीत भेदनान्नरकं व्रजेत् ॥

गरुडपुराणे ।

शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चन ।

विशेषं कुरुते यस्तु पितृहा स तु कीर्त्तितः ॥

तत्त्वसागरात् ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।

तुल्ये ते मनुते यस्तु स वै वैष्णव उच्यते ॥

ह्रास-वृद्धीन्दुरश्मीनां शुक्लता कृष्णता तथा ।

एकादश्याः स्वरूपन्तु सञ्ज्ञायाः नैव भेदकम् ॥

अतः कृष्ण-सितत्वादि धर्म्मिणो गुण उच्यते ।

एकादश्यां न तेनास्ति दूषणं येन दूष्यते ॥

यदि वाच्यो गुणोऽपि स्यात्तथापि न दूषणम् ।

तथापि सित-विप्रादौ कृष्णत्वं नैव दूषणम् ॥

सनत्कुमारप्रोक्ते ।

एकादश्योर्द्वयोर्यस्तु विशेषं कुरुते नृपः ।

तस्योद्धारं न पश्यामि यावदाभूतसंप्लवम् ॥

तेन शुक्ल-कृष्णपक्षयोरुपवासः कार्य्य इति सिद्धं ।

अथादित्यवारादौ कृष्णैकादश्यामुपवासनिषेधः ।

तत्र हृद्धवशिष्ठः ।

कृष्णपक्षे च सङ्क्रान्त्यां ग्रहणे चापि पुत्रवान् ।
उपवासं न कुर्वीत सुत-बन्धु-धनक्षयात् ॥

मत्स्यपुराणे ।

दिनक्षये तु सङ्क्रान्त्यां ग्रहणे चापि पुत्रवान् ।
उपवासं न कुर्वीत सुत-बन्धु-धनक्षयात् ॥

मत्स्यपुराणे ।

दिनक्षये तु सङ्क्रान्त्यां ग्रहणे चन्द्र-सूर्य्ययोः ।
उपवासो न कर्त्तव्यः पुत्र-पौत्रसमन्वितैः ॥
सङ्क्रान्त्यां कृष्णपक्षे च रवि-शुक्रदिने तथा ।
एकादश्यां न कुर्वीत उपवासञ्च पारणम् ॥

कूर्म्मपुराणे ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् सः स्याद्दिनक्षयः ।
तस्मिन् स्नानं जपो होमो नोपवासो गृहाश्रमे ॥

स्मृतिमीमांसायां जैमिनिः ।

आदित्येऽहनि सङ्क्रान्त्यां ग्रहणे चन्द्र-सूर्य्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥

कात्यायनः ।

एकादशीषु कृष्णासु रविसङ्क्रमणे तथा ।
चन्द्र-सूर्य्योपरागे च न कुर्य्यात् पुत्रवान् गृही ॥

उपवासमिति शेषः ।

गौतमः ।

आदित्येऽहनि सङ्क्रान्त्यामसितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्‌गृही ॥
आदित्यवारे सङ्क्रान्तौ व्यतीपाते दिनक्षये ।
पारणञ्चोपवासञ्च न कुर्यात् पुत्रवान् गृही ॥

नारदोऽपि ।

संक्रान्त्यामुपवासन्तु कृष्णैकादशिवासरे ।
चन्द्र-सूर्य्यग्रहे चैव न कुर्य्यात् पुत्रवान् गृही ॥
एकादश्याञ्च कृष्णायां सङ्क्रान्त्याञ्च रवौ तथा ।
पारणञ्चोपवासञ्च न कुर्यात् पुत्रवान् गृही ॥

वह्निवशिष्ठोऽपि ।

आदित्यवारे सङ्क्रान्तावसितैकादशीदिने ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्‌गृही ॥

स्कन्दपुराणे ।

सङ्क्रान्त्यामुपवासेन पारणेन युधिष्ठिर ।
एकादश्याञ्च कृष्णायां ज्येष्ठः पुत्रो विनश्यति ॥

तत्रैतेषु वाक्येष्वादित्यवारादावुपवासनिषेधात्तावदादित्यवारादिप्रयुक्तोपवासनिषेधपराः । न त्वेकादशीव्रतप्रयुक्तोपवासनिषेधपराः ।

तथाच जैमिनिः ।

आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ।
पारणञ्चोपवासञ्च न कुर्यात् पुत्रवान् गृही ॥

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।
नानुषङ्गकृतो यस्मात् ततो नित्यमुपोषणं॥

'तन्निमित्तस्य' आदित्यवारादिनिमित्तस्य, अयं प्रतिषेधः न पुनरेकादश्यामादित्यवाराद्यन्वयनिबन्धनोपवासप्रतिषेधः, अत एकादश्यां नित्यमुपोषणमित्यर्थः।

कात्यायनोऽपि।

तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः।
प्रयुक्तान्तरयुक्तस्य न विधिर्न निषेधनम्॥

केचिदप्येकादशीप्रकरणपाठात्तच्छब्दस्य प्रकरणसन्निहितैकादशीपरत्वादनुषङ्गकृतः प्राप्तोपवासपरत्वाभावात् पुत्रवतः सङ्क्रान्त्यादियुक्तायामेकादश्यां उपवासनिषेधपरमेतदिति वर्णयन्ति। तदसङ्गतं, वाक्यसन्निधेः प्रकरणबलीयस्त्वात्। युक्तञ्चैतत्, एकादश्यां राहुदर्शनासंभवेन कथं तच्छब्दोपपत्तिः, तत्र राहुदर्शनपरत्वं तर्हि सकृदुच्चरितस्यार्थद्वयपरत्वमिति वैरूप्यं स्यात्। अतः पूर्वोक्तैव व्याख्या न्याय्या। न च सङ्क्रान्त्यादीनां एकादशीविशेषणत्वं चन्द्र-सूर्यग्रहणवारद्वयोपयुक्तं, समानविभक्तिनिर्देशात् संक्रान्त्यादौ सत्यामेकादश्यामुपवासविधानाच्च।

तथा सनत्कुमारप्रोक्ते।

भानुवारेण संयुक्ता तथा संक्रान्तिसंयुता॥
एकादशी सदोपोष्या सर्वसम्पत्करा तिथिः॥

कात्यायनस्मृतौ।

संक्रान्तीरविवारो वा एकादश्यां यदा भवेत्।

उपोष्या सा महापुण्या सर्वपापहरा तिथिः ॥

तथा ।

व्यतीपातो वैधृतिर्वा एकादश्यां यदा भवेत् ।
उपोष्या सा महापुण्या पुत्रसम्पद्विवर्द्धनी ॥

नारदः ।

भानुवारेण संयुक्ता(१) तथा संक्रान्तिसंयुता ।
एकादशी सदोपोष्या पुत्रसंपद्विवर्द्धनी ॥

स्कन्दपुराणेऽपि ।

एकादश्यां यदा वत्स आदित्यस्य दिनं भवेत् ।
तदोपोष्या प्रयत्नेन पुत्र-पौत्रप्रवर्द्धनी ॥

विष्णुधर्मोत्तरे ।

एकादश्यां यदा राम वारस्तु सवितुर्भवेत् ।
उपोष्या सा महापुण्या पुत्र-पौत्रविवर्द्धनी ॥

न चैतानि पुत्रवद्गृहस्थव्यतिरिक्तविषयाणि, "पुत्र-पौत्र-प्रवर्द्धनी"त्यादिवाक्यशेषात् ।

यत्तु संक्रान्त्यादिनिमित्तकोपवासः सम्वर्त्तोक्तः ।

अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः ।
एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥
अत्र स्नानं जपो होमो देवतानाञ्च पूजनम् ।
उपवासस्तथा दानमेकैकं पावनं स्मृतं ॥

कृष्णैकादश्युपवासनिषेधस्तु पुत्रवद्गृहस्थविषयः । तथाच कृष्णै-

(१) भानुवारसमोपेतेति ख० ।

कादश्युपवासनिषेधपरेषु वाक्येषु "पुत्रवान् गृही" "ज्येष्ठः पुत्रो विनश्यतीत्यादि"विशेषणं, निन्दा च श्रूयते "सुत-बन्धु-धनक्षयादि"ति वा। गोभिलः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

वनस्थ-यतिधर्म्मोऽयं शुक्लामेव सदा गृही॥ इति।

एवं ब्रह्मचार्यादेरपि द्रष्टव्यं। अत एव स्मृत्यन्तरं।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

ब्रह्मचारी च नारी च शुक्लामेव सदा गृही॥ इति॥

भविष्योत्तरे उभयद्वादशीप्रारम्भे युधिष्ठिरवचनं।

कृष्ण कृष्णा न मे ख्याता द्वादशी केन हेतुना।

किं सा न ते प्रिया देव किं वा ख्यातुं न युज्यते॥

कृष्ण उवाच।

यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया।

शुक्ला गृहस्थैः कर्त्तव्या भोग-सन्तानवर्द्धनी।

मुमुक्षुभिस्तथा कृष्णा तेन तेनोपदेशिता॥

तस्मात् पुत्रवतो गृहस्थस्य शुक्लायामेवोपवासो न कृष्णायां, क्वचित्पुनर्नैमित्तिकः कृष्णायामेकादश्यामुपवासोऽस्ति।

तदुक्तं भविष्योत्तरे।

नित्या शुक्ला तदा ख्याता कृष्णा नैमित्तिकी भवेत्।

शुक्ला पार्थ सदा कार्य्या न त्याज्या सङ्कटेष्वपि।

शुक्लायां यस्तु वै भुङ्क्ते स भुङ्क्ते किल्बिषं नरः॥

'कृष्णा', 'नैमित्तिकी' निमित्ते भवा नैमित्तिकी, निमित्तं शयनी-बोधनीमध्यवर्त्तित्वं।

शयनी-बोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥

केचित्पुत्त्राभावो निमित्तमिति व्याचक्षते, तदेवं शास्त्रार्थः सम्पद्यते, सर्वेषां सर्वदा पक्षद्वयेऽपि भोजनमात्रवर्ज्जनं निषेधप्रतिपाद्यमार्थं, पुत्त्रवद्गृहस्थव्यतिरिक्तानां पक्षद्वयेऽप्युपवासव्रतमनुष्ठेयं, गृहस्थस्य शुक्लायामेव व्रतं शयनी-बोधनीमध्ये कृष्णायामपि, तदपि पुत्त्ररहितस्य । ननु पुत्त्रवतः किमिति न भवति पुत्त्रवद्गृहस्थस्य कृष्णैकादश्युपवासनिषेधानां शयनी-बोधनीवाक्यविहितोपवासव्यतिरिक्तविषयतोपपत्तेः । उच्यते । "शुक्लामेव सदा गृहीतिवचनपर्यालोचनया सकलकृष्णैकादशीषूपवासाभावप्राप्तौ शयनी-बोधनीमध्यवर्त्तिनं कृष्णैकादशीषूपवासनियमाद्न्यत्र तत्प्राप्त्यभावाच्चा कृष्णैकादश्यां गृहस्थोपवासस्तत्रामेव विशेषनिषेधस्योपपद्यमानत्वात् । एतदेवाक्षेपपूर्व्वकमन्येरुक्तं । इमानि वचनानि पुत्त्रवतो गृहस्थस्य उपवासं प्रतिषेधन्ति तत्कथमेतदुपपद्यते, न हि कृष्णैकादश्यां उपवासो वचनतो वा रागतो वा प्राप्तः प्राप्तिपूर्व्वकश्च प्रतिषेधः, अन्यविधिशेषत्वाभावे प्राप्त्यभावेन नित्यानुवादात् प्रतिषेधवचनानामानर्थक्यं प्रसज्यते । उच्यते । "शयनी-बोधनीमध्ये" इत्यादिना गृहस्थमात्रसम्बन्धेन कृष्णैकादश्युपवासप्राप्तिरस्ति, तामपेक्ष्य पुत्त्रवतो गृहस्थस्य कृष्णैकादश्युपवासप्रतिषेधाः प्रवृत्ताः, एवं तर्हि विहितप्रतिषिद्धत्वात्षोडशिग्रहणाग्रहणवद्विकल्पः प्राप्नोति । नैवं । भिन्नविषयत्वाद्विधि-प्रतिषेधयोः सामान्यं विशेषविधिर्व्विशेषविषयो वा निषेधो बाधते । यौ पुनरेकविषयौ विधि-प्रतिषेधौ तावेव षोडशिग्रहणाग्रहणवद्विकल्प्येते इति । तदुक्तं-

प्रतिषेधप्रदेशेनारभ्य विधानेन प्राप्तप्रतिषेधत्वाद्विकल्पः स्यादित्यधिकरणविरोधात्। वयन्तु पर्युदासाश्रयणेन परिहारस्यापरिहारात् वक्ष्यामः पुत्रवद्गृहस्थविषयकृष्णैकादश्युपवासनिषेधानां भूयसामवगते शयनीबोधविहितोपवासासु कृष्णैकादशीषु सङ्कोचः प्रसज्येत। अनवगते तु शयनीबोधमध्येव पुत्रविषयतया सङ्कोचः।

पितामहः।

तेषामपीह पितरः पितॄणां पितरस्तथा।
तेषां मातामहाश्चान्ये येषां ये जनकास्तथा॥
तेषामपि जनेतारो जनिमीषाश्च पूर्वजाः।
प्रयान्ति वैष्णवं लोकमुपोष्य हरिवासरं॥
एवं दृष्टपटोऽपि तव पत्न्यां नियोजितः।
लोकपालत्वमतुलमर्जितं येन भुञ्जता॥
तमेकं वदतां श्रेष्ठं सम्प्राप्ते हरिवासरे।
यदि भोजयसे धैर्यात्ततोऽहं तव किङ्कर इति॥

तथापि हरिवासरग्रहणं कृष्णशुक्लविहितैकादशीपरमित्यवगन्तव्यं। अतो गृहिणः पुत्रवतः कृष्णैकादश्यामुपवास इतरेषान्तूभयोरिति सिद्धं।

अन्ये त्वाहुः।

कृष्णैकादश्युपवासनिषेधाः काम्यव्रतोपवासविषया न तु नित्यव्रतविषयाः। न हि तद्विषया निषेधाः कल्प्यन्ते, विकल्पापत्तेः। न च सामान्यप्राप्तविहितोपवासबाध इति वाच्यं। प्रतिषेधविधेः प्राप्तिसापेक्षत्वादत्यन्ततद्बाधकत्वानुपपत्तेः। तेना-

शुक्लमेतत्पुत्रवद्गृहस्थव्यतिरिक्तस्योभयैकादश्युपवास इति।

अन्ये तु वैष्णवानामेव उपवासमित्याहुः। तथापि गृहिणः पुत्रवतः शुक्लैकादश्यामुपवासो न कृष्णैकादश्यामित्याहुः।

तथाच गौतमः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
वनस्थ-यतिधर्मोऽयं शुक्लामेव सदा गृही॥ इति॥

तदसत् वैष्णवानामेवोपवास इत्यत्र प्रमाणाभावात्। न च तद्व्रतं वैष्णवमिति प्रमाणं, तस्य विष्णुसम्बन्धकीर्त्तनमुखेनैकादश्युपवासप्रशंसार्थत्वात् "वैष्णवो वाथ वा शैवो कुर्य्यादेकादशीव्रत-मिति मत्स्यपुराणवचनविरोधात् वैष्णवस्य गृहिणः पुत्रिणोऽप्यम्बरीषादेः कृष्णैकादश्यामुपवासश्रवणाच्च। "शुक्लामेव सदा गृही" ति न काम्यमित्यर्थः, अन्यथा विहितप्रतिषेधे विकल्पप्रसङ्गात्तेन सर्व्वेषामुभयैकादश्यां नित्यव्रतोपवासाधिकार इति युक्तमिति।

तदयुक्तं।

पुत्रवांश्च सभार्यश्च बन्धुयुक्तस्तथैव च।
उभयोः पक्षयोः काम्यं व्रतं कुर्य्यात्तु वैष्णवमिति॥

पुत्रवतो गृहस्थस्य निषिद्धकृष्णैकादश्युपवासस्य काम्यव्रतप्रतिप्रसवस्मरणात्। भविष्योत्तरे कृष्णेन पुत्रवतो गृहस्थस्य युधिष्ठिरस्य काम्योभयदादशीव्रतोपदेशाच्च काम्यत्वेऽपि विहितत्वेन विकल्पप्रसङ्गस्य तदवस्थत्वाच्च। तस्माद्विकल्पभयात्पर्य्युदास एवायं "नानुयाजेषु ये यजामहं करोतीतिवत्। न च पर्य्युदासे वचनेति निरूपितं, न च निषेधोऽप्युदाहृत इति वचनस्य पर्य्युदासनिराकरणार्थत्वं, तथि-

यथं द्रष्टव्यं। 'संक्रान्त्यामिति तन्नगुणोपवासनिषेधः, 'अमादिन इत्य-पि वाक्यवर्यात् एकादशीव्यतिरिक्तविषयः।

अपरे तु रागप्राप्तोपवासविषयतामाहुः।

"इष्टिं कृत्वा तु नव्यस्यासाओपवासो विधीयते" इत्येतदगृहीत-व्रतविषयमिति प्राहुः।

अगृहीतमथावश्यकं कार्यमित्यपरे।

अन्ये तु रागप्राप्तोपवासविषयमिति वदन्ति। तच "नोपवासो-विधीयते" इति वाक्यानतुगुणत्वात्।

अथास्य व्रतस्य सूतकादावपि कर्त्तव्यतोच्यते।

तच विष्णुरहस्ये।

परमापदमापन्ने हर्षे वा समुपस्थिते।
सूतके मृतके चैव न त्याज्यं द्वादशीव्रतमिति॥

अथ वाराहपुराणोक्तविशेषः।

सूतके तु नरः स्नात्वा प्रणम्य मनसा हरिं।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते॥
एकादश्यां ततो भुक्त्वा सूतकान्ते जनार्दनं।
पूजयित्वा विधानेन पूजयेच द्विजोत्तमान्॥
मृतके तु न भुञ्जीत एकादश्यां सदा नरः।
द्वादश्यान्तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य चेति॥
पूर्वसङ्कल्पितं यत्तु व्रतं सुनियतव्रतैः।
तत्कर्त्तव्यं नरैः श्राद्ध-दानार्चनविवर्जितं॥

अथ दशमीनियमाः स्कन्दपुराणे।

कांस्यं मांसं मसूरञ्च चौद्रं वानृतभाषणम् ।
पुनर्भोजनमभ्यासं दशम्यां परिवर्जयेत् ॥

कूर्मपुराणे ।

कांस्यं मांसं मसूरञ्च चणकान् कोरदूषकान् ।
शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम् ॥

'उपवसन्' उपवासं करिष्यन्नित्यर्थः । ततश्च दशम्यामेव नियमः कार्य्यः । तथा ।

कांस्यं मांसं मसूरञ्च पुनर्भोजन-मैथुने ।
द्यूतमत्यम्बुपानञ्च दशम्यां सप्त वर्जयेत् ॥

क्वचिद् द्यूतपदस्थाने स्तपदञ्च पठ्यते ॥

देवलः ।

दशम्यामेकभक्तश्च मांस-मैथुनवर्जितम् ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥

मत्स्यपुराणे ।

कांस्यं मांसं सुरां चौद्रं तैलं वितथभाषणम् ।
व्यायामञ्च प्रवासञ्च दिवास्वापं तथाञ्जनम् ।
तिलपिष्टं मसूरञ्च दशैतानि वर्जयेत् ॥

स्मृतावपि ।

दशम्यामेकभक्तं तु कुर्वीत नियतेन्द्रियः ।
आचम्य दन्तकाष्ठन्तु खादयेत्तदनन्तरम् ॥
ततश्चानन्तरं विप्र ब्रह्मचारी जितेन्द्रियः ।
रात्रिं नयेत्ततः पश्चात्प्रातःस्नायी समाहितः ।

उपवासन्तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत् ॥

---

## अथोपवासदिननियमाः ।

तत्रोपवासस्वरूपं बृहद्वसिष्ठ-कात्यायन-विष्णुधर्मोत्तरेषु ।

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः इति ॥

'पापेभ्यः' परिवर्जनीयेभ्यः । 'उपावृत्तस्य' निवृत्तस्येत्यर्थः ।

तत्र वर्जनीयान्याह सुमन्तुः ।

विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः ।
निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः ॥

हारीतः । पतित-पाषण्ड-नास्तिकादिसम्भाषणानृतादिकमुपवासदिने वर्जनीयमिति । आदिग्रहणेन हिंसेन्द्रियचापल्यादि गृह्यते ।

गुणाः विष्णुधर्मोत्तरे उक्ताः ।

तज्जय-तज्जप-ध्यान-तत्कथाश्रवणादिकम् ।
तदर्चनञ्च तन्नामकीर्त्तनश्रवणादयः ।
उपवासकृता ह्येते गुणाः प्रोक्ता मनीषिभिः ॥

विष्णुधर्मेषु ।

उपवासी हरिं यस्तु भक्त्या ध्यायति मानवः ।
तज्जाप्यजापी तत्कर्मरतस्तद्गतमानसः ।
निष्कामोऽद्वैतवद्ब्रह्मपदमाप्नोत्यसंशयम् ॥

तत्रैकादश्यां प्रातर्दन्तधावनं कार्य्यं ।

प्रातः सन्ध्यामुपासीत दन्तधावनपूर्वकमिति स्मृतेः ।

ननु उपवासदिने दन्तधावनं निषिद्धं वृद्धवसिष्ठेन ।

उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।

दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि वै ॥ इति ।

नैवम् । काष्ठसंयोगे दोषश्रवणात् काष्ठेन दन्तधावनं न कार्य्यमित्येतदर्थपरत्वादस्य वचनस्य एवञ्च पर्णादिना दन्तधावनमुपवासदिने कार्य्यम् ।

अत्र केचिदाहुः दन्तधावनमेवात्र प्रतिषिध्यते येन केनचित् काष्ठग्रहणं निन्दार्थवादगतमविवक्षितं निषेधस्य निवृत्तिफलत्वेन विशेषस्यानाकाङ्क्षितत्वात्, न हि विशेषमनुपादाय सामान्यमात्रानिवर्त्तयितुं न शक्यते लशुनादिभक्षनिषेधवत्, "अक्ताः शर्करा उपदधातीति विध्युद्देशस्य पुनर्विशेषमनुपादाय सामान्यानुष्ठानानुपपत्तेराकाङ्क्षितोविशेषः "तेजो वै घृतमिति वाक्ये शेषगतोऽवगम्यते ।

तदयुक्तम् ।

अलाभे वा निषेधे वा काष्ठानां दन्तधावनम् ।

पर्णादिना विशुद्धेन जिह्वोल्लेखः सदैव च ॥

इत्यादिपैठीनसिवचनात् ।

यत्तु व्यासवचनं ।

प्रतिपद्दर्श-षष्ठीषु नवम्यां दन्तधावनम् ।

पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव चेति ॥

तत्र प्रतिपद्ग्रहणं निषिद्धदन्तकाष्ठदिनोपलक्षणार्थं । यथान्तरमाह स एव ।

अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।

सर्पां द्वादशगण्डुषैर्विदध्याद्दन्तधावनम् ॥

तदनन्तरं प्रातःस्नानादिकर्म कृत्वोपवाससङ्कल्पः कार्य्यः।

तत्र मन्त्रमाह देवलः।

एकादश्यां निराहारो भूत्वाहमपरेऽहनि।

भोक्ष्यामि पुण्डरीकाक्ष गतिर्भव ममाच्युतेति ॥

क्वचित्तु स्थित्वाहमपरेऽहमीति पाठः। कात्यायनेन स्थित्वाहनि ततःपर इति पठितं। मन्त्रोच्चारणानन्तरं स एवाह।

इत्युच्चार्य्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेदिति।

एतत्पर्य्यालोचनया च पुष्पपूर्णमञ्जलिं कृत्वाऽनेन मन्त्रेणोपवासं सङ्कल्प्य पुष्पाञ्जलिं विष्णवेऽर्पयेदिति गम्यते।

स्कन्दपुराणे।

रात्रिं नयेत्ततः पश्चात् प्रातःस्नायी समाहितः।

उपवासन्तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत् ॥

'रात्रिं' दशमीरात्रिं, मन्त्रेणाष्टाक्षरेणाभिमन्त्रितं जलं पिबेदित्यर्थः।

तथा च मार्कण्डेयः।

अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम्।

उपवासफलप्रेप्सुः पिबेत्तोयं समाहितः ॥

देवार्चनं तथा कृत्वा पुष्पाञ्जलिमथापि वा।

सङ्कल्प्य मन्त्रमुच्चार्य्य देवाय विनिवेदयेत् ॥

स्कन्दपुराणे।

"पुष्पाञ्जलिमथापि वेत्यस्यानन्तरं श्लोकः पठितः।

संपूज्य देवदेवेशं भक्त्या परमया युतः।
अहोरात्रं पिबेद्धीमानुपवासफलाप्तये॥

पापक्षयार्थं जलपानार्थं "पुनः पिबेदित्युक्तं। अथवा देवतार्चनयज्ञान्ते पुष्पाणां पूर्णमञ्जलिं कृत्वा ततः सङ्कल्पानन्तरं तेन पुष्पाञ्जलिना संपूज्य देवदेवेशमिति। शैवानां तु सङ्कल्पमन्त्रः शिवधर्मेषु दर्शितः "तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्"। सौराणां तु सावित्र्या नाम्ना वा सङ्कल्पः।

सावित्र्या तथवा नाम्ना सङ्कल्पं तु समाचरेत्।

इति सौरपुराणेऽभिधानात्। यदा तु प्राचीनमध्यरात्रस्योपरि किञ्चिद्दशम्या वर्त्तते तदैकादश्याः प्रथमं यामचतुष्टयं त्यक्त्वा पूजासङ्कल्पावनुष्ठेयौ।

दशम्याः सङ्गदोषेण अर्द्धरात्रात्परेण तु।
वर्जयेच्चतुरो यामान् सङ्कल्पार्चनयोस्तदा॥

इति वचनात्। यदा तु दिनोदयेऽपि दशम्यनुवर्त्तते तदा रात्रौ।

विद्धोपवासोऽनर्हस्तु दिनं त्यक्त्वा समाहितः।
रात्रौ संपूजयेद्विष्णुं सङ्कल्पञ्च तदा चरेत्॥

इति वचनात्।

नारदीयपुराणे।

पूर्वायाः सङ्गदोषेण गोपोष्या स्नान-पूजने।
वर्जयन्ति नराधमाः यामांश्च चतुरो द्विज॥
तदूर्ध्वं स्नान-पूजादि कर्त्तव्यं तदुपोषितैः।
न दिवा शुद्धिमाप्नोति तदा रात्रौ विधीयते।

दिनकार्य्यमशेषञ्च कर्त्तव्यं शर्व्वरीमुखे॥

अथ देवलः।

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः।

उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुध इति॥

'औदुम्बरं' ताम्रमयं। तज्जलपूर्णमुदङ्मुख आदाय उपवासं गृह्णीयात्, 'सङ्कल्पयेत्' यद्वा सङ्कल्पमात्रं कुर्य्यादित्यर्थः।

स्कन्दपुराणे।

उपवासन्तु गृह्णीयाद्यद्वा वार्य्येव धारयन्।

इति पठितं, तत्र जल-पुष्पाञ्जल्योर्विकल्पः, तेन यथोक्तविधिना समन्त्रक उपवाससङ्कल्प इति सिद्धं। अथ यत्र नक्तविधिस्तत्र किं समन्त्रक एव सङ्कल्पः अथवोपवास एवाधिकृतप्रयोज्यः, तथाश्रुतेर्मन्त्रस्यामन्त्रक इति केचित्। तदसत्।

एकभक्तेन योमर्त्त्य उपवासव्रतं चरेत्।

तथा।

उपोष्य नक्तेन विभो चत्वारः कुलसंयुताः।

इत्यादिना स्कन्दपुराणादिषु नक्तादिषूपवासप्रयोगोमासाग्निहोत्रन्यायेन उपवासधर्मनिर्द्देशार्थ इति स्थितं। तत्र धर्मातिदेशे सति उपवाससम्बन्धिमन्त्रस्य यथाश्रुतस्यार्थाभावे सति प्रकृतार्थप्रकाशनापेक्षायां पकादशीं नक्ताचार इत्यादिषूहितपदपठितेन मन्त्रेण तत्कार्य्यमिति गम्यते, तेन नक्तादावपि समन्त्रक एव सङ्कल्प इति सिद्धम्।

अथोपवासपरैरन्ये नियमा अनुष्ठेयाः कथ्यन्ते तत्र सङ्कल्पप्रभृति पारणपर्य्यन्तं पाषण्डसम्भाषणादि न कार्य्यं।

तदुक्तं विष्णुधर्मेषु ।

पाषण्डिभिरसंस्पर्शं सम्भाषणमेव च ।

विष्णोराराधनपरैर्नैव कार्य्यमुपोषितैः ॥

विष्णुपुराणे च ।

तस्मात्पाषण्डिभिः पापैरालाप-स्पर्शने त्यजेत् ।

विशेषतः क्रियाकाले यज्ञादौ वापि दीक्षित इति ॥

वेदवाह्यागमविहितकारिणः पाषण्डिनः तेषां दर्शने प्राय-श्चित्तमुक्तं ।

विष्णुपुराणे ।

तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ।

संस्पर्शे प्रायश्चित्तमुक्तं विष्णुधर्मेषु ।

संस्पर्शे तु बुधः स्नात्वा शुचिरादित्यदर्शनात् ।

सम्भाषणे च प्रायश्चित्तमुक्तं तत्रैव ।

सम्भाष्य तान् शुचिपदं चिन्तयेदच्युतं बुधः ।

इदश्चोदाहरेत्सम्यक् कृत्वा तत्प्रवणं मनः ॥

शारीरमन्तःकरणोपघातं

वाचश्च विष्णुर्भगवानशेषं ।

शमञ्जयत्वाशु ममेह सर्वं

यायादनन्ते हृदि सन्निविष्टे ॥

अन्तःशुद्धिं बहिःशुद्धिं शुद्धोधर्ममयोऽच्युतः ।

स करोत्वमले तस्मिन् शुचिरेवास्मि सर्वदा ॥

वाह्योपघातानखो वोढ्रा च भगवानजः ।

ममं नयतनन्तात्मा विष्णुश्चेतसि संस्थितः ॥

एतत्समाप्य जप्तव्यं पार्वणभिद्यपोषितैः ।

नमः शुचिपदेत्युक्त्वा सूर्यं पश्येत दीक्षित इति ॥

केचित्कायिक-वाचिक--मानसिकनियमलोपे प्रायश्चित्तमिदं विदुः । तदसत् प्रमाणाभावात् । न च मन्त्रलिङ्गं प्रमाणं, तस्य वाक्याद्दुर्बलत्वेन वाक्यविरोधे अप्रमाणत्वात् विरुद्धञ्च वाक्यं "एतत्समाप्य जप्तव्यमित्यादि । वाचिकलोपे प्रायश्चित्तमिदमाह याज्ञवल्क्यः ।

यदि वाक्यस्य लोपः स्यात् स्नान-दान-जपादिषु ।

व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययमिति ॥

मानसनियमलोपे तु स्नानादि प्रायश्चित्तं प्रसिद्धमेव ।

उपवासी च ब्रह्मचर्यं कुर्य्यात् ।

तथा च कात्यायनः ।

ब्रह्मचर्यसमायुक्तमुपवासव्रतेश्वरः ।

'उपवासस्य व्रतं । व्रते ब्रह्मचर्यादिचतुष्टयं कार्यं ।

तथा च देवलः ।

ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनं ।

व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः ॥

ब्रह्मचर्यविपत्तिहेतूनाह स एव ।

स्त्रीणान्तु प्रेक्षणात् स्पर्शात्ताभिः संकथनादपि ।

भिद्यते ब्रह्मचर्यन्तु न दारेष्वृतुसङ्गमात् ॥

उपवासदूषकानि स एवाह ।

अयस्कान्तजलपानाच्च ताम्बूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत दिवास्वापाच्च मैथुनात् ॥
अयस्को चायस्कान्तजलपानं । यत्तु व्यासवचनम् ।
पुष्पालङ्कार-वस्त्राणि गन्ध-धूपानुलेपनम् ।
उपवासे न दुष्येत दन्तधावनमञ्जनमिति ॥
तत्पुत्रके स्त्रीविषयमिति[१] ।

## अथ द्वादशीनियमाः ।

तत्राह कात्यायनः ।
प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो नाथ[२] ज्ञानदृष्टिप्रदो भव ॥
पारणन्तु ततः कुर्य्यात् यथासम्भवमागतः ।
अत ऊर्ध्वं यथेष्टन्तु कारयेत्तु यथारुचि ॥

यदा तु द्वादशी पारणमात्रपर्य्याप्ता तदा तु रात्रिशेषे स्नानादिकं सर्वं कर्म कृत्वा द्वादशीमध्ये पारणं कार्य्यं ।

तथाच पद्मपुराणे ।
यदा भवति स्वल्पा तु द्वादशी पारणे दिने ।
उषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकं तदा ॥
नारदीयपुराणेऽपि ।
अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये ।

(१) 'पुत्रके' पुत्रजनकोपवासे स्त्रीविषयमित्यर्थः ।
(२) सुमुखो भूत्वेति ख० ।

स्नानार्चनक्रिया कार्य्या दान-होमादिसंयुता ॥
यथोदयात्तु शुद्धायां पारणे पृथिवीफलम् ।
शतयज्ञादिकं वापि नरः प्राप्नोत्यसंशयम् ॥
एतस्मात् कारणाद्विप्रः प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तमर्च्चां कुर्य्याच्च द्वादशीं ॥

तथाच नारदपुराणे ।

दिनकर्म दिने सर्वं कर्त्तव्यं यदि तद्दिने ।
नैव सिद्धिमवाप्नोति तदा रात्रौ विधीयते ॥

नारदीयपुराणे ।

एतस्मात् कारणाद्विप्रः प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तं कुर्य्याच्चां द्वादशीतिथिम् ॥

भविष्यत्पुराणे ।

अल्पायामथ भूपाल द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्य्या दान-होमादिसंयुता ॥

कालिका-नारदपुराणयोः ।

स्वल्पैव द्वादशी यत्र स्नान-दानादिका क्रिया ।
रजन्यामेव कर्त्तव्या दान-होमादिसंयुता ॥

स्कन्दपुराणे ।

कलाद्वयं त्रयं वापि द्वादशी यत्र दृश्यते ।
स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते ॥

कात्यायनः ।

क्रमतस्तु च कृत्येषु यद्यल्पमपहन्यते ।

तदा सर्वोपकर्षः स्यादन्यथा क्रमबाधनात् ॥

जैमिनिः ।

तदा दिवाभिधानात्तदनुपकर्षं स्यादिति ।

अथान्येऽपिद्वादशीनियमाः ।

ब्रह्माण्डपुराणे ।

कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च प्रवासञ्च दिवास्वापमथाञ्जनम् ॥
तिलपिष्टं मसूरञ्च द्वादश्यैतानि वैष्णवः ।
द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥
पुनर्भोजनमध्वानो भारमायास-मैथुने ।
उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी ॥

बृहस्पतिरपि ।

दिवानिद्रा परान्नञ्च पुनर्भोजन-मैथुने ।
क्षौद्रं कांस्यामिषन्तैलं द्वादश्यामष्ट वर्जयेत् ॥
कांस्यं मांसं सुरां द्यूतं व्यायामं क्रोध-मैथुने ।
दिवास्वापं पुनर्भक्षञ्चणकान् कोरदूषकान् ।
कांस्यं मधु परान्नञ्च द्वादश्यामष्ट वर्जयेत् ॥

तथा ।

कांस्यं मांसं मसूरांश्च कृत्वा व्यायाम-मैथुने ।
हिंसाऽसत्यञ्च तैलञ्च लोभं निर्माल्यलङ्घनं ॥

वर्जयेदितिशेषः ।

स्कन्दपुराणे ।

क्षौद्रं मांसं सुरां तैलं व्यायामं क्रोध-मैथुने ।
पराक्षं कांस्य-ताम्बूले क्षोभं निर्माल्यलङ्घनम् ।
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत् ॥

एषु वाक्येषु क्वचित् "काङ्क्षितं सिध्यतीति, क्वचित् "उपवास-फलप्रेप्सुरिति, क्वचित् "उपवासफलं लभ्युरिति फलसम्बन्धः श्रूयते तेनेति गम्यते कामाधिकारविषयाणीमानि वचनानीति, यत्र पुन-र्द्वादशीनियमवाक्येषु न श्रूयते फलसम्बन्धः तेष्वप्यवगम्यते काम्यवि-षयवाक्यमध्ये पाठात्, तस्मात् सर्वं काम्यविषयमवसीयते ।

सायमाद्यं तयोरह्नोः सायं प्रातस्तु मध्यमे ।
उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयमिति ॥

तत्र केचिदाहुः ।

अनेन वचनेन काम्योपवासाङ्गभक्तचतुष्टयहानिर्विधीयते नि-त्याङ्गे प्रेप्सुग्रहणानुपपत्तेः, न हि नित्येषु फलसम्बन्धमनुष्ठानमिति, तदनुपपन्नं अङ्गत्वे प्रमाणाभावात् । इह हि वाक्य-प्रकरणे सम्भा-व्येते, प्रमाणान्तरन्तु शङ्कास्पदमपि न भवति, न तावत् प्रकरणे-नाङ्गत्वं, तथाहि फलवत्सन्निधावफलन्तदङ्गं भवति । न च भक्तचतु-ष्टयहानस्य फलेप्सुशब्देन फलकामशब्दपर्य्यायेण सम्बध्यमानस्याफलत्वं शक्यते वक्तुं, तस्मान्न प्रकरणेनाङ्गत्वं। नापि वाक्येन, वाक्यं ह्युपवासफलेन सम्बन्धमाह न पुनरुपवासेन काम्यमानार्थतयैव क्रियमाणं, स्वरसवृत्त्या सम्बन्धावगमात् । अतस्तस्योपवासफलेनैव सम्बन्धः । तदपि न, पुरु-षार्थाविशेषितस्य फलसामान्यस्यानपेक्षितत्वेन तत्सम्बन्धायोगात् । अथो-पवासफलप्रेप्सुरित्युपवासविशेषणसामर्थ्यादेवोपवासस्य यः फलविशे-

फलेन सम्बध्यत इत्युच्यते । तन्न । उपवासविशेषितेन चेत् फलविशेषेण सम्बन्धस्तर्हि तस्योपवासफलसम्बन्धविधायकवाक्यप्रमितिपूर्वकत्वात् तद्विरोधितयोपवाससाधनके फले साधनान्तरं विधातुं न शक्यते, स्वयं तदधीनत्वेन तेन सह विकल्प-समुच्चययोरसम्भवात् । अस्तु तर्हि गुणफलसंबन्धकल्पनमुपवासस्य, यादृशः फलविशेषस्तादृशफल-प्रेप्सुर्भक्ष्याद्यन्नचतुष्टयमिति, तदपि न फलशब्दस्य तादृशफललक्षणा-प्रसङ्गात्, तस्माद्गुणफलसंबन्ध एवेत्थं वक्तव्यः । उपवाससाध्यमेव फलं यदा प्रकृष्टतरमिष्यते तदा भक्ष्याद्यन्नचतुष्टयमिति । यथा ज्योति-ष्टोमसाध्यफलातिशयार्थिनामुद्गीथाद्युपासनं विधीयते तद्वच्चापि । एवं सति फलप्रेप्सुरिति शब्दोऽपि प्रकर्षवाचकतयार्थवान् भवति । ननु भक्ष्यादानस्य स्वयं क्रियात्मकत्वात् क्रियान्तरमसाधयतः कथं फलाय विधानं । यथा वारवन्तीयसाम्नो गीतिक्रियात्मकस्य प्रकृतं यागमसाधयतः फलसंबन्धायोगात् विशिष्टविधानमाश्रितं, उच्यते, सिद्धरूपस्य कारकस्य क्रियामसाधयतः फलप्रयोजकत्वायोगात् प्रकृतक्रियानिष्पत्तिद्वारभूतापेक्षेत यथा गोदोहनस्य, क्रियाणां तु स्वयमेव क्रियात्मकत्वात् न क्रियान्तरनिष्पादनापेक्षा, किन्तु तदुप-जीवनेन विना फलसाधकत्वायोगात् तदाश्रयव्यपदेशं लभते । ननु कामसंयोगमन्तरेणापि द्वयन्यामेकभक्तं शेषरूपेण वचनेन विधीयते, तद्यथा ।

प्रातर्हरिदिनं लोकास्तिष्ठध्वं चैकभोजना इति ।

उच्यते कार्त्तिकशुक्लैकादशीविषयं तत् नैकादशीमात्रविषयं तत्प्रकरणपाठात्, येन तत्रैवमाह ।

एषा या कार्त्तिके शुक्ला हरेर्निद्रां व्यपोहति ।
प्रातरेकादशी प्राप्ता मा वह्नं युगभोजनमिति ॥

---

## अथैकादशीनिर्णयः ।

सा च द्विधा संपूर्णा विद्धा च, केचिदुदयादुदयपर्य्यन्तमवस्थितैकादशी संपूर्णेत्याहुः ।

तथाच ज्योतिःसिद्धान्ते ।

सर्वा ह्येताश्च संपूर्णा उदयादोदयस्थिताः ।

नारदीयपुराणे ।

आदित्योदयवेलायामारभ्य षष्टिनाडिका ।
या तिथिः सा तु संपूर्णा कथिता पूर्वसूरिभिरिति ॥

गैतमाथोयः ।

प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः ।
संपूर्णा इति विख्याता हरिवासरवर्जिताः ॥

इति स्कन्दपुराणवचनविरोधात् ।

कौदृशस्तर्हि संपूर्णो हरिवासर इत्यपेक्षिते गारुडपुराणे शिवरहस्ये चोक्तम् ।

उदयात्प्राग्यदा विप्रा मुहूर्त्तद्वयसंयुता ।
सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥

भविष्यत्पुराणे ।

आदित्योदयवेलायाः प्राक् मुहूर्त्तद्वयान्विता ।
एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता ॥

प्रकारान्तरेण सम्पूर्णत्वमुपरिष्टाद्वक्ष्यामः । सम्पूर्णैकादशी च द्विधा द्वादश्यामवर्त्ती सती च, तत्राद्या सर्वैरुपोष्या त्रयोदश्यां द्वादश्यभावे सतीति निर्विवादं । त्रयोदश्यां द्वादशीसद्भावे केचिदाहुः एकादश्यामुपवासो न द्वादश्यां एकादशीव्रतस्य मुख्यकालस्य द्वादश्यामभावात्, एकादशीकार्य्यकरणता हि न द्वादशी याह्या मुख्यकालसम्भवे हि तत्कार्य्यकरत्वं कालान्तरस्य नोपपद्यते ।

यत्तु वचनम् ।

एकादशी तथोरात्रं द्वादशी च कलाधिका ।
त्रयोदश्यां यदा प्रातरुपोष्या द्वादशी तदेति ॥

तद्दशमीविद्धैकादशीविषयं, द्वादश्यां विद्यमानक्रियस्यापैकादशीविषयश्चेति । अपरे त्वाहुः परतो द्वादशीसद्भावे शुद्धद्वादश्यामुपवासो नैकादश्यां ।

विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।
अविद्धापि तथा विद्धा परतो द्वादशी यदि ॥

इति पद्मपुराणवचनात् ।

तथाच विष्णुपुराणे ।

एका त्रिस्रा तु संयुक्ता यदि शुद्धा यदा भवेत् ।
अथ वैकादशी नास्ति दशम्या वाच संयुता ॥
कलाच काष्ठा द्वादश्या यदि स्यादपरेऽहनि ।
द्वादश्यां द्वादशी हन्ति पूर्वस्मिन् पारणे कृते ॥

अथ पूर्वपारणनिन्दयोत्तरपारणं विधीयते पारणस्योपवासमन्तरेणानुपपत्तं पारणान्तत्वादुपवासस्य ।

तदुक्तं विष्णुरहस्ये "पारणान्तं व्रतं ज्ञेयम्" इति, तेन शुद्धद्वादश्यामुपवासोऽवसीयते, न चोत्पत्तिशिष्टैकादश्युपरोधदोषः, मुखान्तरेण तत्र द्वादशीप्रवेशाभिधानात्। ये उपरितनैकादशीविषयमेवेदं वचनमूचिरे ते प्रकरणानभिज्ञाः। "अथ वैकादशी नास्तीत्यपि ह्यत्र प्रकृतं। ये च दशमीविद्धैकादशीविषयमेवेति तेपि तथा, "दशम्या चाथ संयुतेति तत्र प्रकृतत्वात् द्वितीयैकादश्युपवासे विद्धैकादश्युपवासेन शुद्धद्वादश्युपवासे च परतो द्वादशीसद्भावस्याप्रयोजकताया वक्ष्यमाणत्वाच्च। यथोक्तविषयमिदं वचनं।

स्कन्दपुराणे।

एकादशी भवेत्पूर्णा परतो द्वादशी यदा।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्॥

विष्णुरहस्ये।

एकादशी तु सम्पूर्णा सदृशी चोत्तरा भवेत्।
पूर्वा तु पूर्ववज्ज्ञेया तिथिवृद्धिः प्रशस्यते॥

'उत्तरा' द्वादशी, 'सदृशी' सशेषा, त्रयोदश्यामपि स्यादित्यर्थः, 'पूर्वा' एकादशी, 'पूर्ववत्' दशमीवदनुपोष्येत्यर्थः।

कालिकापुराणे।

एकादशी तु सम्पूर्णा परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते॥

गारुडपुराणेऽपि।

पूर्णा भवेद्यदा नन्दा भद्रा चैव विवर्द्धते।
तदोपोष्या तु भद्रा स्यात् तिथिवृद्धिः प्रशस्यते॥

भविष्यत्पुराणे ।

उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ।
निर्गतायां त्रयोदश्यां कला वा द्विकलापि वा ॥
द्विकलायां तु द्वादश्यां पारणं यः करोति हि ।
तामुपोष्य महीपाल न गर्भे विद्यते नरः ॥

स्मृत्यन्तरे ।

सम्पूर्णैकादशी यत्र द्वादशी च परेऽहनि ।
तत्रोपोष्या द्वादशी स्यात् द्वादश्यामेव पारणम् ॥

भागवतादितन्त्रे ।

सम्पूर्णैकादशी त्याज्या परतो द्वादशी यदि ।
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ।
न गर्भे विद्यते जन्तुरित्याह भगवान् हरिः ॥

तस्मादेवंविधे विषये द्वादश्यामेवोपवास इति सिद्धमिति केचित् ।

अपरे त्वेवं व्यवस्थामाहुः । एकादश्याः सम्पूर्णत्वे द्वादश्याश्चासद्भावे द्वादश्याश्च त्रयोदश्यां सद्भावे ।

उदयात् प्राग्यदा विप्र मुहूर्त्तद्वयसंयुता ।
सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ॥

इति स्मृतेः गृहिणामेकादश्यामुपवासः ।

अथ नैकादशी नास्ति दशम्या वाथ संयुतेति ।
एकादशी भवेत् पूर्णा परतो द्वादशी यदि ।

इत्यादिवचनानि ।

उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ।

निर्गता चेत् त्रयोदश्यां कला वा द्विकलापि वा ॥
द्विकलायान्तु द्वादश्यां पारणं यः करोति हि ।
तामुपोष्य महीपाल न गर्भे विशते नरः ॥
सम्पूर्णैकादशी यत्र द्वादशी चापरेऽहनि ।
तत्रोपोष्या द्वादशी स्याद्द्वादश्यामेव पारणम् ।
न गर्भे विशते जन्तुरित्याह भगवान् हरिः ॥

इत्यादिवचनपर्य्यालोचनया मुमुक्षुविषयापि । यदि-मुमुक्षुव्यतिरिक्तानां कुतोपवास इति सन्देहे ।

बहुवाक्यविरोधेन सन्देहो जायते यदा ।
द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम् ॥

इति स्मृतेर्द्वादश्यामुपवासः । एकादश्यान्तु वेधाभावे सति द्वादश्यां वा अभावे द्वादश्यास्त्रयोदश्यामभावे द्वादश्युपवासनिमित्ताभावेन सन्देहाभावात् ।

द्विकलायान्तु द्वादश्यां पारणं यः करोति हि ।

इति च कलाद्वयपर्य्याप्तद्वादशीसद्भावे द्वादशीमध्यपारणविधानाद्सम्पूर्णकलाद्वयद्वादशीसद्भावे त्रयोदश्यान्तु पारणमित्युपपत्तेरविद्धैकादश्या द्वादश्यामभावे द्वादश्यान्तु त्रयोदश्यां सद्भावे यदि-मुमुक्षुव्यतिरिक्तानां तत्रैवोपवासे यदि-यतिवदेकादश्यामुपवासे निश्चयहेत्वभावात् "न गर्भे विशते जन्तुरितिवत् द्वादश्युपवासनिश्चयहेत्वभावात्सन्देहे सति एकादश्यामुपवासे "यत्र वैकादशी नास्तीति बहुवाक्यविरोधापत्तेः[१] द्वादशी ग्राह्येत्यर्थः । बहुवाक्यविरोधस्यापि

(१) विरोधोपपत्तेरिति ख० ।

विषयव्यवस्थया परिहारसम्भवे व्यवस्थानिश्चयेन सन्देहाभावात्सम्भवे तत्तुल्यबलत्वे बलवदनुसारेण निश्चयोपपत्तेः सन्देहाभावात् तुल्य-बलत्वे विकल्पनिश्चयेन सन्देहाभावाद्विषयव्यवस्थायनालोचनात्क-थञ्चित्सन्देहोत्पत्तावप्यदृष्टार्थस्मृतिलाविशेषेणैकतरपक्षनिश्चयायो-गाद्बहुवाक्यकृतसन्देहापनयनार्थत्वेनैतद्वाक्यव्याख्या न युक्ता ।

बहुवाक्यविरोधेन ब्राह्मणेषु विवादिषु ।
एकादशीं परित्यज्य द्वादशीं समुपोषयेत् ॥

इत्येषा स्मृतिर्ग्रहि-मुमुक्षुव्यतिरिक्तविधवादीनां व्यवस्था, एक-वाक्यत्वाभावेन विवादिषु विपरीतवादिष्वेकादश्यामुपवासवादिषु ब्राह्मणेषु बहुवाक्यविरोधापत्तेर्विधवादिरेकादशीं परित्यज्य द्वाद-शीमुपवसेदित्यर्थः। बहुवाक्यविरोधो येषां ते बहुवाक्यविरोधा इति बहुव्रीहिः "सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत्"। इत्यपि वचनं यस्मिन् विधवादिविषये "अथवैकादशी नास्तीत्यादिवाक्यानि सन्दिग्धानि स विधवादिर्द्वादशीं समुपोषयेदिति व्याख्येयं तदयुक्तं, "उदयात्प्राग्यदा विप्रेतिवचनपर्यालोचनया गृहिव्यतिरिक्तानामुत्त-रत्रोपवासप्रतीतेः। यदपि "बहुवाक्यविरोधेनेत्यादिवचनव्याख्यानं तदपि वचनानार्जवादयुक्तं तिथिप्रमाणे ज्योतिःशास्त्रविप्रतिपत्तेः दशमीवेधसन्देहविषयत्वेनार्जवोपपत्तेश्च । यदपि मार्कण्डेय-प्रचुम्न-संवादवचनम् ।

विवादेषु तु सर्वेषु द्वादश्यां समुपोषणम् ।
पारणं हि त्रयोदश्यामाज्ञेयं मामकी मुने ।
हेतुवादो न कर्त्तव्यो हेतुना पतते नरः ॥

इति, तद्युक्तवेधविषयत्वेन व्याख्येयं। यदा यो विषयव्यवस्थां निवेतुं न शक्नोति तद्विषयाणि, तथा "सन्दिग्धेषु च वाक्येषु" इत्युक्तं, अवि-द्धैकादश्युपवासमात्रेण मोक्षसिद्धेः "न गर्भे विद्यते जन्तुरित्यर्थ-वादत्वात्। सत्त्वशुद्धिद्वारेणोपयोगिता ऽष्टवर्षादिष्वविशिष्टेति न फलपरत्वेऽपि बाधः, तस्माद्यथोक्तमेव साधीयः। द्वितीयापि चयो-दश्यामविद्यमानद्वादशिका विद्यमानद्वादशिका वा, तत्रायायां व्यवस्था।

तथाच कूर्मपुराणे।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
उत्तरान्तु यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही॥

गारुडपुराणेऽपि।

उदयात् प्राग्यदा विप्र मुहूर्त्तद्वयसंयुता।
सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही॥
पुनः प्रभातसमये घटिकैका यदा भवेत्।
अत्रोपवासो विहितश्चतुर्थाश्रमवासिनाम्।
विधवापि च तत्रैव परतो द्वादशी न चेत्॥

अथ चयब्देन वनस्थादिग्रहणम्।

प्रचेताः।

एकादशी विशुद्धा चेच्छुक्लपक्षे विशेषतः।
उत्तरां तु यतिः कुर्य्यात् पूर्वामुपवसेद्गृही॥

वृद्धवशिष्ठोऽपि।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।

लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् ।
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ॥

तस्मिंस्त्रयोदशे लघ्नि यदा द्वादशी नास्ति तदा पूर्व्वोक्तव्यवस्थाऽभि-चतुर्थाश्रम्यधिकारभेदेन द्वे तिथी उपोष्ये न लेकेनेत्यर्थः ।

अपरे तु तिथिद्वयोपवासपरत्वेनैव व्याचक्षते। अन्यथाप्यधिकारिभेदकल्पनाप्रसङ्गात् इतरेतरयोगविहितद्वन्द्वापवादैकशेषदर्शनादितरेतरयुक्ततिथिद्वयस्योपोष्यत्वप्रतीतेश्च विष्णुप्रीतिकामस्याधिकारिणोऽपि श्रुतेश्च। न च तिथिद्वययुक्तं दिनमेकमुपोष्यमिति व्याख्या युक्ता, तिथिशब्दस्य तदेकदेशे लक्षणाप्रसङ्गात्।

स्कन्दपुराणेऽपि ।

प्रथमेऽह्नि तु संपूर्णा व्याप्याहोरात्रमास्थिता ।
द्वादश्यां च तथा तात दृश्यते पुनरेव च ॥
घटिका च प्रदृश्येत द्वादश्यां शिखिवाहन ।
पूर्वा कार्य्या गृहस्थैस्तु यतिभिश्च तथा विभो ।
द्वादशीसंयुता कार्य्या सदा वै मोक्षकाङ्क्षिभिः ॥

एतद्वचनपर्य्यालोचनया "पुनः प्रभातसमये" इति वचने अहोरात्रव्यापिन्यां संपूर्णायां द्वितीयदिनविद्यमानैकघटिकायां इत्यादिव्यवस्थोक्तेति प्रतीयते, न त्वरुणोदयादारभ्यारुणोदयं यावदवस्थितोदयात् प्रागिति वाक्ये संपूर्णा विवक्षिता। "पुनः प्रभातसमय इति चारुणोदये विद्यमानैकघटिकायामित्यादिव्यवस्थोक्ता। यदि सूर्य्योदय उत्तरावधिः तदा अरुणोदयवाची प्रभातशब्दोनोपपद्यते, तथा हि "प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्यूषसी अपि प्रभातं चेत्यादिना अमरसिं-

चादिभिः प्रभातशब्दोऽभिहितः, स चारुणोदयवाची प्रत्यूषपर्य्यायः, अरुणायामथेति द्वादशीनियमदर्शनावसरपठितनारदीयवाक्ये च अरुणोदयस्नानमित्यभिधाय प्रत्यूषे "स्नानमाचरेदित्युपसंहारात्। तथा यदा भवतीति तत्रैव पठिते पाद्मवचने उषःकाले स्नानादि कार्य्यमित्यभिहितं। "अरुणायामथेति भविष्यत्पुराणवाक्ये अरुणोदये, तेनारुणोदयवाच्युषःशब्दपर्य्यायः प्रभातशब्दस्तद्वचनस्तथा। "परतो द्वादशी न चेदिति नोपपद्यते परमहङ्कुरनन्तरदिने षड्घटिकान्तचयस्य ज्योतिःशास्त्रप्रसिद्धत्वादित्युच्यते यथा "पुनः प्रभातसमय इति वाक्यं "प्रथमेऽह्नि तु संपूर्णेत्येतद्वचनसमानार्थं सम्भवेत् तदैतन्मूलभूततयैव मुख्योपपत्तेर्न मूलान्तरकल्पना। अन्यथा सा स्यान्नवत्पक्षे च समयशब्दवैयर्थ्यं, असत्पक्षे च प्रभातसमय इति षष्ठीसमासाश्रयणाच्च कश्चिद्दोषः। अतएव "प्रभाते पुनरेव चेति वचनानि तत्समानानि, प्रभात इति च सप्तमी, प्रभातसमय इति कर्मधारयपक्षे "सर्वा ह्येतास्तु संपूर्णा इत्यादिवाक्ये उक्तोत्तरावधित्यागे कारणाभावाच्च। न च हरिवासरवर्जिता इति कारणं वाच्यं, गौरवप्रसङ्गात् अन्यथाप्युपपत्तेश्च संपूर्णतिथिषु षष्टिघटिकात्मकत्ववत् सूर्य्योदयरूपोत्तरावधेरपि दर्शनाच्च। न च "आदित्योदयवेलायामिति वचनं प्रतिपादितं षष्टिघटिकात्मकत्वमेव बाधितमवस्थितं वाच्यम्। उभयावधित्वे संपूर्णशब्दस्यानेकार्थत्वापातात् षष्टिघटिकात्मकत्वावबोधे च पूर्वोक्तदोषप्रसङ्गात् आकाङ्क्षितवाच्यविशेषनिर्णयार्थत्वेन "उदयात् प्रागिति "आदित्योदयवेलायामिति वचनद्वयस्य दिनद्वयेऽप्युदयात् प्राचीनमुहूर्त्तद्वये विद्यमाना संपूर्णेत्येतदर्थपरत्वेन व्याख्यानोपपत्तेश्च तेन द्विविधैकादशी

संपूर्णा अहोरात्रव्यापिनी अरुणोदयादारभ्य द्वितीयसूर्योदयपर्यन्तमवस्थिता च । तथापि सर्वतिथिसाधारणः पूर्वस्यां संपूर्णशब्दो मुख्यः न द्वितीयायां अनेकार्थत्वापातात् । उदयात् प्राग्घटिकाचतुष्टयेऽपि विद्यमानायाः संपूर्णेत्यभिधानञ्च अरुणोदयवेधनिराकरणार्थं, हरिवासरवर्जिता इति च ।

अपरे त्वाहुः पूर्वावधियुतैव संपूर्णेत्यभिधीयते न द्वितीयावधिनियमाग्रहः । अस्मिन्नपि पक्षे व्याख्या पूर्ववत् पूर्वनयात् ।

अन्ये त्वेवं व्याचक्षते उदयात् प्राग्यदि मुहूर्त्तद्वयं सा चाहोरात्रव्यापिनी च भवति तत्र "प्रतिपत्प्रभृतयः पूर्वा इत्यनेन सर्वतिथिसाधारणसंपूर्णत्वनिषेधे प्रकारान्तरेण संपूर्णत्वमुख्यायां आकाङ्क्षितप्रतिपादनेनैव वाक्यस्योपपत्तेः ।

तथाच मार्कण्डेयः ।

संपूर्णैकादशी यत्र परत्र पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत् ॥

गृहस्थमात्रवचनत्वे च गृहिणो निष्कामस्य द्वितीयैकादश्यामुपवासो न स्यात् ।

तथाच ।

निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं सदा ।
प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम ॥

इति स्कन्दपुराणवचनविरोधः स्यात् ।

अन्ये तु यति-गृहिपदयोरन्यथाभूतत्वे इदं कारणमाहुः ।

यदि गृह्येव पूर्वामुपवसेद्यतिरेवोत्तरां तदा वानप्रस्थादेः लोप-

वासः स्यात्, न हि पूर्व्वस्यामुपवासः, "पूर्वामुपवसेद्‌गृहीति विधानात्। नाप्युत्तरस्यां, "उत्तरान्तु यतिः कुर्य्यादिति विधानात्। ननु यतिपदं नियतिपदयोगेन वर्त्तमानं वनस्थादिकमपि वदत्येव, तथाचोत्तरस्यां अस्योपवास इति चेत्। न। गृहिणामपि नियतानां उत्तरस्योपवासप्रसङ्गात्। तथाच "पूर्वामुपवसेद्‌गृहीति वचनानाञ्चस्यं स्यात्। ननु गृहिव्यतिरिक्तोपलक्षकं यतिपदमिति वनस्थादेरुत्तरस्योपवास इति चेत्, नैवम्, अनुपलब्धातविरोधितया यतिपदस्योपलक्षकत्वानुपपत्तेः, प्रत्युतोपसंहारगतत्वेन गृहिपदस्य यतिव्यतिरिक्तोपलक्षकत्वं स्यात्, तथाच "पुनः प्रभातसमयइत्यादिवचनविरोधः स्यात्। अथ गृही पूर्वामेवोपवसेद्यतिरुत्तरामेवेति विधानं तथाच वनस्थादेरन्यथोपवास इति चेत्, नैवं, "पूर्वामुपवसेद्‌गृहीतिवचनस्य विफलत्वापत्तेः, परतो द्वादशीसङ्गावनिमित्तो हि परदिनोपवासः "परतोद्वादशी यदीति वचनात्, परतोद्वादश्यभावात् पूर्वस्यामेकादश्यामुपवासः सर्वेषां प्राप्त इति "पूर्वामुपवसेद्‌गृहीतिवचनं विफलमेव स्यात्। ननु वनस्थादेः तिथिद्वयोपवासः किमिति न भवेत् सोऽप्यस्मिन्नेव विषये विहितः।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्॥

इत्युपक्रम्य।

उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः।

इति वचनात्। तत्र सकामस्य वनस्थादेरुपवासोऽस्तु नाम

इत्युपक्रम्य ।

उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ।

इति वचनात् तत्र सकामस्य वनस्थादेरुपवासोऽस्तु नाम निष्कामस्य पुनः क्वोपवास इति वाच्यमेव । किञ्च तिथिद्वयोपवासेऽपि द्वादशीदिनक्षये सत्येव ।

संपूर्णैकादशी यत्र परतः पुनरेव सा ।

त्रयोदशी उषःकाले उपोष्या तत्र का भवेत् ॥

इत्युपक्रम्य "उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति—स्कन्दपुराणवचनात् । किञ्च निष्कामस्य त्रयोदश्यां पारणं स्मर्यते ।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

बौधायनः ।

कलार्धैकादशी यत्र परतो द्वादशी न चेत् ।

गारुडपुराणे ।

एकादशी कलार्धैका परतो द्वादशी न चेत् ।

एतेषामुत्तरार्द्धं ।

तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणमिति ।

नारदीयपुराणे ।

त्रयोदश्यां तु शुद्धायां पारणे पृथिवी फलं ।

शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयं ॥

विष्णुरहस्ये ।

एकादशीकलामात्रा येन द्वादश्युपोषिता ।

तुल्या क्रतुशतेन स्यात् त्रयोदश्यान्तु पारणम् ॥

बौधायनः।

एकादशीकलायुक्तामुपोष्य द्वादशीं नरः।

त्रयोदश्यान्तु भुञ्जानो विष्णुसायुज्यमृच्छति ॥

स्मृत्यन्तरे।

एकादशी तु सम्पूर्णा परतः पुनरेव सा।

पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम् ॥

ननु त्रयोदशीपारणप्रतिषेधोऽपि दृश्यते।

कूर्मपुराणे।

एकादशीमुपोष्यैवं द्वादश्यां पारणं स्मृतं।

त्रयोदश्यां न तत्कुर्यात् द्वादशद्वादशीक्षयात् ॥

स्कन्दपुराणे।

उपोष्यैकादशीं यस्तु त्रयोदश्यान्तु पारणं।

करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु ॥

भविष्यत्पुराणे।

पारणन्तु त्रयोदश्यां यः करोति नृपोत्तम।

द्वादश द्वादशीर्हन्ति नात्र कार्या विचारणेति ॥

मैवं सकामविषयत्वात् त्रयोदशीपारणनिषेधवचनानां, तथा-च यस्यामेकादश्यामुपवासे त्रयोदशीपारणं प्रसज्यते तां सकामो-नोपवसेदिति। उक्तनिषेधवचनानां निष्कामविषयत्वे त्रयोदशीपा-रणविधानानां निर्विषयत्वापत्तेः तेन निष्कामविषयास्त्रयोदशी-पारणविधयः।

तथा गारुडपुराणे ।

पारणन्तु त्रयोदश्यां कर्त्तव्यमफलार्थिभिः ।

स्कन्दपुराणेऽपि ।

पारणन्तु त्रयोदश्यां निष्कामाणां विमुक्तिदमिति ।

तत्राकृचि-यतिपदे न पयाश्रुते ।

ब्रह्मपुराणे ।

शुद्धा चैकादशी यत्र तथा विद्धा तु द्वादशी ।

स्वर्गदोपोषिता पूर्वा उत्तरा स्वर्ग-मोक्षदा ॥

त्रयोदश्यां विद्यमाना द्वादशी काचिदुत्तरैव सर्वैरुपोष्या ।

तथाच भृगुः ।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

उत्तरान्तु यतिः कुर्य्यात् उत्तरा स्वर्ग-मोक्षदा ॥

त्रयोदश्यां विद्यमाना द्वादशी काचिदुत्तरैव सर्वैरुपोष्या।

तथाच भृगुः ।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

उत्तरान्तु यतिः कुर्य्यात् पूर्वामुपवसेत्[१] गृही ॥

इत्येकं वाक्यं ।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।

तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥

इत्यपरं। तत्र केचिदेवं व्याचक्षते पूर्व्वश्लोके विधिद्वयं तत्रैवैकेन विधिना गृहस्थस्य विशेषेण पूर्वैकादशी नियम्यते, अपरेणोत्तरैका-

(१) पूर्व्वामेव करोति ख० ।

दशी यतेर्नियम्यते। एवं गृहस्थस्य विशेषविहितां प्रथमैकादशीं उपोष्य तृतीयदिनद्वादशीसद्भावविषयैकादशी विधीयत इति तदनुपपन्नं। तथाहि द्वादशद्वादशीवाक्ये गृहस्थपदं तावन्न श्रूयते। तत्र केन विशेषेण तद्गृहस्थविषयं उच्यते विषयान्तराभावादिति चेत्। यतिविषयं कस्मान्न भवति। अथ यतिविषयैकादश्या वचनान्तरविहितत्वेन पुनर्द्वादशीवाक्यमप्युत्तरैकादशीविधानार्थमेव सदनर्थकं प्राप्नोति ताद्रूप्यपरिच्छिन्नत्वेन प्रमितिप्रजननाशक्तेरिति। उच्यते गृहस्थेऽपि तर्हि पूर्वैकादश्यविरोधादुत्तरैकादशी विधातुं न शक्यते तद्विपर्य्ययपरिच्छिन्नत्वेन विरोधात्। प्रमितिजननानुपपत्तेरानर्थक्यस्य तदवस्थत्वात्। अथ विरोधेऽपि द्वादशीवचनस्य विशेषविधित्वेन बाधकत्वात् सार्थक्यमुच्यते, तत्र विशेषविधित्वमेव तावन्नास्तीति वक्ष्यामि, अस्तु वा विशेषविधित्वं, तथापि न तावत्पुनरुक्ततया गमयितुं शक्यत एव विशेषविधित्वेनैव सामान्यप्राप्तोत्तरैकादश्युपसंहारतया सार्थकत्वसम्भवात्। तथाहि यत् यतेरुत्तरैकादशीविधानं तदुपरिद्वादशीसद्भावविषय एव नान्यथेति। ननूपसंहारे उपसंह्रियमाणसङ्कोचापत्तेरसामञ्जस्यं हन्तापवादेऽप्यपवाद्यमानस्यासामञ्जस्यमेव। ननु "द्वादशी न चेदिति तस्य निर्विषयत्वापत्तेर्गृहिवाक्यस्यासामञ्जस्येऽप्यपवादोऽङ्गीक्रियते। हन्त तत एव हेतोर्यतिशास्त्रोपसंहारः। नन्वपवादपक्षे तूत्सर्गापवादाभ्यां महान् विषयो व्याप्यते उपसंहारे त्वल्पविषयता प्राप्नोति। सत्यमल्पविषयता नाम कोऽयं दोषः प्रत्युताक्षेपलाघवाद्गुण एव। यत्तु सङ्कोचापत्त्या बाध इत्युच्यते स उपवासपक्षेऽपि विशिष्ट इत्युक्तमेव। ननूपसंहारो नाम सामान्यप्रवृत्तस्य शास्त्रस्य

तदन्तर्वार्त्तिना विशेषशास्त्रेण क्रियते, यथानारभ्याधीतं सामद्वयं सर्वप्रकृतौ द्विविधाधारणमध्वरकल्पादिविशेषविषयेण सामद्वयशास्त्रेणोपसंह्रियते। द्वादशीवाक्यन्तु न यतिशास्त्रावान्तरो विशेषः यत्ययतिसाधारणत्वेन प्रतीतेः, तत्र कथमुपसंहारः, एवं तत्रापवादोऽपि सामान्यविशेषेण भवति। यथा यदाहवनीये जुहोतीत्यस्याप्सु जुहोति इत्यनेन, द्वादशीवाक्यन्तु न स्मरणशास्त्रावान्तरो विशेषः स्मरणास्मरणसाधारणत्वात्, विशेषो नाम स भवति यः सामान्यविषयाद्विनिवर्त्तते, तस्माच्चापवादकत्वं। अथ गत्यभावाद्द्वादशीवाक्यस्य स्मरणशास्त्रावान्तरविषयत्वं कल्पयित्वापवादः क्रियते, हन्त यतिशास्त्रावान्तरविषयतां कल्पयित्वोपसंहारः कथं नाम नेष्यते। नन्वपवादपक्षे उत्सर्गापवादयोर्विषयद्वयसद्भावाद्वाक्यद्वयं सार्थकं, उपसंहारपक्षे उपसंहृतैकविषयत्वाद्वाक्यद्वयमनर्थकं प्राप्नोति, सत्यं विषयद्वयाभावेऽपि विधिद्वयसद्भावात् सार्थकत्वमेव। तथापि उपसंह्रियमाणं स्वरूपमेकेन विधीयते तदुपसंहारस्त्वपरेण। ननु "ब्राह्मणेभ्यो दधि दीयतामित्यस्य शास्त्रस्य "गर्गेभ्यो दीयतामित्युपसंहारकं, तत्र गर्गशास्त्रमात्रे सति यावदनुष्ठानं तावदेव ब्राह्मणशास्त्रेऽपि सति तत्रापि गर्गविषय एवोपनिमज्जनात् गर्गदधिदानानुष्ठानानतिरेकात् तस्माद्ब्राह्मणशास्त्रमल्पप्रयोजनं। अपवादपक्षे तु न विशेषशास्त्रेण ब्राह्मणेभ्यो दधि षिध्यते। नापि सामान्यशास्त्रमात्रेण कौण्डिन्याय तक्रं प्राप्यते तस्माच्छास्त्रद्वयं सप्रयोजनमिति। उच्यते उपसंहारपक्षे शास्त्रद्वयमर्थवत् एकेन दधि विधीयते गर्गसंबन्धोऽपरेण, सामद्वयादावप्यनारभ्याधीतेन वाक्येन सामद्वयस्य द्वारभूतयाभिधेनीसंबन्धः कल्प्यते,

अतः शास्त्रद्वयमर्थवत्। यत्तु विशेषशास्त्रे सति यावदनुष्ठानं तावदेवोभयस्मिन्नपि सतीत्यानर्थक्यमुच्यते, न दध्ना जुहोतीत्यादावपि समं वक्तुं। तथाहि अग्निहोत्रं जुहोतीत्युत्पत्तिविधिमङ्गीकृत्य दध्ना जुहोतीत्यस्मिन् विशिष्टविधावाश्रीयमाणे यावदनुष्ठानं तावदेवोत्पत्तिः विनियोगभेदेनोभयस्मिन्नाश्रीयमाणेऽपीत्युत्पत्तिविधिरनर्थकः प्राप्नोति, तस्मादेकैकविधानेनानेकशास्त्रोपपत्तौ नैकमस्तके वज्रभारः आरोपणीय इति, प्रत्युतानुष्ठानभेदमाक्षिपतोः शास्त्रयोर्वा सप्रयोजनत्वं लभ्यते, तदेव तर्हि साम्यं तस्मादपवादोपसंहारयोरन्यतरानवधारणादुभयपरत्वे वाक्यभेदप्रसङ्गात् न द्वादशीवाक्यस्यैतद्विषयत्वमिति सर्वदेव गृहस्थस्य पूर्वैकादशी यतेरुत्तरैवेति सिद्धं। द्वादशीवाक्यस्य तर्हि कोविषयः अत्र ब्रूमः तथाहि वानप्रस्थादयः किं पूर्वामुपवसेयुः उतोत्तरां अथोभयामिति सन्देहे व्यवस्थाप्यते परतो द्वादशीसद्भावे उत्तरामुपवसेयुरन्यथा पूर्वामिति। एवमपेक्षितार्थविधानाद्वाक्यस्य कृतार्थता भवति इतरस्यापि वाक्यस्य सङ्कोचः परिहृतो भवति। तदेतत् पिकाख्यमच्छनमतं।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
सर्व्वैरेवोत्तरा कार्य्या परतो द्वादशी यदि॥

इति नारदवचनाद्दर्शननिबन्धनमित्युपेक्षणीयं।

एकादशी विष्णुना चेद्द्वादशी परतः स्थिता।
उपोष्या द्वादशी तत्र यदीच्छेत् परमं पदम्॥

'विष्णुः' द्वादशी, सहार्थे तृतीया द्वादशीयुक्तेत्यर्थः।

ब्रह्मपुराणेऽपि।

आद्यन्तैकादशी पूर्वा द्वादशाच तथा यत ।
परेऽहनि तथा कुर्य्याद्द्वादश्यामर्च्चनादिकम् ॥

अथ पूर्वा दशमीविद्धैकादशी त्रिविधा रात्रिशेषे द्वादशीयुक्ता परेयुर्द्वादश्यां वर्त्तमाना च तथाद्या सर्व्वैरुपोष्या ।

तथाच नारदः ।

दशमीशेषसंयुक्ता नोपोष्या द्वादशी तिथिः ।
एकादश्यां रात्रिशेषे द्वादशी चेन्न दृश्यते ॥
यदि दैवात्तु संविद्धैकादश्यां तिथिक्षयं ।
तत्र क्रतुशतं पुण्यं द्वादशीपारणे भवेत् ॥

कूर्मपुराणेऽपि ।

त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
तामेवोपवसेत्काममकामो विष्णुतत्परः ॥

दशमीं द्वादशीञ्च वा स्पृशति चैकादशी 'त्रिस्पृक्' ।

पद्मपुराणेऽपि ।

एकादशी दशाविद्धा परतो न च वर्द्धते ।
यतिभिर्व्वैष्णवैश्चैव सैवोपोष्या सदा तिथिः ॥
दिनक्षयेऽपि शुद्धद्वादश्युपवासविधानं मुमुक्षुविषयं ।

तथाच सुमन्तु-सत्यव्रतौ ।

दिनक्षयेऽपि शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः ।
उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा ॥

शारदापुराणे ।

उपोष्या द्वादशी शुद्धा एकादश्यां दिनक्षये ।

मुमुक्षुभिर्दशमीविद्धा नोपोष्यैकादशी तिथिः ॥

यत्तु वचनं भविष्यत्पुराणे ।

दिनक्षयवती जाता तिथिरेकादशी यदि ।
प्रथमा तत्र नोपोष्या उपोष्या चोत्तरा भवेत् ॥

तत्पूर्ववाक्यपर्य्यालोचनया मुमुक्षुविषयम् ।

दिनक्षये तु सम्प्राप्ते सम्पूर्णा वासरद्वये
विप्रविद्धा द्वादशी राजन् समुपोष्या भवेत्तदा ॥

इति विष्णुपुराणे वचनमपि तद्विषयं ।

स्कन्दपुराणे ।

एकादश्यां प्रदृश्येत दशमी घटिका अपि ।
द्वितीयेऽह्नि न चाप्नोति यदा चैकादशी तिथिः ॥
उदयेन यदा यामोस्तदा कार्य्या च या तिथिः ।
तदा कार्य्या च विद्वद्भिर्दशमीसंयुता तिथिः ॥
तिथिक्षये तु वेलापि न दुष्टौ तु कथञ्चन ।
वृद्धौ परा तु कर्त्तव्या क्षये पूर्वान्तु कारयेत् ॥

पद्मपुराणेऽपि ।

दिनक्षये कृते देवि नोपोष्या दशमीयुता ।
सैवोपोष्या तदा पुण्या परतश्चेत् त्रयोदशीति ॥

द्वादश्यां यदि त्रयोदशीत्यर्थः ।

निगमेऽपि ।

पूर्वविद्धा न कर्त्तव्या यद्येकादश्यपाष्टमी ।
एकादशीन्तु कुर्वीत(१) क्षीयते द्वादशी यदि ॥

---

(१) कुर्य्यादिति ख० ।

अपरे तु परेऽहनि चेच्छुद्धा त्रयोदशी न द्वादशी किञ्चिदस्ति तदा दिनक्षयाभावाद्दिनक्षयेऽपि दशमीयुतोपोष्येति यदाग्रभवतो वचनस्यार्थ इत्याहुः। यदा तस्मिन्नेव विषये द्वादश्यां त्रयोदशी नास्ति किन्तु द्वादश्युदयपर्य्यन्ता तदापि दशमीविद्धैकादश्युपोष्या।

तथाच स्कन्दपुराणे।

एकादशी यदा विद्धा सकला द्वादशी भवेत्।

ऋष्यशृङ्गः।

एकादशी न लभ्येत सकला द्वादशी भवेत्।

अनयोरुत्तरार्द्धम्।

उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्।
अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्या चैकादशी तिथिः।
तदूर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः॥

केचिदेवं व्याचक्षते। निषिद्धैर्मुहूर्त्तैरविद्धानि त्रीणि यदि न लभ्यन्ते तदैकादशी त्रिभिर्द्वाभ्यां वा मुहूर्त्ताभ्यां विद्धा ग्राह्यैव यतस्तयोरपि संख्ययोर्लाघवार्थं पञ्चशब्देनाभिधानं, न त्वेतदुपपद्यते एवंविधे विषये द्वादश्यामेकादश्यभावात्। न च तस्यां लभ्यमानायामपि दशमीविद्धा ग्राह्येति क्वचित् श्रूयते इति। तदयुक्तं दशम्यामरुणोदयवेधान्तर्भावेन मुहूर्त्तपञ्चवेधषड्घटिकात्मके च पक्षे द्वादश्यामेकादश्यभावेन त्रयोदश्यां च द्वादश्यभावेनोभयवाक्यपर्यालोचनया दशमीयुताया अपि ग्राह्यत्वोपपत्तेः। तथाच त्रिस्पृशायामुपवासोऽपेति।

तथा ।

पारणाहे न लभ्येत द्वादशी कलयापि चेत् ।
तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः ॥

हारीतोऽपि ।

त्रयोदश्यां यदा न स्याद्द्वादशी घटिकाद्वयम् ।
दशम्येकादशीविद्धा सैवोपोष्या यदा तिथिः ॥

विष्णुरहस्ये ।

दशमीशेषसंयुक्ता उपोष्यैकादशी तदा ।
यदा न स्यात् त्रयोदश्यां मुहूर्त्तं द्वादशी तिथिः ॥

स्मृत्यन्तरे ।

पूर्वविद्धा न कर्त्तव्या षष्ठी चैकादशी तथा ।
विद्धाप्येकादशी कार्य्या परतो द्वादशी न चेत् ॥

भविष्यत्पुराणे ।

दशम्या सह संयुक्ता उपोष्यैकादशी तदा ।
यदा न स्यात् त्रयोदश्यां द्वादशी घटिकाद्वयम् ॥

पुराणान्तरे ।

त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन ।
उपोष्यैकादशी तत्र दशमीमिश्रितापि वा ॥

स्मृत्यन्तरे ।

उपोष्या दशमी तत्र द्वादशीं न लभेद्यदि ।
दशम्यापि हि मिश्रैव एकादश्येव धर्मजत् ॥
द्वादशी स्वल्पमत्यापि यदि न स्यात्परेऽहनि ।

दशम्या मिश्रिता कार्य्या न दोषोऽस्तीति वैष्णवः ॥
वचनमिति शेषः ।
विष्णुरहस्ये ।
मुहूर्त्तं द्वादशी न स्यात्त्रयोदश्यां यदा द्विजे ।
उपोष्या दशमीमिश्रा यदैवैकादशी तिथिः ॥
तथा ।
यदि न स्यात्त्रयोदश्यां मुहूर्त्तं द्वादशी तिथिः ।
दशम्येकादशीयुक्ता ह्युपोष्या भवेत्तदा ॥
दक्षयमिष्ठोऽपि ।
द्वादशी स्वल्पमात्रापि यदि न स्यात्परेऽहनि ।
दशमीमिश्रिता कार्य्या महापातकनाशिनी ॥
यदार्कोदयमात्रापि द्वादशी स्यात्परेऽहनि ।
त्रयोदश्यां तदा कार्य्या दशमीशेषसंयुता ॥
एकादशी द्वादशी च क्षये यदि दिनत्रयम् ।
न द्वादशी परे चैव कर्त्तव्या दशमीयुता ॥
पुराणात् ।
मिश्रितापि न कर्त्तव्या दशम्येकादशी यदा ।
मिश्रितापि हि कर्त्तव्या न विन्देद्द्वादशीं यदि ॥
उपोष्या पारणे प्राप्ते न विन्देद्द्वादशीं यदि ।
दशम्यापि हि विद्धा स्यादेकादश्येव पुण्यभाक् ॥
विद्धाप्येकादशी यत्र द्वादशी चैव लभ्यते ।
द्वादश्यादशीर्वर्ज्जि त्रयोदश्यां तु पारणे ॥

अत्र च मुहूर्त्तद्वयघटिकाग्रहणमविवक्षितं "कलयापि चेत्" "क्षणमप्यपि चेदिति वचनान्तरेऽभिधानादिति केचित्। अपरे त्वाहु "कलयापि चेदिति वाक्यं मुमुक्षुविषयं।

त्रिकलायां तु द्वादश्यां पारणं यः करोति चि।
तामुपोष्य महीपाल न गर्भे म्रियते नरः॥

इति लिङ्गात्। सर्वविषयत्वे च।

चयोदश्यां यदा राजन् द्वादश्यास्तु कला भवेत्।
सा तिथिः सकला चेति वसिष्ठः प्राह धर्मवित्॥

इति साकल्योत्क्रानर्थक्यापत्तिः, मुहूर्त्तादिग्रहणं च विवक्षितं स्यात्।

अन्ये तु।

दिवाभागद्वयादूर्द्ध्वमा निशीथात्तु चेन्निशि।
द्विजभोजनकालोऽयं बाल-वृद्धातुरं विना॥

इति च मुहूर्त्तद्वयात् प्राग्दिवाभोजननिषेधस्य नित्यस्य द्वादशीमध्यपारणनियमेन काम्यत्वं विना मोक्षकामैकादश्युपवासविषये सावकाशेन बाधायोगान्मुमुक्षुमात्रविषयमेतत्, न सर्वचयोदशीविषयत्वमिति वर्णयन्ति। एतच्च पुत्रवद्गृहस्थव्यतिरिक्तविषयं पुत्रवद्गृहस्थस्य त्र्यहस्पृगेकादशीदिनत्रये प्रतिषिद्ध उपवासः। तथाच

एकादशीदिनत्रये उपवासं करोति यः।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा॥

न च दिनत्रयनिमित्तोपवासस्यायं निषेध इति वाच्यम्। एकादशीशब्दवैयर्थ्यप्रसङ्गात्। न चायं दोषाधिक्यप्रदर्शनार्थमिति वाच्यम्। दोषाधिक्यानभिधानात् दिनत्रयस्य जैमिनिवचनेन का-

त्यायनवचनेन वा प्राकृतत्वेन सर्वेषामेवा परामर्शानुपपत्तेः ।

तथा हि जैमिनिनोक्तम् ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ।
पारणं चोपवासञ्च न कुर्य्यात्पुत्रवान् गृहीति ॥
तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो ग्राह्यो यतोनित्यमुपोषणम् ॥

कात्यायनेनापि ।

एकादशीषु कृष्णासु रविसंक्रमणे तथा ।
चन्द्र-सूर्य्योपरागे च न कुर्य्यात्पुत्रवान् गृहीति ॥
तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः ।
प्रयुक्तेतरयुक्तस्य(१) न विधिर्न निषेधनम् ॥

पितामहोऽपि ।

एकादशीदिनक्षये उपवासं करोति यः ।
तस्य पुत्त्रा विनश्यन्ति मघायां पिण्डदो यथा ॥
दिनक्षये तु सम्प्राप्ते नोपोष्या दशमीयुता ।
यदीच्छेत्पुत्र-पौत्त्राणां वृद्धिमन्यदमात्मनः ॥

एवं पुत्त्रवद्गृहस्थिनः पूर्व्वेद्युः प्रतिषिद्धे सति उपवासे व्रतालोपार्थं श्वश्वुद्वादश्यामेवोपवासः ।

व्यासोऽपि ।

एकादशीदिनक्षये उपवासो तु चेद्गृही ।
भार्य्याभावेऽथवाङ्गे वा सङ्कल्पाद्वा विशेषतः ॥

---

(१) प्रयुक्तान्तरयुक्तस्येति ख० ।

धर्महानिश्च भवति सन्ततिर्नश्यति ध्रुवम् ।
तस्यायुः क्षीयते नित्यं संवत्सरमिति श्रुतेः ॥

तथा ।

एकादशीषु कृष्णासु रविसंक्रमणे तथा ।
पारणञ्चोपवासञ्च न कुर्य्यात्पुत्रवान् गृही ॥

तथाच गोभिलः ।

एकादश्यां यदा ब्रह्मन् दिनक्षये तिथिर्भवेत् ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

पितामहोऽपि ।

एकादश्यां यदा वत्स दिनक्षये तिथिर्भवेत् ।
तत्रोपोष्या द्वादशी स्यात् त्रयोदश्यान्तु पारणम् ॥

नारदीयपुराणे ।

क्षये वाप्यथ वा वृद्धौ सम्प्राप्ते च दिनक्षये ।
उपोष्या द्वादशी पुण्या त्रयोदश्यान्तु पारणम् ॥

कूर्म्मपुराणेऽपि ।

दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत् ।
दशमीशेषसंयुक्तां न कुर्व्वीत कदाचन ॥

तथा ।

तिथिवृद्धौ तथा ह्रासे संप्राप्ते वा दिनक्षये ।
वह्निवेशेषु च मासेषु द्वादशीं समुपोषयेत् ॥ इति ।

भविष्यपुराणे ।

दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता ।
उपोष्या द्वादशी शुद्धा[१] त्रयोदश्यान्तु पारणम् ॥

ब्रह्मपुराणे ।

तिथिच्छेदे तु संप्राप्ते द्वादश्यां समुपोषणम् ।
पारणन्तु त्रयोदश्यां यदीच्छेत् श्रेयमात्मनः ॥
एकादशी विनष्टा चेद्द्वादश्यामनुपोषणम् ।
उपोष्य पार्थयेद्विष्णुमुभयोरपि पक्षयोः ॥
जपे होमे तथा दाने ब्राह्मणानाञ्च तर्पणे ।
पारणे चापि राजेन्द्र प्रशस्ता च त्रयोदशी ॥

कूर्म-नारदीय-मार्कण्डेयपुराणेषु च ।

कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ॥

स्कन्दपुराणेऽपि ।

अर्द्धं हरिदिनं न स्यात् द्वादशीं पालयेत्ततः ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ॥
एवं कुर्व्वन्नरोभक्त्या विष्णुसायुज्यमाप्नुयात् ।
अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम् ॥
एकादशी यदा विद्धा परतोऽपि न वर्त्तते ।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥

तथा ।

---

(१) शुद्धेति ग० ।

एकादशी चवीणां तु द्वादशी चक्रपाणिनः ।
एकादशी यदा न स्यादुपोष्या द्वादशी तदा ॥

तथा ।

द्वादश्यामुपवासोऽत्र चयोदश्यां तु पारणम् ।

भविष्यत्पुराणे ।

पूर्व्वविद्धामुपासे कोऽनन्त्यां वेदवचादपि ।
कोवेदवचनात्तात गोसवे गां निहन्ति वै ॥
दशमीशेषसंयुक्तमाश्रयेत्को व्रतं व्रती ।
तस्मादेकादशी त्याज्या दशमीशेषसंयुता(१) ।
उपोष्या द्वादशी शुद्धा चयोदश्यां तु पारणम् ॥

यदा तस्मिन्नेव विषये द्वादश्यां चयोदश्यस्ति तदा द्वादश्यामेवोपवासः ।

तथाच व्यासः ।

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ॥

'लुप्ता' क्षयं गता। 'परतः' चयोदश्यामित्यर्थः । यदा दशमीविद्धैकादशी उदयमाचं प्राप्ता द्वादश्यां नास्ति द्वादशी तु चयोदश्यां विद्यते तदा शुद्धद्वादश्यामेवोपवासः ।

तथाच नारदीयपुराणे ।

शुद्धा तु द्वादशी राजन् यदुपोष्या यदा तिथिः ।

(१) दशमीपञ्चमाश्रितेति ख० ।

दशम्येकादशीमिश्रा न कर्त्तव्या कदाचन ॥

पद्मपुराणेऽपि ।

दशमीगर्भिता पूर्वा मुक्तैकादशी परा ।
उपोष्या द्वादशी तत्र न दशम्या कथञ्चन ॥
पञ्चार्द्धेनापि विद्धा च दशम्येकादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥ इति ।

नारदीयपुराणेऽपि ।

यदा न प्राप्यते विद्धा द्वादश्यां पूर्वसम्भवा ।
तदोपवासो हि कथं कर्त्तव्यो मानवैर्वद ॥
उपवासदिनं विद्धं यदा भवति पूर्वया ।
द्वितीयेऽह्नि यदा न स्यात् सम्पाद्यैकादशी तिथिः ।
तत्रोपवासो विहितः कथं तद्वद सूतज ॥

सूत उवाच ।

यदा न प्राप्यते विप्रा द्वादश्यां पूर्ववासरः ।
रविचक्रार्द्धमात्रोऽपि तदोपोष्यं परं दिनम् ॥
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् ।
निर्गता चेत्त्रयोदश्यां कला वा त्रिकलापि वा ॥

ब्रह्मवैवर्त्ते ।

एकादशी द्वादशी च तत्र सन्निहितो हरिः ।
तेन शुद्धापि कर्त्तव्या द्वादशीफलकाङ्क्षिभिः ॥
एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमम्पदम् ॥

अथ यदीत्यर्थवादमाभ्युदाहृतवचनविषयपर्य्यालोचनया सर्वेषां द्वादश्युपवासावगमात्। यदा तु दशमीविद्धैकादशी अरुणमात्र-पर्य्यन्ता द्वादशी च समा न्यूना वा तदा स्थितिवाम् पूर्व्वोपवासः।

स्कन्दपुराणे।

पारणाहे न लभ्येत द्वादशी यदि किञ्चन।

ऋष्यशृङ्गः।

पारणाहे न लभ्येत द्वादशी कलयापि चेत्।

मत्स्योत्तरार्द्धे।

तदानीं दशमीविद्धा उपोष्यैकादशी तिथिः।

पद्मपुराणे।

विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत्।<br>
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्॥<br>
विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत्।<br>
अविद्धापि तथा विद्धा परतो द्वादशी यदि॥

हारीतोऽपि।

त्रयोदश्यां यदा न स्यात् द्वादशी घटिकाद्वयम्।<br>
दशम्येकादशीमिश्रा सैवोपोष्या तदा तिथिः॥

तत्त्वसागरसंहितायामपि।

दशम्येकादशी चेत् नोपोष्या या शुभापहा।<br>
सैवोपोष्या कलाकाष्ठा द्वादश्यां चेन्न विद्यते॥

भविष्ये।

एकादशी कलाप्येका परतो न च वर्द्धते।

ऋषिभिः पुत्रवद्भिश्च सैवोपोष्या तदा तिथिः ॥

अस्मिन्नेव विषये यत्याद्येर्मुमुक्षोरुत्तरैवेोपवासः ।

तथाच विष्णुरहस्ये ।

दशमीमिश्रिता पूर्वा कुर्यात्तेकादशी परा ।
एकादश्यां महाभाग उपवासः कथं भवेत् ॥
शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः ।
पारणञ्च त्रयोदश्यां तत्र क्रतुशतं भवेत् ॥
यदैव दशमीविद्धं भवत्येकादशीदिनम् ।
उपोष्या तु तदा शुद्धा द्वादशी मोक्षकाङ्क्षिभिः ।
पारणन्तु त्रयोदश्यां तथाश्वमेधफलं भवेत् ॥

यान्येतानि वचनानि कूर्म-पद्मपुराणयोः ।

एकादशी दशाविद्धा परतो द्वादशी न चि ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणे ।

एकादशी दशाविद्धा द्वादशी न च वर्द्धते ।
तदोपोष्या द्वादशी स्यात्त्रयोदश्यान्तु पारणमिति ॥

तान्युदाहृतवाक्यपर्य्यालोचनया मुमुक्षुविषयाणि। यदा तु दशमीविद्धैकादशी द्वादश्यां विद्यते द्वादशी चोदयपर्य्यन्ता विद्यते च तदा द्वितीयैवोपोष्या नित्या काम्या च ।

तथाच नारदः ।

द्वादश्येकादशी यत्र सम्पूर्णा विद्यते धिप ।
तामुपोष्य ततः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणेऽपि ।

एकादशीकला यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणे च ।

एका तिथ्या समायुक्ता याति वृद्धिं परा तिथिः ।
द्वादशी पारणार्थं च शोषोक्तं पूर्ववासरम् ॥

बौधायनोऽपि ।

कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

पद्मपुराणेऽपि ।

द्वादशीमिश्रिता कार्य्या सर्वत्रैकादशी तिथिः ।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥

तथा ।

सर्वत्रैकादशी कार्य्या द्वादशीमिश्रिता नरैः ।
प्रातर्भवतु वा मा वा यतोनित्यमुपोषणम् ॥

तत्त्वसागरसंहितायामपि ।

द्वादश्येकादशी यत्र सम्पूर्णा पितृराधिप ।
तामुपोष्य ततः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

नारदः ।

द्वादश्येकादशी यत्र द्वादशी परतोऽपि च ।
द्वादश्यां पारणं कुर्य्यात् क्रतुकोटिफलं लभेत् ॥

ब्रह्मपुराणेऽपि ।

द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

पद्मपुराणेऽपि ।

एकादशीकलायुक्ता येन द्वादश्युपोषिता ।
किं तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप ॥
एकादशी द्वादशी च तत्र सन्निहितो हरिः ।
उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ।

तत्त्वसागरसंहितायाम् ।

द्वादश्येकादशी यत्र सम्पूर्णा विदशाधिप ।
तामुपोष्य ततः कुर्यात् त्रयोदश्यान्तु पारणम् ॥
द्वादश्येकादशी यत्र परतो न त्रयोदशी ।
उपोष्या द्वादशी भक्त्या द्वादश्यामेव पारणम् ॥

किञ्चैवं विविधविषये द्वितीयैव ग्राह्या दशमीविद्धाया निषेधात् ।

तथाच स्कन्दपुराणे ।

तस्मात् सर्वप्रयत्नेन पूर्वविद्धां विवर्जयेत् ।

नारदीयपुराणे ।

पूर्वविद्धा न कर्त्तव्या तृतीया षष्ठ्यपि द्विज ।
अष्टम्येकादशीभूता धर्म-कामार्थमोक्षिभिः ॥

अथैकादश्यादयः परविद्धा उपोष्याः प्रतीयन्ते विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्, अन्यथा नोपोष्या इति वाच्यं, न तु पूर्वविद्धा नोपोष्येति परविद्धैकादश्युपोष्येति वचनाच्च ।

तथाच सुमन्तु-सनत्कुमारौ ।

तृतीयैकादशी षष्ठी चतुर्थी च चतुर्दशी ।
अमावास्याष्टमी चैव ता उपोष्याः परान्विताः ॥

नारदापुराणे ।

एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी ।
तृतीया च चतुर्थी च अमावास्याष्टमी तथा ।
उपोष्याः परसंयुक्ता नोपोष्याः पूर्वसंयुताः ॥

पैठीनसिः ।

एकादशी तथा षष्ठी शुक्लपक्षे चतुर्दशी ।
तृतीया च चतुर्थी च ता उपोष्याः परान्विताः ॥

यदा च दशमीविद्धैकादशी द्वादश्यां च कियन्मात्रा विद्यते रात्रिशेषे च त्रयोदशी तदा शुक्लव्यतिरिक्तानां तत्रोपवासः ।

तथाच पद्मपुराणे ।

द्वादशीसंयुता तत्र भवत्येकादशी कला ।
दिनक्षयेऽपि सा पुण्या दशम्या न कथञ्चन ॥
त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम् ॥

नारदीयपुराणादौ ।

एकादशी द्वादशी च रात्रिशेषे(१) त्रयोदशी ।
उपवासः प्रशस्तोऽसौ यत्रैवं पूज्यते तिथिः ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।

---

(१) विशेषेति ग० ।

पिशाचा नाम या प्रोक्ता ब्रह्महत्यां व्यपोहति ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।
य उपास्ते सदा भक्त्या स नरो दिवि मोदते ॥
एकादशीकलाप्युक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यान्तु यो भुङ्क्ते तस्य विष्णुः प्रसीदति ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

कूर्मपुराणे ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ॥
उपवासः कृतस्तस्यां सर्वपातकनाशनः ।
एकादशी द्वादशी च विशेषेण त्रयोदशी ॥

इति पुराणात् ।

एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
दिनक्षयेऽपि सा पूज्या दिवसत्रयपरेऽपि ॥

स्कान्देऽपि ।

द्वादशीसंयुता यत्र भवत्येकादशी तिथिः ।
दिनक्षयेऽपि सा पूज्या न दशम्या कथञ्चन ॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
सोपोष्या च प्रयत्नेन महापुण्यविवर्द्धनी ॥

भविष्यत्पुराणे ।

एकादशी कलाप्येका द्वादशी सकलं दिनम् ।

चयोदशी उषःकाले वैष्णवस्याहिनचयम् ।
सर्वपापहरं प्रोक्तं तदुपोष्यमिति स्मृतिः॥

स्कन्दपुराणे ।

एकादशी कलायुक्ता द्वादशी चीयते यदा।
उपोष्या च महापुण्या सर्वपापहरा तिथिः॥

सुमन्तुः ।

एकादशी कलायुक्ता द्वादशी लुप्यते यदा ।
एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः॥

अस्मिन् विषये पुत्रवतो गृहस्थस्य उपवासो निषिद्धः।

तथा पद्मपुराणे ।

एकादशी द्वादशी च रात्रिशेषे चयोदशी ।
तत्र चयहस्पृगश्चोराचं नोपोष्यं तत्सुतार्थिभिः॥

कूर्मपुराणे।

एकादशी द्वादशी च विशेषेण चयोदशी ।
उपवासं प्रकुर्वीत पुत्र-पौत्रसमन्वितः॥
एकादशी द्वादशी च रात्रिशेषे चयोदशी ।
द्वादश्य द्वादशीर्हन्ति चयोदश्यान्तु पारणम्॥

इत्यपि तद्विषयं। तस्यैवोपवासनिषेधे सति तस्मिन्नेव दिने उपवासप्रत्याम्नायत्वेन नक्तं विहितं वृद्धशातातपेन।

दशम्येकादशीविद्धा द्वादशी च चयं गता।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते इति॥

प्रचेताः ।

एकादशी द्वादशी च तन्मध्ये च चयोदशी ।
तत्र स्नानं जपं होमं कृत्वा ब्राह्मणवाचनम् ।
निर्वर्त्य द्वादशीकर्म ततो नक्तेन वर्त्तयेदिति ॥

विष्णुधर्मोत्तरे ।

एकादशी यदा विद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

स्कन्दपुराणे ।

एकादशीकला यत्र द्वादशी च क्षयं गता ।
तत्र नक्तं प्रकुर्वीत नोपवासो गृहाश्रमे ॥

पद्मपुराणे ।

एकादशीकलायुक्ता द्वादशी क्षीयते यदा ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

ननु "नोपोष्यं तत्सुतार्थिभिरिति सुतार्थिनां पुत्रकामानां उपवासप्रतिषेधोऽयं न निष्कामाणां गृहस्थानां कामान्तरयुक्तानां वा । तदसत् नायं पुत्रकामप्रतिषेधः किन्तु,—

त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।

इत्यादिवचनैरविशेषेण सर्वेषां तत्रोपवासे प्राप्ते "नोपोष्यं तत्सुतार्थिभिरित्यनेन निवार्य्यते पुरुषविशेषमात्रस्य, तथापि सुतार्थिशब्देन गृहस्थमात्रमभिधीयते, तस्य सुतार्थित्वं संभवतीति न स्वरूपेण सुतार्थिता यत्र विद्यते ।

दिनक्षयेऽपि सा पुण्या यतीनामुत्तमा तिथिः ।

इति यतेरेव तादृश्या उत्तमत्वाभिधानात् । तत्र यतिशब्दः

किं सुतार्थितारहितपरः सुतार्थिशब्दो वा सुतार्थित्वसद्भावनापर-
इति सन्देहे सुतार्थिशब्द एव सद्भावनापरो ग्राह्यः ।

उपरागे यतिः कुर्य्यात्पूर्वाभुपवसेद्गृही ।

इति गृहस्थमात्रस्य ।

उपवासं न कुर्वीत पुत्र-पौत्रसमन्वितः ।

इत्यनयोर्वाक्ययोरेकार्थत्वाय पुत्रसंबन्धिमात्रपरतैव युक्ता, पुत्र-
संबन्धित्वस्य गृहस्थादिना न सम्भवतीति तदपेक्षः, एतावतैवास्य
चरितार्थत्वे किमिति न विश्वनपेक्षितो वाक्यभेदापादको विशेषोऽ-
ङ्गीकर्त्तव्यः ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।
तस्मिन् स्नानं जपो होमो नोपवासो गृहाश्रमे ॥

इति गृहस्थमात्रस्य दिनक्षये निषेधदर्शनात् ।

अन्ये त्वाहुः ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
उपवासं न कुर्वीत पुत्र-पौत्रसमन्वितः ॥

इति वचनात् सुतार्थिभिरिति सामान्यसुतार्थित्वं पुत्र-पौत्र-
समन्वित इति विशेष उपसंह्रियते, पुत्रवतापि विष्णुप्रीत्यर्थं नक्तं वा
कार्य्यं भक्तं वा किञ्चिद्दत्त्वयित्वोपवासः कर्त्तव्यः ।

उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं भवेत् ॥

इत्यादिवचनानुरोधात् ।

अपरे त्वाहुः । अन्नोपसंहारमनुमन्यामहे न तु भक्ष्यप्रकल्पनं

"उपवासनिषेधे तु भक्ष्यमित्यस्य सामान्यशास्त्रस्यैकादश्यादिनक्तनक्त-विधायकविशेषशास्त्रेण बाधात् । तेन भक्ष्यप्रकल्पनमन्यत्र वेदितव्यं तच्चानेकप्रकारं ।

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यं ।
यत्पञ्चगव्यं यदि वापि वायुः
प्रशस्तमत्रोत्तरमुत्तरञ्चेति ॥

अन्ये त्वाहुः यदेतत् नक्तविधानं तत्सकामविषयं "नोपवासो गृहाश्रम इति काम्युपवासः प्रतिषिध्यते ।

एकादशीकला यत्र द्वादश्यनुगता भवेत् ।
लुप्यते द्वादशी तत्र नोपवासः फलार्थिनाम् ॥

इति वचनात् नित्योपवासनिषेधादिकल्पप्रसङ्गाच्च । तथा पुत्र-वद्गृहस्थविषये निषेधमपेक्ष्य पाक्षिकविधानत्वादितरविषये नित्य-वद्विधानमिति वैरूप्यं । काम्यं तु फलं रागादेव प्रवृत्तेर्निषेधो घटत इति विकल्पो नास्ति विधिव्यापारवैरूप्यं, पर्युदासे च सम्भवे युक्ते सति उपवासे च निषिद्धे सकामः किं कुर्य्यादित्यपेक्षितेन नक्तं विधातुं उचितं भवति ।

एवञ्च ।

एकादशीकलायैका द्वादशी यत्र लुप्यते ।
तत्रोपवासं कुर्वीत निष्कामो विष्णुतत्परः ॥

इति वचनमुपपन्नं भवतीति तदयुक्तं। पापपरिहारकाम विष्णुसायुज्यकाम-मुमुक्षूणामुपवासविधानात् ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ।
उपवासः कृतस्तस्यां महापातकनाशनः ॥
द्वादश्यान्तु यदा भूप दिनक्षयतिथिर्भवेत् ।
तदोपवासः कर्त्तव्यो विष्णुसायुज्यमाप्नुयादिति ॥

सायुज्यमिच्छतेति क्वचित्पाठः ।

एकादशी द्वादशी च रात्र्यन्ते च त्रयोदशी ।
उपवासः कृतस्तत्र मोक्षमेव प्रयच्छतीति ॥

तथा ।

दिनक्षये तु कर्त्तव्य उपवासो मुमुक्षुभिः ।

इति काम्यस्यापि विहितत्वेन विकल्पस्य तदवस्थत्वात् तथा हि विधेः प्रवृत्तिलक्षणा परिस्रुतेति, तस्माद्यथोक्तमेव न्याय्यः ।

अन्ये त्वाहुः । यदुच नक्तविधानं तदसामर्थ्यविषयं । न च विद्धाविद्धयोरशक्तस्याभावादेतद्विद्धाया नैमित्तिकविशेषविधानं तदसमर्थविषये असमञ्जसं स्यादिति वक्तव्यं । विद्धायां ह्येकभक्तादिरूपोपवासप्रत्याम्नायोदुर्घट एव प्रतीयते रात्रावुपवाससङ्कल्पविधानात् ।

विद्धोपवासेऽनशंस्तु दिनान्यक्त्वा समाहितः ।
रात्रौ संपूजयेद्देवं सङ्कल्पश्च तदाचरेत् ॥

तत्प्रत्याम्नायस्यापि स एव कालोयुक्तः एकभक्तकालस्यापी न भवति ।

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥

इति तस्य द्विवेव विहितत्वाच्चक्रमेव तदानीं भवतीति सम्यगुक्त-मसमर्थविषयमिदमिति युक्तं सामान्यतो दिनद्वयेऽस्मिन् दिनद्वय-विशेषे च पुत्रवतो गृहस्थस्योपवासनिषेधादनियमेन भक्तकल्पनायां प्राप्तायां नियमविधानार्थत्वेनाकाङ्क्षितसमर्पणेनार्थवेनैव वाक्यस्योप-पत्तेः तेन यथोक्तमेव साधु । एतेनैतन्निरस्तं ।

एकादश्यां तथा नक्तं द्विजः कुर्याद्यथाविधि ।
मार्गशीर्षशुक्लपक्षादारभ्याब्दं विधीयते ॥

इति वाराहपुराणोक्तविषयं द्वादशीक्षये नक्तविधानं एकादशी चेत्युदाहृतवचने पूर्वोपवासविधायकविरोधादिति सामान्यशास्त्रस्य विशेषशास्त्रेण बाधात् उपवासनिषेधे चाकाङ्क्षितसमर्पणेन वाक्यस्यो-पपत्तेः उत्पत्तिशिष्टैकादशीबाधप्रसङ्गाच्च ।

कलाप्येकादशी यत्र द्वादश्यनुगता भवेत् ।
दिनद्वयेऽपि सा पुण्या यतीनामुत्तमा तिथिः ॥

अत्र च यतिग्रहणं नेतरव्यावृत्त्यर्थं । तथा सति पुत्रवतो-गृहस्थस्य प्राप्त्यभावेन निषेधानुपपत्तेः । तेन यतीनां वैशिष्ट्यमात्र-प्रतिपादनपरमेतत् तद्युक्तं 'उत्तमेति' दिनद्वयेऽपीत्यपिशब्देन दिनद्वयमन्तरेणापि यतीनां द्वितीया चोत्तमेति दर्शितं ।

यत्तु व्यासशृङ्गवचनं।

पूर्वविद्धा न कर्त्तव्या षष्ठ्येकादश्यथाष्टमी ।
एकादशीन्तु कुर्वीत क्षीयते द्वादशी यदीति ॥

तच्छुद्धिकाम-विष्णुसायुज्यकाम-मुमुक्षुयतिरिक्तविषयं उदाहृत-वाक्यानुरोधात् ।

अविद्धानि निषिद्धैर्येन लभ्यन्ते दिनानि तु।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः।
तदर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः॥

'निषिद्धैः' दशम्यादिभिः, अविद्धान्येकादश्यादिदिनानि।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
उपवासं न कुर्वीत पुत्र-पौत्रसमन्वितः॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
अत्यल्पमहोरात्रं(१) नोपोष्यं तत्सुतार्थिभिः॥

इत्यादिवचनादुपोष्यत्वेन न लभ्यन्ते न स्वरूपेण चेत्यर्थः। यत्तु केचित् द्वादशीदिनक्षये दशमीविद्धां नित्यामेकादशीं ग्रहस्थः कुर्वीतेति वचनव्याख्यानं कृतं तदेवंविधवक्तृदोषे कारणाभावादयुक्तं। विद्धैकादश्युपवासप्रतिषेधवचनान्युदाह्रियन्ते।

तत्र वाशिष्ठसंहितायां।

दशम्येकादशी यत्र तत्र नोपवसेद्बुधः।
अपत्यानि विनश्यन्ति स्वर्गलोकं न गच्छति॥

ब्रह्मपुराणे ब्रह्मखण्डे।

उपोष्यैकादशीं मोहाद्दशमीशेषसंयुतां।
न नरः सुखमाप्नोति इह लोके परत्र च॥
धृतराष्ट्रेण मैत्रेयः पृष्ठ. प्राह नराधिपं।

---

(१) 'अत्यल्पमहोरात्रं' इति श्लोकचरणं छन्दोभङ्गदोषदुष्टं, दरन्तय-त्रिदिनस्पृगहोरात्रं इत्येव चरणं समीचीनं भाति।

यद्यर्थन्ते वियोगोऽभूत् पुत्राणां भार्य्यया सह ॥
पूर्वन्त्वया सभार्य्येण दशमीशेषसंयुता ।
कृता वैकादशी राजंस्तस्येदं कारणं मतं ॥
तस्मादेकादशी शुद्धा दशम्या नरसत्तम ।
न कर्त्तव्या प्रयत्नेन निष्फला द्वादशी यदि ॥
यथा चैकादशी राजन् द्वादशी च तथा नृणां ।
समाना तत्फला प्रोक्ता व्रतेऽस्मिंश्चक्रपाणिनः ॥
न चाहं स्वैरिणी भार्य्या न चाहमपतिव्रता ।
न चेह कलुषं येन किं पापं त्वन्यजन्मनि ॥
रामपत्न्या वचः श्रुत्वा वाल्मीकिर्मुनिपुङ्गवः ।
चिरन्ध्यात्वा महाराज तामुवाचेदृशं वचः ॥
दशम्येकादशीं पूर्व्वां समुपोष्य जनार्द्दनः ।
अभ्यर्चितस्त्वया देवि तस्येदं कर्म्मणः फलं ॥
उपोष्यैकादशी शुद्धा नोपोष्या दशमीयुता ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणं ॥
वशिष्ठः समुवाचेदं पृष्टोमान्धातृभार्य्यया ।
दशम्येकादशी देवि पुरा चोपोषिता त्वया ॥
तेन ते कर्म्मणा चेह सभर्त्तृसुत-बान्धवैः ।
वियोगं समनुप्राप्ता सत्यं विद्धि पतिव्रते ॥
यानि कानीह पापानि त्रैलोक्ये सम्भवन्ति वै ।
तेषां स्थानं दशम्या वै सहैवैकादशी मता ॥
सप्तजन्मकृतं पुण्यं नश्यते नात्र संशयः ।

दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशश्च परे तु नरकं व्रजेत् ॥
गोपोष्या दशमीविद्धा यदा चैकादशी तिथिः ।
तामुपोष्य नरो जह्यात् पुण्यं वर्षशतोद्भवं ॥

तथा ।

दशम्याश्चैव विद्धायामेकादश्यामुपोषितः ।
तस्यायुः क्षीयते नित्यं नारदोऽहं ब्रवीम्यदः ॥
सत्यं सत्यं विनश्येत सन्ततिस्तु न चान्यथा ।
दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशः स्यात् परे तु नरकं व्रजेत् ॥

तथा ।

मुहूर्त्तेनापि संयुक्ता दशम्येकादशी तथा ।
तामुपोष्य नरो मोहात् सुखाद्धर्माच्च क्षीयते ॥

कूर्म्म-नारदीयपुराणयोः विष्णुरहस्ये च ।

दशमीशेषसंयुक्तामुपोष्यैकादशीं किल ।
संवत्सरकृतेनेह नरो धर्म्मेण लुप्यते ॥
दशमीशेषसंयुक्ता गान्धार्य्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

ब्रह्मवैवर्त्तेऽपि ।

दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीफलं तस्य नश्येद्द्वादशवार्षिकमिति ॥
यैः कृता दशमीविद्धा विद्याकोपेन मानवैः ।

ते गता नरकं घोरं युगान्येकोनविंशति(१) ॥

सौरधर्मोत्तरे ।

एकादशीमुपोष्येतद्द्वादशीमथवा पुनः ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

भविष्यत्पुराणे ।

पूर्णाविद्धां पश्चार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
यदीच्छेदात्मनस्त्राणं चतुर्षु नियमेष्वपि ॥
नोपोषितव्यं नक्तञ्च नैकभक्तमयाचितं ।
नन्दायां पूर्वविद्धायां कुर्य्यादिष्टमभीप्सते ॥

ब्रह्मवैवर्त्तेऽपि ।

दशम्या यत्र शेषस्तु एकादश्यां भवेद्यदि ।
सा तिथिः सकला शेया दशमीकालमिश्रिता ॥
गङ्गोदकस्य सम्पूर्णं यथा लाव्यघटं भवेत् ।
सुराबिन्दुसमायुक्तं तत्सर्वं मद्यतां भजेत् ॥
हलाहलं विषं रौद्रं कः पिबेन्मूढधीर्नरः ।
दशमीशेषसंयुक्तं क उपोष्यति सद्व्रती ॥
एवं ज्ञात्वा मुनिश्रेष्ठ दशमीशेषसंयुता ।
वर्जिता मुनिभिः सर्वैर्वासुदेवमभीप्सुभिः ॥

नारदीयपुराणे ।

लववेधेऽपि विप्रेन्द्र दशम्येकादशी यदा ।
सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ॥

---

(१) युगान्येकोनचत्वारीति ख० ।

प्रसूतौ पञ्चगव्यञ्च दशम्यां दूषिताम्बरेत् ।

तथा ।

एकादशीमुपोष्य स्याद्दशम्या दशमीयुतां ।
दशमीमिश्रिता हन्ति फलमेकादशीकृतं ॥

कौशिकः ।

दशम्येकादशीविद्धा सुरैश्वर्य्यविनाशिका ।

पैठीनसिः ।

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा तत्र नोपवसेद्बुधः ॥

वार्त्तायनिः ।

भूतविद्धा त्वमावास्या दशम्येकादशीयुता ।
दशाविद्धा तु वामयं हन्ति पुण्यं पुराकृतं ॥

गारुड़पुराणेऽपि ।

विद्धामेकादशीं विप्रास्त्वजन्त्येतां मनीषिणः ।
तस्यामुपोषितोयाति दारिद्र्यं दुःखमेव च ॥

स्कन्दपुराणे ।

द्वापरान्ते तु गान्धारी कुरुवंशविवर्द्धिनी ।
करिष्यति च येनासीर्मूढ़भावाच्छिविभ्रम ।
तेन पुत्रशतं तस्या नाशमेष्यत्यसंशयम् ॥
एवं नन्दा न कर्त्तव्या दशमीसंयुता विभो ।
कला काष्ठापि या चैव दृश्यते दशमी विभो ।
एकादश्यां तु येनासीः कर्त्तव्या न कथञ्चन ॥

एतानि वाक्यानि विद्धैकादश्यनुष्ठानातिरिक्तविषयाणि ।
कौर्म्मेऽपि ।

अरुणोदयवेलायां विद्धा काचिदुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

भविष्यत्पुराणेऽपि ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
न तत्रैकादशी कार्य्या धर्म-कामार्थनाशिनी ॥

तथा ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
पापमूलं तदा ज्ञेयमेकादश्यामुपोषणम् ॥

तथा ।

अरुणोदये दशमी गन्धमात्रं भवेद्यदि ।
दूष्यं तत्प्रयत्नेन वर्ज्जनीयं नराधिप ॥

नारदीयपुराणे मोहिनीवाक्यं ।

मोहिन्युवाच ।

दशम्याः प्रान्तमादाय यदोदेति दिवाकरः ।
तेन स्पृष्टं हरिदिनं तद्दत्तमसुराय वै ॥
सूर्य्योदयविहीनं हि दृश्यं दृश्यश्च लाघवं ।
दशम्यन्तं प्रयच्छन्ति स्पृष्टं हरिदिनेन हि ॥
अग्नेर्विहारकाले तु वध्योपस्थानके तथा ।
प्रातः सन्ध्योपकरणे पवित्रवेदने तथा ॥
विरामे सर्वदेवानां मार्ज्जनीयस्य तथा ।

द्वारोद्घाटनवेलायां स्नानकाल उपस्थिते ॥
यतीनां दीक्षितानाञ्च वादित्रनिनदे कृते ।
यथाक्रान्ता दशम्यथ एकादशीसमन्विता ।
प्रदीयतां निवासार्थं यद्यस्ति मयि चेद्दया ॥
न याचे नोदयं देवा न याचे तद्दिनं हरेः ।
वैनतेयोदयं मह्यं दीयतां सुरसत्तमाः ॥
दग्धा या मुनिना देवाः चीर्णा या सूर्यसूनवे ।
विश्रमार्थञ्च तुभ्यर्थं(१) एतत्प्रान्तं प्रदीयतां ॥

वशिष्ठ उवाच ।

तस्योक्षिन्या वचः श्रुत्वा सुराः सर्वे महीपते ।
सुमन्त्र्य सुचिरं कालं दिगम्बरपुरोगमाः ॥
धर्मसंस्थापनायैव वैकुण्ठध्वंसनाय च ।
पापच्छिन्नां हि वृद्ध्यर्थं पापसंजननाय वै ॥
उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा ।
पुरस्कृत्य च तथेन्द्रं तथान्यांश्च सुरान्नृप ।
अचुस्ते मोहिनीं देवा लोकसम्भावनाय वै ॥
दत्तं मोहिनि ते स्थानं प्रत्यूषसमयान्तिकम् ।
दुष्टं हरिदिनोपेतं दशम्यां प्रान्तमेव हि ॥
तेन जम्भेन जुष्टन्तु नैतद्दैवैर्न मानवैः ॥

अरुणोदयवेलायां परित्यजेदिति भावः। अरुणोदयोऽपि पुराणे दर्शितः।

---

(१) पुष्पार्थमिति ग०।

चतस्रो घटिका प्रातररुणोदय उच्यते ।

यतीनां स्नानकालस्तु गङ्गाम्भःसदृशः स्मृतः ॥ इति ॥

यतीनां स्नानकाल इत्यनेनोदयादर्वागपि घटिकाचतुष्टय-मरुणोदय इत्युक्तं भवति । एतान्यरुणोदयनिषेधवाक्यान्यपि यदा द्वादश्यां क्रियमाणाप्येकादशी दृश्यते त्रयोदश्यां च क्रियमाणा द्वादशी तदा परित्याज्येत्येवंपराणि द्रष्टव्यानि, काम्यैकादशीमात्र-विषयाणि वा ।

गारुडपुराणे ।

सन्दिग्धैकादशी नाम वर्जयेद्धर्मकाङ्क्षितः ।
पुत्र-राज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
उदयात्प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा ।
संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये ॥
पुत्र-पौत्रप्रवृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
आदित्योदयवेलायामारभ्य षष्टिनाडिका ।
सम्पूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥
पुत्र-पौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

काण्वोऽपि ।

अरुणोदयवेलायां दशमी यदि सङ्गता ।
सम्पोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

पुराणेऽपि।

अरुणोदयवेलायां दशमी यदि सङ्गता।
रविस्कान्दिनाप्यपि द्वादशीमुपवासयेत्॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्॥

गोभिलः।

अरुणोदयवेलायां दशमी यदि सङ्गता।
संयुक्तैकादशीं तां तु मोहिन्यै दत्तवान् विभुः॥

विष्णुः।

उदयादुपरिविद्धा दशम्येकादशी यदा।
दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः॥
तस्मात्सर्वप्रयत्नेन सम्पूर्णैकादशीं त्यजेत्।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम्॥

नारदीयपुराणेऽपि।

बहुवाक्यविरोधेन सन्देहो जायते यदा।
द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम्॥
दिनक्षये च सम्प्राप्ते उपोष्या द्वादशी भवेत्।
दशमीशेषसंयुक्तां न कुर्वन्ति कदाचन॥

एतानि काम्यैकादशीविषयाण्येव। तथाच तेषु तेषु वाक्येषु धर्मकाम्यि-पुत्र-पौत्रसमृद्ध्यर्थमित्येवमादीनि फलानि श्रूयन्ते। यद्वा अरुणोदयविद्धोपवासनिषेधवाक्यानि वैष्णवविषयाणि, शैवादीनामेकादश्युपवासाधिकारे तत्रोपवासे नास्ति दोषः।

तथाच भविष्यपुराणे।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम् ॥

कार्त्तिकेकादशीनिर्णयः ब्रह्मवैवर्त्ते एकादशीप्रकरणे अरुणोदय-वेधनिन्दायां शौनक उवाच ।

व्रतमेकादशीं सूत विशेषेण प्रकीर्त्तय ।
सर्वपापप्रशमनं कृते यस्मिन् भवेन्नृणाम् ॥
कीदृशैकादशी कार्य्या कथं कार्य्या कथं हरिः ।
पूजनीयः परं विप्र भवेत्तत्सूत कीर्त्तय ॥
उद्यापनविधानञ्च कार्य्यं व्रतफलाप्तये ।
तत्तथा सूत सर्वं मे वद वक्तासि यद्भवान् ॥

सूत उवाच ।

इदमर्थं पुरा शूरो वसुदेवपिता मुनिम् ।
कृष्णद्वैपायनं व्यासं पप्रच्छ तव यन्मतम् ॥

शूर उवाच ।

कथिता वैष्णवा धर्म्मा व्यास मुक्तिकरा नृणाम् ।
प्रधानं तत्र सर्वेषां व्रतानां द्वादशीव्रतं ॥
कीदृशी वा कथं कार्य्या किंफला कस्य पूजनं ।
विशेषमेतन्मे ब्रूहि सर्वज्ञस्त्वं हि मे मतिः(१) ॥

सूत उवाच ।

इत्युक्तः शूरभावाशुभमुत्तमं पदुमसंज्ञकम् ।
व्यासो यथावत्तदहं वच्मि तच्छृणु शौनक ॥

---

(१) मत इति क० ।

व्यास उवाच ।

सुपुत्रैकादशी शूर यदि शल्यविवर्जिता ।
कर्त्तुर्निरयपाताय शल्यका चाप्युपोषिता ॥
अरुणोदयवेलायां या स्तोकापि तिथिर्भवेत् ।
पूर्वा इत्येव मन्तव्या प्रभूता नोदयं विना ॥
तत्र चेद्दशमीवेधोऽतिवेधो वापि जायते ।
महावेधाय वा योगो द्वयोर्वा सफलं भवेत् ॥
तदैतद्दशमीशल्यं सन्त्याज्यं द्वादशीदिने ।
षड्वं शोधयित्वा तु सम्यक् चन्द्रार्ककोविदैः ॥

ततः शल्यका परिवर्जनीया
धर्मार्थ-कामेषु बुधैर्मनुष्यैः ।
विद्धोनशल्यापि विवर्जनीया
यद्वाप्लुतोद्वृद्धिमुपैति पयः ॥

शल्यं वेध इति प्रोक्तं पुराणार्थविचक्षणैः ।
तत्त्याज्यं दूरतो गाङ्गं सुराबिन्दुयुतं यथा ॥
चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥
तस्माद्विवेधरहितामुपोष्यामाहुराहुरीम् ।
विपरीतं परित्याज्यमाहुरत्र दिनत्रयम् ॥
नन्दा प्रातर्भवेद्भद्रा मध्ये प्रान्ते भवेज्जया ।

देवं दिने चयं पूर्णा नन्दा भद्रेति चासुरं ।
त्रयोदशीदिने प्राप्ते द्वादशी लभते यदा ।
द्वादश्यां द्वादशीरहन्ति त्रयोदश्यान्तु पारणे ॥
त्रयोदश्यां दिने प्राप्ते द्वादशी कलया भवेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
विनोपवासनियमैर्द्वादशी वञ्चिता नृणां ।
करोति धर्महरणमन्धाते च सरस्वती ॥
नन्दापूर्वां यथाप्राप्तां तस्माद्भद्रासुपावसेत् ।
पूर्णादिने च भद्रायां नन्दां त्यज कथञ्चन ॥
ये तु मिथ्याभिधानेन मोहयन्ति नरा भुवि ।
विमूढा पापिनस्तेषां रौरवं शरणं चिरं ॥
अध्यापयन्त्यविज्ञाय पण्डितम्मन्यबुद्धयः ।
कारयन्त्यबुधा लोके द्वादशीं दशमीयुतां ॥
ये कारयन्ति कुर्वन्ति द्वादशीं दशमीयुतां ।
शूद्रये तन्मुखं वीक्ष्य सूर्यदर्शनमाचरेत् ।
नमो नारायणायेति जपेद्वा द्वादशाक्षरं ॥
कृते पापे तु तापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥
वराका किन्नु जानन्ति प्राणिनां कार्य्यचिन्तनम् ।
धिग्विमूढधियः पापान् धर्मविघ्नकारिणः ॥
हिंसितो भगवान् तेन द्वादशी दशमीयुता ।
कृता येन रिपुमेव यन्मतं मया तव ॥

संस्थितो भगवान् कृष्णो द्वादशीरूपसंयुतः ।
तस्मादसंशयं त्याज्या द्वादशी दशमीयुता ॥
नन्दा शरीरं देवस्य भद्रा ह्यात्मा ह्यजोऽव्ययः ।
तस्मात्सरोगं त्यक्ताङ्गमात्मानमूपवासयेत् ॥
द्वयोर्विवदतोः श्रुत्वा द्वादशीं समुपोषयेत् ।
पारणन्तु त्रयोदश्यां एष शास्त्रविनिर्णयः ॥
द्वादशी दशमीयुक्ता यत्र शास्त्रे प्रतिष्ठिता ।
न तच्छास्त्रमहं मन्ये यदि ब्रह्मा स्वयं वदेत् ॥
कुर्वतामिह पापानि धार्ष्ट्यं पश्यत यादृशं ।
कारयन्तीतराम्मूढान् वराकान् प्राणिनः कथं ॥
द्वादशी दशमीविद्धा गान्धार्य्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥
अर्द्धरात्रेऽपि केषाञ्चिद्दशम्या वेध इष्यते ।
अरुणोदयवेलायां नावकाशो विचारणे ॥
कपालवेध इत्याहुराचार्य्या ये हरिप्रियाः ।
न तन्मम मतं यस्मात् त्रियामा रात्रिरिष्यते ॥
तस्मात्तरेव वदनं दैविकं धर्म्मसाधनं ।
मुहूर्त्तमारतस्त्वागतस्य वेधस्य निश्चितः ॥

सूत उवाच ।

कीदृशश्च भवेद्वेधो योगो विप्रेन्द्र कीदृशः ।
वेध-योगौ समाचक्ष्व तयोर्दुष्टमुपोषणं ॥

शौनक उवाच ।

चतस्रो घटिकाः सूर अरुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकाचयं ।
अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्योदये बुधैः ॥
यातुधानप्रतं योगे महावेधस्तु वाष्कले ।
अन्धासुरस्यातिवेधे मोहिनी वेधलेशिनी ॥
दशम्याः प्रान्तविद्धं हि यद्दुष्टं हरेर्दिनं ।
तत्पुरा विबुधैर्दत्तं मोहिन्यै तद्विपर्ययात् ॥
वरमेकादशीत्यागो न कार्य्या दशमीयुता ।
सूर मे निश्चयः सोऽयं न हता द्वादशी शुभा ।
दशमीशेषसंयुक्ता किं पुनर्बहुभाषितैः ॥

इत्थं विचार्य्य निपुणैः सह विद्धैकादश्या द्वादश्यामभावे द्वादश्याश्च त्रयोदश्यामभावेऽपि "एकादशीं दशाविद्धां पक्षवृद्धौ विवर्जयेत् । पक्षहानौ स्थिते सोमे कुर्वीत दशमीयुतां" ॥ इति श्रुतेरमावास्यायाः पौर्णमास्या वा प्रतिपदि वृद्धावेऽपि शुद्धा द्वादश्येव "तिथिह्रासौ प्रयोक्तव्या सम्पूर्णैकादशी यदि । उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणं" ॥ इत्यनुसारादुपोष्या, विहीनपक्षापि विवर्जनीया, "क्षयतो वृद्धिमुपैति पक्षः" इति तु यद्यपि स्मार्त्तं तथापि एकादशीं दशाविद्धामित्यत्र "सम्पूर्णैकादशी यदीत्यत्र विशेषवचनान्यथानुपपत्तेः विहीनपक्षस्य वाक्यान्तरस्थापिनेना-

मुपपत्तेः "अविद्धानि निषिद्धेषेण लभ्यन्ते दिनानि तु । मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः" ॥ इत्यविद्धालाभनिमित्तविद्धानुज्ञास्त्वरुणघटिकादशकापेक्षयाऽधिकविद्धापि तिथिर्वर्जनीयेत्येवं व्याख्येयं ।

एवेव च ।

दर्शस्य पूर्णमासस्य सम्पूर्णा वर्द्धते यदि ।
द्वितीयेऽह्नि नृपश्रेष्ठ सा भवेत्पक्षवर्द्धिनी ॥

इत्याख्यायते ।

अथोन्मीलिन्याद्यष्टभेदनिरूपणं ।

ब्रह्मवैवर्त्ते ।

एकादशीव्रतं सर्वव्रतानां प्रवरं स्मृतं ।
तदहं संप्रवक्ष्यामि समाकर्णय साम्प्रतं ॥
विशोधनमिदं पुंसां शुद्ध्याद्वृद्ध्यांशतः परं ।
तत्स्वरूपं श्रुतं तीर्थस्नानादप्यधिकं विदुः ॥
एतत्सारमिदं तत्त्वमिदं सत्यमिदं व्रतं ।
प्रायश्चित्तमिदं सम्यग्यदेकादश्युपोषणं ॥
विशेषस्तत्र विज्ञेयो द्वादशीषु द्विजोत्तम ।
भवन्त्यष्टौ परिख्यातास्ताः शृणुष्व यथोदिताः ॥
उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ।
द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज ॥
तिथियोगेन जायन्ते चतस्रश्चापरास्तथा ।

गवयप्रयोगाल्लब्धं पापं प्रशमयन्ति ताः ॥
एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा।
उन्मीलनी भृगुश्रेष्ठ कथिता पापनाशिनी ॥
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम्।
वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी॥
अरुणोदय आद्या स्यात् द्वादशी सकलं दिनं।
अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया ॥
कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धिनी।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ॥
पुष्य-श्रवण-पुनर्वसु-रोहिणीसंयुताः क्रमात्।
उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक् ॥
ब्रह्मघ्नमपि सा पूर्वा विशोधयति भार्गव।
वञ्जुलीति द्वितीया सा हत्यायुतविनाशिनी ॥
महापापानि चत्वारि शोषयेत् त्रिस्पृशा क्रमात्।
कुरुतेऽशेषकलुषविच्छेदं पक्षवर्द्धनी ॥
जया जयन्तु विजया प्रेतमोक्षं तथापरा।
जयन्ती नरकच्छेदमपि दुष्कृतकारिणां।
अष्टमी तु भृगुश्रेष्ठ महापातकनाशिनी ॥
तावत्पापानि देहेषु दुःसहा यमयातनाः।
कुर्वन्ति प्राणिनां यावन्नैतदुन्मीलनीव्रतं ॥
यदत्र दीयते दानं हूयते यच्च वह्निभिः।
सर्वं तदक्षयं प्राहुरश्मीविन्यां महर्षयः ॥

चतुर्थी वासरे चन्द्र संक्रान्ते मदवृषध्वज: ।
सर्वानारव्धयात्मन्य कुरुते वाञ्छितं विभो ॥
चतुर्थीविमुखं मर्त्यमालोक्य रविनन्दन: ।
कुरुते संविदं चाकं विघ्नगुणेन हर्षित: ॥
अवलेवाति मन्दात्मा विष्णुव्रतवहिष्कृत: ।
वध्यं मनेति तत् पुण्यं मार्कण्डाय पुराकृतं ॥
शिरोभिर्निर्मितरासेर्वा मासेऽपेव प्रधावते ।
यान्ति विष्णुपरा: सर्वेऽपि दुष्कृतकारिण: ॥
द्वादश्योऽष्टौ समाख्याता या: पुराणविचक्षणै: ।
तासामेकापि विहिता हन्ति पापं पुराकृतं ।
तदेव विपरीतेन हन्ति पुण्यं पुराकृतं ॥
आयाति महता पुण्यप्रकारेण हरेर्दिनं ।
शुक्लपक्षे कृष्णेऽह विशेषव्रतसंयुतं ॥
तद्दायातमपि त्यक्तं यदि पुण्यवहिष्कृतै: ।
तदेतदक्षतं प्राप्तं करात्विगलितं यथात् ॥
एकादशीस्वरूपेण धर्म: साक्षाज्जनार्दन: ।
तच्छरीरवधं प्राज्ञैर्बुधुक्षोभिर्निमीमतं ॥
विहाय चतुर्थीं पापा: करिष्यन्ति पराङ्गतिं ।
न च राजन् विजानन्ति प्राणिन: बौरचक्षुष: ॥
सर्वविनिर्मुक्तान् धिक्कृतान् नीचान् पक्षितमानिन: ।
ये गर्त्तायतनं सर्वप्राणिनां कारयन्त्युत ॥
ये कारयन्त्यविबुधा: प्रायशश्चक्षु हैतुका: ।

प्राचिनस्तत्कृतं पापं तेषां गच्छत्यसंशयं ॥
तेषां निरभिमानेन भूत्वा शास्त्रानुगामिभिः ।
यथावदुपदेष्टव्यं न भाव्यं कलुषाशयैः ॥
सर्वव्रतानामाचरणं सर्वतीर्थाभिषेचनं ।
सर्वदानप्रदानञ्च समं स्याद्वञ्जुलीव्रतं ॥
तथान्नदानं विप्राय विधाय श्रद्धयान्वितः ।
प्राप्नोति बहुशो विप्रोऽकल्मषः शश्वन्निधिं ॥
लक्ष्मी-नारायणं देवं सौवर्णं तत्र पूजयेत् ।
यथाशक्त्यन्नदानञ्च दत्वा वैकुण्ठमाप्नुयात् ॥
हन्ति पिपीलवं पापं वञ्जुली भक्तितः कृता ।
स एव सर्वशास्त्रार्थः सर्ववुद्धिमतां सतां ॥
हितं सर्वं समीचीनं यद्वञ्जुल्युपोषणं ।
उपवासं यथा शक्त्या दानं ब्राह्मणपूजनं ।
विधाय वञ्जुलीष्वेव पुरुषो याति सद्गतिं ॥

एवमुन्मीलिन्याद्यष्टकाशीमाहात्म्यं विस्तरेण निरूपोपसंहृतं ।

एवं समस्तवरधर्मगुणान्वितं वै
येकादशीव्रतमिदं किल चेतनुसं ।
शास्त्रान्वितोहरिरतश्च हरिप्रियं यः
शुद्धं पुनः प्रकुरुते लभते स मुक्तिम् ॥

इत्युन्मीलिन्याद्यष्टनिरूपणं ।

अपरे त्वाहुः। परतोद्वादशीसद्भावे सति सर्वेषां शुद्धद्वादश्या-मुपवासस्तदभावे तु विद्धैकादश्यामिति ।

तथाच श्रुतिः ।

एकादशीं दशाविद्धां पक्षच्छ्रौ विवर्जयेत् ।

पञ्चदानी स्थिते सोमे आश्येद्द्वादशीयुतां ।

'आश्येत्' उपवसेदित्यर्थः ।

वायुपुराणे ।

एकादशी दशाविद्धा द्वादशी च परेऽहनि ।

द्वादशी तु तदोपोष्या धर्म-कामार्थसाधनीति ॥

तद्युक्तं परतो द्वादश्यभावेऽपि शुद्धद्वादश्यामुपवासविधानात् ।

तथाच कूर्म-पद्मपुराणयोः ।

एकादशी दशाविद्धा परतो द्वादशी न चेत् ।

तत्रोपोष्या द्वादशी तु त्रयोदश्यान्तु पारणम् ॥

अन्यान्यप्येवंविषयाणि वचनानि प्राग्दर्शितानि । न च परयुक्तैकादशीविषयमिदं वचनजातं, "तदोपोष्या द्वादशीति वचनात् । तथा हि द्वितीयैकादशी प्राप्नोति वक्तुमुचितं न तु द्वादशीति । केचित्तु सन्न्यासिविषयमिदं वचनजातमित्याहुः, तदसद् प्रमाणाभावात् । न च "शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः । पारणन्तु त्रयोदश्यामिति वचनं प्रमाणं । न ह्येतेन वचनेन शुद्धद्वादश्युपवासः सन्न्यासिनां विधीयते, किन्तु मुमुक्षूणां । न च सन्न्यासिनामेव मुमुक्षुतेति नियमः । किञ्च चण्डालादेरपि शुद्धद्वादश्युपवासो विधीयते "चण्डालैर्वैश्ययोषाया शूद्रैः किमन्यक्तोतुमर्हतीति वचनेन, तत्र न शूद्रादेः सन्न्यासः सम्भवति । किञ्च व्रतीनामपि विद्धैकादश्युपवासो विधीयते ।

एकादशी दशाविद्धा परतोऽपि न वर्द्धते ।
शब्दिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

इति मत्स्यपुराणवचनेन ।

अन्ये त्वरुणोदयविद्धैकादश्युपवासविषयः, तदूर्ध्वविद्धविषयास्तु निषेधाः, शुद्धद्वादश्युपवासविधयश्चेत्याहुः । तन्मन्दं । अरुणोदयविद्धैकादश्युपवासनिषेधानां प्रागुदाहृतत्वात् ।

अन्ये तु यदा विद्धैकादशीद्वादश्याश्च श्रवणस्पर्शं भवति तदा विद्धैकादश्युपवासनिषेधाः शुद्धद्वादश्युपवासविधयश्च । विद्धैकादश्युपवासविधयस्तु एकादश्यन्तरविषया इत्याहुः । एकादश्यामविद्धायां श्रवणे प्राप्ते शुद्धद्वादश्युपवासविधानात् । तथाच नारदीयपुराणे ।

एकादश्यामविद्धायां सम्प्राप्ते श्रवणे तथा ।
उपोष्या द्वादशी पुण्या उभयोर्दैवतं हरिः ॥

स्कन्दपुराणे ।

श्रास्त्रवादेऽप्युपक्षिते इति चतुर्थःपादः पठ्यते ।

कूर्मपुराणे ।

एकादशी दशाविद्धा श्रवणश्च भवेत्तथा ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

किञ्चैवंविधैकादश्युपवासप्रकरणपाठोऽनर्थकः स्यात् ।

अपरे तु विद्धैकादश्युपवासोदिनक्षयविषयः अन्यत्र शुद्धद्वादश्युपवासोदिनक्षयविषयः । अन्यत्र शुद्धद्वादश्यां दिनक्षयस्तते देवेनोपोष्या "दशमीयुतेति वचनादित्याहुः । तदप्ययुक्तं एकादशीदिनक्षयेऽपि शुद्धद्वादश्यासुपवासविधानस्य दर्शितत्वात् ।

अन्ये तु "विद्धाप्येकादशीत्यादिवचनजातं परतो द्वादश्यभावे सति शुद्धैकादशीप्रशंसार्थं। परतोद्वादशी न चेद्विद्धापि ग्राह्या किमुताविद्धापि। तथाच मूलान्तरकल्पनाभावेऽपि विद्धैकादश्युपवासनिषेधवचसामसङ्कोचश्च भवेत् विष्णुरहस्याद्युपक्रमोपसंहारपर्य्यालोचनया चायमेवार्थः प्रतीयत इत्याहुः। तच "दिनक्षयस्पृते देवीतिवचनं कथमिति चिन्त्यं।

केचित्तु परतोद्वादशीसद्भावे सति द्वितीयैकादश्युपवासः सर्व्वेषां नान्यथेत्याहुः।

तथाच भविष्यत्पुराणे।

तृतीयेऽहनि सम्प्राप्ते द्वादशी यदि दृश्यते।
द्वितीयैकादशीं कुर्य्यात् प्रथमान्तु विवर्ज्जयेत्॥
द्वादश्येकादशी युक्ता द्वादशी परतो यदि।
द्वादशीमिश्रितोपोष्या तिथिरेकादशी तदा॥
द्वादश्येकादशी यत्र द्वादशी परतो भवेत्।
तत्रोपोष्या द्वितीया तु द्वादश्यामेव पारणमिति॥

तदयुक्तं।

परतो द्वादश्यभावे द्वितीयैकादश्युपवासविधानात्।

तथाच ब्रह्म-वाराह-स्कन्दपुराणेषु।

दशमीशेषसंयुक्ता यदि वृद्धिमती भवेत्।
तदोपोष्या द्वितीया स्यात् त्रयोदश्यान्तु पारणम्॥

स्कन्दपुराणे।

द्वादश्येकादशी यत्र संयुता[१] मुनिसत्तम।

(१) सङ्गतेति क०।

तामुपोष्य नरः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

कूर्मपुराणे ।

एकादशी कलाप्येका परतो द्वादशी न चेत् ।

तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणमिति ॥

न च परतोद्वादशीसद्भावविषयाण्येतानि वचनानि "त्रयोदश्यान्तु पारणमिति वचनात्, तदा द्वादश्यां पारणमिति वाच्यं न तु त्रयोदश्यामिति ।

केचित् यत्याश्रमिविषयमिदं वचनजातं ।

यदा तु दशमीविद्धा द्वादशीमपि संस्पृशेत् ।

एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः ॥

एकादशी दशाविद्धा परतोऽपि भवेद्यदि ।

तदोपोष्या द्वितीया तु विष्णुसायुज्यमिच्छता ॥

इति वचनादित्याहुः । तदसत्, न ह्येतद् वचनद्वयं यत्याश्रमिणां द्वितीयैकादश्युपवासमाह, किन्तु मुमुक्षूणां । न च यत्याश्रमिणामेव मुमुक्षा, गृहस्थादेरपि तत्सम्भवात् । ननु च यानि त्रयोदशीपारण-पराणि तेष्वेव "तत्र क्रतुशतं पुण्यं इत्यादिफलश्रवणं, तानि काम्योपवासाभिप्रायाणि, विद्धोपवासविधिपराणि तु नित्योप-वासविषयाणीति व्यवस्था किं न स्यादेवं ।

यदि दैवात्तु संविध्येदेकादश्यां तिथिक्षयं ।

तत्र क्रतुशतं पुण्यं द्वादशीपारणं भवेत् ॥

द्वादश्येकादशी यत्र द्वादशी परतोऽपि वा ।

द्वादशीपारणं कुर्य्यात् क्रतुकोटिफलं लभेत् ॥

इति द्वादशीपारणेऽपि फलश्रवणाविशेषात्।

किञ्च।

सर्वथैकादशी कार्या द्वादशीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यं हि पारणम्।
पारणन्तु त्रयोदश्यां नित्यकामार्थां विशुद्धिदम्॥

इत्यादिषु त्रयोदशीपारणस्यापि नित्यताश्रवणाच्च। अतोनेयं फलश्रुतिः, अपि त्वर्थवाद इति मन्तव्यं।

अपरे त्वाहुः।

विद्धैकादश्या निर्णयं वक्तुं कौतुग्वेध इति तावदुच्यते।

अर्द्धरात्रात्परा यत्र एकादश्यान्तु लभ्यते।
तत्रोपवासनं कर्त्तुं न चेच्छेद्दशमीकला॥

इति स्मृत्यालोचनयार्द्धरात्रादूर्द्ध्वं दशमीस्पर्शस्य वेधत्वावगमात्।

आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता।
एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता॥

इति स्मृतेः सूर्योदयात् प्राग्घटिकाचतुष्टये दशमीस्पर्शस्य वेधत्वावगमात् "सूर्योदयस्पृशा ज्ञेया दशम्या गर्हिता सदेति स्मृत्यालोचनया च सूर्योदये दशमीस्पर्शस्य वेधत्वावगमात्, सूर्योदयात् प्राग्दशमीस्पर्शस्य वेधत्वे तदूर्ध्वकालीनस्य सुतरां वेधत्वसिद्धेः "सूर्योदयस्पृशा ज्ञेयेति वाक्यानर्थक्यप्रसङ्गादवेधकत्वे वा तद्वेधकत्वाभिधायकवाक्यविरोधप्रसङ्गात्।

अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकात्रयं।
अतिवेधोद्विघटिकः प्रभासन्दर्शनाद्रवेः।

महावेधोऽपि तत्रैव दृश्यतेऽर्कोऽपि दृश्यते ॥
या तिथिः श्रूयते राजन् प्रातर्वेलावलोकिनी ।
स वेध इति विज्ञेयो योगः सूर्योदये स्मृतः ॥

इति चातुर्विध्यस्यत्यालोचनाच्च विषयतारतम्याद्दोषतारतम्यमाभाति । तदयुक्तं कर्माङ्गकालदोषस्य पुरुषे दोषानापादकत्वात् कर्मणश्च स्वसाध्यफलसाधकत्वातिरिक्तदोषाभावाद्वेधेऽपि च कर्मवैगुण्यात् फलासिद्धेः कर्मदोषतारतम्यायोगात् ।

दशमीशेषसंयुक्तां न तु कुर्यात् कथञ्चन ।
अज्ञस्येयं पुरा दत्ता दशम्याः शेषसंयुता ॥
उपोषिता प्रमादेन प्रायश्चित्तञ्चरेत् द्विजः ।
प्रायश्चित्तमकुर्वाणस्तत्फलेन विनाश्रितः ।
स गच्छत्यन्धतामिस्रं नरकं भृशदारुणम् ॥
अज्ञानात् यदि वा मोहात् कुर्वन्नेकादशीं नरः ।
दशमीशेषसंयुक्तां प्रायश्चित्तमिदं भवेत् ॥
तत्र कृच्छ्रं नरश्चीर्त्वा गाञ्च दद्यात् सवत्सिकां ।
सुवर्णमाषकं देयं तिलद्रोणसमन्वितम् ॥

इति विहितेन प्रायश्चित्तेन परिहृते वैगुण्ये बहुविधेऽपि समयफलसिद्धेः ।

यातुधानगतं योगे महावेधन्तु वाञ्छते ।
अश्वासुरस्यातिवेधे मोहिनी ग्रस्तवेधनी ॥

इति अश्वासुरभागितया निन्दितातिवेधमात्रविषयत्वेनास्य प्रायश्चित्तस्य वेध-महावेधादौ तदनुसारेण प्रायश्चित्ताल्पत्व-महत्त्वा-

कल्प्यत्वात् प्रायश्चित्तवैषम्येण वैगुण्याख्यकर्म्मदोषवैषम्यावगतेस्तारतम्यं युक्तमिति चेत् । न ।

दशमीशेषसंयुक्ता न तु कार्य्या कथञ्चन ।

इति सामान्यविषयनिषेधानुसारात् "जम्भस्येयं पुरा दत्तेति निन्दार्थवादस्य जम्भपक्षपातोपलक्षणत्वावगमे प्रायश्चित्तविषयव्यवस्थापनाशक्तेः ।

प्रायश्चित्तन्तु कर्त्तव्यं शुद्ध्यर्थन्तु व्रतस्य वै ।
निश्छिद्रं जायते चैतद्धर्म्मसन्तानमेव च ॥
ब्राह्मणान् भोजयेत् त्रिंशच्चाष्ट दद्यात्सदक्षिणाम् ।
सुवर्णस्यार्द्धकं देयं तिलद्रोणमथापि वा ॥

इति स्मृत्यन्तरे च विषयविशेषाप्रतीतेः स्मृतस्य च प्रायश्चित्तस्य विशिष्टविषयकल्पनेऽपि विषयान्तरेऽपि तदेव प्रायश्चित्तमन्यदेति निषेद्धुमशक्यत्वात् वैगुण्यवैषम्यकल्पनया प्रायश्चित्तवैषम्यकल्पना प्रायश्चित्तवैषम्यकल्पनया च वैगुण्यवैषम्यकल्पनेत्यन्योन्याश्रयतापत्तेर्न प्रायश्चित्ततारतम्याद्दोषतारतम्यकल्पनं युक्तं । वेधातिवेधमहावेधयोगाख्यचातुर्विध्यस्मृतेश्च । "एतानि वै दश यज्ञायुधानीति यज्ञायुधव्यपदेशस्य "स एव यज्ञायुधीयं यजमानोऽञ्जसा स्वर्गलोकं यातीत्यर्थवादौपयिकत्ववत् "यातुधानशतं योग इत्यादिनिन्दार्थवादौपयिकत्वसम्भवाच्च तद्बलादपि दोषतारतम्यकल्पना युक्ता, तस्मात्सर्ववाक्योपपत्त्यर्थमेवं वक्तव्यं, "सूर्य्योदयस्पृशा ग्राह्येत्यथ सदेति श्रवणात् सूर्य्योदये दशमीस्पर्शस्य नित्ये काम्ये चैकादशीव्रते गर्हितत्वप्रतीतेः "दशमीशेषसंयुक्तेत्यत्रापि संयुक्तशब्दश्रवणात् "योगः सूर्य्योदये सत-

इति योगव्यपदेशस्य सूर्योदये दशमीस्पर्शस्य निषधप्रतीतेः ।

दशम्याः प्रान्तमादाय यदोदेति दिवाकरः ।
तेन दुष्टं हरिदिनव्रतं अब्दशतस्य तु ॥

इतिव्यवयान्तरे च सूर्योदये दशमीस्पर्शस्य अब्दशतभागित्वेन निन्दनात् "अब्दशतेयं पुरा दत्तेति निन्दाया अपि तद्विषयत्वापत्तेः सूर्योदये दशमीस्पर्शस्यैव निषिद्धत्वादेषोऽवसीयते। ततः प्राचीनानान्तु स्पर्शानां मध्ये ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
पापमूलं तदा ज्ञेयं एकादश्युपवासिनाम् ॥

इति निन्दाश्रवणेऽप्यरुणोदये तु दशमीस्पर्शस्य ।

अरुणोदये तु दशमीगन्धमात्रं भवेद्यदि ।
द्रष्टव्यं तत् प्रयत्नेन वर्जनीयं नराधिप ॥

इति निषेधश्रवणेऽपि च ।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
वैष्णवेन तु कर्त्तव्यं तद्दिनैकादशीव्रतं ॥

इतिवचनेर्निषेधस्य विष्णुसायुज्यकामाख्यवैष्णवविषयत्वावगमात् ।

उदयात् प्राक् चतुर्घटिकाव्यापिन्येकादशी यदा ।
सन्दिग्धैकादशी नाम वर्जयेद्धर्मकाङ्क्षिभिः ॥

इति च ।

वीरः शक्तिमतां श्रेष्ठो धर्मोधर्मविदुत्तमः ।

इति धर्मशब्दस्य "विष्णुनामसुपाठायप्रेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति मन्त्रलिङ्गाद्धर्मशब्दवाच्यतयावगतेन यज्ञेन

"विष्णुर्वै यज्ञ इति विष्णोः संज्ञावाक्षर्मशब्दवाच्यत्वावगतेः धर्मकाङ्क्षिशब्दस्य विष्णुसायुज्यकामवाचित्वावगमेन सूर्योदयात् प्राक् घटिकाचतुष्टयव्यापैकादश्युपवासवर्जनं विष्णुसायुज्यकामविषयमेवावसीयते। "चतस्रो घटिकाः प्रातररुणोदय उच्यत इति घटिकाचतुष्टयस्य "अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकात्रयमिति च सार्द्धघटिकात्रयस्यारुणोदयकालत्वस्मरणेऽपि।

निशिप्रान्ते तु यामार्द्धे देववादित्रवादने।
सारस्वतानध्ययने अरुणोदय उच्यते॥

इति रात्र्यन्त्याष्टमभागे अरुणोदयकालस्य स्मृतेर्मकरसङ्क्रान्तौ सप्तविंशतिघटिकामात्रत्वाद्रात्रेस्तदष्टमभागेन सार्द्धघटिकात्रयस्यापि व्याप्तत्वात्: किञ्चिदधिकघटिकात्रयव्यापिन्या अपि चैकादश्याः त्रिघटिकाव्यापिनीत्वव्यपदेशाविरोधात् घटिकात्रयव्याप्त्युत्तारुणोदयकालीनदशमीसम्बन्धलक्षणोपपत्तिः, सार्द्धघटिकात्रयोक्तिः अष्टाविंशतिघटिकामात्ररात्रिविषया महत्तरासु रात्रीर्विवक्षीकृत्य चतस्रोघटिका इत्युक्तं। यदा चतसृष्वपि घटिकास्वरुणोदये सार्द्धघटिकात्रयात् प्राग्दशमीसम्बन्धस्य वेधकत्वाभावोक्त्यर्थं सार्द्धघटिकात्रयोक्तिः,। सूर्योदयात् प्राक् घटिकाद्वये दशमीसम्बन्धवर्जनन्तु।

उदयात् प्राङ्मुहूर्त्तेन व्यापिन्येकादशी यदा।
संयुक्तैकादशी नाम वर्जयेद्धर्मवृद्धये॥

इति धर्मवृद्धिशब्देन शुद्धौपयिकाः सत्सङ्ग्रहः: "यदीच्छेद्विपुलान् भोगानुमिक्षायत्नदुर्लभां"। इतिशब्दसूचिताया धर्मातिशयात्मकतया विवक्षितत्वात्कामविषयम्।

आदित्योदयवेलायामारभ्य षष्टिनाडिकाः ।
सम्पूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥

इत्येतत् “महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यत इति स्मृत्यन्तरालोचनया,

रविचक्रार्द्धमात्रापि दशमी भूयते यदि ।
तदापि द्वादशी ग्राह्या त्रयोदश्यान्तु पारणं ॥

इति स्मृत्यन्तरालोचनयाप्यर्द्धादित्योदये दशमीस्पर्शवर्जनोक्तावपि “पक्षादौ न च धर्मस्य फलानीति व्यवस्थितमिति मीमांसावार्त्तिकाभिधानात् धर्मफलशब्दस्य “यदीच्छेद्विपुलान् भोगान् इत्येकादश्युपवासाख्यधर्मफलतया स्मृतिभोगवाचित्वावगतेः तत्तत्कामविषयं, धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलशब्दानां सम्मुग्धलोकप्रसिद्धार्थत्वाभ्युपगमे अरुणोदयवेधप्रारब्धधर्मासमाप्तिघटिकादयवेधे समाप्तस्यापि धर्मस्यातिशयसिद्धिवत्सूर्योदयवेधेऽतिशयितस्यापि धर्मस्य प्रतिबन्धादिवशात् फलानवाप्तिरित्यापत्तेर्विपरीतवेधतारतम्यप्रसङ्गात् प्रथमोवेधो द्वितीयोऽतिवेधः तृतीयोमहावेध इति व्यपदेशा निरालम्बनाः स्युः, समाप्तस्यापि कर्मणः श्रेयस्करत्वाख्यधर्मत्वासिद्धावपि धर्मकाङ्क्षिशब्देन विवक्षितायां धर्मफलावाप्तिशब्देनापि तस्या एव विवक्षाप्रतीतेर्महावेधव्यवस्था निरालम्बना स्यादतोऽत्रत्यत्रैव धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलाप्तिशब्दव्याख्या युक्ता सूर्योदयोत्तरकालदशमीस्पर्शनिषेधवत्तत्कालदशमीस्पर्शनिषेधानामपि सर्वविषयत्वाभ्युपगमे तु धर्मकाङ्क्षादिशब्दानर्थक्यापत्तिः । “सन्दिग्धैकादशी नाम वर्ज्या धर्मकाङ्क्षिभिरित्येतदुत्तरस्य “पुत्रराज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेदित्यस्य “संपु-

शैकादशीं नाम वर्जयेद्धर्मवृद्धये इत्येतदुत्तरस्य च "पुत्र-पौत्रमनुष्यार्थं द्वादश्यामुपवासयेदित्यस्य "सम्पूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिरित्येतदुत्तरस्य च "पुत्रपौत्रमनुष्यार्थं द्वादश्यामुपवासयेदित्यस्यारुणोदयादिविद्धैकादशीविषये फलान्तरकामस्य द्वादश्युपवासविधानार्थत्वात् न तदर्थेनारुणोदयादिविद्धैकादशीनिषेधानां फलान्तरकामविषयत्वं शङ्कनीयं। "पापमूलं सदा ज्ञेयमित्यस्य निन्दामात्रत्वात्तच्छब्दवाच्यस्य विष्णोरिष्टमाज्ञेत्यपि च व्याख्यातुं शक्यत्वात्सदाश्रवणमात्रेणारुणोदयकाले दशमीस्पर्शनिषेधस्य सर्वविषयत्वापत्तिः। "अरुणोदयवेलायां विद्धा काचिदुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेदित्यपि निन्दामात्रं। "सूर्योदयस्पृशा त्वेषा दशमी गर्हिता सदेत्यस्य तु निषेधार्थत्वात् "अविद्धानि निषिद्धैर्येत् न लभ्यन्ते दिनानि तु। मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः"॥ इत्यादिविरोधापत्तेरेकादश्यां द्वादश्यां परतो वा सत्त्वे चेत्येवं सदाशब्दव्याख्यानयोगात्सर्वनित्य-काम्यैकादश्युपवासविषयत्वव्याख्यानयोगात्सर्वनित्य-काम्यैकादश्युपवासविषयत्वव्याख्यैव युक्ता, "उदयादूर्ध्वविद्धा तु दशम्येकादशी यदा। दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासन इति वाक्यान्तरदर्शनात् सूर्योदयोत्तरकालस्पर्शिनी सूर्योदयस्पृशाशब्देनोक्तेति गम्यते। तस्मात् सूर्योदयोत्तरकालदशमीस्पर्श एव सर्वविषयो वेधः, अरुणोदयघटिकाद्वयार्द्धसूर्योदयकालस्थ दशमीस्पर्शो यथाक्रमं विष्णुभक्तमुमुक्षुकामैकादश्युपवासविषया एवेति सिद्धं। अर्द्धरात्रात्परा दशमीकला लभ्यते तत्रोपवासं नारभेतेत्येवं प्रथमारम्भविषयतया व्याख्येयं तदेतदुक्तं। तत्र यत्तावदुक्तं कर्माङ्गकालदोषस्य पुरुषदोषानापादकत्वादिति तद-

युक्तं कर्माङ्गकालनिषिद्धकाले कर्मानुष्ठाने सर्ववाक्येष्वपि पुरुषदोषस्यैवाभिधानात् बाधकाभावाच्च तत्त्यागानुपपत्तेः। यदपि वैष्णवशब्देन विष्णुसायुज्यकामोऽभिधीयत इत्युक्तं तदपि न विष्णुप्रीतिकामविष्णुभक्तानामेकादश्युपवासिनामप्यभिधानात्। धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलशब्दानां लोकप्रसिद्धार्थत्यागमप्ययुक्तं, वेधतारतम्यं च पुरुषदोषतारतम्यादुपपद्यते, अरुणोदयविद्धैकादशीनिषेधानां फलान्तरकामविषयत्वमप्येकवाक्यतावशादवगम्यते, "पापमूलं सदा ज्ञेयमित्यत्र सदाशब्दस्य "सूर्योदयस्पृशा ज्ञेया दशमी गर्हिता सदेति च विद्धानुपवर्यतिरिक्तविषयत्वोपपत्तेः न वचनद्वयस्य विष्णुपरत्वेन क्लिष्टकल्पनया व्याख्यानं युक्तं तस्माद्यथोक्तमेव साधीयः ।

### अथैकादशीद्वादश्युपवासकालनिर्णयः ।

यदैकादशीमिश्रायां द्वादश्यामेकादशीव्रतं प्राप्नोति द्वादशीव्रतञ्च तदैकेनोपवासेनैकादश्युपवासो द्वादश्युपवासश्च सिध्यति । यदा त्वेकादश्यां पृथगुपवासः सम्पूर्णत्वेन प्राप्नोति द्वादश्यां च पृथक् तदोपवासद्वयं कर्त्तव्यं "एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत्। न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिः"॥ इति विधानात्। "असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरमिति समाप्तिश्च पारणेन। तदभावे उपवासद्वयेऽपि क्रियमाणे पूर्वव्रतस्यासमाप्तेर्विधिलोपः प्राप्नोति । सोऽप्येकदैवतत्वेन परिहृतो भवत्येव। "एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयं"॥ एतदुपवासद्वयासमर्थं प्रत्युच्यते। यदैकस्मिन्नप्युपवासे असमर्थस्यैकभक्तादि विहितं तदोपवासद्वयासमर्थं प्रति सिद्धं मन्तव्यं। एकादश्युपवासव्रतं नित्यं काम्यं चेति तथा

द्वादश्युपवासव्रतं काम्यमन्यदेव सर्वेषां सर्वदा विहितं, मार्कण्डेय-प्रद्युम्नसंवादे मार्कण्डेयेन पूर्वमेकादश्यामुपवासो द्वादश्यां पारणमि-त्युक्त्वानन्तरं द्वादश्यामुपवासः त्रयोदश्यां पारणमित्युक्तं। तद्विरुद्धं वचनद्वयं श्रुत्वेन्द्रद्युम्न उवाच।

नोपोष्या द्वादशी राजन् पुराणे परिकीर्त्तिता।
तथापि मुनिशार्दूल प्रागुक्तं तच्छृणुष्व मे॥
पारणे ख्यापिता ब्रह्मन् द्वादशी वैष्णवप्रिया।
उपोष्या ख्यापिता ब्रह्मन् तथा चैकादशी शुभा॥
द्वादश्यां पारणं कार्यमेकादश्यां हि जागरम्।
पुराणविहिते मार्गे निषिद्धाचरणे कथम्॥

इति पृष्टो मार्कण्डेय उवाच।

शृणु भूपाल सकलं यत् पृष्टं साधुना त्वया।
जगद्विनाशितं दुष्टैर्हेतुवादकथान्वितैः॥
द्वादश्या निर्णये(१) भूप मूढमेव जगत्त्रयम्।
अत्र मूढा महीपाल प्रायशो ये नराः पुरा॥
ते महाक्लेशेषु न सौख्यं रक्षणं याति भूमिप।
समस्तेष्वथ देहेषु पीतश्चैवौषधं यथा॥
ये शुद्धाख्येषु तथापि स्थिरत्वं धर्मसंचयात्।
चिरकाला रिक्तदेहानां चौषधं स्थिरतां व्रजेत्॥
चतुर्दशीमुपोषन्ति शिवभक्ता नराधिप।
न तेषां गमनं भूप नरके दृश्यते क्वचित्॥

(१) द्वादश्या निर्णये इति ख०।

अपरे गोपतौ केचिद्भक्तिं कुर्वन्ति ये नराः ।
बहवस्ते समुपोषन्ति भक्तियुक्तास्तथैव च ।
न चापि कुत्सितं तेषां मया दृष्टं नराधिप ॥
पौर्णमास्युपवासेन ब्रह्मलोकं गता नृप ।
अपरे लक्ष्मीं सन्तः शिवभक्तिसमाश्रयाः ॥
कश्चिपक्षं परित्यज्य नराश्चैव नरोत्तम ।
एकादशी चक्षीणान्तु द्वादशी चक्रपाणिनः ।
तत्कथं द्वादशी भूप नोपोष्या क्रियते जनैः ॥
एषा निःश्रेयसी भूप सर्वभोगविवर्जिता ।
मोक्षात्मिका पुरा प्रोक्ता द्वादशी प्रवरा तिथिः ॥
एकादशी शरीरन्तु पुरुषो द्वादशी स्मृता ।
द्वादश्यामुपवासेन विष्णुर्भूप सनातनः ॥
चक्रवर्त्तित्वमतुलं सम्प्राप्ता अवनीश्वराः ।
चतुर्दशैते सञ्जाता बलिनश्चक्रवर्त्तिनः ॥
विध्वंसितास्ते महावीर्या दुष्टदैत्यनिबर्हणाः ।
द्वादश्यामुपवासेन विष्णुर्भूप सनातनः ।
चक्रवर्त्तित्वमतुलं सम्प्राप्ता महतीं श्रियं ॥
उपोष्य द्वादशीं शुद्धां यावज्जीवव्रतान्विताः ।
चक्रवर्त्तित्वमापन्ना भुक्त्वा भोगान् सुखानि ते ॥
कुवलाश्वो भवान् गाधिर्धुन्धुमारोऽथ पृथुः ।
मरुतो भरतश्चैव कार्त्तवीर्यश्च हैहयः ॥
मान्धाता सगरो रामः ककुत्स्थो नहुषस्तथा ।

उपोष्य द्वादशीं पुण्यां अपराह्ण विवर्ज्य च।
भुक्त्वा स्वर्गसुखान्येते चक्रवर्त्तित्वमागताः॥
जनकानां महीपाल द्वादश्यां समुपोषणे।
सप्तभिः सप्तभिर्युक्ताः संसिद्धिं परमां गताः॥
पुरुकुत्सो महीपालो द्वादश्यां समुपोषणे।
सिद्धिं प्राप्तः परित्यज्य कर्मबन्धं दुरासदम्॥
मान्धाता यौवनाश्वश्च द्वादश्यां समुपोषणे।
संग्रामे निधनं प्राप्य संप्राप्तः परमं पदम्॥
शाकुन्तलो महीपाल दौष्यन्तिरपराजितः।
द्वादश्यामुपवासेन गतस्तद्वैष्णवं पदम्॥
वैन्यः पुरूरवा भूप पालयित्वा धरातलम्।
धरणीधरमभ्यर्च्य द्वादशीषु सदा पुनः।
गतस्तु वैष्णवं लोकं ह्यप्रलयवर्जितम्॥
एते राजर्षयोभूप द्वादश्यां समुपोषणे।
सिद्धिं परमिकां प्राप्ता ये द्विजास्तान् शृणुष्व मे॥
याज्ञवल्क्यस्तु रैभ्यस्तु माण्डव्यः कौशिकोमुनिः।
भरद्वाजस्तथा कण्वः कुम्भयोनिस्तपोनिधिः॥
अष्टाशीतिसहस्राणां सर्वेषामूर्ध्वरेतसाम्।
प्रयान्ति सन्नतापे तु तिमिरारेर्जनाधिप॥
ते सर्वे परमां सिद्धिं द्वादश्यां समुपोषणे।
यथा यत्र गता भूप कथ्यते संप्रयोभवेत्॥
द्वादशीपारणं राजन् परिपुण्यं मनीषिभिः।

निरापराधं लोकेऽस्मिन् शुभं वैष्णववल्लभम् ॥
तस्मात् भूप न सन्देहः कर्त्तव्यो द्वादशीं प्रति ।
विशेषकस्तदा प्रोक्ता द्वादशी पापनाशिनी ॥

इत्युपसंहारेऽभिहितं, अतोऽन्यदेवैकादश्युपवासव्रतात् द्वादश्युपवासव्रतमस्तीति सर्वमनवद्यं ।

अन्ये त्वाहुः ।

शुक्ले कृष्णे द्विजश्रेष्ठ द्वादशी-श्रवणान्विते ।
द्वादश्यामुपवासस्तु त्रयोदश्यान्तु पारणम् ॥

इत्यादिस्मृतिभिः श्रवणान्वितद्वादश्युपवासविधानेऽपि तत्रैकादश्युपवासकार्य्यापत्तिप्रमाणाभावात् ।

पूर्व्वमेव हि व्याख्याता द्वादशी श्रवणान्विता ।
उपोष्यैकादशीं पश्चात् द्वादश्यामुपवासयेत् ॥

इति स्मृतेरेकादश्यामप्युपवासः कार्य्यः । तेन श्रवणद्वादश्यामेवोभयत्रोपवास इति । तदसत् । श्रवणद्वादशीव्यतिरेकेणापि द्वादश्यां यावज्जीवकाम्योपवासविधानात् तस्माद्यथोक्तमेवाश्रयणीयं ।

इत्येकादशी-द्वादश्युपवासनिर्णयः ।

---

## अथैकादशीव्रते नक्तादिकालनिर्णयः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

पूर्णाविद्धां पश्चार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
यदीच्छेदात्मसन्तानं चतुर्थं नियमेष्वपि ॥

गोपीचितश्च नक्तञ्च नैकभक्तमयाचितं।
नन्दायां पूर्वविद्धायां क्रियेतैवर्धमोक्षता॥
एकादशीयुता यत्ता द्वादशाः समुपोषयेत्।
नक्तं वायाचिते नित्यमेकभक्ते तथार्चने॥
नक्तं वायाचितं तात नैकभक्तमुपाचरेत्।
द्वादशीयचितं दानमनर्थं हरिवासरे॥
इत्येकादशीव्रते नक्तादिकालनिर्णयः।

---

## अथैकादशीव्रताङ्गपारणकालनिर्णयः।

तत्र कूर्मपुराणे।

एकादश्यामुपोष्यैवं द्वादश्यां पारणं स्मृतम्।
त्रयोदश्यां न तत्कुर्य्यात् द्वादशद्वादशीक्षयात्॥

विष्णुरहस्ये।

पारणन्तु न कर्त्तव्यमुपोष्यैकादशीमिह।
त्रयोदश्यां नरैर्नित्यं धर्मवृद्धिमभीप्सुभिः॥
दशम्यनुगता हन्ति द्वादशद्वादशीफलम्।
धर्मापत्य-धनायूंषि त्रयोदश्यान्तु पारणे॥

स्कन्दपुराणेऽपि।

एकादशी यदा कृष्णा द्वादशीलवमात्रिका।
द्वादशद्वादशीर्हन्ति त्रयोदश्यान्तु पारणे॥
यदा भवति चाल्पापि द्वादशी पारणे दिने।
उषःकाले द्वयं कुर्य्यात् प्रातर्मध्याह्निकं तदा॥

नारदीयपुराणे ।

अल्पायामथ राजेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्य्या दान-होमादिसंयुता ॥
त्रयोदश्यान्तु शुद्धायां पारणे पृथिवीफलं ।
शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयं ॥
एतस्मात् कारणाद्विप्राः प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तामर्च्चां कुर्य्येव द्वादशीं ॥
महाहानिकरा ज्ञेया द्वादशी लङ्घिता नृणां ।
करोति धर्महरणं अस्नातेव सरस्वती ॥

कूर्मपुराणे ।

कलार्द्धं क्षणं वापि द्वादशीं न व्यतिक्रमेत् ।
अतिक्रान्ता द्वादशी तु हन्ति पुण्यं पुराकृतम् ॥

भविष्यत्पुराणे ।

यो द्वादशीमतिक्रम्य पारणं कुरुते नरः ।
द्वादश्याख्यव्रतं तस्य तत्क्षणादेव नश्यति ॥

स्कन्दपुराणे ।

द्वादशीं व्यतिक्रम्य त्रयोदश्यान्तु पारणम् ।
करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु ॥

देवीरहस्ये ।

द्वादशीं समतिक्रम्य पारणं यः करोति हि ।
स्नान-दानादिकं सर्व्वं निष्फलं तस्य जायते ॥

न च ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु॥

इति देवलवचनात् द्वादश्यतिक्रमे न दोष इति ग्रहणीयम्। यत आह नारदपुराणे वशिष्ठः।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति।

यस्मिन् काले पारणं मरणं वा तत्र तात्कालिक्येव तिथिः न पुनः सा तिथिः सकला ज्ञेयेत्येतद्भवतीत्यर्थः। अत्र पुनस्त्रयोदश्यां पारणकालपर्य्याप्ता किञ्चन्मात्रैव द्वादशी तत्र पद्मपुराणोक्तम्।

त्रयोदश्यां यदा राजन् द्वादश्यास्तु कला भवेत्।
सा तिथिः सकला चेति वशिष्ठः प्राह धर्म्मवित्॥

स्कन्दपुराणे।

कलाद्वयं चयं वापि द्वादश्याः समतिक्रमेत्।
एकादशीमुपोषित्वा तत्र धर्म्मफलं भवेत्॥

तथा।

द्वादशीतिथिशेषः स्यात् परतश्च त्रयोदशी।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे॥

एतदपि पारणपर्य्याप्तद्वादशीविषयं। एवं च यानि त्रयोदशी-पारणे निषेधपराणि द्वादशीपारणनियमविधिपराणि वा तानि सर्व्वाणि त्रयोदश्यां द्वादशीसम्भवविषयाणि।

तथाच पद्मपुराणे।

यदि किञ्चित् त्रयोदश्यां द्वादशी चोपलभ्यते।
द्वादश्यां पारणं तत्र वर्ज्जयित्वा त्रयोदशीम्॥

महापातकिकरा ह्येषा द्वादशी लङ्घिता नरैः ।
करोति धर्म्महरणमस्नातेव सरस्वती ॥
अथवा द्वादशी न स्यात् स्वल्पापि रविसंयुता ।
पारितव्यं त्रयोदश्यां महापुण्यविवृद्धये ॥

अन्यासु गङ्गाद्यासु सरित्सु तीर्थ्यं परस्मिन् तीरे स्नातव्यं सरस्वत्यां तु प्रथमं स्नात्वा परं पारं गन्तव्यं, 'अस्नाता' इतं स्नानं यस्यां सा स्नाता क्तोऽधिकरणे, न स्नाता 'अस्नाता' सरस्वती लङ्घ्य-माना यथा धर्म्महरणं करोति एवं पारणलङ्घिता अतिक्रामिता द्वादशी धर्म्महरणं करोति ।

पुराणात् ।

एकादशी द्वादशी च तयोपोष्या इतं फलम् ।
मुहूर्त्तं द्वादशीं प्राप्य त्रयोदश्यां न पारणम् ॥

यानि पुनः ।

कलाकाष्ठामुहूर्त्तं तु यदि चेन्न परेऽहनि ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

इति त्रयोदश्यां द्वादश्यभवमनूद्य पारणनिषेधपराणि तानि ।

विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणं ॥

इत्यादिभिः समानार्थानीत्यनवद्यं ।

अन्ये त्वेवं त्रयोदशीपारणनिन्दा-प्रशंसयोर्व्यवस्थामाहुः, गृह-स्थानां त्रयोदशीपारणनिषेधः तथैव च द्वादशीफलहानिलक्षणो-निन्दार्थवादः, त्रयोदशीपारणन्तु यतीनां, तथाहि द्वादशीक्षये-

ऽऽश्रमिणां फलार्थिनां युज्यते, यतयस्तु फलनिरपेक्षाः कर्त्तव्यमिति कर्माचरन्ति। क्रतुशतप्राप्तिपुण्यलक्षणप्रशंसा यतीनामेव, न हि नानाविधानि क्रतुशतफलानि यथोदशीपारणाद्भवन्तीत्यर्थः प्रमाणं, तस्मात्प्रशंसामात्रमेतदिति। तदयुक्त, तथाहि द्वादश द्वादशीन्ति ऽऽश्रमिणामित्यस्य कोऽर्थः, न खलु कृतं विना कर्मभोगेन क्षीयते, तेन द्वादशः स्वरूपेण फलतोवा नश्यन्तीति न सम्भवः किन्तु प्रत्यवायफलविभीषिकेयं। तथाहि न निरा निरेति श्रुत्या-न्तहात्मानमेव तदुद्धतोद्धिरेदिति, न खलूद्धाणात्मनिरयं प्रत्यवा-दिभिरुपलभ्यते, किन्तु निरापदप्रयोगनिन्देयमिति स्थितं। तथा द्वादशीक्षयनिन्दा यति-ऽऽश्रमिणोर्यतेरपि हि नित्य-नैमित्तिक-काम्यानुष्ठानोपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्रयोजनं तस्मात् द्वादशीक्षये मत्युपात्तदुरितक्षयाभावादकरणनिमित्तप्रत्यवा-यापत्तेः यथोदशीपारणमनुचितमेव यतीनां।

तथाचाह।

नित्य-नैमित्तिकैरेव कुर्वाणोदुरितक्षयम्।
ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत्।
वैराग्यपेपविज्ञानात् केवल्यं लभते नर इति॥

यदप्युक्तं "विष्णुसायुज्यमाप्नोतीति यतीनामेवोचितं न ऽऽश्रमि-णामिति। तदप्यसत्। ऽऽश्रमस्यापि यथोचितकर्मानुष्ठानात् मोक्ष-श्रुतेस्तत्र ऽऽश्रम-मुमुक्षोः कर्माण्युपदिश्यन्ते, श्रूयते च "स एवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तत इति।

याज्ञवल्क्यश्च।

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते इति ॥

क्रतुशतपुण्यप्राप्तिश्रवणाच्च प्रशंसा यति-गृहिणोः साधारणैव, तस्मात्तयोरुपोषणविधिनिषेधयोरत्रैव व्यवस्थाऽवसेया । अथै-कादश्यादिधर्मसन्देहे सति येषां वचनमुपादेयं येषामनुपादेयं ते प्रदश्यन्ते विष्णुरहस्ये ।

ब्रह्मोवाच ।

अर्चयन्ति सदा विष्णुं मनोवाक्कायकर्मभिः ।
तेषां हि वचनं ग्राह्यं ते हि विष्णुसमा मताः ॥

कूर्मपुराणे भगवानुवाच ।

संपृच्छ्य वैष्णवान् विप्रान् विष्णुशास्त्रविशारदान् ।
चीर्णव्रतान् सदाचारान् तदुक्तं यत्नतश्चरेत् ॥

स्कन्दपुराणे महेश्वर उवाच ।

ये पुराणानि जानन्ति येतिहासानि तत्त्वतः ।
सदाचारपराः शान्तास्तेषां वचनमौषधम् ॥

पुलस्त्य-सत्यव्रतौ ।

धर्मेषु निरता ये च धर्मशास्त्रार्थचिन्तकाः ।
वेदशास्त्रविदो ये वै तेषां वचनमौषधम् ॥

भगवान् वेदव्यासः ।

वेदवेदार्थतत्त्वज्ञा धर्मशास्त्रार्थचिन्तकाः ।
सदाचारपरा ये वै तेषां वचनमौषधम् ॥

देवीपुराणे ।

ये च न्यायविदः शान्ता धर्मशास्त्रार्थवेदिनः ।
स्वकर्मनिरता दान्तास्तेषां वचनमौषधम् ॥

औषधमिवोपादेयमित्यर्थः ।

आपस्तम्बः ।

यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मो मानुषः स्मृतः ।
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेत्ति तत्त्वतः ॥

तेन तद्वचनमुपादेयमित्यर्थः ।

शारदापुराणे ।

पुराण-न्याय-मीमांसा-धर्मशास्त्रार्थचिन्तकाः ।
सदाचारपरा ये वै तदुक्तं यत्नतश्चरेत् ॥

पद्मपुराणे ।

येतिहासपुराणज्ञाः स्मृतिसिद्धान्तवेदिनः ।
वासुदेवप्रिया ये च तदुक्तं वैदिकं भवेत् ॥

उक्तेभ्यश्च येऽन्ये तेषां वचनं वर्जनीयमित्यर्थः । चिह्नस्मृतश्च
विष्णुरहस्ये कूर्मपुराणे ।

येषां न कारणं वेदा न विप्रा न जनार्द्दनः ।
तन्त्राणि धर्मशास्त्राणि प्रमाणं कारणं मुने ॥

स्कन्दपुराणे ।

वेदाधिगमहीना ये शौचाचारविवर्जिताः ।
नास्तिकाः पण्डितम्मन्यास्तेषां वाक्यं विवर्जयेत् ॥
वैश्वदेवविहीना ये जप-यज्ञविवर्जिताः ।

देवताविमुखा ये च तेषां वाक्यं विवर्जयेत् ॥

आदित्यपुराणे ।

देवताविमुखा ये च जप-होमविवर्जिताः ।
विष्णुभक्तिविहीनाश्च तेषां वाक्यं विवर्जयेत् ॥
येषामरुणके नास्ति रतिः स्वाध्याय एव च ।
परमे धाम्नि सूर्य्ये च तेषां वाक्यं विवर्जयेत् ॥

वैष्णवतन्त्रे ।

येषां गुरौ च जप्ये च विष्णौ च परमात्मनि ।
नास्ति भक्तिः सदा तेषां वचनं परिवर्जयेत् ॥

वायुपुराणे ।

नग्नानग्नाः स्मृता ये वै हैतुका बकवृत्तयः ।
देवतानिन्दका ये वै तेषां वाक्यं विवर्जयेत् ॥

कालिकापुराणे ।

वेदे च देवतायाञ्च कर्मण्यपि च वैदिके ।
श्रद्धा नास्ति च येषां वै तेषां वाक्यं विवर्जयेत् ॥

पद्मपुराणे ।

वाचं व्याकुरुते नैव मीमांसां न तथाध्वरम् ।
शुष्कतर्करता ये वै तेषां वाक्यं विवर्जयेत् ॥

स्कन्दपुराणे ।

येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते ।
न तेषां वचनं ग्राह्यं धर्मनिर्णयसिद्धये ॥

तथा ।

पश्चाद्यन्तु पुराणानि चेतिहासानि मानवाः ।
ये विनिघ्नन्ति तेषां वै वचनं परिवर्जयेत् ॥

तथाच योगयाज्ञवल्क्यः ।

पुराणं पञ्चरात्रञ्च वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये एकादशीनिर्णयः षष्ठोऽध्यायः समाप्तः ।

# अथ सप्तमोऽध्यायः ।

## द्वादशीनिर्णयप्रकरणम् ।

### अथ श्रवणद्वादशीनिर्णयः ।

विष्णुधर्मोत्तरे ।

श्रीराम उवाच ।

उपवासासमर्थानां किं स्यादेकमुपोषितम् ।
महाफलं महादेव तन्ममाचक्ष्व पृच्छतः ।

शङ्कर उवाच ।

या राम श्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥
प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् ।

भविष्योत्तरे युधिष्ठिर उवाच ।

उपवासासमर्थानां सदैव पुरुषोत्तम ।
एका या द्वादशी पुण्या तां वदस्व ममानघ ॥

श्रीकृष्ण उवाच ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
सर्वकामफला पुण्या उपवासे महाफला ॥
सङ्गमे सरितां स्नात्वा द्वादश्यां समुपोषितः ।
समग्रं समवाप्नोति द्वादशद्वादशीफलम् ॥

तथा ।

द्वादशी श्रवणोपेता यदा भवति भारत ।
सङ्गमे सरितां स्नात्वा गङ्गादिस्नानजं फलम् ।
सोपवासः समाप्नोति नात्र कार्या विचारणा ॥

यमः ।

यदा च शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
नाम्ना तु सा महापुण्या द्वादशी विजया स्मृता ॥

विष्णुरहस्ये ।

श्रवणेन समायुक्ता मासि भाद्रपदे च या ।
द्वादशी सा महापुण्या नाम्ना तु विजया च सा ॥
तस्यां स्नातो विधानेन सर्वतीर्थफलं लभेत् ।
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं द्वयाब्दिकम् ॥

स्कन्दपुराणे ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
सङ्गमे सरितां पुण्ये द्वादशीं तामुपोषितः ।
अयत्नादेव प्राप्नोति द्वादशद्वादशीफलम् ॥
बुध-श्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अत्यन्तमहती तस्यां दत्तं भवति चाक्षयमिति ॥
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं द्वयाब्दिकम् ।
फलं दत्तशतानाञ्च तस्यां शतगुणं भवेत् ॥

विष्णुधर्मोत्तरे ।

श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ।
अत्यन्तमहती नाम द्वादशी सा प्रकीर्त्तिता ॥
स्नानं जपं तथा दानं होमश्राद्धं सुरार्चनम् ।
सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह ॥
तस्मिन्दिने तथा स्नातो यत्र क्वचन सङ्गमे ।
स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् ॥
श्रवणे सङ्गमाः सर्वे परिपुष्टिप्रदाः सदाः ।
विशेषाद्द्वादशीयुक्ते व्रतयुक्ते विशेषतः ॥
बुध-श्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अतीव महती तस्यां सर्वं दत्तमिहाक्षयम् ॥
श्रवणद्वादशीयोगे पूजयित्वा जनार्द्दनम् ।
दानं दत्त्वा च विप्रेभ्यः सोपवासो जितेन्द्रियः ॥
महानदीसङ्गमेषु प्रतिवर्षं युधिष्ठिरः ।
चकार विधिवद्दानं ततो दिष्टान्तमागतः ॥
अक्षयं परमं स्थानं दुर्लभं सर्वमानवैः ।
यत्र कामफला वृक्षाः नद्यः पायसकर्द्दमाः ।
सदैवामलपानीयाः पुष्करिण्योमनोरमाः ॥

तं देशमासाद्य वणिक्प्रधाना
सुवृष्टजाम्बूनदभूषिताङ्गः ।
कल्पं समग्रं सुरसुन्दरीभिः
सार्कं स रेमे मुदितः सदैव ॥

बुध-श्रवणसंयुक्ता द्वादशी सङ्गमोदकम् ।

द्वादशं द्वयोदश्चं प्रशस्तं उपवासपरो विधिः॥
जनकेन ककुत्स्थेन धुन्धुमारेण गाधिना।
एतैश्चान्यैश्च राजेन्द्र कामदा द्वादशी कृता॥
या द्वादशी बुधयुतश्रवणेन युक्ता
सा वै जयेति कथिता मुनिभिर्नभस्ये।
तामादरेण समुपोष्य नरोऽपि सम्यक्
प्राप्नोति सिद्धिमणिमादिगुणोपपन्नाम्॥
पौष्करे पद्मपुराणे च।
सर्वकामप्रदे विष्णुर्बुध-श्रवणवासरे।
द्वादश्यां प्रीयतीश: चाश्विनमासयुग्मे क्वचित्॥
तथा च श्रवणद्वादशीं प्रकृत्योक्तं नारदीयपुराणे विष्णुरहस्ये च।
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम्।
निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमेश्वरी॥
तथा च मार्कण्डेयः।
श्रवणर्क्षसमायुक्ता द्वादशी यदि लभ्यते।
उपोष्या द्वादशीं तत्र त्रयोदश्यान्तु पारणम्॥ इति॥
एवञ्च द्वादशीश्रवणयोगमात्रेण कलापि पुण्या भवति यथा
रोहिणीयोगेनाष्टमी।
तथा च मत्स्यपुराणे।
द्वादशी श्रवणायुक्ता कृत्स्ना पुण्यतमा तिथिः।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते॥
केचिदेवं व्याचक्षते यदा कृत्स्ना श्रवणयुक्ता तदा पुण्या न तु तेन

युक्ता तावत्येव यच्छिन्नायवच्छिन्नैव पुण्या भवतीति । तदयुक्तं श्रवण-युक्ता सती कृत्स्ना पुण्या न तु यावती श्रवणयुक्ता तावत्येवेत्यर्थप्रतीतेः ।

एवं ब्रह्मगीतायाम् ।

कृत्तिकादिभिरक्षाणां तारावारविशक्तकम् ।

न ते संयोगमात्रेण पुनन्ति सकलां तिथिम् ॥ इति ॥

तेन यावत्कृत्स्ना तिथिर्नक्षत्रेण युज्यते तावत्येव पुण्येत्यवधार्य्यते, तेन श्रवणद्वादश्यामपि तथैव प्राप्नोति, तदर्थमिदमुक्तं "युक्तमात्रा नक्षत्रेण सकला पुण्यतमेति न तु यावती युक्ता तावत्येव प्रशस्यते" इति । श्रवणस्पृष्टेति पाठे तु स्पृष्टशब्दपर्य्यालोचनयैव च सा तथेन श्रवणयोगापेक्षः स इति प्रतीयते । तथाच श्रवणद्वादश्यां प्रकृत्योक्तं नारदीयपुराणे ।

तिथि-नक्षत्रयोर्योगो योगश्चैव नराधिप ।

द्विकलो यदि लभ्येत स ज्ञेयोऽष्टयामिकः ॥

तस्माद्द्वादश्येव व्याप्ता युक्ता ।

विष्णुपुराणे ।

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ।

तास्वेव तद्व्रतं कुर्य्यात् श्रवणद्वादशीं विना ॥

अस्यार्थः । याः काश्चित्तिथयो येन केनचिन्नक्षत्रविशेषयोगेन पुण्याः प्रोक्तास्तासु यद्विहितं तत्तास्वेव कुर्य्यात् न तिथ्यन्तरे तन्नक्षत्रयुक्ते यथा फाल्गुनशुक्लपक्षद्वादशी पुष्यर्क्षेण युक्ता गोविन्दद्वादशी नाम तस्या-मुपवासव्रतं विहितं तत् तस्यामेव कुर्य्यात्र पुष्यान्वितायां एकादश्यां, सोऽयं श्रवणद्वादशीं विना नियमः । श्रवणद्वादशीव्रतन्तु श्रवणैका-दश्यामपि भवतीत्यर्थः ।

उक्तञ्च भविष्यत्पुराणे ।

श्रीकृष्ण उवाच ।

द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर ।
सर्वपापप्रशमनः सर्वसौख्यप्रदायकः ॥
एकादशी यदा च स्याच्छ्रवणेन समन्विता ।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥

नारदीयपुराणेऽपि ।

यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥
उभयोर्देवता विष्णुः पुराणपुरुषोत्तमः ।
विभेदोऽपि न कर्त्तव्यो विभेदात्पतते नरः ॥

अन्ये त्वेवं व्याचक्षते याश्चितयो नक्षत्रयोगात्पुण्याः कथितास्तासु तद्व्रतं कुर्य्यादेव, श्रवणद्वादश्यान्तु न क्रियते व्रतमिति, नित्य-काम्यै-कादशीव्रता हि वैष्णवा भवन्ति, तच्चैकादश्युपवासानन्तरं द्वादश्युप-वासः कर्त्तुमशक्यः पारणान्तत्वाद्व्रतस्य, असमाप्ते व्रते चैककाले अन्यव्रतनिषेधात् ।

तदुक्तं विष्णुधर्मोत्तरे ।

पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनं ।
असमाप्ते व्रते पूर्व्वे कुर्य्यान्नैव व्रतान्तरमिति ॥

तेन वैष्णवाः केनापि कारणेन गृहीतैकादशीव्रतास्तेषां श्रवण-द्वादश्यां उपवासो न युज्यते "श्रवणद्वादशीं विनेति चोपलक्षणार्थं, तथाच प्रारब्धषष्ठी-सप्तमी-चतुर्द्दशीव्रतानां नक्षत्रयुक्तसप्त-पौर्णमास्यादि-

तिथिलाभे तद्व्रतोपवासानुष्ठानं नाप्नमेव पारणान्तं व्रतं श्रेयमित्या-
द्युपपत्तिकलापस्यातुल्यत्वात् । यथा स्वदीतोभयपक्षाष्टमीव्रतानां रोहि-
ण्यष्टमीप्राप्तौ कथमुपवासविद्धिरिति । तदयुक्तं । एवकारानाकृत्यात्
उपलक्षणत्वस्यार्थैऽपर्यापपत्तौ अन्याय्यत्वाच्च । तस्मात् पूर्व्वैव व्याख्या
युक्ता । एकादशीयुक्ता श्रवणद्वादशी महापुण्या मत्स्यपुराणे ।

द्वादशी श्रवणास्पृष्टा स्पृशेदेकादशीं यदा ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभां ॥

'श्रवणास्पृष्टा' श्रवणेन युक्ता । श्रवणशब्दस्थितिश्चोप्यऽस्ति ।
"श्रवणास्पृष्टेति वदन् स्वल्पश्रवणयोगेनापि द्वादश्युपवासादियोग्या
भवतीति गमयति । विष्णुधर्मोत्तरे ।

एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् ।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत् ॥
तस्मिन्नुपोष्य विधिवद्गच्छेच्छ्वेतपुरं ध्रुवं ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणं ।
निषिद्धमपि कर्त्तव्यमाज्ञेयं पारमेश्वरी ॥

नारदीयपुराणे ।

संस्पृश्यैकादशीं राजन् द्वादशी यदि संस्पृशेत् ।
श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति ॥

यस्तूपवासासमर्थः सोऽत्रैकादशीव्रतश्च तत्रैकादश्यामेवोपवासो
द्वादश्यान्तु पूजामात्रविधिः "असमाप्ते पूर्वमित्युदाहृतवचनात् ।

तथाच मत्स्यपुराणे।

द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि।
उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिं॥

यमः।

श्रवणेन सिता यत्र द्वादशी लभ्यते क्वचित्।
उपोष्यैकादशीं तत्र द्वादश्यामर्चयेद्धरिं॥

यस्तूपवासद्वयासमर्थः स्वीकृतैकादशीव्रतश्च स द्वादश्यामेवोपवसेत्।

तथाच नारदीयपुराणे।

उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुतां।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयं॥
वाजपेये तथा यज्ञे कर्महीनोऽपि दीक्षितः।
सर्वं फलमवाप्नोति अस्नातोऽप्यकृतोऽपि सन्॥

अकृत इति बहुव्रीहिः।

एवमेकादशीं भुक्त्वा द्वादश्यां समुपोषणात्।
पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयं॥

यस्तूपवासद्वयसमर्थस्तं प्रति भविष्योत्तरे दिनद्वयेऽप्युपोषणं विहितं।

एकादश्यामुपोष्यैवं द्वादश्यामप्युपोषयेत्।
न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिरिति॥
असमाप्ते व्रते पूर्वं नैव कुर्याद्व्रतान्तरमिति।

निषेधात्समाप्तिश्च पारणेन विना नास्ति, तदभावे उपवासद्वये

इतो वचनेनैव विष्णुशृङ्खलयोगे एकस्मादेवोपवासाच्छ्रवणद्वादशी-व्रतकार्यमेकादशीव्रतकार्यं च प्रसङ्गात् सिध्यति । अत्र केचिदाहुः यदा तु भाविदिनशेषे रात्रौ वा श्रवणयोगस्तदा "प्रातः सङ्कल्पये-द्विद्वानुपवासव्रतादिकमिति सङ्कल्पयोगाभावादनुपोष्यैव सा तिथि-रिति तदयुक्तं श्रवणयोगेन कृत्स्नतिथिपुण्यत्वाभिधानात् तेन यथातीतेनापि श्रवणयोगेन पुण्यता तथा भाविनापि श्रवणेन पुण्यता विद्यत एव, तथाच विष्णुशृङ्खलयोगेनाद्यामेकादश्यामनुष्ठ-नमेव दिवसपुण्यत्वात् नानाद्वादशीव्रतग्रहणसङ्कल्पः क्रियते । तथाच नक्षत्रोपवासे अस्तमयसम्बन्धिनो नक्षत्रस्योपोष्यत्वात् तस्य च प्रातर-प्राप्तावपि व्रतग्रहणसङ्कल्पस्य पूर्व्वत्वात् प्रातरेव युक्तः । न च तथापि विप्रतिपत्तिः, सकलाहोरात्रपुण्यत्वाभिधानात् तस्मात् "मुहूर्त्तमप्य-होरात्रे यस्मिन् युक्तं हि लभ्यते । अष्टम्यां रोहिणीऋक्षं तां सुपुण्या-मुपावसेदित्यनेन न्यायेन श्रवणयोगमात्रेण द्वादश्यपि सकला सर्व्व-विजयाभिधाना पुण्यवतामनुष्ठेयकर्मार्हेति ।

---

## अथ पारणकालनियमः ।

स्कन्दपुराणे ।

तिथि-नक्षत्रनियमे तिथि-भान्ते च पारणम् ।
अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात् ॥

तथा ।

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः ।
ऋक्षान्ते पारणं कुर्य्यात् विना श्रवणरोहिणीम् ॥

वह्निपुराणे ।

सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः ॥

नारदीयपुराणे ।

तिथि-नक्षत्रसंयोगे उपवासो भवेद्यदा ।
पारणन्तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ॥

इति श्रवणद्वादशीनिर्णयः ।

---

## अथ शिवरात्रिनिर्णयः ।

स्कन्दपुराणे ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत् ॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्त्तव्या तिथि-भान्ते च पारणम् ॥
श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ।
जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते ॥

तत्र छन्दस्मृतिटीकाकृतः केचिदाहुः ।

यदि तावन्निशिविद्धायास्त्रयोदशीयुक्तायाश्चतुर्दश्याः प्रतिप्रसवोऽयं ततः शुक्लपक्षचतुर्दशीविषयता स्यात्तस्या एव पूर्वविद्धाया निषिद्धत्वादितरत्र तु "कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी"त्यादिना पूर्वविद्धाया एव ग्रहणात् । अथोपवासविषये अमावास्यायुक्तायाश्चतु-

र्दश्या अपवादोऽयं तद्वत् उपवासाश्रवणात् । शिवरात्रिशब्देनोच्यते इति चेत् । एवं तर्हि यत्र यथोदश्यामुपवासो विहितश्चतुर्दश्यां जागरणन्तद्विषयं स्यात् । अथ शिवरात्रिशब्देन जागरणमभिधीयते चेत्तर्हि नेदमपवादकमुपवासाविधानात् ।

·भुक्त्वा जागरणे नक्ते चन्द्रार्यव्रते तथा ।
ततो व्रतेषु सर्वेषु रात्रियोगो विशिष्यते ॥

इति जागरणस्य पूर्वविद्धायामेव विधानादनर्थकमिदं वचनं तन्नुआर्थमिदमिति चेन्न, वचने शिवरात्रिपदस्याविवक्षितत्वप्रसङ्गात् । तस्मादत्र द्वितीयेऽहनि चतुर्दशी न विद्यते आदित्योदयसमये वा विद्यते तत्र पूर्वविद्धाया निषिद्धत्वादमावास्याग्रहणे प्राप्ते ।

अयन्तौ शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते ।

इत्युच्यते, यदा

मुहूर्त्तैः पञ्चभिर्विद्धा प्राह्यैवैकादशी तिथिः ।
तदूर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः ॥

अत्र तदूर्द्धविद्धाया एव तिथेर्ग्रहणे यत्र न्यधिकविद्धा भवति तत्र "उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेदिति भक्ष्यकल्पनायां प्राप्तायामिदमुच्यते "जयन्तौ शिवरात्रिश्चेति । यदा तु दिनद्वयेऽपि चतुर्दशी विद्यते द्वितीयेऽहनि रात्रौ न विद्यते रात्रौ च जागरणं विहितं तदा

एकादशीमुपोषित्वा द्वादशीमप्युपोषयेत् ।
नैवात्र विधिलोपः स्यादुभयोर्दैवतं हरिः ॥

इति न्यायेन समानदेवताकत्वेनामावास्यायामेव जागरणं कार्य्यं

चतुर्द्दश्यामपि च ।

अष्टम्यां वा चतुर्द्दश्यां यः शिवं शंसितव्रतः ।

मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम् ॥

इति शिवव्रतं चतुर्द्दश्यां दृश्यते ।

तथा ।

पर्व्वण्यपूज्य देवेशं गुरुमग्निञ्च भक्तितः ।

अदत्त्वा च बलिं तत्र शिवस्याष्टव्रतं जपेत् ॥

इत्यमावास्यायां दृश्यत एव। अपि च शिवरात्रिशब्देन उपवास-शिवपूजा-जागरणान्यभिधीयन्ते, द्वे वा एकं वा आद्ये पक्षे उपवासस्य या विहिता सैवेतरयोरपि, द्वितीयपक्षे यद्युपवासव्यतिरिक्ते द्वे अभिधीयेते तदैकमवास्यायां भविष्यतीति द्वितीयैव स्यात्, तृतीयः पक्षस्तावदनुपपन्नः। यदि जागरणस्योत्पत्तौ शिवरात्रिशब्दवाच्यस्य कालविशिष्टस्य विधानं स्यात् ततोऽधिकारवाक्ये शिवरात्रिव्रतस्य फलसम्बन्धे उच्यमाने जागरणफलसम्बन्ध उक्तो भवति यथोत्पत्तिवाक्ये षण्णामपि यागानां कालसम्बन्धेऽवगते दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेतेति दर्श-पूर्णमासवाच्याः षडेव फले विधीयन्त इत्यवधारितं, एवमिहापि स्यात्। न च तथास्ति। यच तावत् प्रथमं दुर्वाससा व्यासं प्रति।

कृष्णपक्षे चतुर्द्दश्यां न किञ्चिद्भगवन्नपि।

प्राप्तवान् प्राक्यथार्थं वृधाकम्पोषितोऽव्रमः॥

इत्युपक्रम्य ।

धनुः शोध्याद्यतान्येव विन्ध्यपार्श्वे आगन्द ।

पतितानि महाराज शम्भोः शिरसि भूमिप ॥
तस्थौ स एव तत्रैव सर्वरात्रमतन्द्रितः ।
स्वोदरार्थं महाराज मृगलिप्सुरलङ्कृतः ।
रात्रिशेषं स्थितो व्याधः सम्यग्दृष्टिरनामिकः ॥

इत्युपवास-शिवपूजा-जागरणानि प्रासङ्गिकानि तत्र जातानी-त्यभिधाय ।

प्रभाते विमले जाते दृष्ट्वा नत्वैव शङ्करम् ।
स्नात्वा सरसि राजेन्द्र पूजयित्वा महेश्वरम् ।
विल्वपत्रैर्नृपश्रेष्ठ कन्दमूलैश्च पारितम् ॥

इत्येतावति कथिते केन विशेषेण भगवान् जागरणैकफल-सम्बन्धं ब्रवीति । यदपीश्वरवचनं पार्वतीं प्रति व्रतनिरूपणे ।

माघे कृष्णचतुर्दश्यां कर्त्तव्यं व्रतमुत्तमम् ।

इत्युपक्रम्य ।

त्रयोदश्यां विशालाक्षि एकभक्तं समाचरेत् ।
उपोषितो वरारोहे चतुर्दश्यां वरानने ॥

इत्यादिग्रन्थसन्दर्भेण स्नापन-गन्ध-पुष्पादिभिरर्च्चनं पादादा-रभ्य सर्वाङ्गपूजामभिधाय गोमयमण्डलं दीपमालाभिर्वेष्टयित्वार्घ-प्रदानान्तम् ।

स वै मुच्यति पापेन त्रिविधेन वरानने ।

इति प्रायश्चित्तमभिधाय "जागरं तत्र कर्त्तव्यं गीतवादित्र-मङ्गलैरिति जा-ःरणमभिधाय "कर्त्तव्या यामपूजा च स्नानं पञ्चा-मृतेन लिङ्गेवमन्त्रेण कृतं, यच प्राधान्येन कश्चिद्विशेषः, तस्मात्

22-3

प्राधान्यं सर्व्वेषां पक्षाणां इयोर्वा कालपक्षयो "मुख्यं वा पूर्व्वचोदना-ल्लोकवदिति न्यायेनोपवासदिन एव सर्व्वेषामनुष्ठानम्।

तृतीयपक्षे तु "चतुर्द्दश्यां तु कौनाम्लपर्व्वा येन मे कृता। तथा जागरणं रात्राविरत्यत्र जागरणस्यैव रात्रौ श्रवणात्। इतरस्य चतुर्द्दश्यामेव श्रवणात्। यदि परस्यकृतिथौ चतुर्द्दश्यनुरोधेन दिवैव पूजा प्रारभ्यते तथापि दोषो नास्ति, अस्ति च पुराणा-न्तरे "यामपूजातो भिन्ना दिवापूजेति दिवैव सर्व्वस्याः पूजायाः प्रारम्भः। वस्तुतस्तु चयाणामेव प्राधान्यं इत्ययमेव पक्षः।

मम भक्तोऽजनो देवि शिवरात्रिमुपोषकः।
गणत्वं मोक्षदं दिव्यमक्षयं दिव्यशासनम्।
सर्व्वात्मा तु बुभुजे भोगानमृतसम्भवानिति॥

तथा।

तुष्टोऽहं भवभक्तस्य शिवरात्रिमुपोषकः।
वरं ददामि ते तुभ्यं देव-दानवदुर्ल्लभम्॥

इत्येवमादिवक्त्रवचनानुसारादुपवासस्यापि प्राधान्यमेव तस्या-न्वयाणामपि फलसम्बन्धित्वात्।

माघे कृष्णचतुर्द्दश्यां कर्त्तव्यं व्रतमुत्तमम्।

इतीह प्रधानानां व्रतशब्दवाच्यत्वात् व्रतस्य च चतुर्द्दश्यां विहित-त्वात् माघचतुर्द्दश्यास्तु पञ्चदशीयुक्ताया उपवासे प्रदोषादन्यत्र व्या-प्तिताया एव कृष्णचतुर्द्दश्या प्रदोषादिच च तदसम्भवादेकस्मिन्नेव दिने उपवास-पूजा-जागरणानाञ्च कर्त्तव्यत्वादवश्यमन्यतरकाल-बाधायामापतितायां पूजा-जागरणकालस्य पाश्चात्यस्य बाधा युक्ता।

उपवासस्य च तयोः पूर्व्वमनुष्ठेयत्वादनुपसञ्जातविरोधित्वात् प्र-
काश एवानुष्ठानं युक्तं । यदि चोपवासस्याहोरात्रव्यापकत्व तन्मध्य-
गतकालैकदेशेऽनुष्ठीयमानयोः पूजा-जागरणयोस्तिथिविषये सम्प्रयो-
जकयोः प्राधान्याविशेषेऽपि बाध्यत्वमेव युक्तं नोपवासकालव्याप्त्या-
नन्तर्भूतत्वादेव तदुपवासं विना जागरणं दृश्यते । यथा,

कश्चित् पुण्यविशेषेण विरोधोऽपि च यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥ इति ।

तत्र भवतु पूर्व्वविद्धाया ग्रहणं । यत्र "शुक्ला जागरणे गङ्गे
इत्यादौ ।

अन्ये तु न्यायविद्धेऽप्यर्थे पुराणमेवं पठन्ति ।

माघासिते भूतदिनं हि राजन्
उपैति योगं यदि पञ्चदश्याः ।
जयाप्रयुक्तां न तु जातु कुर्या-
च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥ इति ।

तदेतदुपेक्ष्यं ।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इत्यादिभिर्बहुविधादिवचनैरुपवासतिथिनिर्णयप्रकारप्रदर्शिते-
रमावास्याविद्धायां चतुर्दश्यामुपवासो यथा विहितः तथा त्रयो-
दशीविद्धायामपि तथा ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ।

उपवासेषु कालेषु एष धर्मः सनातनः ॥

इति निगमवचनेऽभिहितः, एवमविशेषे सति ।

जयन्ती शिवरात्रिश्च कार्ये भद्रा-जयान्विते ।

इत्येवमादिशास्त्रवचनवशाच्छिवरात्रिचतुर्दशी पूर्वविद्धा ग्राह्यते । अतएव शिवरात्रिव्रतस्य रात्रिप्राधान्यमुक्तं स्कन्दपुराणे ।

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत् ॥

'निशि भ्रमन्ति' 'विचरन्ति'। 'शक्तयः' देव्यः। 'शूलभृत्' शङ्करः, यतोऽतस्तस्यां चतुर्दश्यां सत्यां तेषां भूत-शक्ति-शिवानां पूजनम् । नागरखण्डे ।

माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर ।
अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ ॥
लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च ।
संक्रमिष्याम्यसन्दिग्धं वर्षपापविशुद्धये ॥
तस्माद्रात्रौ हि मे पूजां यः करिष्यति मानवः ।
मन्त्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति ॥

तथा ।

माघ-फाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी ।
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः ॥

'अनङ्गः' त्रयोदशी । यत्तु वचनम् ।

माघासिते भूतदिनस्य राज-
न्नुपैति योगं यदि पञ्चदश्याः ।

जयाप्रयुक्तां न तु जातु कुर्य्या-

च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥

'जया' त्रयोदशी, न तु यस्यां रात्रौ त्रयोदशीयुक्ता चतुर्दशी । तथा चास्मिन्नेव वचने जयायुक्तां रात्रिमिति प्रतीयते ।

तथाच पद्मपुराणे ।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।

जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

अनेन त्रयोदशीयुक्ता यदा चतुर्दशीरात्रिर्न भवति किन्तु दिनभुक्तिप्रमाणतः दिनपर्य्यन्ता तदा जागरोपवासादि कर्त्तव्यमित्युक्तं भवति । एवञ्च माघस्य कृष्णचतुर्दश्यां रात्रौ जयायोगस्य निषिद्धत्वात् ।

अर्द्धरात्रात् पुरस्ताच्चेज्जयायोगो यदा भवेत् ।

पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

इति वचनं माघव्यतिरिक्तविषयमिति केचित् । शिवरात्रिव्रते माघमासव्यतिरिक्ते कृष्णचतुर्दश्यामप्युपवासविधानात् ।

"आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि च ।

प्रतीयात् माघमासे वा द्वादशैवमुपोषयेदित्यादिना ।

दीपोत्सवेऽथवा माघकृष्णायान्तु चतुर्दशी ।

द्वादशस्वपि मासेषु प्रकुर्य्यादिह जागरम् ॥

इति स्कन्दाद्रिखण्डवचनेन जागरणस्यापि विधानादिति । तदयुक्तं माघमासव्यतिरिक्तचतुर्दश्यामुपवासविधानेऽपि न वा शिवरात्रिशब्देनोच्यते शिवरात्रिशब्दस्य माघमासकृष्णचतुर्दश्यां रूढत्वात् ।

तथाच स्कन्दपुराणे।

माघ-फाल्गुनयोर्मध्ये असिता या चतुर्दशी।
शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमा॥

तत्रैव ब्रह्मखण्डेऽपि।

माघ-फाल्गुनयोर्मध्ये कृष्णा या च चतुर्दशी।
दृष्टे शिवफलं यस्मात् तेन सर्वसुरासुरैः।
शिवरात्रिरितिख्याता मन्तव्यैव पृथक्स्थिता॥

तथा।

माघमासस्य शेषे या प्रथमा फाल्गुनस्य च।
कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तिता॥

नागरखण्डेऽपि।

माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी।
तस्या रात्रिः समाख्याता शिवरात्रिसमुद्भवा।
तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः॥

तथाच तत्रैव माघमासे कृष्णचतुर्दशीं प्रकृत्योक्तं।

यानि कान्यत्र लिङ्गानि चराणि स्थावराणि च।
तेषु संक्रमते देवस्तस्यां रात्रौ यतो हरः।
शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभा॥

शिवरहस्ये।

तत्प्रभृत्यत्र देवर्षे माघकृष्णचतुर्दशी।
शिवरात्रिरितिख्याता शिवेयं त्रिपुरद्विषः॥

तस्मादन्यैवं विषयव्यवस्था। यदा दिनद्वयेऽपि प्रदोषव्यापिनी

प्रथमदिन एव वा चयोदशी च दिनपर्याप्ता तदा पूर्वैव चतुर्दशी "चयोदशी यदा देवीति वचनात् । यदा प्रथमदिन एव प्रदोष-व्यापिनी चयोदशी च दिनपर्याप्ता तदा पूर्वैव ।

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति वचनात् ।

ननु यदा द्वितीयदिन एव प्रदोषव्यापिनी तदा किं "अर्द्ध-रात्रात् पुरस्ताच्चेदिति वचनात् पूर्वा ग्राह्या, उत "प्रदोषव्या-पिनीति वचनादुत्तरेति कथं निर्णयः । उच्यते यद्यपि "अर्द्धरात्रात् पुरस्ताच्चेदितिवाक्यं द्वितीयदिने प्रदोषव्यापित्वाभावेऽप्युपपद्यते "प्रदोषव्यापिनीति वाक्यञ्चार्द्धरात्रादुपरि जयायोगेऽपि तथाप्येवंविधे विषये द्वितीयचतुर्दशीग्रहणे प्रागुदाहृतपूर्वविद्धशिवरात्रि—प्रति-पादक—बहुवाक्यसङ्कोचप्रसङ्गः, पूर्वशिवरात्रिग्रहणे तु तदभाव इति सैव ग्राह्या । किञ्च पूर्वा बहुकर्मकालव्यापिनी उत्तरा तु न तथेति सैव ग्राह्या । यदा तु दिनद्वये प्रदोषकाले चतुर्दश्यभावस्तदापि "अर्द्धरात्रात् पुरस्ताच्चेदिति वचनात् पूर्वैव । यत्तु माधाश्रितवचनं तदेतद्वाक्यपर्यालोचनयार्द्धरात्रादुपरिजयायोगनिषेधकं । शिवरा-त्रिव्रतान्तर्भूतमाघमासव्यतिरिक्तकृष्णचतुर्दशीनिर्णयस्त्वेवं । "एका-दश्यष्टमी षष्ठीतिवचनादमावास्याविद्धा वा प्राप्ता "कृष्णपक्षेऽष्टमीति वचनात् चयोदशीविद्धा । एवं विरोधे सति रात्रौ यामचतुष्टये पूजाविधानाज्जागरणविधानाच्च तदनुसारेण बहुकर्मकालव्यापिनी ग्राह्या । यदा तु तत्कर्मकालव्याप्तिस्ततोविशेषस्तदा ।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ।
अन्येषु व्रतकल्पेषु पूर्वोद्दिष्टामुपावसेत् ॥

इति ब्रह्मवैवर्त्तवचनान्निर्णयः ।

अत्र केचिदाहुः ।

यदा पारणपर्य्याप्तामावास्या तदा पूर्वा नोचेत् परा ।

भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा तु पर्वणि ।
एकादश्यां दिवारात्रौ भुक्त्वा चान्द्रायणञ्चरेत् ॥

इति भोजननिषेधात् ।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

'दिनभुक्तिप्रमाणतः' दिवसभोजनानुरोधेन, यस्यां त्रयोदश्यां उपोषितायां तिथ्यन्ते विहितं पारणं रात्रौ नोपपद्यते सात्र त्रयोदशी दिनभुक्तिप्रमाणत इत्युच्यत इति । तदयुक्तं भुक्तिशब्दस्य भोजनवत्कालप्राप्तावपि तिथि-नक्षत्र-वारभुक्तिरित्यादिषु ज्योतिःशास्त्रे निरूढत्वात् । एवञ्च भुक्तिशब्देन भोजनपक्षे "अर्द्धरात्रात् पुरस्ताच्चेदिति सङ्कोचप्रसङ्गः, कालव्याप्तिपक्षे तु न सङ्कोच इति सैवात्र भुक्तिशब्देनोच्यते । किञ्च "त्रयोदशी यदा देवीतिवाक्यात् तिथ्यन्ते विहितं पारणं यदा दिन एव सम्भवति तदा पूर्वा ग्राह्येत्ययमर्थो न वचनादिक्लेशं विना लभ्यते । दिनशब्देन च सन्निहितत्रयोदशीसम्बद्धदिनपरित्यागेन भवत्पक्षे दिनान्तरं प्राप्तं द्वितीयदिनभोजनप्रमाणत्रयोदशी यदा पूर्वदिने तदा निशि सम्पूर्णा चतुर्दशी प्राप्नोत्युक्ते च यदा त्रयोदशी घटिकादिपरिमितभो-

जनप्रमाणा तदेव चतुर्दशी पूर्वविद्धा कार्य्येति प्रसज्येत । ततश्च प्रागुदाहृतवाक्यविरोधः । अथैवमुच्यते यस्यां चयोदश्यां उपोषितायां दिवा भोजनं सम्भवति सा प्राप्नोति तदपि न सर्वस्यामपि चयोदश्यामुपोषितायान्दिवाभोजनसम्भवात् । अथ तिथ्यन्तविहितं भोजनं यदा दिवा सम्भवति तदा पूर्वा प्राप्नोति, तन्न सर्वत्राप्रसङ्गात् रात्रिभोजनेऽपि बाधकाभावाच्च । निषेधस्य रागप्राप्तभोजनविषयत्वात् रागप्राप्तलाभे विधिस्पृष्टे निषेधाप्रवृत्तेर्विधिवैयर्थ्यविकल्पादिप्रसङ्गात् अग्नीषोमीयहिंसादिवत् । उपपादितञ्चैतच्चैत्राभ्यङ्गादिकालनिर्णयप्रस्तावे । तस्मात् सकलदोषपरिहारार्थं भुक्तिशब्देन कालव्याप्तिरेवोच्यते न भोजनमिति सिद्धं । एवञ्च शिवरात्रौ सकलवचनपर्य्यालोचनया व्यवस्थायां काल्पनिकी इच्छतिसृतिटीकाकृतोक्ता व्यवस्था हेया । शिवपूजाजागरणकालबाधस्य विना कारणं प्रसज्येत । उपवासस्यापि पूर्वविद्धायामुपपादितत्वात् बहुतरवाक्यसङ्कोचप्रसङ्गाच्च । शिवरात्रिशब्देन चोपवास-पूजा-जागरणान्यभिधीयन्ते । चयाणामपि प्राधान्यप्रतीतेः ।

तथाच स्कन्दपुराणे ।

एवं द्वादश वर्षाणि शिवरात्रिमुपोषकः ।
यो मां जागरते रात्रिं मनुजः स्वर्गमारुहेत् ॥
शिवञ्च पूजयित्वा यो जागर्त्ति च चतुर्दशीं ।
मातुः पयोधररसं न पिवेत् स कदाचन ॥

नागरखण्डे ।

उपवासप्रभावेन बलादपि च जागरात् ।

शिवरात्रिं तथा तत्र लिङ्गस्यापि प्रपूजयेत् ।
ततो राज्यं समासाद्य पितृ-पैतामहं महत् ॥

नागरखण्डे ।

स्वयम्भूलिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निष्पापो निषादो गणतां गतः ॥

अन्यान्यपि चयाणां प्राधान्यप्रतिपादकानि वचनानि प्रागुदाहृतानि ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
शिवरात्रिनिर्णयः समाप्तः ॥

---

## अथ पर्वसन्धिकालनिर्णयः ।

तत्र पर्व द्विधा पौर्णमासी अमावास्या चेति । तयोश्च स्वरूपं गोभिलेन दर्शितं ।

यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः सन्निकर्षः सामावास्येति ।

सूत्रान्तरञ्च ।

यदा अस्तं गते सूर्य्ये चन्द्रमा अभ्युदियात् सा पौर्णमासीति ।

तत्र पूर्णिमानामनिर्वचनं ब्रह्माण्ड-मत्स्यपुराणयोः ।

यदीक्षेते व्यतीपाते दिवापूर्णे परस्परम् ।

चन्द्रादित्यौ पराह्णे तु पूर्णत्वात् पूर्णिमा स्मृता ॥

अमावास्यानिर्वचनं शतपथश्रुतौ ।

ते देवा अब्रुवन्नमा वै नोऽद्य वसु र्वसति यो नः प्रावात्सीदित्युपक्रम्यते देवा अब्रुवन् वा इमचन्त्सोमादिलुयात् सोममेवास्मै संभरामेति। तस्मै सोमं समभरन्नेष वै सोमो राजा देवान्न... यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स च इहापश्चौषधीश्च प्रविशति स वै देवानां च वसु ञ्छेषां तद्यदेष एताꣳ रात्रिमिहामा वसति तस्मादमावास्या नामेति।

अत्र प्रथमवाक्ये इन्द्रवधानन्तरप्रोषितेन्द्रसमागमाद्देवानामुक्तौ वसुनेन्द्रेण अमावसनिवसनादमावास्येति, द्वितीयवाक्ये तु वसोश्चन्द्र-

मघोऽस्यां रात्रावस्मिंल्लोके निवासादमावास्येति द्विधा निर्वचनं।

पद्मपुराणे।

अग्निष्वात्ता इति ख्याता यज्वानो यत्र संस्थिताः।
अच्छोदा नाम तेषान्तु मानसी कन्यका नदी॥
तमथामावसुन्नाम पितरं वीक्ष्य सङ्गता।
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीड़नात्॥
योगाद्भ्रष्टा तु तेनासौ व्यभिचारेण भामिनी।
धरां न स्पृशते पूर्व्वं पपाताथ भुवस्तले॥
तिथावमावसुर्यस्यामिच्छां चक्रे न तां प्रति।
धैर्य्येण तस्य सा लोके अमावास्येति विश्रुता।
पितृणां वल्लभा यस्मात्तस्यास्त्वक्षयकारिणी॥

परमसंयमिपितृगणाभिमतब्रह्मचर्य्याप्रच्युतिहेतुभूतामावसुधैर्य्य-निवर्त्तणप्रतीतमहिमत्वादमावास्येत्युच्यते इत्येतद्द्वितीयस्य तात्पर्य्यं।

स्कान्दे नागरखण्डे।

अमानाम रवेरश्मिः सहस्रप्रमुखः स्थितः।
यस्यास्य तेजसा सूर्य्यः प्रोक्तस्त्रैलोक्यदीपकः।
तस्मिन् विशति येनेन्दुरमावास्या ततः स्मृता॥

मत्स्य-वायु-ब्रह्माण्डपुराणेषु।

अमा वसेतां ऋक्षेषु यदा चन्द्र-दिवाकरौ।
एषा पञ्चदशी रात्रिरमावास्या ततस्तु सा॥

अमासह एकत्रेत्यर्थः।

स्कन्द-ब्रह्माण्डपुराणयोः।

अमा नाम रवेरश्मिश्चन्द्रलोके प्रतिष्ठितः ।
तस्मात्सोमो वसत्यस्याममावास्या ततः स्मृता ॥

मत्स्य-वायुपुराणयोः ।

आश्रित्यताममावास्यां पश्यतस्तु समागमौ ।
अन्योन्यं चन्द्र-सूर्यौ तौ तदा ते दर्श उच्यते ॥

भगवतीपुराणे ।

कलाः षोडश सोमस्य शुक्ले वर्द्धयते रविः ।
अमृतेनामृतं कृष्णे पीयते विबुधैः क्रमात् ॥
कलामाद्यां पिबेदग्निर्द्वितीयां तपनः कलां ।
विश्वे देवास्तृतीयाञ्च चतुर्थीञ्च प्रजापतिः ॥
पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः ।
सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीं ॥
नवमीं कृष्णपक्षस्य पिबतीन्दुः कलामपि ।
दशमीं मरुतश्चापि रुद्र एकादशीं कलां ॥
द्वादशीं पिबते कामः धनाध्यक्षः त्रयोदशीं ।
चतुर्द्दशीं पशुपतिः कलां पिबति नित्यशः ॥
ततः पञ्चदशीं चैव पिबन्ति पितरः कलां ।
कलावशिष्टोनिष्पीतः प्रविष्टः सूर्य्यमण्डलं ॥
अमायां विशते यस्मादमावास्या ततः स्मृता ।
पूर्वाह्णे प्रविशत्यर्कं मध्याह्ने च वनस्पतिं ॥
अपराह्णे विशत्यप्सु स्वां योनिं वारिसम्भवः ।
अमां प्रविष्टः सोमस्तु शेषया कलयैकया ॥

तृण-गुल्म-लता-वृक्षान् निष्पादयति चौषधीः ।
तमोषधिस्थितं गावश्चरन्त्यापः पिबन्ति च ॥
तदन्नानुगतं गोभ्यः क्षीरत्वमुपगच्छति ।
तत्क्षीरमश्नतोभूत्वा मन्त्रपूतं द्विजातयः ।
स्वाहाकार-वषट्कारैर्हुत्वाहुतयः क्रमात् ॥
हुतमग्निषु सोमाय पुनः सोमं विवर्द्धयेत् ।
एवं संक्षीयते सोमः सोऽप्याप्यायते पुनः ॥

ते च पूर्णमास्यमावास्ये द्विविधे पुराणात् ।

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधा स्थिति ॥

अथानुमतिः सिनीवाली च चतुर्दशीमिश्रे, राका कुहूश्च प्रतिपन्मिश्रे ।

तथाच काठकश्रुतिः ।

या पौर्णमासी सानुमतिः, योत्तरा सा राका, या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूरिति ॥

वृद्धवशिष्ठः ।

राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः ।
राका सम्पूर्णचन्द्रा स्यात्क्षीणेनानुमतिः स्मृता ।
राशिवृद्धे पुनस्तस्मिन् सैव राकेति कीर्त्तिता ॥

भगवतीपुराणे ।

यदा समस्तमिवासूर्यः पूर्णेन्दुरुपागमत् ।
युगपत्सोत्तरा राका तदा भवति पूर्णिमा ॥

मत्स्य-ब्रह्माण्डपुराणयोः ।

यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।

तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥

अत्यर्थं राजते यस्मात्पौर्णमास्यां निशाकरः ।

रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥

वृद्धवशिष्ठः ।

दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ।

तामेव च कुहूमाहुर्नष्टचन्द्रां महर्षयः ॥

मत्स्य-ब्रह्माण्डपुराणयोः ।

सिनीवालीप्रमाणस्तु क्षीणशेषो निशाकरः ।

अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ॥

'सिनी' सिता अवसितेति यावत्, अल्पो बालः 'वाली', सिनी चासौ वाली चेति सिनीवाली। 'सिनीवालीप्रमाणः' बालप्रमाण-इत्यर्थः ।

कुह्विति कोकिलेनोक्ते यावान्कालः समाप्यते ।

तत्कालसंस्थिता ह्येषा अमावास्या कुहूः स्मृता ॥

तथान्यौ यावनुमत्या द्वौ लवौ काल उच्यते ।

लवौ द्वावेव राकाया ज्ञेयः कालोऽपराह्णिकः ॥

तथा ।

द्वौ लवौ ह्यमावास्यायाः स कालः पर्वसन्धिषु ।

द्व्यक्षरस्तु कुहूमात्रः पर्वकालस्तु स स्मृतः ॥

तथा ।

अनुमती च राका च सिनीवाली कुहूस्तथा ।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता ।
इत्येष पर्वसन्धीनां कालो वै द्विलवः स्मृतः ॥

भगवतीपुराणे ।

अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना ।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता ॥

तच्च सन्धौ यजेतेति सन्धौ यागः कर्त्तव्य इति ।

तत्र चातिसूक्ष्मत्वेन कर्मानुष्ठानायोग्यत्वात् सन्धिशब्दः स्वार्थ-सन्निहितकर्मानुष्ठानयोग्यं पूर्वापरं कालं लक्षयति ।

ननु सन्धिमभियजेतेत्यभिशब्दस्योपरीत्यर्थः प्रतिपदि कर्त्तव्यत्वात् सन्धेरुपरि यागकर्त्तव्यताप्रतीतेः सन्धिपूर्वकाले यागो न प्राप्नोति । नैष दोषः निपातानामनेकार्थत्वात् प्रत्यासन्नं सन्धिमभिलक्ष्य यजेतेति वाक्यार्थः, अन्यथा प्रतिपदमभियजेतेत्यत्राप्युपर्यर्थग्रहापत्तेः, प्रतिपदि व्यतीतायां तत उपरि द्वितीयायां यष्टव्यमिति प्रसज्येत । तस्मात् पूर्वापरभाविनि काले सन्धौ यजेतेति श्रुतिर्यागं विधत्ते, अतएव श्रुत्यन्तरं "सन्धिमभितो यजेतेति ।

तथाह बौधायनः ।

सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पूर्वस्याथ परेच वा ॥

ततश्च सन्धिसन्निहित एव काले याज्ञस्य कर्मणोऽनुष्ठाने प्राप्ते अवयवापवर्गे नियममाह श्रुतिः । "पूर्वेद्युरिध्माबर्हिः करोति अग्निं वारभ्य गृहीत्वोपवसति । तथा "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजतीति ।

तदप्यदर्शयं प्रतिपत्पर्वसन्धीत्याह गोभिलः ।

पर्वान्ता उपवस्तव्याः पर्वादयोऽभियष्टव्या इति ॥

‘पर्वान्ताः’ पञ्चदश्यः, तास्वन्वाधानादि कर्त्तव्यं, ‘पर्वादयः’ प्रतिपदः ।

निगमः ।

उपेक्षान्तं यजेदादिं पर्वणोः पर्वचिन्तक इति ।

प्राहुः लौगाक्षीयाः ।

आदिश्चान्तश्च पर्वाणां यज्ञिया इति ।

कात्यायनः ।

पर्वादौ यजेत इति[१] ।

भरद्वाजः ।

पर्वाद्या यष्टव्या भवन्तीति ।

आपस्तम्बेनापि ।

अमावास्यायां दीक्षा यजनीये वा पौर्णमास्यां यजनीये वा सौत्यमहः ।

इति पौर्णमास्यमावास्योपरितनदिनस्य प्रतिपद्रूपस्य यजनीयत्वमुक्तं ।

लौगाक्षिणापि विशेषो दर्शितः ।

पौर्णमासोपवसथस्य भागस्य चतुरो विदुः ।

द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणीति ॥

---

(१) पर्वादौ यद्विचरतीति ग० ।

'औपवस्त्य' उपवासस्याग्न्यन्वाधानादेस्त्रीनंशान् विदुः। यागस्य चतुरोऽंशान् विदुः। 'अन्त्यावंशौ' पञ्चदशी-प्रतिपत्सन्धी, तौ 'उत्सृजेत्' परित्यजेत्। अन्त्यमंशं पञ्चदश्या व्रतकर्मणि, यागे च प्रतिपदश्चतुर्थमंशं। अपरे तु "द्वावंशावुत्सृजेदन्त्याविति पाठमुदाहृत्य व्याचक्षते। आद्यः पादः पञ्चदश्या उपवस्ते अन्वाधानादौ परिहर्त्तव्यः, पश्चादेशान्त्यः पादो यागे परिहरणीय इति। एतच्च सम्पूर्णपञ्चदशीव्यतिरिक्तविषयं, तस्याः प्रथमपाद एवान्वाधानानुष्ठानात्। अन्ये तस्मिन्नेव पाठे प्रथमातिक्रमे कारणाभावादन्त्यः पादः पञ्चदश्याः व्रतकर्मणि परिहरणीय इति व्याचक्षते। एतच्च सद्यस्काल-पौर्णमासीव्यतिरिक्तविषयं, तस्याः पर्वचतुर्थांश एव तदनुष्ठानात्। कथं तर्हि यागे चतुर इत्यपेक्षिते यज्ञपार्श्वः।

पञ्चदश्याः परः पादः पश्चादेः प्रथमांशकः।
कालः पर्वणि यागे स्यादन्यथा तु न विद्यते॥

कात्यायनः।

न यष्टव्यं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित्।
इष्टांश्च तद्विलुम्पन्ति श्रुतिरेषा सनातनी॥

तथा।

प्रतिपद्ग्रासयोश्चैतः पादश्चैकश्च तिष्ठति।
यातयामः स विज्ञेयो न हि भक्षाणि कुर्वते॥

न च पर्वचतुर्थांशादिके आर्त्ते यागकाले प्रज्ञमाने सन्धौ य-जेतेति श्रुतिविरोधः, सन्धेरतिसूक्ष्मत्वेन तत्र साङ्गप्रयोगानुपपत्तेः सन्धिश्रुत्यपेक्षितसन्धिसमीपावधिविषयत्वात् श्रुतेः। न च यावति

कालः स विज्ञेयः प्रातर्होममनीषिभिः" ॥ इति वृद्धशातातपवचनात् "प्रातर्यजध्वमश्विनाविति मन्त्रलिङ्गाच्च। तथा "अग्निरग्नीषोमाख्य यज्ञस्य प्रातरनुवाकैरवन्निति च। "न तस्य सायमग्नीषोमीयेन प्रातर्यक्ष्य-माणः स्यादिति प्रातःकालस्य यागसम्बन्धावगमाच्च। तथा कात्या-यनेनापि "सद्यो वा प्रातरिति यजस्कालः कथितः। तथाच श्रुत्यन्तरेणापि "तत्र यजेत यत्रैनं पश्चादस्तमितं पुरस्तादादित्यो-ऽभ्युदेतीत्यादित्योदयकाले यजेतेत्यवगम्यते। "उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमतीत्युदयानन्तरमेव यागानुष्ठानमापस्तम्बेनोक्तं। यत्तु प्रागुदयादमावस्यायास्तन्त्रकरणमुक्तं "प्रागुदयादमावास्याया-मिति, तदुदयात्प्रागुपक्रममात्रमेव न निष्ठिरेव, "प्रागुदयादनुष्ठा-नेष्वित्यपरविधानविरोधात्।

अथ गोभिलः।

त्रयः पौर्णमासीकाला भवन्ति सन्ध्या वास्तमितोदिता वोच्चैर्वा सन्ध्योदिते चन्द्रे सन्ध्यास्तमिते रवौ चन्द्रोदये उत्तरा प्राच्यस्तमया-दुच्चैरुदेति तामुपवसेत्।

तथा।

सन्ध्यापौर्णमासीमुपवसेदा उत्तरामित्येके।

स्मृत्यन्तरं च।

पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणः।

उपावसेदिति शेषः।

कात्यायनः।

पूर्वां पौर्णमासीमुत्तरां चोपवसेत्।

तत्र दिवा पर्वसन्धौ पूर्वेद्युरुपवासस्तदहर्यागः । रात्रिपर्वसन्धौ तदहरुपवासः परेद्युर्यागः ।

तथाच बौधायनः ।

अथोदाहरत्यूर्द्धमर्द्धरात्रात्पौर्णमास्यां चन्द्रमाः पूर्य्यते स एतं चापरराचं पूर्णो भवति सर्वं चाहरुत्तरस्या रात्रेरा मध्यरात्रादमावास्याया औपवसथ्येऽहन्यूर्द्धं मध्यन्दिनाच्चन्द्रमसादित्यो रभते स एतं चापराह्णमथो भवति सर्वां चैतामुत्तरस्याह्न आ मध्यन्दिनादेतं सन्धिमभियजेतेति ।

अस्यार्थः । 'अथोदाहरति' श्रुतिमिति शेषः । 'पौर्णमास्यामिति विषयनिर्देशः, 'ऊर्द्धमर्द्धरात्राच्चन्द्रमाः पूर्य्यते' पौर्णमासी प्रवर्त्तत इत्युक्तं भवति । 'स एतमपरराचं', अनन्तरञ्च 'सर्वमहः', 'उत्तरस्या रात्रेरा मध्यरात्रात्', अनुवर्त्तते, ततो विच्छिद्यते, सोऽयं रात्रिसन्धिरुक्तः, अथामावास्याविषये 'औपवसथीयेऽहनि यागदिनात्पूर्वेद्युः, 'ऊर्ध्वं मध्यन्दिनाच्चन्द्रमसादित्यो रभते' अमावास्या प्रवर्त्तते, 'स एतमपराह्णं', अनन्तरं सर्वां रात्रिं, 'उत्तरस्याह्नः', 'आ मध्यन्दिनात्', अनुवर्त्तते, ततः प्रतिपद्भवति, स एष दिवासन्धिरुक्तः । एतं सन्धिमभिव्याप्य सन्धेः पूर्वेद्युरग्नीनन्वाधायोत्तरेद्युर्यजेत । तथा एवं दिवासन्धिमभिव्याप्य तदहः प्रातर्यजेतेति ।

एवं श्रुतिमुदाहृत्य तद्गतौ मध्यरात्र-मध्यन्दिनशब्दौ व्याख्यातुमाह,

रात्रिर्हि पौर्णमास्यां सन्ध्ये या भवत्यपरमावास्यायामिति ।

तेन श्रुतिगतौ मध्यरात्र-मध्यन्दिनशब्दौ रात्रिसन्धि-दिवासन्ध्योरुपलक्षकौ विवक्षिताविति प्रतिपादितं भवति ।

अनयोश्च पौर्णमास्यमावास्याविषयश्रुत्योः प्रदर्शनार्थतां वक्तुं उत्तरसूत्रं ।

द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वां पूर्वां पौर्णमासीमुत्तरामुत्तराममावास्यामिति ।

अयमर्थः रात्रिसन्धि-दिवासन्धिमत्यौ द्वे पौर्णमास्यौ, दिवासन्धि-रात्रिसन्धिमत्यौ च द्वे अमावास्ये, तत्र दिवासन्धिः पूर्वामावास्या पौर्णमासी वा, रात्रिसन्धिरुत्तरा । अत्र पूर्वामावास्योक्ता न तु पौर्णमासी तामुपमाख्यानेनाह, 'पूर्वां पूर्वां पौर्णमासीमिति'। अयमर्थः पूर्वाममावास्यामिव पूर्वां पौर्णमासीं आनीयादिति। ततश्च दिवासन्धिमत्यां पौर्णमास्यां यागः पूर्वेद्युरुपवास इति सिद्धं। तथा उत्तरा पौर्णमास्युक्ता न अमावास्या। तां पौर्णमासीं निरूपयन्नाह, 'उत्तरामुत्तराममावास्यामिति उत्तरां पौर्णमासीमुक्तामिवोत्तराममावास्यां आनीयादिति। ततश्च रात्रिगतममावास्या-प्रतिपत्सन्धिमुपवास-यागयोर्मध्ये कुर्य्यादित्यर्थः ।

आश्वलायनश्चाह,

यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् श्वः पूरितेति वा, कार्विकां तृतीयां वाजसनेयिनः समामनन्ति। यदहर्न दृश्येत तदहरमावास्या श्वो न द्रष्टार इति वेति ।

तत्र कार्विकासूत्रार्थं उपरिष्टाद्वक्ष्यते। 'यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्', 'यदहर्न दृश्येत' इति सूत्रद्वयस्यायमर्थः। सर्वदा तावत् राका-कुह्वोरेव चन्द्रमसः पूर्णत्वमदर्शनं चेति ज्योतिःशास्त्रप्रसिद्धं । यस्मिन् पुरस्ताच्चन्द्रमाः पूर्णः 'उत्सर्पेत्' उदियात्, 'न दृश्येत वा',

तत्र यद्यपराह्णे रात्रौ वा पर्वसन्धिस्तदा तां पौर्णमासीं अमावास्यां चोपवसेदिति, यदा तु पूर्वाह्णे मध्यन्दिने वा पर्वसन्धिस्तदा पश्चिमेऽहनि चन्द्रमाः 'पूरिता' पूर्णोभवति, यस्य वा तं द्रष्टारो नेक्षितारो भवेयुः तामनुमतीं सिनीवालीं चोपवसेदिति। "श्वःपूरिता" "श्वो न द्रष्टार इति वेति सूत्रद्वयस्यायमर्थः। उक्तञ्च भाष्यार्थसंग्रहकारेण।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
उपोष्या तत्र राका स्यात् पूर्णोत्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्यानुमतिस्तत्र वा श्वःपूरितलक्षणा॥
अपराह्णे क्षपायां वा पर्वसन्धिर्भवेत् यदि।
उपोष्या तु कुहूस्तत्र यद्दर्शनेति लक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने पर्वसन्धिर्भवेद्यदा।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणेति॥

तदुक्तं निबन्धिभिः।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
तदहस्तत्र चोपोष्या पूर्णा उत्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
पूर्वेद्युस्तत्र चोपोष्या वा श्वःपूरितलक्षणा॥
अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
तदहस्तत्र चोपोष्या यद्दर्शनेतिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
तत्रोपोष्या सिनीवाली श्वो न द्रष्टारलक्षणा॥

मदनकारिकापि ।

पञ्चदशी प्रतिपच्च समेते एकदिने मघतो यदि तस्मिन्पञ्चदशी प्रकृतेरुपवासः पञ्चदशीह तनुर्यदि याग इति ।

तथा संकर्षणकाण्डे गोविन्दोपाध्यायेनोक्तं ।

यस्मिन्नहनि मध्यन्दिने पूर्वं एव विक्रम-सन्निपातौ तत्र पूर्वेद्यु-रुपवासः "यः पुरितेनिवा, "यो न द्रष्टार इत्यस्य विषयः । यथाप-राह्णे रात्रौ वा विक्रम-सन्निपातौ तत्र तदहरुपवासः "यदहः पुरस्ता-च्चन्द्रमा पूर्ण उत्सर्पेत्", "यदहर्न दृश्येतेत्यस्य विषय इति ।

देवस्वामिनाप्युक्तं ।

यदि पूर्वाह्णे पर्वसन्धिः समाप्येत ततो नितरामेव च प्रारम्भं, यदि पुनरपराह्णे रात्रौ वा तदहरुपोष्य श्वोभूते याग इति ।

तथाच लौगाक्षिः ।

पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥

अत्र केचित् सन्ध्यायां पर्वसन्धौ व्यवस्थापकवचनान्तराभावात् प्रायेण तथापि रात्रिशब्दप्रयोगाच्च सापि रात्रिशब्देन ग्राह्यत इत्याहुः। तदयुक्तं । सन्ध्या-रात्र्योर्भेदात्तथपायाश्च कारणाभावात्, सन्ध्यायां पर्वसन्धौ च पूर्वेद्युर्यागस्य "आवर्त्तते यदा सन्धिरित्यनेनैव सिद्धेः । एतेन "स वै सन्नत्येवोपवसेत" "स वा उत्तरामेवोपवसेत्" इति श्रुतिद्वयञ्च व्याख्यातं ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदियाद्रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमियाद्रविः ॥

इत्यादीनि पक्षव्यवस्थया यानि वचनानि तानि तिथ्यन्तरविषयाणि । यत्तु "पूर्वः पूर्वो यजमानोऽवतीयादिति वाक्यं तच्छास्त्रचोदिते काले प्राप्ते यावद्यावत् पूर्वं यजते तावत्प्रशस्तमिति प्रतिपादयत्तत्रैव काले विलम्बं निवारयति न पुनश्चोदितकालानादरेण पूर्वदिनं प्रशस्तमिति। तथाच सति चतुर्दश्यादिष्वपि तिथिषु यावद्यावदधस्तनतिथौ यागः क्रियते तावत्तावत्सुतरां प्रशस्तमित्यापद्यते। तस्मात्पूर्वाह्णादिपर्वसन्धिभेदेन व्यवस्था युक्ता ।

अथ केचिदाहुः पूर्वापराह्ण-मध्याह्नास्त्रेधाविभागाश्रयणेन पञ्च पञ्च मुहूर्त्तात्मका अत्र वेदितव्या इति । ननु त्रेधा विभागपक्षे मध्यन्दिनान्त्यघटिकायां पर्वसन्धौ प्रातःकाले पर्वचतुर्थांशाभावात्तृतीये भागे यागः प्राप्नोति। तत्र "पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः" इत्येतद्विरुध्यते। तदसत् । कथं प्रातःकाले पर्वचतुर्थांशाभावः, प्रातःकालस्य त्रिमुहूर्त्तमात्रत्वादिति चेत् कुतः, "रेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव तु। प्रातस्तु स स्मृतः कालो भागश्चाह्नः स पञ्चमः" ॥ इति वचनादिति चेत्। न। तस्य पञ्चधा विभागपक्षाश्रयत्वात्। अत्र तु पूर्वाह्णपरिमित एव प्रातःकालः यतो मीमांसाभाष्यकारोदाहृतायां श्रुतौ "ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" इति मध्याह्नप्राक्तनः सर्वोऽपि प्रातःकालः प्रतीयते। यदि मध्या-

ह्नात् प्राक् प्रातःकालादूर्ध्वं कालान्तरं स्यात् ततः प्रातर्मध्याह्ना-स्तमयकालेषु ऋग्यजुःसामवेदैरागमने सूर्यस्य कालान्तरे वेदशून्य-स्यागमनं स्यात्। तच्च "वेदैरशून्यस्त्रिभिरेति सूर्य्य इति विरुध्यते। शाखान्तरे "ऋग्भिः पूर्वाह्ण इति पाठान्तरात् प्रातःपूर्वाह्णयोरैक्याव-गमः, अतएव प्रथमं प्रहरमभिधायाहुः स्मार्त्ताः। "स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इत्येवमपि पूर्वाह्णाद्भिन्नश्चेत्प्रातःकालः तर्हि तत्रोपक्रम्य पूर्वाह्णे यागः। यदप्याहुः। "प्रातर्दैवमिति प्रोक्तं तन्नो-पपद्यत इति च।

तदप्युपक्रमाभिप्रायेणैव। पूर्वाह्णैकदेशश्चेत्प्रातःकालः तर्हि पूर्वाह्णविव-क्षया वचनद्वयेऽपि प्रातर्ग्रहणं, अन्यथा "पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणां अपराह्णः पितॄणामिति श्रुतिविरोधः।

पश्चाद्दावेव कुर्वन्ति यदा पश्चादिकं चरुं।

पूर्वाह्ण एव कुर्वन्ति विडुऽप्यन्ये मनीषिणः॥

इति कात्यायनादिवचनात्। अथ यत् प्रातरनुदिते जुहोती-त्यत्रापि दर्शनात्।

षष्ठेऽध्याये जैमिनिना "उदगयनपूर्वपक्षपुण्याहेषु देवानि स्मृतिरूपा-ण्यन्यार्थदर्शनादित्युक्ते भाष्यकारेणान्यार्थसन्दर्शनं "पूर्वाह्णो वै देवा-नामिति दर्शितं।

आह च कर्कोपाध्यायः, "पूर्वाह्णे दर्शयाग इति। अनेन "प्रातर्ह-होमनीषिभिरित्यादि व्याख्यातं। तेनेष्टिविषये त्रेधा विभाग इति सिद्धमिति। तदयुक्तं। अत्र हि पूर्वाह्णापराह्णौ द्विधा विभक्ताहः पूर्वापरभागौ विवक्षितौ। "आवर्त्तनात्तु पूर्वाह्णोऽप्यपराह्णस्ततः परः।

मध्याह्नस्तु तयोः सन्धिर्यदावर्त्तनमुच्यते"। इति वचनात्। न तु पूर्वा-ह्लादिशब्दानां त्रेधा विभक्तस्याह्नः क्रमेण भागत्रयपरत्वं। "आवर्त्तने यदा सन्धिस्ततः पूर्वमथापि वा। तदहर्याग इष्येत परतश्चेत्परेऽहनि" इत्यादिवचनात् वक्ष्यमाणबहुवचनविरोधप्रसङ्गाच्च। किञ्चान्यस्मिन् पक्षे मध्याह्नस्यावर्त्तनादुपरि घटिकापञ्चकपर्य्यन्तत्वात् तत्र सन्धौ तदहरेव यागः प्रसज्येत। न च प्रसज्यतामिति वाच्यं। तत्र प्रातः पर्वचतुर्थांशादिविहितकालासम्भवेन "पर्वणोयश्चतुर्थांश इत्यादिवच-नविरोधात् प्रातःकालस्य त्रिमुहूर्त्तत्वात्।

तथाच व्यासः।

मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गव इति।

पराशरोऽपि।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तं गते रवौ।

प्रातः स्मृतस्ततौ कालोभागश्चाह्नः स पञ्चमः इति॥

पद्मपुराणेऽपि।

रेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव तु।

प्रातस्तु स स्मृतः कालोभागश्चाह्नः स पञ्चमः॥

स्कन्दपुराणे प्रभासखण्डे।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तस्थिते रवौ।

प्रातःकाल इति प्रोक्तो भागश्चाह्नः स पञ्चमः॥

एवमन्येष्वपि प्रातःशब्दार्थप्रतिपादकेषु वाक्येषु त्रिमुहूर्त्तात्मकः प्रातःकालः कथितः, न तु त्रिधा विभक्तस्याह्नः पूर्वो भागः प्रातःकाल-इति क्वचिदपि श्रूयते। यस्तु श्रुतौ प्रयोगः स न मुख्यः अनेकार्थत्वस्याप्या-

त्वात्। यनाडिकाः प्रातःकाल इति प्रोक्तं स्थापनारोपणादिष्विति सोऽप्येवमेव। ननु सार्द्धप्रहरः प्रातःकालः "स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इति वचनात्। 'सः' प्रहरः, अधिक उपरि अर्द्धसंयुक्तः सार्द्धप्रहरः। ततश्च मध्यन्दिनान्त्यघटिकायां पर्वसन्धौ पञ्चसु घटिकास्वतीतासु प्रातःकालः पर्वचतुर्थांशश्च सम्भवतीति तदानीं सांङ्गोयागः करिष्यते। तदयुक्तं। "उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः" इति आपस्तम्बवचनात्। त्रिमुहूर्त्तात्मकः प्रातःकालो यदा पर्वचतुर्थांशसम्भवस्तदैतद्वचनं भविष्यतीति चेत्। न। तल्लोपे कारणाभावात्। न चादित्ये उदिते पौर्णमास्यास्तन्त्रप्रक्रमः आदित्योदयात् प्रागमावास्यायास्तन्त्रप्रक्रम इत्यस्तु पञ्चघटिकास्वतीतासु करिष्यत इति वाच्यं। अङ्गप्रधानवत्यां भावनायां युगपत्पुरुषं प्रवर्त्तयता प्रयोगवचनेन मध्ये विलम्बनिषेधात्। तस्माद्वचनद्वयपर्य्यालोचनया त्रिमुहूर्त्तात्मके सार्द्धप्रहरात्मके च प्रातःकालेऽवगम्यमानेऽप्यापस्तम्बवचनानुरोधात् त्रिमुहूर्त्तात्मक एव ग्राह्यः, तस्मादस्मिन् काले यागसिद्ध्यर्थं असत्युक्त एव विभाग आश्रयणीयः। ननु द्वेधाविभागे यथावर्त्तनादुपरि घटिकामात्र एव सन्धिस्तत्रोत्तरेद्युरेव यागइति तथापि कालासम्भवाद्वचनविरोधस्तुल्य एव। मैवं। पर्वणोयश्चतुर्थांश इत्यादिकालस्य यागान्वयावगतेर्भवितव्यं, तदेतद्यागस्य कालान्वयेनेत्यभ्युपगन्तव्यं, पर्वमात्रोत्तरेद्युर्यागे क्रियमाणे न यागस्य कालान्वय इति पूर्वेद्युरेव याग इत्यविरोधः। नन्वेवं तर्ह्यपराह्णसन्ध्यावुत्तरेद्युर्यागविधानं विरुध्येत। मैवं। यथापराह्णे पर्वसन्धावुत्तरेद्युः प्रतिपच्चतुर्थांशे यागो न भवति तथाभूतस्यैवापराह्णस्याप्य प्रच-

नित्यविरोधः, युक्तचैतत्, अन्यथा हेमन्तकाले प्रतिपद्दिवसे तद्दिवसात् किञ्चिद्दूने चतुर्दशघटिकामात्रे आवर्त्तनं भवति तदा तत्रैव तिथि-वृद्धौ कदाचिच्छोडशघटिकोऽपि चतुर्थांशो भवति तदावर्त्तनादु-परि घटिकामात्रसन्धावुत्तरेद्युरेव यागः प्रसज्येत । न च तद्युक्तं, तत्र विहितकालसम्भवात् "न चह्व्यमिति निषेधात् पूर्व्वेद्युःसम्भवाच्च । अतोऽत्रापराह्णशब्दसङ्कोच एव न्याय्यः, "आ सङ्गमान्मुहूर्त्तादेर्देवं कार्य्यं प्रशस्यत इति वचनं प्रातःकालविधानात्तद्व्यतिरिक्तविषयं भवतात्येतदङ्गीकार्य्यं अन्यथा त्रिधा विभक्तस्याह्नस्तृतीये भागे प्रातरा-त्मके भवता यागाङ्गत्वेन स्वीकृतेऽतीतेऽपि यागप्रसङ्गात् । तस्मात् द्वेधा विभक्तस्याह्नः पूर्व्वापरभागावेव पूर्व्वाह्णापराह्णावत्र गृहीतव्यौ, तत्रापराह्णादिगते पर्व्वसन्धौ परेद्युर्यागः पूर्व्वाह्णगते पर्व्वसन्धौ तदह-र्यागः । यदा तु पूर्व्वापराह्णयोः सन्धौ पर्व्वसन्धिस्तदा तदहरेव याग-इति प्रतिपादनार्थं मध्याह्नग्रहणं । मध्याह्नशब्दो हि पारिभाषिकं मध्याह्नमुत्सृज्याह्नो मध्यमं क्षणमेवात्र प्रतिपादयति । अत एव शाता-तपोऽपि मध्यमशब्दमेव पठति ।

पूर्व्वाह्णे मध्यमे वापि यदि पर्व्व समाप्यते ।
तदोपवासः पुर्व्वेद्युस्तदहर्याग इष्यते ॥

ननु "पूर्व्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरस्तथा । आ तृतीयादप-राह्णः सायाह्नस्तु ततः परं" ॥ इति गोभिलवचनाच्चतुर्धा विभागः, तथा "मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः । मध्याह्नस्त्रिमुहूर्त्तः स्यादप-राह्णोऽपि तादृशः । सायाह्नः त्रिमुहूर्त्तस्तु सर्व्वधर्म्मबहिःस्कृतः" ॥ इति व्यासवचनात्पञ्चधाविभागः सोऽप्युक्तरीत्या त्रिधाविभागवत् कर्म्मान्तर-

विषयः, आश्रितश्चायं द्विधा विभागः सकलसूत्रभाष्यकृद्भिर्बहुभिरपि निबन्धकृद्भिः, युक्तश्चेति स एव स्वीकार्यः। तत्र रात्रिसन्धौ परेद्युरेव यागः "अपराह्णेऽथवा रात्राविति लौगाक्षिवचनात् "पञ्चान्ता उपवस्याः पञ्चाद्यथोऽभियष्टव्या इति गोभिलवचनाच्च। नन्वस्तमयादूर्ध्वं पर्वसन्धौ चतुर्दश्यामस्तमयात् प्रागूर्ध्वं वा समाप्तायां अमावास्यायाः कृत्स्नरात्रियोगित्वे तत्रैव दोषादि युक्तं "तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नाम तं गोभिरनुष्ठाप्य समभरन्निति श्रुत्या रात्रियुक्तायाममावास्यायां दध्यादिरूपस्य सोमस्य सम्भृतिर्देवैः कृतेत्युक्तत्वात्। न च "पञ्चाद्यथोऽभियष्टव्या इति वचनविरोधः, अहोरात्रयोस्तिथ्यामपि तस्य सम्भवात्। न च "अपराह्णेऽथवा रात्रावित्येतद्विरोधः, तस्य पौर्णमास्यामपि सम्भवात् स्मृतित्वेन दुर्बलत्वाच्च। उच्यते। रात्रिग्रहणस्य तिथेरुपलक्षणत्वात् "तदहरेवैष पुरस्तान्न दृश्येत तदहरुपवसेदिति कश्चिदहःशब्दस्यापि दर्शनात्, "स यत्रैव एतां रात्रिं न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेदिति कश्चिदहःशब्दस्यापि दर्शनात्, "स यत्रैव एतां रात्रिं पुरस्तान्न पश्चाद्दृश्ये" इत्यत्र पूर्वस्मिन् रात्रिशेषे पुरस्तादर्शनं उत्तररात्र्यादौ पश्चादेकस्यामेव वा पुरस्तात्पश्चाच्चादर्शनं वक्तव्यं। आद्ये पक्षे या दिवामावास्या सैव स्यात्। द्वितीये पक्षे उत्तररात्रावपि तद्रूपं विद्यते इति सैव भवेत्। अथोच्येत उत्तररात्रौ प्रतिपदो विद्यमानत्वात्तस्यां दर्शनं प्रतिपद्यपि भवतीति।

आह कर्कोपाध्यायः।

दर्शनं प्रायशः प्रतिपद्येव भवतीति।

कात्यायनस्त्वमावास्याशेषे त्वाह।

अष्टमेंऽशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः ।

अमावास्याष्टमेंऽशे च ततः किल भवेदणुः ॥ इति ।

तदसत् यदि रात्रिसम्बन्धादपि शास्त्रतो निषिद्धं सिद्धं तत उद-यात्प्राक् प्रतिपत्प्रवेशः तत्रोपवासो न कर्त्तव्यः पूर्व्वदिने चतुर्द्दशी रात्रावपि विद्यत इति तथापि चन्द्रसद्भावाञ्च कर्त्तव्य एव ।

उक्तञ्च स्मृतौ ।

भूतदिने चतुर्द्दश्यां अमां कुर्व्वन्ति ये द्विजाः ।

विहारं पितृयज्ञञ्च तत्सर्व्वं निष्फलं भवेदिति ॥

'विहारः' विहरणमिव्यर्थं श्रावणीयादेः इत्यर्थः ।

तत्र तल्लोपः प्रसज्येत तस्मात् "पञ्चान्ता उपवसथ्याः पञ्चादयोऽभि-यष्टव्या इत्येतदेव युक्तं तस्माद्रात्रिसन्धौ परेद्युर्याग: । ननु रात्रि-योगिन्यामपि पञ्चदश्यां प्रतिपदि त्रिमुहूर्त्तायां द्वितीयायां "त्रिमु-हूर्त्ता द्वितीया चेदिति वचनात् पञ्चदश्यां यागः कस्मान्न क्रियते विशेषावगमादिति ब्रूमः । यद्यपि रात्रिसन्धिशास्त्रं ह्रस्वान्तर्व्यापिन्यां प्रतिपदि सावकाशं, त्रिमुहूर्त्तद्वितीयाशास्त्रं दिवासन्धौ सावकाशं, यद्यपि च "पञ्चादयो यष्टव्या इत्येतदुपमर्द्देनैव द्वयोरेतद्बाधकाभिमत-दोषाभावस्तथापि रात्रिसन्धिशास्त्रस्यानन्यथासिद्धत्वात् "पञ्चादयो यष्टव्या इत्यत एवोत्तरदिने यागे प्राप्ते पर्व्वचतुर्थांशस्य प्रातः पूर्व्वदिने प्राप्त्यभावाद्यागप्राप्त्यभावे त्रिमुहूर्त्तशास्त्रे यावत् पूर्व्वस्मिन्नहनि प्राप-यितुमप्रयत्नमपेक्षते तावद्रात्रिसन्धिशास्त्रं दृष्ट्वा विषयान्तर मेव चिन्त-यति, तत्रोपरिहारश्चामः । तस्मात् रात्रिसन्धौ परेद्युर्याग इति सिद्धं, अपराह्णसन्धावपि परेद्युर्यागः ।

ननु।

चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते।

श्वोभूते प्रतिपद्यत्र भूते कव्यादिकी क्रिया॥

इति वचनात् पूर्वेव कस्मान्न दृश्यते। तथाच वचनान्तरं।

चतुर्दशी चतुर्याममावास्या न लभ्यते।

श्वोभूते प्रतिपच्चेत् स्यात् पूर्वान्तचैव कारयेत्॥ इति॥

यद्यपि चतुर्दश्या यामचतुष्टयव्यापिन्यमावास्या न लभ्यते किन्तु तदेकदेशव्यापिन्येव तथापि श्वोभूते प्रतिपदस्ति चेत् पूर्वेद्युरेवोपवास इत्यर्थः। कात्यायनवचनेन पश्चादभ्युदय अमावास्येनेष्टेति, यत्रोपवासदिने प्रतिपत्सम्भवः तत्र चिह्नविष्कोष्टिः प्रायश्चित्तत्वेनोक्ता। उच्यते। तस्याः प्रतिपदि सद्भावे द्वितीयासद्भावेऽप्युपपत्तिरन्यथासिद्धापराह्नशब्दस्याच बौधायन उक्ता, तस्माद्द्वितीयेऽहनि यागः। ननु यदा पूर्वेद्युः प्रातः पर्वचतुर्थांशाभावः परेद्युश्च प्रातः पर्वचतुर्थांशः तदा कस्मिन्नहनि यागः क्रियते। न तावत् पूर्वेद्युः तत्र प्रातःकाले पर्वचतुर्थांशादिसमावेशाभावेन यागकालाभावादपराह्नपर्वसन्धिलाच। नापि परेद्युर्यागः तत्रापि विहितकालाभावात्।

अत्र केचिदाहुः अपरेद्युर्यागः कर्त्तव्यः पूर्वेद्युः पर्वचतुर्थांशादिविहितकालासम्भवात् प्रतिपच्चतुर्थांशे यागनिवर्त्तकाभावाच्च। यस्त्वयमस्ति निषेधो निवर्त्तकः।

न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित्।

रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनीति॥

उच्यते मध्याह्नसन्धिविषयोऽयं प्रतिषेधो नापराह्नसन्धिविषयः, तत्र

परेद्युर्यागविधानात् । ननु अपराह्णसन्धावेव परेद्युर्यागप्राप्तेस्तत्र च प्रतिपच्चतुर्थांशसम्भवात् प्राप्तिपूर्वकत्वाच्च निषेधस्य तत्रैव सामञ्जस्यं मध्याह्नसन्धौ तु पूर्वेद्युर्यागविधानात् प्रतिपच्चतुर्थांशगन्धोऽपि नास्तीति निषेधानुपपत्तिः । अत्रोच्यते । "पश्चाद्योऽभियष्टव्या इत्यस्य सम्पूर्णायां तिथौ खण्डतिथौ वा साधारणत्वं, तत्र द्वितीयेऽहनि प्रतिपच्चतुर्थांशस्य प्रातःकाले सम्भवात् प्राप्तिपूर्वकत्वं प्रतिषेधस्य घटत एव । न चैतावता प्रतिपच्चतुर्थांशे यागानुष्ठाने प्रत्यवायभाक्त्वं । "पश्चाद्योऽभियष्टव्या इति तत्र यागस्य विहितत्वाद्विहितप्रतिषेधे च विकल्प एव स्यात् ।

उक्तञ्च तन्त्रवार्त्तिके ।

यद्यपि प्राप्य यत्किञ्चिद्विधिना तुल्यगोचरः ।
प्रत्यवायमतिं कुर्य्याद्विकल्पाश्रयणाच्च तत् ॥
दृष्टौ विधि-निषेधौ हि तुल्यवीर्य्यैकगोचरौ ।
विकल्पेन तयोरेकः प्रामाण्यमनुतिष्ठतां ॥
अङ्गीकृतनिषेधानां नैष दोषोऽस्त्यकुर्वतां ।
चोदनालक्षणत्वन्तु न प्रामाण्यं विधेस्तदा ॥
विधेः प्रामाण्यपक्षे तु प्रतिषेधनिराकृतेः ।
चोदनालक्षणं धर्मं न दोषोऽस्त्यनुतिष्ठतामिति ॥

न च "पश्चाद्योऽभियष्टव्या इत्यस्याः प्रतिपद्भागचतुष्टयेऽपि साधारणत्वेन सावकाशत्वात् "नयष्टव्यं चतुर्थांशे इत्यस्य प्रतिपच्चतुर्थांशविषयत्वेन निरवकाशत्वात् विकल्पो न युक्त इति वक्तव्यं । यतः सामान्यविषयस्यापि विधेर्विशेषनिषेधेन नात्यन्तबाधः क्रियते तदधीनलाभत्वात् ।

तदुक्तं वार्त्तिककारेणैव टीकायां।

अन्यदुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति प्रतिषेधः प्रदेशेनारभ्यविधाने चेत्यत्र वक्ष्यत इति।

तस्माच्छास्त्रप्राप्तार्थत्वात्यन्तप्रतिषेधासम्भवात् "नानुयाजेषु ये यजामहं करोतीतिवद्विकल्पः, न तु तद्वदेव, तर्हि पर्युदासाश्रयणा-दिकल्पः परिहर्त्तुं शक्यते। तथाहि यागचोदितकालस्य पर्वचतुर्थां-शप्रतिपदाद्यभागचयात्मकस्य प्रातःकाले दिनद्वयेऽप्यविद्यमानत्वेन यागानुपपत्तेर्नित्यचोदितकर्म्मणः परित्यक्तुमशक्यत्वात् प्रयोगवचनसा-मर्थ्येन किञ्चिद्विगुणेऽपि काले यष्टव्यमित्यापतिते पूर्व्वेद्युः प्रातःकाले पर्वचतुर्थांशाभावेऽपि पर्वमात्रसद्भावाद्यष्टव्यं, अथ वा परेद्युः प्रतिप-दाद्यभागचयाभावेऽपि प्रतिपन्मात्रसद्भावाद्यष्टव्यमिति प्रतिपच्चतुर्थां-शेऽपि पाक्षिकी प्राप्तिर्न द्वैरपि वारयितुं शक्यते। तस्मात्तथा पर्युदासप्रतिपादने विकल्पस्यापरिहार्य्यत्वाद्वरं मुख्यार्थत्वाच्च विकल्प-प्रसक्तावपि प्रतिषेधवाचक एव नञस्तु। किञ्च पर्युदासासम्भवा-दपि प्रतिषेधः। तथाहि यदि तावत् प्रतिपच्चतुर्थांशस्य वर्जितत्वा-विशेषात्। अथ चतुर्थांशवर्जितायां प्रतिपदि यजेतेति तर्हि पर्वचतुर्थांशे यागो न प्राप्नोति। अथ प्रतिपच्चतुर्थांशवर्जिते चोदिते काले यजेतेत्युच्यते तर्ह्यपराह्णपर्वसन्धावुत्तरमहश्चोदितकालस्तत्रापि प्रतिपच्चतुर्थांशमात्रमेवावशिष्टमिति तत्पर्युदासत्वेन कुत्रान्यत्र विधी-यते। अथ नोद्यन्तमादित्यमीक्षेतेति धात्वर्थेन नञः सम्बन्धादनीक्ष-णवदनुपवद्यागसंकल्पो विधीयते। उच्यते। युक्तं तत्र रागप्राप्तमीक्षणं पर्युदस्तम् इति। इह त्वपराह्णपर्वसन्धौ परेद्युर्यागः शास्त्रप्राप्त इति न

पर्युदसितुं शक्यते । न चात्र यथा चोदकप्राप्तस्यार्षेयवरणस्य "नार्षेयं वृणीते" इति प्रत्यक्षोपदेशेन बलीयसा पर्युदासः तथा न शक्यते वक्तुं । उभयोरपि प्रतिपच्चतुर्थांशप्रापकपर्युदासयोरुपदेशशास्त्रत्वात् । न च यथा यागमात्रे प्राप्तस्य ये यजामह इत्यस्य यागविशेषेष्वनुयाजेषु पर्युदासस्तथात्र सम्भवति । न हि पर्युदासशास्त्रस्य पूर्वाह्णापराह्णादिपर्व्वसन्धिसाधारणस्यापराह्णादिपर्व्वसन्धिशास्त्रं प्रति विशेषशास्त्रता सम्भवति । न च पर्युदासशास्त्रस्य श्रुतित्वेन बलीयस्त्वं, श्रुतित्वासिद्धेः । तथाहि भाष्यकारेण चतुर्थांशनिषेधः कात्यायनवचनादित्युक्त्वा "न यष्टव्यं चतुर्थेऽंश" इति श्लोकः पठितः । तस्माच्छ्रुतिमूलत्वाभिप्रायेण "श्रुतिरेषा सनातनी"त्युच्यते । ननु पर्युदासवचने तव्यप्रत्ययश्रवणेन विधेः स्पष्टत्वादपराह्णादिपर्व्वसन्धिवचने वर्त्तमानापदेशत्वेन कल्प्यविधित्वादिसम्प्राप्तौ वैषम्यं, नैतदेवं, प्रतिपदा पर्युदस्यते चतुर्थांशो वा यागो वेति सन्देहो यावता विकल्पेनापनीयते तावदितरत्रापि वर्त्तमानापदेशो वा पञ्चमलकारो वेति सन्देहोऽप्यपनीयत एव । पर्युदासे नञोपलक्षणार्थत्वं इत्यधिको दोषः । तस्मात् पर्युदासासम्भवात् प्रतिषेधोऽवश्यम्भावी । एवं विकल्पे स्थिते मध्याह्नसन्धिविषयत्वं निषेधस्यापराह्णसन्धिविषयत्वं विधेरिति । यतो लौगाक्षिणा पूर्वाह्णापराह्णसन्धिविषयभेदेन पूर्वोत्तरदिनयोर्यागव्यवस्था कृता "पूर्वाह्णे वाथ मध्याह्ने" इत्यादिना । यत्तु "पर्व्वणोयश्चतुर्थांश" इति वाक्यं तदपि न प्रतिपच्चतुर्थांशे यागं निवारयति । तथाहि न तावच्चतुर्थमंशं निषेधति, अविहितत्वान्निषेधत्वेनाप्रतीतेः । नापि पूर्व्वेषामन्येषामंशानां विधायकत्वेनार्थादितरमंशं निवारयति, विधिविभक्तिशून्यत्वेन विधिवाक्यस्याप्रतीतेः ।

नाप्युपरि हि देवेभ्यो धारयतीतिवद्विधिः कल्प्यते, सिद्धवदनुवादात् प्रमाणान्तराविरोधाच्च विधयः कल्प्यन्ते। इह तु "पर्वणोयश्चतुर्थांश इत्यत्र प्रतिपद्भागत्रयविधाने चतुर्थांशनिवृत्तिप्रयोजने कल्प्यमाने "न यष्टव्यं चतुर्थांशे" इति चतुर्थांशस्य पाक्षिकाभ्यनुज्ञाशास्त्रं विरुध्यते। न च वाच्यं विज्ञेय इति विधिप्रत्ययः, "अर्हे कृत्यतृचश्चे-त्यर्हार्थत्वेनापि घटमानत्वात्, भवतु वा विधिप्रत्ययः, तथाप्यन-पेक्षिते ज्ञाने न तु यजतौ। अथ निर्वपत्यालभतिवदनपेक्षितधा-त्वर्थतोऽपि विधिरिष्टमर्थं विधत्त इति। उच्यते। सापि क्लिष्ट-कल्पना चेति न विस्पष्टचतुर्थांशाभ्यनुज्ञाशास्त्रबाधने सामर्थ्यं। तथाहि धात्वर्थः श्रुत्या विधीयते तदसम्भवे धात्वर्थोऽन्यच विधीयते धात्वर्थे वान्यत् विधीयते। यत्र त्वन्यदेवान्यत्र विधीयते तदतिक्लिष्टं। अथ तद्दोषपरिहारार्थं धात्वर्थो ज्ञानमेव विधीयते कथं तर्हि कालस्य प्राप्तिः। अथ ज्ञानं विधीयमानं ज्ञेयसंस्काररूपमिति ज्ञानसंस्कार्यस्य कालस्य यागे विनियोगमन्तरेणानुपपद्यमानं विनियोगविधिं कल्प-यतीत्युच्यते। तन्न संस्कारानुपपत्त्या संस्कार्यविनियोगकल्पनायाः सक्त्वधिकरणे निराकृतत्वात्। ननु "सोमाभावे पूतीकानभिषुणु-यादिति तमस्मै भक्षं प्रयच्छेदिति च भक्षाभिषवसंस्कारान्यथानुप-पत्त्या फलचमसस्य पूतीकानाञ्च यागविनियोगो यथा कल्पितस्तथे-हापि ज्ञानसंस्कार्यस्य कालस्य विनियोगविधिः कस्मान्न कल्प्यते। उच्यते। युक्तं तत्र सोमेन यजेतेति क्लृप्तविनियोगस्य सोमस्य सोममभिषुणोतीति सोमचमस इति च समाख्यया भक्षाभिषव-संस्कारविधिर्न विरुध्यते इति, सिद्धे भक्षाभिषवयोः सोमसंस्कारत्वे

निरूढसंस्कारस्य द्रव्यान्तरसंस्कारविधानेन युक्तं द्रव्यस्य पूर्वद्रव्यसमानकार्यत्वकल्पनं, इह त्वनिरूढोऽग्नसंस्कारः संस्कार्यस्य कालस्य क्रममाणान्तरलभ्यविनियोगादृते न निर्वहति सक्ताधिकरणन्यायादिति युक्तमेव।

किञ्च सोमद्रव्यस्यैव विनियुक्तस्य कदाचिदलभ्यमानस्य प्रतिनिध्युपादाने प्राप्ते नियममात्रं क्रियते "पूतीकानभिषुणुयादिति, न त्वपूर्वो विनियोगः क्रियते। न लिङ्ग विनियोजकान्तरेण विना सिध्यति, तस्मात् "समुद्रं मनसा ध्यायति पृथिवीञ्च मनसा ध्यायति देवांश्च मनसा ध्यायतीतिवद्दाराद्युपकारकत्वमेव कालस्याग्नविधानस्येति न काले प्रापकत्वं। भवतु वा ग्नानसामग्रीवाक्यिध्ये ग्नानस्यार्थसिद्धत्वेनाविधेयत्वात् कालविधित्वमेव कालग्नानविधानस्येति। तथापि यागकाल इत्येकस्मिन् पदे किञ्चिदुद्दिश्य किञ्चिदुपादीयत इत्येतदनुपपन्नमेव, यथैतत् अग्नेः स्विष्टकृतं यजतीतिवदयष्टृतुः प्रथमभच इतिवच्च, यथा हि वषट्कर्तृविशेषितभक्षणे प्राथम्यसम्बन्धो विधातुं न शक्यते तथा पदान्तरोपात्तपर्वचतुर्थ्यादिविशेषितस्य कालशब्दार्थस्य यागकाल इति समासपदैकदेशप्रतिपादितैकदेशान्तरार्थेन सह पश्चात्सम्बन्धोविधीयत इति नोपपद्यते समस्यमानपदयोः परस्परसम्बन्धात् प्राक्पदान्तरसम्बन्धानुपपत्तेः "परिपूर्णं पदं पदान्तरमाकाङ्क्षतीति न्यायात्। अथ "पर्वणोयचतुर्थ्यां आद्याः प्रतिपद्यस्य इति पदान्तरोपात्तस्य कालस्य यागेन सम्बन्धो विधीयत इति। उच्यते। तथापि यागकाल इति समासपदगतेनोपसर्जनीभूतेन यागेन सह सम्बन्धः प्राप्नोति।

किञ्च फलेन वा कारकेण वा क्रियायाः सम्बन्धो भवति। न च कालो यागस्य फलं, असाध्यत्वात्। नापि कारकं, कारकविभक्तिनिर्देशाभावात्। न हि "प्रतिपदि यजेतेत्येवम् पर्वचतुर्दश्यादेरधिकरणविभक्तिनिर्देशो दृश्यते। तस्मात्सप्तम्यधिकरणार्थः कल्पनीय इत्यपरः क्लेशः।

अस्तु वा कालविधित्वं, तथापि प्रतिपदाद्यभागत्रयविधानं नोपपद्यते। तथाहि इह कालद्वयमुपात्तं पर्वचतुर्दश्यः प्रतिपदाद्यभागत्रयञ्च। न चोभयमेकेन वाक्येन विधातुं शक्यते, यागानुवादेन कालद्वये विधीयमाने वाक्यभेदप्रसङ्गात्। अथ कालस्य निमित्तस्वरूपकत्वात् कालयोर्योगो विधीयते न तु यागे कालावित्युच्यते, तर्हि सुतरामेव वाक्यभेदः। तत्र कालभेदेन यागसम्बन्धभेदप्रतीतेः। अथ प्रतियवं संमार्गेषु विधीयमानेष्वपि यथा न वाक्यभेदस्तद्वदिहापि प्रतिकालं यागे विधीयमानेऽपि न वाक्यभेद इत्युच्यते। तन्न युक्तं। तत्र यवत्व-संमार्गयोरेकेन यत्नेन सम्बन्धं विधाय श्रौते विधितात्पर्य्ये पर्य्यवसिते सत्यार्थिका व्यापारभेदाः प्रतियवमुपजायमाना अपि न वाक्यं भिन्दन्तीति। इह तु पर्वचतुर्दश्याः प्रतिपदाद्यभागत्रयस्य चैकेनैव श्रौतविधितात्पर्य्येण यागसम्बन्धो येन शब्देन विधीयते तथाविधः शब्दोनास्त्युभयोः पृथगुपात्तत्वात्तस्मात्तस्य यागस्यानेकस्मिन् सम्बन्धे विधीयमाने रेवतीवारवन्तीयाधिकरणपौर्णमास्यधिकरणादिपूर्वपक्षवद्वाक्यभेदः। ननु तद्वदेव तर्हि विशिष्टविधानेन वाक्यभेदपरिहारः कस्मान्नेष्यते। उच्यते। विशिष्टविधानेऽभ्युपगम्यमाने यागान्तरापत्तेर्न दर्श-पूर्णमा-

द्वयोरयं कालविधिः सिध्यति । दर्श-पूर्णमासयोः शाखान्तरप्राप्त-
योरेकेन वाक्येन कालद्वयसम्बन्धे वाक्यभेद उक्त एव । अथ “अर्द्ध-
मन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यत्र लक्षणया सन्धौ मिनोतीति
विधाय यथा वाक्यभेदः परिहृतः तद्वत् पर्व-प्रतिपद्भागाभ्यां सन्धि-
लक्षणया वाक्यभेदपरिहार इत्युच्यते । तन्न युक्तं । तत्र सन्धिदेशे
स्थितेऽर्थप्राप्तत्वेनान्तर्वेदि-बहिर्वेदिशब्दार्थयोरनुवादसम्भवात् । इह
तु सन्धिकाले स्थितेऽपि न पर्वचतुर्थांश-प्रतिपद्भागचयस्यानुवादः
सिध्यति । पूर्वापरयोरंशयोर्नियतयोर्विषमयोरर्थप्राप्त्यभावात् ।

किञ्च सम्बन्धविधानस्य किं लक्षणाक्लेशेन “सन्धौ यजेतेति श्रुत्या
सन्धिकाले विहितोऽपि प्रयोगायोग्य इति तत्समीपलक्षणायां प्राप्तायां
किं पर्यन्तः काल इत्यवध्यपेक्षायां पूर्वापरसामीप्यावधिविधानार्थं
वाक्यमागतमिति वक्तव्यम् । यदि पर्वचतुर्थांशादिविधायकमेतद्वाक्यं
भवेत् “पर्वणोयश्चतुर्थांश आद्याः प्रतिपदस्त्रय इति, तदपीदानीम-
नुपपद्यमानं । यदि पुनरपि तत्रैव सन्धिं लक्षयितुं गच्छति तदा
किं तेन कृतं भवति, तस्माद्यागस्य कालद्वयसम्बन्धविधाने वाक्यभे-
दोऽपरिहार्य्यः । अथ यो यागकाल इति यागकालमनूद्य स पर्वण-
श्चतुर्थोऽंश आद्याः प्रतिपदस्त्रयोंऽशाश्चेति विधीयते । तर्हि याग-
काल इति विशिष्टानुवादे एकस्तावद्वाक्यभेदः, पर्वचतुर्थांशस्य प्रति-
पद्भागचयस्य चोभयोर्विधानादपरो वाक्यभेदः । यत्तदोर्व्यत्यासेनान्वय-
इत्यपरो दोषः । अथ पर्वचतुर्थांशं प्रतिपद्भागचयं वानूद्य तयोरुभ-
योर्यागकालत्वं विधीयते । एवं तर्हि पर्वणोयश्चतुर्थांश इति विशि-
ष्टानुवादादेको वाक्यभेदः, आद्याः प्रतिपदस्त्रयोंऽशा इत्यपि विशि-

द्वानुवादाद्द्वितीयोवाक्यभेदः, तयोरुभयोर्यागकालत्वविधानात्तृतीयोवाक्यभेदः, पर्वचतुर्थ्यांशस्य प्रतिपद्भागत्रयस्य च विधायकान्तराभावादनुवादोऽपि न शक्यते कर्तुमित्यपरोदोषः ।

किञ्च कालस्यानुपादेयत्वात् कालविधिपरेषु वाक्येषु कालमुद्दिश्य कर्म्मैवोपादीयते, तदिह यदि पर्वचतुर्थ्यांशमुद्दिश्य स यागकाल इति विधीयते तर्हि विधेयस्य यागकालस्यापि कालरूपत्वेनानुपादेयत्वादुद्देश्यत्वमेव प्राप्नोति। न चोद्देश्यद्वयस्य मिथः सम्बन्धः सम्भवति। न चानयोः समुदायीकरणार्थः एकः शब्दोऽस्ति, येन समुदायस्य यागसम्बन्धविधानाद्वाक्यभेदः परिह्रियेत । ननु यागकाल इति कालशब्देनोभयमेकरूपतया परामृश्य यागसंबन्धोविधीयते । तन्न । याग-कालशब्देन याग-कालयोः सम्बन्धविधानमशक्यमित्युक्तत्वात् ।

किञ्च याग-कालशब्देन पर्वचतुर्थ्यांशादिकालोऽनूद्यते पुनस्तेनैव शब्देन यागस्य कालसम्बन्धो विधीयते, तदा वाजपेयोक्तं वैरूप्यमापद्येत। न ह्येकस्मिन्नेव वाक्ये एकमेव वस्तु तद्वाक्यगतमेव किञ्चिदपेक्ष्यानूद्यते किञ्चिदपेक्ष्य विधीयते इति सम्भवति। यदि तु वैरूप्यपरिहारार्थं पर्वचतुर्थ्यांशपक्षादिपरामर्शमन्तरेण शुद्धस्यैव कालस्य यागसंबन्धो विधीयते। तदयुक्तं। कालसम्बन्धविधानमन्तरेणापि सिद्धेः। अथ “यागकालः स विज्ञेय इति तच्छब्देन पर्वप्रतिपद्भागान् परामृश्य यागसंबन्धोविधीयते, तथापि पूर्वोक्तं वैरूप्यं तदवस्थमेव ।

किञ्च च इत्यवन्तच्छब्द एकवचनान्तश्चतुरः कालभागान् परा-

मर्ष्टुं न शक्नोति । अथानुषङ्गन्यायेन पृथगेकैकं परामृशतीत्युच्यते । नैवम् । एकस्मिन्वाक्ये प्रतिपदमनुषङ्गेऽप्येकस्यानेकेषु सम्बन्धेषु दृष्टमात्रेषु वाक्यभेदप्रसङ्गात् ।

किञ्च एकवचनान्तस्य स इत्यस्य तच्छब्दस्य "आद्याः प्रतिपद्यस्य च इत्यस्य बहुवचनप्रतिनिर्देशात् अनुषङ्गोऽपि नोपपद्यते । यथा गच्छतामित्यस्य संयजेरन्नग्नीनित्यत्र नानुषङ्गः ।

किञ्च यत्तदोर्नित्याभिसम्बन्धात्पर्वणोयश्चतुर्थांश इति पर्वचतुर्थांशे यच्छब्दश्रवणात् स एव तच्छब्देन परामृष्टुं युज्यते न प्रतिपद्भागाः । अथ तथापि यच्छब्दोध्याह्रियते मुख्यश्चात्तयोः श्रुतेः श्रौतं सम्बन्धात् पुनरपि न तस्य परामर्शः । भवतु वाध्याहारः तथापि प्रतिपद्भागा इति बहुवचनान्तस्यैव यच्छब्दस्याध्याहारादेकवचनान्तेन तच्छब्देन पुनरपि कथं सम्बन्धः । अथ पर्वप्रतिपद्भागसमुदाय एकवचनान्ते. तच्छब्देन परामृष्टुं शक्यते इत्युच्यते । तन्न । एकावच्छेदमन्तरेण समुदायानुप[illegible] । अर्थैकेन तच्छब्देनोपादानात् समुदायत्वमित्युच्यते । यथा विद्वाक्ये पौर्णमास्यादिशब्दोपादानादाग्नेयादीनां समुदायत्वसिद्धिः, यथा वा राजसूयशब्देनोपादानादनुमत्यादीनां मन्त्रादीनां(१) पवित्रादीनाञ्च यागादीनां समुदायत्वसिद्धिः । तन्न । तच्छ[illegible]ादानात् समुदायत्वं समुदायत्वादेकवचनान्ततच्छब्दोपादानमितीतरेतराश्रयापत्तेः । आग्नेयादीनामेकश[illegible]ादानव्यतिरेकेणाप्येकोपाधिसम्भवोविद्यत एव । वस्तुतस्तु कालविशेषयोगित्वं नाम तदुक्तम् । "एककालाभिसंयोगाद्भिन्नानामपि कर्मणां । समुदायार्थकं

(१) अनुमत्यादीनामन्त्रादीनामिति ख० ।

अस्यानेकदेशस्थवत्" ॥ इति। राजसूयेऽपि प्रकृतत्वविशिष्टयागत्वोपाधिसद्भावात् समुदायत्वं भविष्यत्येकफलसाधनत्वाद्वा। नन्वत्रापि प्रकृतत्वविशिष्टकालत्वोपाधिसद्भावात् पर्वचतुर्थांशस्य प्रतिपद्भागत्रयस्य च समुदायत्वं भविष्यति। मैवं। किं पदार्थरूपेण कालयोः प्रकृतत्वं, किं वा वाक्यार्थरूपेण, न तावद्वाक्यार्थरूपेण, महावाक्येऽवान्तरवाक्यार्थविवक्षाभावाद्विवक्ष्यमाणेऽवान्तरवाक्यभेदप्रसङ्गात्। नापि पदार्थरूपेण, न हि पर्वणोश्चतुर्थांश इत्यत्र कस्यचिदेकस्य पदस्यार्थः पर्वचतुर्थांशः प्रतिपद्भागत्रयं वा, तस्मान्न प्रकृतत्वावच्छेदात् समुदायत्वं पर्व-प्रतिपद्भागानाम्।

ननु यागसाधनत्वैकोपाधिसद्भावात् समुदायत्वं भविष्यति। नैतदेवम्। यागसाधनत्वात् समुदायत्वं, समुदायत्वादेकवचनान्तेन तच्छब्देन परामर्शः, तच्छब्दपरामर्शाद्यागविधानं, यागविधानाद्यागसाधनत्वं, यागसाधनत्वात् समुदायत्वमिति चक्रकापत्तिः। अतएवैकावच्छेदमन्तरेण समुदायत्वानुपपत्तेः कालद्वयप्रतिपादकावेव शब्दौ कालद्वयसमुदायं वदत इत्येतदपास्तम्। अथ "पर्वणोऽग्रे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः" इति पर्वचतुर्थांशस्य यागसाधनत्वावगमात् "पक्षादयोऽभियष्टव्याः," "न यष्टव्यं चतुर्थांशे" इति वाक्याभ्यां चतुर्थांशवर्जितप्रतिपद्भागत्रयस्य यागसाधनत्वावगमात् "पर्वणोयश्चतुर्थोऽंश इति वाक्यप्रमितेः प्रागेव कालावयवानां यागसाधनत्वलक्षणोपाधेः सिद्धत्वात् "पर्वणोयश्चतुर्थांश इति वाक्ये तेषां समुदायापादनत्वानुपपन्नमिति न चक्रकापत्तिरित्युच्यते। तदयुक्तं। एकेनानेकेषु कालभागेषु यागसाधनतयाभिधीयमानेषु

वाक्यभेदापत्तेस्तत्परिहारार्थं समुदायरूपतयाप्येकत्वापत्तेर्विधेयानां कालभागानामपेक्ष्यते यागसाधनत्वमेव विधातुं। तत्र यदि पर-मिदानीं समुदायत्वापत्तेः प्रागेव वाक्यान्तरैः कालभागानां याग-साधनत्वं सिद्धं किमिदानीं समुदायत्वापत्त्या क्रियते।

किञ्च कालद्वयमिदं विधीयमानं किं समुच्चयेन विधीयते, किं वा विकल्पेन। न तावत् समुच्चयेन कालद्वयसम्बन्धः, तथा सत्युभयोरपि कालयोर्यागानुष्ठानप्रसङ्गात्। नापि विकल्पेन, विकल्पो हि विरुद्धार्थयोः शास्त्रयोः परस्परतो विधानसामर्थ्याविर्भाव-तिरोभावादिना विरुद्ध-व्यापारचतुष्टयद्वयेन क्लेशेन सम्पाद्यमानोऽपि गत्यन्तराभावात् खेदे-नैवाभ्युपेयते। तथैकेनैव विधानात् तावत्क्लेशोऽनुभूयत इति किमे-तद्वाजपेयोक्तवैरूप्यापत्तेः, एवं कालद्वयाभ्युपगमेन सर्वमेतदुक्तं।

किञ्च प्रातरात्मकस्तृतीयोऽपि कालोऽत्रैवोपात्त इति तस्मिन्नपि विवक्ष्यमाणे पूर्वोक्तेषु पक्षभेदेषु सुतरां वाक्यभेदादयः सम्भवन्ति, तस्मादतिमन्दप्रभित्वादस्य वचनस्य न प्रतिपद्भागचयविधानमुखेन चतुर्थांशव्युदासकत्वं, किं तर्ह्यनेन वचनेन क्रियते, न किञ्चित् क्रियते। किन्तु "पर्वणोंऽशे तुरीये तु कर्त्तव्येष्टिरिति पर्वचतुर्थांशे प्राप्ते "पञ्चा-दशोऽभियष्टव्या इति प्रतिपदि प्राप्तायां "प्रातर्यजध्वमिति प्रातःकाले प्राप्ते "न यष्टव्यं चतुर्थेंऽश इति पूर्वोक्तप्रकारेण प्रतिपच्चतुर्थांशे विकल्पेन निषिद्धे वैकल्पिकनिषेधेन सूचितो यावत्कालस्तराभिरवशिष्यते, नाना-शास्त्रप्राप्तः स सर्वः पिण्डीकृत्यैकेन याज्ञिककारिकावाक्येन कथ्यते, स्मरणसौकर्यार्थं "पर्वणोंशचतुर्थांश इति। यथा स्येन वेदिसुक्तो-त्याहिनानाशास्त्रप्राप्तोऽर्थः पिण्डीकृत्यानूद्यते "एतानि वै दशयज्ञायु-

धानीति। यथाह वार्त्तिककारः, "स्रुगादेरल्पमितमन्त्रः कार्येरून-मादिभिः। तत्र यज्ञायुधानीति प्राप्तमेवानुकीर्त्यते"॥ तथा "पर्वणो-यश्चतुर्थांश इत्यपि नानाग्रासस्य पिण्डीकृतानुवादः न पुनः कस्यचि-त्कालस्य विधायकमेतत् येनार्थात् प्रतिपच्चतुर्थांशं चोदयेत्।

किञ्च "उक्तोमनीषिभिरित्युक्तमध्येन वाक्यान्तरेकत एवार्थः स्मरणे चौकर्यार्थमेकत्र पिण्डीकृत्यानूद्यते न त्वपूर्वोऽर्थोऽनेन वचनेन विधी-यत इति दर्शयति। तस्मात्प्रतिपदाद्यभागस्यैव यागकालत्वमिति विधानाभावात् "न चाद्यं चतुर्थेऽंश इत्यनेन निषेधेनापि चतुर्थांशस्य पाक्षिकप्राप्त्याभ्यनुज्ञानपायात्वात्यन्तमयागकालत्वं प्रतिपच्चतुर्थांशस्य। अवश्यमनेन वचनेन विधायकेन भवितव्यं तर्हि प्रातर्विधान-मस्तु सर्वमन्यद्वाक्यान्तरप्राप्तमनूद्यते। ननु प्रातःकालोऽपि "प्रात-र्यजध्वमिति ग्रासप्राप्त एव। नैष दोषः। न हि पौरुषेयवाक्यानां वेदमूलत्वापराधेन विधातृत्वं विहन्यते, सर्वस्मृतीनामप्रामाण्यप्रसङ्गात्। येषामपि वक्तृज्ञानानुमापकानि पौरुषेयवचनानि तेऽपि कथञ्चित् पौरुषेयेषु वचनेषु विध्यनुवादविरोध्यनुवादविवेकं कुर्वन्त्येव न पुनः सर्वानुवादकत्वं मन्यते। येनैवमाहुः यद्योदनाशब्द इत्यनूद्य स धर्म इति विधीयत इति। ननु यदि वाक्यान्तरप्राप्तोऽप्यर्थो-विधातुं शक्यते तर्हि पर्वचतुर्थांशादिरपि कस्मान्न विधीयते। उच्यते। न पर्वचतुर्थांशादिर्वाक्यान्तरप्राप्त इति न विधीयते किन्त्व-नेकविधाने वाक्यभेदभयाद्वाक्यान्तरप्राप्तत्वेन कथञ्चिदनुवदितुमपि शक्यत्वान्न विधीयत। ननु यदि एक एव विधातव्य इति पर्व-चतुर्थांशादिकालस्य वाक्यान्तरविहितत्वात् प्रातःकालो विधी-

यते तर्हि विपरीतं कस्मान्न भवति । उच्यते । "पर्वणोयश्चतुर्थांश-इति चतुर्थांशस्य यच्छब्दोपबन्धाद्विधेयत्वं, प्रातःकालस्तु तद्-भावाद्विधीयते ।

किञ्च पर्वचतुर्थांशस्य "आद्याः प्रतिपदस्तथ इत्येतद्विहितस्य यागकालः स इति तच्छब्देन परामर्श इत्यपरः क्लेशः ।

किञ्च येनैव हेतुना वाक्यभेदभयादिना कालचितयमेतेन न वि-धीयते तेनैव पर्वचतुर्थांशादिरेकोऽपि कालो न विधीयते, तथाहि पर्वणश्चतुर्थोऽंश इति, अथ एते अर्थाः किं तेषां अरुणैकहायनीन्यायेन प्रथमं क्रियया सह संबन्धमनुभूय पश्चात्पार्ष्णिकः परस्परसम्बन्धः, आहोस्वित्प्रथमं परस्परसम्बन्धः पश्चात्क्रियया सह सम्बन्धः इति यदापि प्रथमं क्रियया सम्बन्धः तदापि किं विशिष्टविधानन्यायेन क्रियया सम्बन्धः, आहोस्वित्क्रियानुवादेन तेषां सम्बन्धः इति । यदि तावद्विशिष्टविधानं तथा सति कर्मान्तरापत्तेर्न दर्श-पूर्णमासयोरयं कालविधिः सिध्यति । अथ क्रियानुवादेन पर्वणश्चतुर्थांशस्य च सम्बन्धो विधीयते, तदा प्राप्तक्रियानुवादेनानेकगुणविधानादेकस्या-वद्वाक्यभेदः पुनस्तेषां परस्परसम्बन्धविधानेऽपि स एव दोषः । अथ वाक्यभेदपरिहारार्थं चतुर्थांशादिविशेषणमनादृत्य पर्वमात्रस्य याग-सम्बन्धो विधीयते, तर्हि पर्वणि यदा कदाचिद्यागः प्राप्नोति । चतुर्थांशपदस्य विधित्वेनानुवादत्वेन वानुपपद्यमानं व्याहन्यते ।

ननु पर्वणि यदा कदाचिदीजानः कदाचिच्चतुर्थांशेऽपि यजत-इत्यनुवादः सम्भवति । नैतदेवं । पाक्षिकानुवादस्य न्यायविदाम-सम्मतत्वात् ।

अथ चतुर्थांशयागयोः सम्बन्धो विधीयते, तदपि यद्य कस्यचिद्-द्रव्यस्य चतुर्थांशो यागार्थ इत्युक्तं स्यात् न त्वभिलषितोऽर्थः सिद्ध्यति।

न त्वंशविधानस्यांशिना विनानुपपत्तेरंशिनि कस्मिंश्चिदाक्षेप्तव्ये बुद्धिस्थः पर्वरूपोऽग्निविशेषः किमिति त्यज्यते। उच्यते। बुद्धिस्थोऽपि विध्यसंस्पृष्टो न सिद्ध्यति। अथ यदि विधिना स्पृश्यते तर्हि तदेवानेकविधानमापद्यते। ननु विधिना स्पृश्यमानोऽप्यर्थात् स्पृश्यते न श्रुत्या न तथानेकविधानं दोषः। मैवं। न ह्यनेनांशिविशेषेण विनांशविधेरनुपपत्तिर्येनार्थादिमनेवांशिविशेषं स्पृशेत्। न हि साधारण्यानुपपत्तिरभिधानमात्रेण बुद्धिस्थे विशेषे पर्यवस्यति, तथा सति सर्वत्र गुणविधेस्तस्माद्: "सोमेन यजेतेति यागमात्रं विधाय विधौ पर्य्यवसिते या साधारणी द्रव्याकाङ्क्षा सा विधानमन्तरेणैव बुद्धिस्थे द्रव्यविशेषे सोमे पर्यवस्यतीति कथं विशेषविधानं स्यात्। यद्यपि प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदः प्रसज्यते तथाप्येकगुणविधानमेवास्तु, इतरस्तु गुणविशेषः, सामान्यानुपपत्त्याक्षिप्यत इति वक्तुं शक्यत्वात्।

नन्वेवं तर्हि "पर्वणोऽंशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः"। इति वाक्येन कथं पर्वचतुर्थांशो यागाय विधीयते तथापि पूर्वोक्तानां दोषाणां अविशिष्टत्वात्। उच्यते। "पर्वणोऽंशे तुरीय इति पर्वांशरूपं पदार्थद्वयं परस्परसम्बन्धविशिष्टमेकीभूतं यागाय विधीयत इति विधेयभेदाभावान्न वाक्यभेदः। ननु "पर्वणोऽंशे तुरीय इति पर्वांशयोः परस्परसम्बन्धो विधिव्यापारमन्तरेण न सिद्ध्यति। सत्यं न सिद्ध्यति। किन्तु विध्यन्तरमेवानयोः परस्परसम्बन्धविधायकमस्ति तद्यथा।

पञ्चदश्याः परः पादः पक्षादेः प्रथमास्तथः ।
कालः पार्व्वणयागस्य अन्यथा तु न विद्यते ॥

इति पञ्चदश्याः पादः इत्यनयोः सम्बन्धो विधीयते । नन्वेवं पञ्चदश्या आद्येऽपि पादे यागः प्राप्नोति अथ परः पादः इति विशिष्यते तर्हि वाक्यभेदः । नैष दोषः । "सन्धौ यजेतेति सन्धिकालस्य यागार्थस्य विहितस्यायोग्यत्वात् सन्धिसमीपवर्त्तिनि काले लक्षयितव्ये क्रियासमीपकालो लक्षितः किं नाडिका किं वा प्रहरस्तिथ्यर्द्धं तिथिर्वेत्यपेक्षायां पञ्चदशीपादः सामीप्यविशेषाकाङ्क्षापरिपूरणाय विधीयमानः सामीप्यावष्टम्भेन सन्धिप्रत्यासन्नतर एव सिद्ध्यति न दूरवर्त्ती । नन्वत्र वाक्ये न केवलं पञ्चदशीपादयोः सम्बन्धः प्रतीयते किन्तु यागसम्बन्धोऽपरः प्रतीयते । सत्यमेवं । किन्तु "पर्व्वणोंऽशे तुरीये तु कर्त्तव्येष्टिरिति विधीयमानोऽनूद्यते आगामिन्या अपि प्राप्तेरनुवादसम्भवात् । तस्मात् पञ्चदशीवाक्ये पञ्चदशीपादमात्रं विधीयते । तस्य सम्बन्धस्य यागसम्बन्धमात्रं "पर्व्वणोंऽशे तुरीये त्वित्यनेन विधीयते । तस्य पर्व्वांशस्य तुरीयत्वमविहितमपि सन्धिशास्त्रात्सिद्धमनूद्यत इति पूर्व्वमेवोक्तं । "पर्व्वणोयस्तुर्य्यांश इत्यनेन प्रातःकालसम्बन्धमात्रं विधीयते सर्व्वमन्यदनूद्यते । तस्मात् क्वचिदप्यनेकार्थविधानाभावान्न वाक्यभेदः । ननु पञ्चदश्याः पादस्य सम्बन्धो वाक्यान्तरविहितो यागसम्बन्धविधानपरे वाक्ये वाक्यभेदं न करोतीति यद्युच्यते तर्हि "पर्व्वणोयस्तुर्य्यांश इति वाक्येनापि पञ्चदशीपादस्य यागसम्बन्धो विधातुं शक्यत एव । सत्यं शक्यत एव । किन्त्वसौ विशिष्टकालो यागाय विधातव्यः स चाविशिष्टस्य प्रातरात्मकस्य कालस्य विधानेनापि

वाक्योपपत्तौ न युक्तः विशिष्टस्य वाक्यान्तरसम्पादितत्वेन विशिष्ट-विधाने वाक्यभेदे परिहृतेऽपि स्वरूपमात्रविधानापेक्षया किञ्चिद्विधिगौरवस्यापरिहार्यत्वाद्विशिष्टापादकवाक्यान्तरसापेक्षत्वाच्च। यत्र तु स्वरूपमात्रविधानयोग्यं किञ्चिदुपात्तं नास्ति तत्र गत्यभावाद्विशिष्टमपि यागाय विधीयत एव यथा "पर्वणोऽग्रे तुरीये लिति।

ननु यदि काल-भागयोः विशिष्टत्वमेकेन वाक्येन क्रियते तस्य विशिष्टस्य यागसम्बन्धोऽपरेण वाक्येन तर्ह्यनेनैव प्रकारेण प्रतिपदाद्य-भागत्रयस्य यागसम्बन्धः कस्मान्नेष्यते। तथा हि "पञ्चदश्याः परः पादः पश्चादेः प्रथमास्त्रयः"। इति पश्चादेः पादा अपि सन्निधामीप्याक्षेपबलात् सन्निप्रत्यासन्नाः पादाः प्रथमा एव सिद्ध्यन्तीति। नैतदेवं। इह कालावयवद्वयसम्बन्धः प्रतीयमान आस्ते। न चैकस्मिन्नेव सम्बन्धे विधेये इतरस्मिन् ज्ञातव्ये प्रथमप्रतीतं पञ्चदश्याः पादस्य च सम्बन्धं हित्वा पश्चादवगतः पश्चादेः पादानाञ्च सम्बन्धो विधीयत इति कोऽयं नयः। किञ्च पञ्चदश्याः पादस्य च सम्बन्धः पाठसिद्धः पश्चादेः पादानाञ्च सम्बन्धोऽध्याहार्य्य इत्यपि तस्य दौर्बल्यं। किञ्च विधीयतां नाम कामं पश्चादेः पादानाञ्च सम्बन्धस्तथापि केन वाक्येन संयोगो विधीयते, न तावत्तेनैव, वाक्यभेद-प्रसङ्गात्। नापि "पर्वणो यश्चतुर्थांऽश आद्याः प्रतिपदस्त्रय इत्यनेन, तस्य प्रातःकालसम्बन्धविधानेनैव चरितार्थत्वमित्युक्तत्वात्। न चान्यद्वाक्यमस्ति येन प्रतिपद्भागत्रयस्य यागेन सम्बन्धो विधीयते। तस्माद्भागत्रयविधानासम्भवात् "न यष्टव्यं चतुर्थेऽंशे" इत्येतदेव चतुर्थांशनिषेधकमवशिष्यते। तत्र प्रतिपच्चतुर्थांशस्यापि विकल्पेन प्राप्तिमनु-

आगातीत्युक्तं। तस्मात् पूर्वाह्णमध्यन्दिनापराह्णादिपर्वसन्धौ प्रतिपच्चतुर्थांशो न निषिध्यते पूर्वाह्णपर्वसन्धौ तु निषिध्यत इति सिद्धं। तथाच त्रिकाण्डमण्डनेनोक्तं ।

सन्धिर्यद्यपराह्णे स्यात्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

तदेतत्त्रिकाण्डमण्डनादिमतमन्ये नानुमन्यन्ते। कस्मात् पूर्वाह्णापराह्णसन्ध्ययोरुभयोरप्युपवासे द्वितीयेऽहनि च यागेऽनुष्ठीयमाने पश्चाद्देः प्रतिपच्चतुर्थांशस्य च सम्भवात् "पश्चाद्योऽभियष्टव्याः"। "न यष्टव्यं चतुर्थेऽंशे" इति शास्त्रद्वयस्याप्यनुपात्तमध्याह्नसन्धावेकमपराह्णसन्धावपरमिति व्यवस्थायां प्रमाणाभावात्। न च लौगाक्षिवाक्यं प्रमाणं, तस्य पूर्वोत्तरदिनद्वययागव्यवस्थापरत्वेन विधि-निषेधव्यवस्थायां तात्पर्य्याभावादसम्भवाच । तथाहि आदित्योदयसमनन्तरं पर्वसन्धौ तदहर्यागे क्रियमाणे पश्चादिशास्त्रस्य निषेधानुग्रहदर्शनात्। अपराह्णसन्धावर्वागस्तमयात्पर्वसन्धौ द्वितीयेऽहनि यागानुष्ठानेऽप्युभयोरनुग्रहदर्शनात्। एवं रात्रिसन्धावप्युभयोरनुग्रहः ।

अथ प्रतिपच्चतुर्थांशे यागाभावात् पूर्वाह्णसन्धौ पश्चादिशास्त्रस्यानुग्रहो नास्तीत्युच्यते, तर्ह्यपराह्णसन्धावपि प्रतिपदाद्यभागे यागो नास्तीति पश्चादिशास्त्रमनुग्रहान्तमुच्यते। तथा शास्त्रान्तरवशाद्द्वाये भागत्रये यागेऽनुष्ठिते "पश्चाद्योऽभियष्टव्या इत्यस्यार्थोऽपि क्रियत एव। तथा कृत्स्नपश्चादिदर्शपूर्णमासयागो न व्याप्नोतीत्येकदेशे एवमनुष्ठानं। यदपि "न यष्टव्यं चतुर्थेऽंशे" इति निषेधान्यथानुपपत्त्या प्रतिपच्चतुर्थांशे यागकल्पनं तदप्यचार्वयस्य स्थानं स्यादित्येतदपि-

कारणविरुद्धम्। अत आर्षेयं वृणीते इत्यस्य त्रीन् वृणीते इत्यस्मिन् विद्यमाने न चतुरो वृणीत इति निषेधकल्पविधिपरत्वं न सम्भवतीत्युक्तं। तद्विहापि "पञ्चादयोऽभियष्टव्या इत्यस्य "पञ्चादेः प्रथमास्तय इत्यस्मिन् विद्यमाने "न यष्टव्यं चतुर्थेऽंश इति निषेधाद्विध्यन्तरकल्पना न सम्भवतीति। तस्मात् "न यष्टव्यं चतुर्थेंऽश इति नित्यानुवादोऽयं न चतुरो वृणीते इतिवत्। अथ वा पर्युदासोऽयं, "पञ्चादयोऽभियष्टव्या इति प्रतिपदि यागकाले उच्यमाने "न यष्टव्यं चतुर्थेऽंश इत्यनेन चतुर्थांशवर्जिते प्रतिपदि यष्टव्यमित्युच्यते, एतदेव स्पष्टीकृतं स्मृत्यन्तरे "पञ्चादेः प्रथमास्तय इति, "आद्याः प्रतिपदस्त्रय इति च। एवञ्च सति "पञ्चादयोऽभियष्टव्या इत्यस्य "न यष्टव्यं चतुर्थेऽंश इत्यस्य च प्रतिपद्भागत्रयस्तुत्या सहैकश्रुतिमूलत्वं भविष्यति। यत्तु पर्युदासपक्षे दूषणमभिहितं अपराह्णपर्वसन्धौ षड्घटिकात्मके च तिथिद्वये पूर्वेद्युः पर्वचतुर्थांशाभावेऽपि पर्वतृतीयांशे यष्टव्यम्, परेद्युः प्रतिपदाद्यभागत्रयाभावेऽपि चतुर्थभागे यष्टव्यमिति प्रयोगवचनसामर्थ्यादापतितो विकल्पो न देवैरपि वारयितुं शक्यते, पर्युदासस्य न नञो मुख्योऽर्थः किन्तु लक्षणयेति। तदसत्। यदि हि पर्वतृतीयभागवत् प्रतिपच्चतुर्थांशो न पर्युदस्तः स्यात् तदैवमपि भवेत्, इह तु "न यष्टव्यं चतुर्थेऽंश इति पर्युदाससद्भावात् पर्वतृतीयभाग एव यागः प्राप्नोति। न च पर्युदासे लक्षणेत्येकादशीनिर्णये दर्शितं, अनेनैव न्यायेन निषेधपक्षेऽपि पूर्वेद्युरेव यागः प्राप्नोति। अनुपपत्त्या हि पर्वतृतीयप्रतिपच्चतुर्थभागयोर्विकल्पेन यागे प्राप्ते "न यष्टव्यं चतुर्थेऽंश इति प्रतिपच्चतुर्थांशे यागस्य निवारितत्वात्।

अन्यथा मुद्गप्रतिनिधित्वेन माषाणां ग्रहणे प्राप्ते षष्ठेऽध्याये जैमिनिनाभिहितं “प्रतिषिद्धं वा विशेषेण विहितं तु श्रुतिरिति, कात्यायनेन च “प्रतिषिद्धं प्रत्ययादिति, तथापि वक्तुं शक्यते प्रतिषिद्धानामपि माषाणामस्तु ग्रहणमिति। अतश्च परिहारोऽर्थप्राप्ते निषेधो बाधक एवेति स इह समान इति। यत् किञ्चिदेतत्पर्वचतुर्थांशस्य श्रुतत्वमसिद्धमित्युक्तं। तन्न। कात्यायनेन “श्रुतिरेषा सनातनीत्यभिधानात्। यत्तु भाष्यकारेण कात्यायनवचनादित्युक्तं तच्छ्रुतित्वेऽप्यविरुद्धं “श्रुतिरेषा सनातनीत्यस्य कात्यायनवचनत्वात्। दिङ्मात्रमत्र दर्शितं ग्रन्थविस्तरभयादिति। तस्मात् यथोक्त एव काले याग इति सिद्धं।

अन्ये त्वेवमाहुः “न यष्टव्यं चतुर्थेंऽशइति यद्वचनं तत्पूर्वाह्णसन्धिविषयमिति व्याख्येयं। न च पूर्वाह्ण-मध्याह्नसन्धिग्राहकं हि पर्वचतुर्थांशे यागविधायकं न ततः प्रतिपच्चतुर्थांशे यागस्य प्राप्तिरस्ति अतः प्राप्त्यभावेन प्रतिषेधानर्थक्यं प्राप्तिपूर्वकत्वात् प्रतिषेधस्येति वाच्यं। ततः प्राप्त्यभावेऽपि “पञ्चाद्योऽभियष्टव्याइत्यनेन प्राप्तिसम्भवात्। न च “आद्याः प्रतिपदस्तथ इत्यनेनाद्योपसंहार इति वाच्यम्। अस्य कालान्तरोपलक्षकत्वेनाविरोधादुपसंहारपरत्वानुपपत्तेर्दिनद्वयेऽप्युक्तयागकालचतुष्टयालाभे त्ववश्यं यागकालान्तरमभ्युपगन्तव्यम्। न च तस्यान्यत्प्रापकं प्रमाणमस्ति। व्यवस्थाप्राप्तानां व्यवस्थापरत्वेनापूर्वकालविधायकत्वानुपपत्तेः उभयपरत्वे वाक्यभेदप्रसङ्गात् केवलकालविधिपरत्वे च व्यवस्था निष्प्रामाणिकी स्यात् तस्मात्कालान्तरोपलक्षकमेवैतदिति सिद्धं। तदयुक्तं। विना

कारणं लक्षणाप्रसङ्गात् यागकालसम्बन्धस्य त्रिमुहूर्त्ता द्वितीया चेत्यादिशास्त्रेणार्थसिद्धेः, अतो न वाक्यभेदोऽपीति यत्किञ्चिदेतत्। तस्माच्च प्रतिपच्चतुर्थांशे याग इति सिद्धम्।

ननु हेमन्तकालेऽल्पामतिहूस्वत्वात् किञ्चिन्न्यूने चतुर्दशघटिका-मात्र आवर्त्तनं भवति, तत्र तिथिवृद्धौ सत्यां षोडशनाडिकोऽपि पर्वचतुर्थांशो भवति, तत्र तत्स्योपक्रमकालादारभ्य प्रातः पर्वचतु-र्थांशोऽस्ति द्वितीयदिने च प्रातः प्रतिपत्तृतीयांशस्तत्र कुत्र यागः। अत्र केचिदाहुः अपराह्णपर्वसन्धित्वात्परेद्युर्याग इति। तदयुक्तं। "पर्वणोऽशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः। द्वितीयासहितं यस्मा-द्दुपयन्त्याश्वलायनाः" ॥ इति हारीतवचनात् "त्रिमुहूर्त्ता द्वितीया चेत्यादिवाक्यविरोधाच्च। अपराह्णसन्धिशास्त्रं तु त्रिमुहूर्त्तशास्त्रा-विरुद्धे विषये व्यवतिष्ठते। नन्वपराह्णसन्धिशास्त्राविरुद्धे विषये पूर्वा-ह्णपर्वसन्धौ त्रिमुहूर्त्तशास्त्रं किमिति न व्यवतिष्ठते। उच्यते। पूर्वा-ह्णसन्धौ त्रिमुहूर्त्तानद्वितीयाप्रसक्त्यभावात् त्रिमुहूर्त्तग्रहणमविवक्षितं स्यात्। त्रिमुहूर्त्तद्वितीयाशब्देन व्यवहिततरनिष्प्रयोजनपूर्वाह्णपर्व्वस-न्धिलक्षणाप्रसङ्गाच्च चन्द्रदर्शनदिने यागनिषेधकबहुवाक्यविरोधाच्च। अपराह्णपर्वसन्धिविषयत्वे हूक्तदोषाभावात् तद्विषयतैव युक्ता।

किञ्च मत्पक्षे सन्धिसामीप्यं त्वत्पक्षे तत्त्वास्तीत्येतावान् विशेषः। तस्मात्प्रातर्विहितकालसम्भवात् तत्रैव याग इति। यदा तु सार्द्धं प्रहरद्वयं किञ्चिदधिकं चतुर्दशी पञ्चदश्यां मुहूर्त्तत्रयं प्रतिपत्प्रतिपदि मुहूर्त्तत्रयं द्वितीया तदा पूर्वस्यां यागः "यस्यां तिथावस्तमियात् सूर्य्यस्त्रिमुहूर्त्तकः। याग-दान-जपादिभ्यस्तामेवोपक्रमेत् तिथिं" ॥

इति वचनात् । ननु,—

पञ्चदश्याः परः पादः पक्षादेः प्रथमांशयः ।
कालः पार्वणयागस्य अन्यथा तु न विद्यते ॥

इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले यागो न युक्तः, तत्र, यथा पक्षादयोऽभियष्टव्या इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले पर्वचतुर्थांशे वचनान्तराद्याग इष्यत एवमिहापि भविष्यति। यदा तु सम्पूर्णा चतुर्दशी पञ्चदशी प्रतिपच्चादित्यास्तमयादर्वागेव समाप्यते, द्वितीयाप्रभृतेर्वात्यन्तिकः क्षयः तदा पूर्वेद्युरेव यागः ।

चतुर्दशी च सम्पूर्णा द्वितीया क्षयगामिनी ।
तदहरिष्टिरमायां स्यात् श्रुते कव्यादिकी क्रिया ॥

इति वचनात्। यदा चतुर्दशी सम्पूर्णा पञ्चदश्यां न्यूनत्रिमुहूर्त्ता प्रतिपत् प्रतिपदि त्रिमुहूर्त्ता द्वितीया तदा पूर्वेद्युरेव यागः ।

त्रिमुहूर्त्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥ इति वचनात् ।

तथा ।

आदित्येऽस्तमिते चन्द्रः प्रतीच्य उदयाद्यदा ।
प्रतिपत्प्रतिपत्तिः स्यात् पञ्चदश्यां यजेत च ॥ इति ।

यदा पञ्चदश्यां मुहूर्त्तत्रयाधिका प्रतिपत् प्रतिपदि च तावती द्वितीया ततोऽधिका वा तदा पूर्वानुष्ठानमिति तन्मुहूर्त्तत्रयाधिकेषु मुहूर्त्तेषु विद्यमानत्वात् पूर्वस्यामेव यागः ।

उक्तञ्च ।

प्रतिपदि समुदिता चेदग्नीनन्वादधीत भूतदिने ।

विरमति पर्वदिवा चेत् ययःकार्य्यं तु पौर्णमास्यां ॥

अन्यत्रापि।

अपूर्वेऽग्न्याधाने चैव चौपवस्यायनं मतं।

प्रतिपत्सु यदा पश्येद्दीनो वाभ्युदितः शशी ॥ इति।

ननु यदेतत् "यदरिष्टिरमावास्यां भूते कार्य्यादिको क्रिया" इति, तथा "प्रतिपत्प्रतिपत्तिः स्यात् पञ्चदश्यां यजेत च" इति, तथा "अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्" इत्येवमादिभिः पञ्चदश्यां यागविधानं कृतं तत्पर्वचतुर्थांशे प्रातर्विद्यमाने तु भवतु। "पर्वणोऽयं चतुर्थांश इति पर्वचतुर्थांशस्यैव यागकालत्वेन विधानात्पर्वतृतीयचतुर्थांशे यागो न युक्त इत्युच्यते।

पर्वाग्न्यनधायस्य द्वितीया तु प्रदृश्यते।

तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥

इत्येतावन्मात्रं।

यदि तु ब्रूयते तर्हि पर्वचतुर्थांश एव पूर्वस्मिन्नहनि याग इत्युक्तं स्यादिह तु "चित्सुकर्त्ता द्वितीया चेदित्यादिनिमित्तविशेषे पञ्चदश्यां यागविधानात् न पर्वचतुर्थांशानुरोधेन बाधो युक्तः। तस्मात्प्रयोक्त एव काले याग इति सिद्धं। यदा तु पौर्णमास्याघटिकायां पर्वसन्धिर्मुहूर्त्तचतुष्टयाच्च प्रातः पर्वद्वितीयांशः परेद्युश्चित्सुकर्त्ता द्वितीया तदा पर्वद्वितीयांशे यागः।

तथाचाश्वलायनः।

पर्वणोऽंशे तृतीये तु कर्त्तव्येष्टिर्द्विजातिभिः।

द्वितीयावर्जितं यस्मादूचवश्वलायनाः ॥

यदा तु मुहूर्त्तत्रयादूर्ध्वं पूर्वेद्युः पर्वचतुर्थांशस्य प्रवेशः परेद्युश्च मुहूर्त्तषट्कादूर्ध्वं प्रतिपच्चतुर्थांशः स्यात् तदा परेद्युर्यागः, मुहूर्त्तषट्कात्प्राक् प्रवेशे तु पूर्वेद्युः ।

यदाह गार्ग्यः ।

यज्ञकालस्थितिर्द्वेधे षट्कतो यदि लभ्यते ।
पर्व तथोत्तरं कार्यं हीने पूर्वमुपक्रमेत् ॥

कला च मुहूर्त्तो न तु घटिका "त्रिमुहूर्त्ता द्वितीया चेदिति शास्त्रविरोधात् । स्मृतिप्रदीपकृतापि च कलाशब्दस्य मुहूर्त्तार्थतोक्ता । पराशरवाक्ये तु षण्मुहूर्त्तास्तु विद्यत इति पाठः ॥

अत्र वाक्ये केचिदिदं वदन्ते । तथाहि चन्द्रदर्शने यागः सर्वथैव न कर्त्तव्यः किन्तु तत्पूर्वदिने यागः पूर्वतरदिने त्वन्वाधानमिति तच्च वाक्यस्यार्थः प्रतिभाति, स चायुक्तः आपस्तम्बोक्तान्वाधान-याग-दिनयोरन्यतरत्र विकल्पेन चन्द्रदर्शनं परिहरणीयमित्याह न पुनर्नियमेन यागदिने चन्द्रदर्शनं परिहरणीयमिति । यथाह—

यदहर्न दृश्यते तदहरमावास्यां यो न द्रष्टार इति चेति ।

वाजसनेयिनोऽप्युभयोरन्यतरस्यैव चन्द्रदर्शनं निषेधन्ति न पुनरुभयथापि ।

यथाहुः ।

तदेके दृष्टोपवसन्ति तस्मादद्दैवैनं न पुरस्तान्न च पश्चात् पश्येत तर्ह्येवोपवसेदिति च ।

कात्यायनोऽप्याह ।

चन्द्रादर्शनेनामावास्यामुपवसेत् सम्पूर्णेन पौर्णमासीमिति केचित् ।

लौगाक्षिरप्याह ।

यद्यस्यामेव चन्द्रमा न दृश्येत तामभावास्यां कुर्वीत दृश्यमाने-ऽप्यनागताहा भवन्तीति ।

तथा सोमदर्शनदिने यागविधायिका निषेधाधिकारश्रुतिर्दृश्यते।

यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजेत इमान् लोकानभ्यु-देष्यतीति एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदे-त्यस्मिन् काले यागो लोकेऽर्द्धकं भवतीति यस्मिन्नहनि पुरस्तात्परतश्च सोमो न दृश्यते तदहर्यजेत इति ।

तदेतेषां विरुद्धवाक्यानां व्यवस्था पर्वविचारे प्रतिपादिता वक्ता-र्थवत्तानुसारादपराह्णादिपर्वसन्धौ सोमदर्शनदिने यष्टव्यमन्यथा नेति ।

किञ्चैवं श्रूयते उत्तरामुपवसेदनिर्ज्ञायेति ।

अस्यार्थः किं पूर्वामुपवसेदुत्तरां वेत्यनिर्णीय यत्र एतादृशं निश्चितं ज्ञानं नास्ति तत्रोत्तरामेवोपवसेदिति । एवं सन्देहेऽपि चेदुत्तरमेव पर्वोपवसनीयं किं पुनर्यदा पर्वविचारोक्तया व्यवस्थयोत्त-रमेव पर्व निश्चितं प्रतीयत इति, तदनुसारेणैव "निशुम्भर्ता द्वितीया चेदिति वाक्यं व्याख्यातव्यं न स्वातन्त्र्येण । यदि तु समदिमार्थं कथ्यते तावद्व्याहारक्रमेण प्रथमतो विधिसहितमाख्यातार्थपद-समयं तस्मिंश्चैऽपि पुनरनायासेन किञ्चिदपि न प्राप्यते । तथाहि यदि चतुर्दश्यामन्वाधानाय कर्म विधीयते तदैवं योजना, चतुर्दश्या-मन्वाधानं कर्त्तव्यं परतः सोमदर्शनादिति । तन्नेद्युज्यते । अन्वाधा-नोत्सर्गः कस्मात् विधीयत इति । तथाहि प्रतिपद्यापराह्णिकी

यद्यपि द्वितीया तथापि चतुर्दश्यां सोमदर्शनात्परतोऽन्वाधानं परत्र दिनेऽन्वाधानं कर्त्तव्यमिति चन्द्रदर्शने यागनिषेधवदन्वाधानस्यापि निषिद्धत्वात् । तद्यथा "यदेवैनं न पुरस्तान्न पश्चात्पश्येत्तर्ह्युपवसेदिति चन्द्रदर्शनेनामावास्यामुपवसेदिति, "यदहर्न दृश्येत तदहरमावास्यामिति च, तस्माच्चतुर्दश्यां सोमदर्शनात्तत्परित्यागेनान्वाधानोत्कर्षविधानमेव युक्तं । नन्वेवं चतुर्दश्यां सोमदर्शनाच्चतुर्दशीतः परत्र दिनेऽन्वाधानं कर्त्तव्यमिति चतुर्दशीपदस्योभयत्र सम्बन्धाद्वाक्यभेदश्चतुर्दशीत इति विपरिणामकल्पना च स्यात् । उच्यते, न तावद्विपरिणामकल्पना चतुर्दश्यां सोमदर्शनादिति व्यवहितान्वयस्योक्तत्वाद्वाक्यभेदोऽपि नास्ति श्रुत्यर्थाभ्यां सम्बन्धद्वयाभ्युपगमात् ।

यथाह ।

श्रुत्यर्थाभ्यामनेकार्थविधानं न विरुध्यत इति ।

श्रौतान्वयनानात्वे हि वाक्यभेदो भवति।

यथाह ।

कुमारिलः श्रौतव्यापारनानात्वे शब्दानामतिगौरवमिति ।

अत एवार्थिकत्वाद्द्वितीयसम्बन्धस्य शब्दविपरिणामकल्पनादोषोऽपि न प्राप्नोति । यथा रात्रिसत्रार्थवादत्वेनोपक्षीणापि प्रतिष्ठार्थात् प्रतिष्ठाकाम इत्यधिकारेण विशेषणं भवन्ती न वाक्यं भिनत्ति, न च विपरिणामदोषं जनयति । ननु व्यवहितकल्पनादयो दोषाः गत्यन्तराभावेऽभ्युपगम्यन्ते । अस्ति त्विह गत्यन्तरं चतुर्दश्यामन्वाधानापकर्षविधानं नाम । उच्यते । यदि व्यवहितकल्पनादिभयादन्वाधानापकर्षविधानमाश्रीयते तर्हि तथापि कियन्तो दोषाः प्रसज्यन्ते तदाकर्ण्यतां ।

तथाहि तत्र हि पक्षे सोमदर्शनादिति क सम्बध्यते, किं चतुर्दश्यां सोमदर्शनादिति, किंवा चतुर्द्दशीतः परत्र दिन इति, किं वामावास्यायाः परतः प्रतिपदि, किं वा परतः परस्यां दिशि सोमदर्शनादिति, न तावच्चतुर्द्दश्यां सोमदर्शनादिति, सर्व्वतोऽसम्भतत्वादेवंविधान्वयस्य सोमदर्शनस्य दोषत्वेनेष्टत्वाच्च। कथं तद्वत्येव दिनेऽन्वाधानं विधीयते। नापि चतुर्द्दश्याः परत्र दिने सोमदर्शनादिति, अन्वाधानयोग्यचतुर्द्दशीतः परत्र दिने कदाचित्सोमदर्शनाभावात्। नापि प्रतिपदि सोमदर्शनादिति, तथा सति परात्परतः सोमदर्शनादित्युच्येत न पुनः परतः सोमदर्शनादिति। अथ लक्षणया स एवार्थः परत इत्यनेनोच्यते, तर्हि लक्षणैव दोषः। अथ प्रतिपदपि चतुर्दशीतः परा भवतीति परत इत्यनेन मुख्ययैव वृत्त्या प्रतिपदुच्यते, तर्हि पञ्चम्यां सोमदर्शनादपि चतुर्दश्यामन्वाधानं विधीयेत। अथ प्रतिपच्चापराह्निकीत्यत्र वाक्यादुपात्तेन प्रतिपदीत्यनेन सम्बन्धं कृत्वा प्रतिपदि सोमदर्शनादित्युच्यते, तथा सति प्रतिपच्छब्दस्य द्वितीयाशब्देन सोमदर्शनेन च सम्बन्धाद्वाक्यभेदो व्यवहितकल्पना च परतःशब्दोऽप्यनर्थकः प्राप्नोति। प्रतिपदि च कदाचिदपि सोमदर्शनाभावादसंभाव्यमानार्थत्वं प्राप्नोति। अथ "तद्देके दृष्टोपवसन्तीत्युपवासदिने सोमदर्शनस्य ख्यातत्वेन गुणत्वमेव न दोषत्वमिति चतुर्दश्यामन्वाधानं कर्त्तव्यं चतुर्दश्यां सोमदर्शनादिति उच्येत, तर्हि चतुर्दशीयुक्तपञ्चदश्यामन्वाधानं सोमदर्शनादिति यदि व्याख्येयं ततः कश्चिद्दोषोनास्तीति वक्तव्यं। न तावच्चतुर्दश्यां, परतः सोमो दृश्यते येन तत्रान्वाधानं विधीयेत। नाप्यमावास्यायां, परतः सोम-

दर्शनादिति, तस्याश्चानुपात्तत्वादन्वाधानयोग्यचतुर्दश्यनन्तरायाम-मावास्यायां सोमदर्शनासम्भवाच्च । नापि प्रतिपदि परस्यां दिशि सोमदर्शनादिति, तत्र पूर्ववाक्यभेद-व्यवहितकल्पनयोः प्रसङ्गात् । तत्र नियमेन परस्यामेव दिशि सोमदर्शनं भवतीति परत इत्येत-दपि अनुवादमात्रत्वेनाप्रवृत्तिविशेषकरं प्राप्नोति । अथ पौर्णमासी-प्रतिपन्निष्ठत्वार्थं परतः परस्यां दिशि सोमदर्शनादिति यद्युच्येत, तद-युक्तं पौर्णमासीप्रतिपद्‌व्यहोरात्रे परस्यां दिशि सोमदर्शनस्य विद्यमा-नत्वात् । अथ प्रतिपदि परस्यां दिशि पूर्वरात्रे सोमदर्शनादिति वा, प्रतिपदि रेखामात्रस्य दर्शनात् प्रथमदर्शनादिति वा, शुक्लप्रतिपदि सोमदर्शनादिति वा कृष्णप्रतिपन्निष्ठत्वार्थं व्याख्यायते । नैतदेवं । पूर्व-रात्रादिपदानामध्याहारप्रसङ्गात् श्रुतेरेव पदैस्तत्र कृष्णलक्षणाप्रस-ङ्गाद्वा पूर्वोक्तानामपि दोषाणां तदवस्थत्वाच्च उत्तरयोः पक्षयोः परतः शब्दानर्थक्यप्रसङ्गाच्च शुक्लप्रतिपदि कदाचिदपि सोमदर्शना-भावेनाव्यापकत्वप्रसङ्गाच्च । अथ शुक्लद्वितीयायां सोमदर्शनादि-त्युच्यते । तन्न । द्वितीयाशब्देन शुक्लद्वितीयालक्षणाप्रसङ्गात् प्रथमा-न्तद्वितीयाशब्दस्य सप्तम्यन्ततया विपरिणामप्रसङ्गाच्च । किञ्चैवं सत्यनपेक्षितेऽपि विषये कदाचिदन्वाधानापकर्षः प्रसज्येत ..च यस्मादर्थं यं कश्चिदेव वारमधिकृत्य तिथिवृद्धिरुदाह्रियते, आदित्य-वारे उदयास्तमयव्यापिन्याममावास्यायां, सो..वा रे उदयास्तमयव्या-पिन्यां प्रतिपदि, मङ्गलवारे उदयास्तमयव्यापिन्यां द्वितीयायां सोम-दर्शनाच्चतुर्दश्यामन्वाधानापकर्षः प्रसज्येत द्वितीयासोमदर्शनत्वावि-शेषात् । अथ प्रतिपदि या शुक्लद्वितीया तस्यां सोमदर्शनादित्युच्यत ।

न च। अनन्तरैकदोषवर्ज्जं पूर्व्वोक्तसर्व्वदोषाणां तदवस्थत्वात् प्रतिपदि कदाचिदपि द्वितीयाऽवश्यम्भावाद्दृश्यमानार्थत्वमयुक्तं स्यात्। अथ प्रतिपत्संयुक्तायां द्वितीयायां सोमदर्शनादित्युच्यते। न च। सर्व्वस्या अपि द्वितीयायाः प्रतिपत्संयुक्तत्वाविशेषेणाविशेषणत्वप्रसङ्गात् पूर्व्वोक्तानामपि दोषाणां तदवस्थत्वात्। अथ द्विवैव प्रतिपद्युक्तायां शुक्लद्वितीयायां सोमदर्शनादित्युच्यते। न च। अनन्तरैकदोषवर्ज्जं पूर्व्वोक्तदोषाणामन्यथाप्यपरिहारात्।

किञ्च आदित्यवारे षष्टिनाडिकायाममावास्यायां सत्यां प्रतिपदि घटिकाद्वयविद्धायां सोमवारं व्याप्य मङ्गलवारे घटिकाद्वयमात्रायां प्रतिपदि सत्यां द्विवैव प्रतिपत्संयुक्ता द्वितीया जातेति तत्र सोमदर्शनाच्चतुर्द्दश्यामन्वाधानमपकृष्येत। अथ त्रिमुहूर्त्तायां द्वितीयायां सोमदर्शनादित्युच्यते। तन्न नहि कदाचिदपि त्रिमुहूर्त्तैव द्वितीया भवति। यद्यप्यत्यन्तह्रासो भवति तथापि त्रिमुहूर्त्ताधिकह्रासाभावात् सप्तविंशतिमुहूर्त्तन्यूनद्वितीया न कदाचित् सम्भवति। अथ यस्मिन्नहनि त्रिमुहूर्त्तैव द्वितीया तत्र सोमदर्शनादित्युच्यते। तन्न। तृतीयायुक्ता द्वितीया यस्मिन्दिने तत्र सोमदर्शनादपि हि चतुर्द्दश्यां अन्वाधानापकर्षः प्रसज्यते। अथ प्रतिपद्दिनवर्त्तिन्यां त्रिमुहूर्त्तायां सोमदर्शनादित्युच्यते, तर्हि षण्मुहूर्त्तायां वा प्रतिपदि द्वितीयायामपि चतुर्द्दश्यामन्वाधानापकर्षो न विधीयेत। अथ न्यूनतमोदाहार्य्यं त्रिमुहूर्त्तपदञ्च नाधिक्योदाहार्य्यमित्युच्यते, तर्ह्यत्र तावदेको दोषः संख्याशब्दानां न्यूनाधिकनिवर्त्तकत्वभावानां न्यूनमात्रनिवर्त्तकत्वमिति अथमात्रन्यूनत्रिमुहूर्त्तायां

सोमदर्शनाविशेषेऽपि अन्वाधानानपकर्षः प्रसज्येत । अथापराह्णिक्यां द्वितीयायां सोमदर्शनादित्युच्यते। नैतदेवं। न हि कदाचिदपि तिथिः केवलपूर्वाह्णसम्बन्धिनी विद्यत इति, सर्व्वस्या अपराह्णसम्बन्धिताविशेषेण व्यावृत्त्यभावेन व्यर्थविशेषणत्वप्रसङ्गात्। अथापराह्णमात्रेण या द्वितीया सैवापराह्णिकी तस्यां सोमदर्शनादित्युच्यते। नैवं। अपराह्णमात्रवर्त्तिन्यां द्वितीयायां कदाचिदपि सोमदर्शनाभावेनार्थसम्भवाद्व्यर्थत्वमुक्तं स्यात्। आपराह्णिक्यां द्वितीयायां सन्ध्यादिवर्त्तिन्यामेव सोमस्य दृश्यमानत्वात्। अथापराह्णिकी द्वितीया यस्मिन्दिने विद्यते तदीयसन्ध्यादिकाले सोमदर्शनादित्युच्यते, तर्हि तदीयसन्ध्यादिवहूनां पदानां अध्याहारः प्रसज्येत। पूर्व्वोक्तवाक्यान्तरव्यवहितकल्पनादयो दोषा अपि तदवस्था एव। तस्मात् सोमदर्शनदिने यागनिषेधश्रुतीनामन्यद्दिने यागविधायकश्रुतीनाञ्च वक्त्राचार्य्यमतानुसारेण व्यवस्थितविकल्पः पर्व्वविचारे प्रतिपादितस्तथैवैतदपि वचनं नेतव्यं न स्यातव्ययेण। तस्मान्नियमेन चतुर्दश्यामन्वाधानापकर्षविधायकमेतदिति युक्तं। तदयुक्तं। "यस्मिन्नहनि पुरस्तात्परतः सोमो न दृश्यते तदहर्यजत इति श्रुत्या यागस्य चन्द्रादर्शनदिने विधानात्।

तथाच स्मृतिः।

यदहस्तु न दृश्येत सम्पूर्णश्च यदा भवेत्।
स एव कालो यागस्य एतेन हविषा यजेत्॥ इति॥

उपवासोऽपि तस्मात् "यदैवैतञ्च पुरस्तान्न पश्चात्पश्येत्तदैवोपवसेदिति वचनेन चन्द्रादर्शनदिने विहितस्तयोरेकत्वावश्यम्भाविनि चन्द्रदर्शनेऽङ्गगुणविरोधे च तादर्थ्यादिति न्यायेनाङ्गकाल एव

परित्याज्यः, प्रधानविरोधेनाङ्गमपि परित्याज्यं किमङ्गगुणमपि।

अतएवोपवसेदित्यनुवदत्यापस्तम्बः।

यदहर्न दृश्यते तदहरमावास्यायां श्वो न द्रष्टार इति वेति।

सम्पूर्णायाममावास्यायां तत्रोपवासः, अन्यस्यां तु पूर्वदिने उपवासः, चन्द्रादर्शनदिने याग इत्यर्थः, अन्यथाङ्गकालानुरोधेन प्रधानकालबाधप्रसङ्गात्।

ननु "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्त इति चन्द्रदर्शनेऽपि यागं दर्शयति। उच्यते। इयं श्रुतिः चन्द्रोदयदिने यागमाह, न चन्द्रदर्शनदिने। तथापि चन्द्रोदयात् प्रागेव याग इत्याह श्रुतिः, "तदेनमद्भ्यः ओषधीभ्यः सम्भृत्याहुतिभ्योऽधिजनां जनयतीति। उदितञ्च जना न तस्मिन्नहनि पश्यन्ति किन्तु द्वितीय एवेति। अतः खण्डतिथावपि तथैव यष्टव्यं अन्यथा श्रुतिविरोधः। यदपि "स एष आहुतिभ्यो जातः पश्चाद्दृश्ये" इत्यादिशास्त्राभिप्रायेणैव। अथ वा प्रतिपद्याहुतिभ्योजातः पश्चाद्द्वितीयदिने ददृश इत्यर्थः, अत एव स्मृतिकाराश्च अचन्द्रदर्शनदिने यागकरणादित्यत आहुः।

अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति।

तथा।

यजनीयेऽह्नि सोमश्चेदारुण्यां दिशि दृश्यते।

तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातय इति॥

तस्माच्चन्द्रदर्शनदिने सर्वथा यागो न कर्त्तव्यः, चन्द्रदर्शने यागनिषेधेनैव प्रतिपच्चतुर्थांशे निवृत्ते तस्मिन्निषेधो गुरुत्वख्यापनार्थः। एतेन "त्रिमुहूर्त्ता द्वितीया चेति वाक्यमन्वाधानोत्कर्षविधायकमिति निरस्तं।

किञ्च अन्वाधानोत्कर्षविधाने चतुर्द्दश्यां सोमदर्शनाच्चतुर्द्दशीतः परच दिने अन्वाधानमिति व्यवहितसम्बन्धद्वयं प्रसज्यते भवदुक्तदोष-प्रसङ्गाच्च। यदि प्रतिपच्चापराह्णिकी त्रिमुहूर्त्ता द्वितीया तदा चतु-र्द्दश्यामन्वाधानं कर्त्तव्यं परतः प्रतिपदि त्रिमुहूर्त्तद्वितीयायां सोम-दर्शनादित्यर्थे स्वीक्रियमाणे अन्वाधानापकर्षविधानेऽपि दोषाभावात्। न ह्यत्र प्रतिपच्छब्दस्य वा द्वितीयाशब्दस्य वा सोमदर्शनादित्यनेन सम्बन्धः येन वाक्यभेद-विपरिणाम-व्यवहितकल्पनाः भवेयुः परत-इत्यनेनैव तत्राभाभावात् चतुर्द्दश्यामन्वाधानं परतः सोमदर्शनादित्युक्ते चतुर्द्दशीपरतः तिथिग्रहणे प्राप्ते अमावास्यायाः प्रतिपदि चन्द्रदर्शना-सम्भवात्तु द्वितीया गृह्यते तस्या अपि चतुर्द्दशीपरत्वात् तदतिक्रमेण तिथ्यन्तरग्रहणे प्रमाणाभावाच्च। न द्वितीयामात्रे सोमदर्शनं चतु-र्द्दश्यामन्वाधाने हेतुस्त्रिमुहूर्त्तग्रहणविरोधात् तस्माच्चतुर्द्दश्यामन्वा-धानं, परतस्त्रिमुहूर्त्तद्वितीयायां सोमदर्शनादित्यर्थे स्वीक्रियमा-णे दोषाभावात् प्रतीयमानान्वयनिर्वाहादङ्गकालानुरोधेन प्रधान-कालबाधाभावाच्चान्वाधानापकर्षविधानमेव युक्तं।

किञ्च चन्द्रदर्शनदिने यागे स्वीक्रियमाणे बहुवाक्यविरोधोऽपि प्रसज्येत नारायणीयगृह्यपरिशिष्टात्।

यावत्पूर्व्वस्य हीनत्वं यावच्चास्तमितोदयः।
औपवस्तञ्च यागश्च तावदित्युरिति श्रुतेः॥

यावत्पूर्व्वस्य पौर्णमासीचन्द्रमसो हीनत्वं न भवति तावदौपवस्थं कार्यमित्यर्थः। यावच्चामावास्यायां चन्द्रमसोऽस्तंगतस्य प्रतिपद्युदयो न भवति तावद्यागकाल इत्यर्थः।

पूर्णे प्रतिपन्न्यौपवस्तं यागञ्च समसप्तके ।
पर्वण्यस्तङ्गते कुर्यात् यागञ्चन्द्रार्कसङ्गिते ॥

इति पूर्वोक्तएवार्थोऽनेन वाक्येन स्पष्टीक्रियते, पौर्णमास्यां पूर्णे चन्द्रमपि औपवसाख्यं व्रतं कार्य्यं तदनन्तरं चन्द्रार्कयोः समसप्तके प्रतिपदि यागः कार्य्यः इत्यर्थः ।

उदितो यदि वा क्षीणो दृश्यते यदि चन्द्रमाः ।
प्रतिपत्तु न कार्य्यः स्यात् विश्वेदेवाः पराङ्मुखाः ॥

उदितोदर्शप्रतिपदि क्षीणः पौर्णमासीप्रतिपदि चन्द्रमा दृश्यते तदा यागो न कर्त्तव्यः यतः सर्व्वे देवास्तत्र पराङ्मुखा भवन्ति ।

तथा ।

पुरा तु सूर्य्यास्तमया द्वितीया यदि दृश्यते ।
यागस्तत्र न दृश्येत विश्वेदेवाः पराङ्मुखाः ॥

अस्यापवादः ।

निशायां प्रथमे भागे दृश्यते पूर्णता तथा ।
तद्व्यत्ययो दिवा नास्ति तत्र यागः परेऽहनि ॥
रात्रेस्तु प्रथमे भागे न दृश्येत्पूर्णता तथा ।
क्षीणोदितो दिवा यत्र तत्रेष्टा यागमादिशेत् ॥

अत्र केचिदाहुः प्रतिपदि सोमदर्शने सतीष्टेरकरणं वैकल्पिकं द्रष्टव्यं, यदि हि प्रातः प्रतिपत्तृतीयांशे लभ्यमानेऽपि सोमदर्शनेनैव दर्शयागः प्रतिषिध्यते तदा ।

यजनीयेऽह्नि सोमश्चेद्वारुण्यां यदि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥

इति कात्यायनवचनमसङ्गतार्थमेव स्यात्। "चिमुक्तां द्वितीया चेदित्यनेन चतुर्दश्यामन्वाधानं विधाय पञ्चदश्यामर्धादिविहिते यागे कृते द्वितीयेऽहनि प्रतिपदि यजनीयेऽहनि सोमश्चेदित्युच्यमानमसङ्गतं स्यात् । तस्याह्नो यजनीयत्वाभावात्पूर्वाह्णस्य तदा यजनीयत्वात् "तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति यागाभावे व्याहृतिहोमो दण्डदक्षिणादानं विधीयमानमपि आकस्मिकत्वादसङ्गतं, सोमदर्शनेन तु पाक्षिके यागप्रतिषेधेऽभ्युपगम्यमाने चन्द्रदर्शनेऽपि सति यजनेनैव वचनेन व्याहृतिहोम-दण्डदक्षिणादानसहितो यागो विधीयते तदैवमर्थवत्त्वान्यथा। तदयुक्तं। तथाहि किमयं प्रायश्चित्तविधिर्निमित्तविधिर्वा, आद्येऽपि किं यजनीयदिने चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शनदिने यागे न तावत् प्रथमः कल्पः, यो ह्यज्ञानाच्चन्द्रदर्शनदिने यागं अनुतिष्ठति तस्य पश्चाच्चन्द्रदर्शने प्रायश्चित्तविधायकत्वेनास्योपपत्तेः श्रौत-स्मार्त्तनिषेधपाक्षिकत्वापादनसामर्थ्याभावात्। किञ्च प्रायश्चित्तं विहितनिषिद्धातिक्रमे भवति, तत्र यदि यजनीयदिने चन्द्रदर्शने प्रायश्चित्तमिदं भवेत् तर्हि तन्निषेधकल्पना प्रसज्येत यदि चन्द्रदर्शनदिने यागे इदं विधीयेत। उत चन्द्रदर्शनदिने यागे निमित्ते प्रायश्चित्तं भवेत्तदा तन्निषेधस्य श्रुतत्वान्न काचित्कल्पनेति तथैवेदं प्रायश्चित्तं। नापि द्वितीयः निषेधपाक्षिकत्वाभावप्रसङ्गात्। निमित्तविधित्वेन किं यजनीयदिने चन्द्रदर्शननिमित्तमिदं विधीयते उत चन्द्रदर्शनदिने यागे निमित्ते इति। नोभौ पूर्वोक्तदोषात् । द्वितीयपक्षे यजनीयदिने चन्द्रदर्शननिमित्तत्वप्रतीतिरपि बाध्यते। तस्माच्चन्द्रदर्शनदिनयागनिषेधो न पाक्षिक-

इति । अत्र केचिदाहुः सर्वदा प्रतिपद्येव यागो न द्वितीयाविद्ध-प्रतिपदि यागः, नापि पर्वचतुर्थांशे याग इति ।

यदाह कात्यायनः ।

पश्चाद्दावेव कुर्वीत यदा पश्चादिकर्म यत् ।

पूर्वाह्ण एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः । इति ॥

अन्ये ग्रहणं विकल्पसूचनार्थं अन्ये न कुर्वन्तीत्यर्थः, यथा षोडशि-त्येके समामनन्ति वौषड्ित्येके इति । तदप्ययुक्तं । पूर्वाह्णसन्धि-निमित्तपूर्वदिनयागविधायकपर्वचतुर्थांशयागविधायकद्वितीयाविद्ध-प्रतिपन्निषेधचन्द्रदर्शनदिनयागनिबन्धननिन्दावचनबहुतरश्रौतस्मार्त-वचनसंकोचप्रसङ्गात् अनेकदोषदुष्टविकल्पप्रसङ्गाच्च । न चात्र विधि-विभक्तिरस्ति, आचारमात्रोपदेशात् । न चैतन्मात्र स्पष्टविधिविभक्ते-र्युक्तं बहुतरवाक्यार्थविकल्पापादने सामर्थ्यं, तस्मादेतद्वाक्यममनीषिण-इत्यकारप्रश्लेषेण व्याख्येयं । तस्मादुक्तैव व्यवस्था युक्ता । अत्र बौधा-यनसूत्रनिबन्धकाराः केचिदपराह्णगतेऽपि पर्वसन्धौ पूर्वेद्युरुपोष्य तद्-द्दर्शयागानुष्ठानं वदन्ति तथाप्यपराह्ण एव सन्धिसमीपे यागमिच्छन्ति । तदनुपपन्नं । प्रातर्यजध्वमितिमन्त्रलिङ्गविरोधात् ।

ननु प्रातर्यजमानेऽपि सन्धौ यजेतेति विरुध्यते । नैव दोषः । सन्धि-शब्दस्य सामीप्यपरत्वात् सामीप्यस्य चापेक्षिकत्वात्प्रातःकालोऽप्यपे-क्षया समीप इति वक्तुं शक्यत इति न सन्धिशब्दविरोधः, अपराह्णस्तु न कथञ्चित् प्रातरिति वक्तुं शक्यत इति अपराह्णयागानुष्ठाने भवति प्रातःकालविरोध इति न तत्र यष्टुं युज्यते । ननु यावत्स-न्धिरतिसामीप्यं भवति तावत्संधिशब्दमनुष्ठातीत्यपराह्णगतसन्धौ

तत्समीप एव यागापेक्षा । एवं रात्रिगतेऽपि पर्वसन्धौ तथैवानुष्ठानं प्राप्यते । अथ पूर्व्वेद्युरग्निं इष्ट्वाप्युत्तरमहर्देवता यजत इत्यर्थविधानाद्रात्रेस्तु साक्षाद्विधानाभावात् सन्धिसमीपस्य कथञ्चिदप्यनुपपत्तेर्न रात्रौ यागानुष्ठानमिति । एवमपराह्णगतेऽपि सन्धौ तत्र यागेऽनुष्ठीयमाने प्रातर्विधिविरोधादपराह्णस्य साक्षाद्विधानाभावात् सन्निसामीप्यस्य प्रातरप्युपपत्तेर्नापराह्णे यागानुष्ठानं । अथ सन्धौ यजेतेति प्रत्यक्षविधित्वात् प्रातर्यजध्वमिति मान्त्रवर्णिकोऽलुप्तविधिर्दुर्बलः । अथोत्तरमहर्देवता यजत इत्यपि वर्त्तमानापदेशत्वेनालुप्तविधित्वात् दुर्बलत्वमविशिष्टं । अथोच्यते । विरोधे सति बलाबलचिन्तायां रात्रिगतस्य सन्धेरह्नरपि समीपं भवति इति सन्धिशास्त्रस्य सामीप्यपरत्वादहःशास्त्रेणाविरोधः, एवं तत एव हेतोः प्रातःशास्त्रेणाप्यविरोधः ।

किञ्च सन्धिशास्त्रस्य सामीप्यं न मुख्योऽर्थः, किन्तु लाक्षणिक इति, तत्राप्यविशिष्टमलुप्तत्वं । न च प्रातर्विधेरप्रकरणाधीनत्वं दोषः, अप्रकरणाधीनमपि स्मार्त्तदक्षिणाचारादिकं प्रकरणाधीनाच्छ्रौतात् प्रत्यासत्त्यपेक्षकात्प्रयोगशास्त्राद्बलीय इत्युक्तं शिष्टाकोपाधिकरणे । तस्माच्चोदितदेश-कालाद्यबाधेन यावत्सामीप्यं सम्भवति तावदेव इष्टाति । अन्यथा सामीप्यलोभेन प्रातःकालबाधे क्रियमाणे सर्वाङ्गान्तरबाधोऽपि प्रसज्यते । तस्मात् सन्धिसमीपवर्त्तिनि पर्वचतुर्थांशादिचोदितकालानुरोधिनि प्रातःकाले यष्टव्यं । ननु "न सायमस्ति देवयागाय जुष्टमिति सायंकाले यागनिषेधादवशिष्टोऽपराह्णादिरभ्यनुज्ञातो गम्यते विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वात् यथा वालेन

चक्षुषा पश्यतीत्युक्ते दृष्टिपेन न पश्यतीति गम्यते। भवेदेवं यद्ययं नि-षेधः स्यात् नायं निषेधः एकस्मिन्नेव वाक्ये प्रातःकालविधिः सायंकाल-निषेध इत्युभयपरत्वे वाक्यभेदप्रसङ्गादवश्यमेको विधिरितरो नित्या-नुवाद इत्यभ्युपगन्तव्यं। तत्र यदि सायंकालनिषेधोऽभ्युपगम्यते तदा पारिशेष्यात् प्रातरपराह्णादिकालः सर्वोऽपि यागार्थः पाक्षिकः प्राप्नोति इति न प्रातःकालस्य नित्यवद्यागसम्बन्धानुवाद उपपद्यते। अथवा यदि प्रातःकालविधिरभ्युपगम्यते तदा तद्व्यतिरिक्तानां सर्व-कालानां नित्यमेव निवृत्तत्वात् सायंकालनिवृत्तिरपि नित्यानु-वादः।

किञ्च प्रातर्यजध्वमिति प्रैषरूपत्वात् प्रैषस्य च प्रवर्त्तनात्मक-त्वाद्विधिकल्पनमेव युक्तं, न सायमस्तीति तु वर्त्तमानापदेशत्वेन प्रवर्त्तनालेशः प्रतीतिरपि नास्तीति नेदन्निषेधविधानं निषेधस्य स्पष्टमनवगतेः प्रागुदाहृतप्रातःपूर्वाह्णे यागप्रतिपादकबहुवचनविरोध-प्रसङ्गात्। ननु यदा प्रातः पर्वचतुर्थांशोऽस्ति तदेवं भवतु, यदा तु तस्याभावः तदा किं प्रातःकालो बाध्येत उत पर्वचतुर्थांश इति कथं निर्णयः। उच्यते। अपराह्णे यागे क्रियमाणे पूर्वाह्णप्रातःकाल-तन्त्रप्रक्रमकाला बाध्येरन्, प्रातस्तु क्रियमाणे पर्वचतुर्थांशमात्रबाधः इति बाधलाघवन्याय स एव युक्तः। तस्मादपराह्णगतेऽपि पर्वसन्धौ परेद्युरेव याग इति सिद्धं। मध्याह्नसन्धौ तु तदहरेव यागः प्रागुदाहृतलौगाक्ष्यादिवचनात्।

अत्र केचिदाहुः।

प्रतिपद्यप्रविष्टायां यदि स्थितिः समाप्यते।

पुनः प्रणीय तत्रेष्टिं ततः कुर्य्याच्च नान्यथा ।

इति गर्गवचनेन पञ्चदश्यामिष्टिसमाप्तौ पुनर्यागविधानात् द्वितीयेऽह्न्येव यागो युक्तः । मध्याह्नसन्धिशास्त्रं तु क्षयगामिन्यां तिथौ उत्तरदिने यागकालाभावे "प्रतिपच्चप्रविष्टायामित्यनेन सह विकल्पनादुपपद्यते, वृद्धिगामिन्यां तु परतो यागकालस्य सम्भवे मध्याह्नशास्त्रं न प्रवर्त्तत एव "पश्चाद्योऽभियष्टव्या इति नियमश्च बाध्यते(१) । तदयुक्तं । "त्रिमुहूर्त्ता द्वितीया चेदित्यादिबहुवाक्यविरोधात् । विकल्पस्याप्यन्याय्यत्वाच्च । तस्मादेतद्वाक्यपर्य्यालोचनया प्रातःकाले समाप्तिवर्ज्जं सर्वं कृत्वा विरम्य प्रतिपदि प्रविष्टायां ब्राह्मणभोजनमन्त्रपदार्थसमाप्तिश्च कर्त्तव्या । अत्र केचिद्विवदन्ते । याज्ञस्य प्रधानस्य पूर्व्वाह्ण एव कर्त्तव्यत्वाद्ब्राह्मणतर्पणस्य चाङ्गत्वाद्विरम्य व्यापारे चाङ्गप्रधानवत्यां भावनायां विधिना प्रवर्त्तितत्वात्तद्विरोधः । वार्त्तिककारैश्च यावज्जीवाधिकरणे पौर्णमास्यतिरिक्तापर्य्यन्तच्छेदपरा श्रुतिः । "अव्याप्तावपि तद्वत् स्याच्च त्विहैवं प्रतीयत इत्येतत्श्लोकव्याख्याने उक्तं, यदि तच्चाल्पत्वात्कर्मणः पूर्व्वाह्णचोदनावशेन पौर्णमासी न व्याप्यते न किञ्चिद्दुष्यतीति वदद्भिरिष्टिसमाप्तिरपि पूर्व्वाह्णे दर्शिता । तस्मात्पौर्णमास्यां सद्यस्कालत्वपक्षाङ्गीकारे "पूर्व्वां पौर्णमासीं उत्तरां वोपवसेदिति पूर्व्वोपवासपक्षे सद्यस्कालता नास्तीत्येतदर्थमिदं वचनं, यावता द्वितीयदिने प्रतिपदः पूर्व्वाह्णस्य च विद्यमानत्वात्पुनःकरणं युक्तमिति । तदयुक्तं । "प्रतिपच्चप्रविष्टायामितिवाक्यसंकोचप्रसङ्गात् प्रयोगवचनाक्षिप्ताङ्गप्रधानैककालस्य वचनवशेन हेयत्वात् न तद्वशेन

(१) भाष्यत इति ख० ।

बलीयो गुणः "सन्धिमभितो यजेतेति श्रुतिविरोधाच्च। सा हि सन्धेरभितो यागप्रयोगो यथा भवति तथा यजेतेति प्रतिपादयति। तथापराह्णादिपर्वसन्धौ तदहःप्रातरारभ्याथ परेद्युर्यागेऽनुष्ठीयमाने सन्धिगर्भता भवत्येवेत्यविरोधः। पूर्वाह्णपर्वसन्धौ तु पूर्वेद्युरारभ्याथ तदहःसन्धेः प्राक् समाप्तौ सन्धिगर्भत्वं हीयते तेनोत्तमः पदार्थः समाप्तिप्रत्ययवाच्यो ब्राह्मणतर्पणात्मकः केवलं सन्धेरूर्ध्वं उत्कष्टव्यः, तावता प्रयोगे सन्धिगर्भता सेत्स्यति न तु मध्ये विरामः कस्मात्सन्धि-गर्भमात्रश्रवणादिति ब्रूमः। ननु सन्धिगर्भत्वमुत्कृष्यमाणमपि सर्वमुत्कृ-ष्यते प्रयोगैकत्वार्थं, तत्र प्रातःकालबाधप्रसङ्गादैकत्वं हि प्रयो-गवचनेनार्थादापाद्यमानं स्पष्टचोदितकालादिपदार्थविरोधे दुर्बलं तदेवंविधोदाहरणे प्रातःकाले समाप्तिवर्जं निर्वर्त्य विरम्य सन्धिपर्यन्तं प्रतीक्ष्य सन्धेरुपरि प्रतिपत्काले समाप्तिपदार्थ एव केवलः कर्त्तव्यः तत्राप्यपराह्णसन्धौ परेद्युर्याग इति। पूर्वाह्णपर्वसन्धावपि तदहरेव यागः चारायणीयब्राह्मणपरिशिष्टात्।

विप्रकर्षे परे यागः सन्निकर्षे परे तथा।
प्रोक्तकालः समाख्यातो मुनिभिस्तत्त्वदर्शिभिः॥
षडाहेऽपि च यागः स्यात् तथा द्विदंद्रेऽपि च।
सूर्याचन्द्रमसोः पूर्वं पूर्वाह्णे सन्निकर्षतः॥

षडाहे पौर्णमास्यां, द्विदंद्रे अमावास्यायां, सूर्याचन्द्रमसोः परस्परं पूर्वाह्णे यदा सन्निकर्षः तदा यागः कर्त्तव्य इति वाक्यार्थः।

तथा।

आगतां तिथिमुत्सृज्य तिथिशेषन्तु योजयेत्।

इष्टा चन्द्रमसुपासीत न हि भक्षणि दृश्यते ॥

"प्रतिपत्प्रविष्टायामित्युक्तपरिहारं ।

अत्र केचिदाहुः ।

शोभकालेऽवमतिदीर्घत्वात् किञ्चिदधिके षोडशघटिके आवर्त्तनं भवति तत्र तिथिह्रासे सति कदाचिच्चतुर्दशघटिकः पर्वचतुर्थांशः तथावर्त्तनसमीपे पूर्वाह्णे पर्वसन्धिर्यदि भवति तदा सूर्योदयसमीपे तन्त्रोपक्रमकाले पर्वचतुर्थांशाभावेऽपि प्रधानयागावसरे प्रातःकाले विद्यमानत्वात्तत्रैव यागः न परेद्युः प्रातः प्रतिपच्चतुर्थांशे "न चतुर्थं चतुर्थांश इति निषेधात् । यत्र हि प्रधानयागाङ्गभूतविधिसकालविरोधो भवति तत्राङ्गगुणविरोधन्यायेनाङ्गकालपरित्यागस्यैव युक्तत्वादतोऽत्र न परेद्युर्यागः । यदा तस्मिन्नेव विषये परेद्युः प्रातः प्रतिपत्तृतीयांशः तदापि न तत्र यागः "त्रिमुहूर्त्ता द्वितीया चेदित्यादिशास्त्राच्चन्द्रदर्शनदिने यागनिषेधकवचनविरोधाच्च, तस्मादुक्तविषये पूर्वदिन एव याग इति । यदपि वचनान्तरं ।

षोडशेऽन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि ।
चतुर्दशी अजन्येष्टिः पापा सप्तदशेऽहनि ॥ इति ।

तेन सप्तदशेऽहनि इष्टिं न कुर्याच्च त्वादधीतेति । अन्वाधानमेव निषिध्यते न यागः, यागे तिथिवृद्धाविष्टेरनतुष्ठानमेव स्यात् । अतो अमावास्यादारभ्य सप्तदशेऽहनि औपवसथं कर्म न कार्यमित्यवगन्तव्यं ।

अतएव बौधायनः ।

अतएव सत्रयाणानि चतुर्दशी षोडशी न तु चयोदशी सप्तदशीति ।

तथाच वचनान्तरे।

अपौपवसथं कर्म यजनीयात् पर्वोद्गमे।

भवेत्सत्द्गमे वापि तत्प्रयत्नेन वर्जयेत्॥ इति।

ननु च दिनद्वयस्य क्षय-वृद्ध्योरसम्भवात् पर्वोद्गमेऽपि सप्तद्गमे वा कदाचिदौपवसथं कर्म न कार्यमिति कथं निषेधः, उच्यते अप्राप्तिरर्थं शास्त्रारिचे न द्विवीतिवर्जित्यानुवाद इति।

ननु षोड़शासुपवसथे क्रियमाणे "पर्वान्ते उपवस्तव्या इति वचनं विरुध्यते पञ्चदशदिनात्मको हि पक्षः तच प्राक्तनयजनीयदिनादारभ्य पञ्चदशभिः पक्षे गते षोड़शीयमतिरिच्यते। अथ वा प्राक्तनयजनीयोपरितनदिनादारभ्य पक्षः क्रियते तर्हि प्राक्तन-अनीयात्पर्वादिर्न दीयते। उच्यते। पञ्चदशभिस्तिथिभिः पक्षो भवति, न तु पञ्चदशभिर्दिनैर्ज्योतिर्विदां सरवात्तथाच तिथयः कदाचिच्चतुर्दशसु दिनेषु समाप्यन्ते पञ्चदशसु षोड़शसु वा तावत्स्वयं पञ्चदशैव तच पर्वादिशब्देन प्रतिपदुच्यते पर्वान्तशब्देन पञ्चदशी तिथिः तस्मात्षोड़शादिदिनगतायामपि तस्यामेवोपवसथः क्रियत इति। यदास्य वचनस्य पूर्वार्द्धममावास्यायामुत्तरार्द्धं पौर्णमास्यां वेदितव्यं पौर्णमास्यादिवचस्यामपचयापि विद्यमानत्वात्। प्रतिपदौपवसथं कर्म जानस्य तथायं सप्तद्गमेति निषेध उच्यते।

तथा।

वर्जे पञ्चदशी वाच्या माघे वाच्या तु षोड़शी।

जाने वाप्यधिके वापि नेष्या सप्तदशी क्वचित्॥

अत्र कालमानस्य विशेषवचनैरेव बाध्यत्वात् क्षय-वृद्धिवचनमन्यविषयं।

क्षय-वृद्धौ न जानीते तिथीनां चन्द्रमण्डले ।
यातुधानः स विज्ञेयो यथा भस्मनि हूयते ॥

इत्यस्य क्षय-वृद्धिज्ञानविधेरयमुपयोग उत्तरदिनक्षय-वृद्ध्यो-रर्द्धयोः पूर्वदिनप्रवेशनमिति ।

तथाच स्मृत्यन्तरे ।

तिथेः परस्या घटिकास्तु याः स्यु-
र्न्यूनास्तथैवाभ्यधिकास्तु तासाम् ।
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत् ॥ इति ।

'परस्यास्तिथेः' प्रतिपदः, या घटिकाः पूर्वस्यास्तिथेर्न्यूना अधिका वा समानास्तदर्द्धं पूर्वस्मिन्दिने ह्रासेऽस्य वियोज्यं वृद्धौ च संयोज्यमित्यर्थः । तदनेन पर्वसन्धिज्ञानं कार्यमित्युक्तं भवति । पौर्णमास्यां स्थाप-स्तम्बेनोक्तो विशेषः ।

सः पौर्णमास्यां स्यान्वाधानपरिस्तरणोपवासाः सद्यो वा सहस्त्वा-स्यायां सर्वं क्रियत इति ।

अस्यार्थः सहस्त्वास्यायां पौर्णमास्यामन्वाधानादीनि सद्यः तपःसमानेऽहनि क्रियन्ते पूर्वेद्युर्वा तत्र सर्वं प्राक्तनतर्पणाकं क्रियते तेन तदेकमिति । उक्तञ्च भाष्यार्थसंग्रहकारेण ।

अन्वाहितिस्यास्तरणोपवासौ
पूर्वेद्युरेतत् खलु पौर्णमास्याम् ।
आवर्त्तनात्प्राक् यदि पर्वसन्धिः
सद्यस्तदा वा क्रियते समस्तं ॥

'आवर्त्तनात् प्राक्' मध्याह्नादूर्द्ध्वमिति शेषः ।

सन्धिश्चेत् मध्याह्नादूर्द्ध्वं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥

इति कात्यायनस्मरणात् ।

एतच्च सद्यस्कालत्वं वैकल्पिकं "सद्यस्तदा वा क्रियते समस्तमिति वचनात् ।

तथाचापस्तम्बः ।

खर्विकां तृतीयां वाजसनेयिनः समामनन्ति ।

'खर्विकां' अल्पिकामिति यावत् । अल्पत्वञ्च दिनादूर्द्ध्वव्यापित्वाभावात् ।

उक्तञ्च स्मृत्यर्थसंग्रहकारेण ।

मध्यन्दिनात् स्यादधिकोऽपि यस्मिन्
प्राक् पर्वणः सन्धिरियं तृतीया ।
सा खर्विका वाजसनेयिमन्या
तस्यामुपोष्याथ परेद्युरिष्टिः ॥ इति ।

केचित् "पौर्णमास्यामित्यादि "सद्योवेत्येतदन्तं एकं सूत्रं । अपरन्तु "सद्यस्कालायां सर्वं क्रियत इति वदन्ति, तथा सर्वस्यां पौर्णमास्यां अन्वाधानादीनि सद्यः पूर्वेद्युर्वा क्रियन्त इति पूर्वो सूत्रस्यार्थः, द्वितीयस्य तु सद्यस्काला विकृतिस्तस्यां सर्वं प्राकृतपर्यन्तं क्रियते नेज्यान्तादिकमिति । नैतद्युक्तं । अपराह्णवर्त्तौ सद्यस्कालपक्षे "सन्धिमभितो यजेतेतिश्रुतिविरोधात् ।

विधिरप्यन्यथापुक्तं ।

प्रकृतेश्च न कदाचित्तदपरकालत्वमिति ।

यथाह ।

प्रकृतेरन्यथाभावं न प्रशंसन्ति पण्डिताः ।
यथोक्ता सर्वमित्येतद्विकृत्यर्थमुदाहृतम् ॥ इति ।

तदयुक्तं प्रकरणबाधप्रसङ्गात् ।

एवं प्रकृतावुक्तं, विकृतौ तु यद्यपि 'दर्श-पूर्णमासाविष्टीनां प्रकृतिरित्यनेन दर्श-पौर्णमासिकविध्यन्तातिदेशात्तत्रापि स एव चतुर्थांशादिलक्षणः काल इति प्रतिभाति, तथापि "यदीष्ट्या यदि पशुना यदि सोमेन यजेत, अमावास्यायां पौर्णमास्यां वा यजेतेत्यापस्तम्बेन विकृतौ पुनः कालविधानात्पञ्चदश्यामेव यागसमाप्तिरतो यत्र संपूर्णैव पञ्चदशी प्रतिपच्च तत्र पञ्चदश्यामेव विकृतिं समाप्यानन्तरं प्रकृतेरन्वाधानादि । खण्डतिथौ तु यदा पूर्वाह्णे पर्वसन्धिस्तदा पूर्वेद्युरुपदिष्टकालासम्भवात्सम्भवेऽपि कर्मोपक्रमदशायामसम्भवेन साङ्गप्रधानव्यापित्वासम्भवात् "यथाङ्गैः प्रधानं देशे काले कर्त्तरि निर्दिश्यत इत्यापस्तम्बेन साङ्गस्यैव विहितकालसम्बन्धविधानादुत्तरेद्युरपि प्रकृतेः पूर्वाङ्गत्वात् "अपूर्वमन्ते स्यादित्यापस्तम्बेनैव विकृतेः पूर्वं प्रकृतिविधानात् तदनन्तरमेवातिदेशिके प्रतिपदाद्यभागचये-ऽङ्गप्रधानपर्य्याप्ते विकृत्यनुष्ठानमित्यवगन्तव्यम् । यदा त्वपराह्णे रात्रौ वा पर्वसन्धिस्तदा तदहरेव यागः तत्रैवोपदिष्टकालसम्भवात् । एतत् सर्वमभिसन्धायोक्तं ।

आवर्त्तनात्प्राग्यदि पर्वसन्धिः
कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः ।

तदैव यागः परतो यदि स्यात्
तस्मिन् विकृत्याः प्रकृतेः परेद्युरिति ॥

अथ केचिदाहुः ।

अपाह्नाः षण्मुहूर्त्ताः कुर्वन्त्यां वृद्धिः परेऽहनि ।
त्रिमुहूर्त्तमपि ग्राह्यं यस्यां ह्रासः परेऽहनि ।
त्रिमुहूर्त्तं न कर्त्तव्यं हीनं तथापि निर्दिशेत् ॥ इति ।
सन्धिश्चेत् सङ्गवादूर्द्ध्वं प्राक् पर्य्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥

इत्यनेनैव स्मृतिवचनेनाग्रयणादिविकृतितिथिषु सद्यस्कालत्वेन विहितासु द्वितीयदिने प्रतिपद्वृद्धौ पूर्वदिने सद्यस्कालत्वं नाप्नोति। तथा ।

त्रिमुहूर्त्ता द्वितीया चेत् प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्द्दश्यां परतः सोमदर्शनात् ॥

इत्यस्मिन् वचने प्रदर्शितो यागनिषेधः प्रतिपदि तिथिवृद्धौ नाप्नोतीत्यपत्ने "अपराह्णे त्रिमुहूर्त्तं ग्राह्यमेवेति वचनद्वयस्याभिप्राय इति । अथोच्यते यत्तावदुक्तं "सन्धिश्चेत् सङ्गवादूर्द्ध्वमिति वचनं विकृतिविषयमिति। तदयुक्तं। इदं हि वचनं दर्श-पूर्णमासप्रकरण-पठितं वा अनारभ्याधीतं वा उभयथापि विकृतिनिवेशो न सम्भवति । न च विकृतिविशेषप्रकरणपाठः सर्वविकृतिविषयत्वमङ्गी-कुर्वता स्वीक्रियते विद्यते वा। न च सर्वविकृतिपाठः सम्भवति, तेन प्रकृतिविषयमेतत्। न च तथापि सद्यस्कालत्वापवादः सम्भवति, तद्-भावे किं प्रतिपदि यागस्तस्मिन् पर्वणि वा, न प्रथमः एवंविध-

विषये द्वितीयदिने प्रतिपद्वृद्धावपि त्रिमुहूर्त्ताधिकद्वितीयासद्भावेन "त्रिमुहूर्त्ता द्वितीया चेदित्यादिवचनविरोधात्, न वाजसनेयिमताभिप्रायमिदं "त्रिमुहूर्त्तं न कर्त्तव्यमिति वचनस्य मध्याह्नात् प्राक्पर्वसन्धौ प्रतिपद्वृद्धौ तत्र यागो न कर्त्तव्यः किन्त्वन्वाधानमेवेत्येतदर्थप्रतिपादकत्वाभावात्। अथ प्रतिपदि त्रिमुहूर्त्ता द्वितीया चेत्यत्रैतद्वचनेन ह्रासविषयेत्यनेन संकोच इति निरस्तं। "अमावास्याः षण्मुहूर्त्ताः स्युरित्यपि वचनं नैतदर्थप्रतिपादकं, तस्मादेवमिदं वचनद्वयं व्याख्येयं षण्मुहूर्त्तमपि यदा चतुर्दशीदिनसम्बन्धि अन्वाधानेन ग्राह्यं यदि द्वितीयदिने वर्द्धते ह्रासे तदपि ग्राह्यं। अन्यथा "त्रिमुहूर्त्ता द्वितीया चेति वाक्ये चन्द्रदर्शनयागनिषेधवाक्यविरोधः। एवं "त्रिमुहूर्त्तं न कर्त्तव्यमिति वचनान्तराविरोधेनान्वाधानविषयमेव व्याख्येयं।

अपरे त्वाद्यं वचनं पर्वव्यतिरिक्तविषयमित्याहुः। किं बहुना बहुवाक्यविरोधाच्च तदीया व्याख्या युज्यत इति।

एवं पशावपि द्रष्टव्यं, अतएव तत्राप्युक्तं "अहर्दिक्को भवति नियतः पर्वसन्धिः परस्तात् कृत्वा तस्मिन्नहनि च पशुं सद्य एव श्वो वा आरभ्याथ प्रकृतिरथ चेत् पर्वसन्धिः पुरस्तात् कृत्वा तस्मिन् प्रकृतिमथ तु स्यात्पशुः सद्य एव" इति, पूर्वाह्णसन्धावुत्तरेद्युर्विहितकालाभावात् सद्य एवेत्युक्तं। अयं च अविहितविशेषकालासु विकृतिषु पशुषु च निर्णयः, यत्र कालविशेषो ह्रस्वकालत्वं वा श्रूयते तत्र तथैवानुष्ठानमित्यवगन्तव्यं।

आग्रयणेष्ट्यास्तु श्रुतौ विशेषो दर्शितः।

यस्मिन् काले अमावास्या सम्पद्येत तयेष्ट्वाथैतया यजेत यदि पौर्णमासी स्यात्तयेष्ट्वाथ पूर्णमासेन यजेतेति।

यस्मिन् काल इत्याद्यावर्त्तनात् पूर्वं, 'तयेत्यमावास्यया, 'एतये-त्याग्रयणेष्ट्या, यदि पौर्णमास्यावर्त्तनात्पूर्वं सम्पन्ना च स्यात्तदा तयाग्रयणेष्ट्वाथ पूर्णमासेन यजेतेत्यर्थः।

तदुक्तं वार्त्तिककृता।

पौर्णमास्यां तु पूर्णः स्यात् द्वितीयेऽह्नि प्रतिपद्यते।
यजेत् पूर्वं पूर्णमासादूर्द्धं दर्शेन चेद्यजेत्॥ इति।

अथेष्ट्याग्रब्देनाग्रयणेष्टिः।

उपवसदिनवर्ज्यानि परिशिष्टे दर्शितानि।

शाकं मांसं मसूरांश्च चणकान् कोरदूषकान्।
माषान्मधुपराकानि वर्जयेदौपवसथे॥

पर्वज्ञानोपायो गोभिलः।

अधीयीत तद्विज्ञो वा पर्वागमयेत्।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
पर्वसन्धिनिर्णयः।

---

# अथ नवमोऽध्यायः।

## अथ ग्रहणकालनिर्णयः।

तत्र मत्स्यपुराणे।

> चन्द्र-सूर्य्यग्रहे नाद्यादद्यात् स्नात्वा तु मुक्तयोः।
> अविमुक्तास्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहनि॥

अत्र केचिदाहुः।

चन्द्र-सूर्य्यग्रहणशब्देन तद्युक्तमहोरात्रं लक्ष्यते शातातपादिवचने-चन्द्र-सूर्य्यग्रहे अहोरात्रं भोजननिषेधादिति। तदयुक्तं चन्द्र-सूर्य्यग्रह-शब्देन लक्षणमन्यकालस्य लक्षणाया एवोचितत्वात्। वाक्यान्तरस्यार्थो-ऽनेनैव प्रतिपाद्यत इति च निष्प्रामाणिकं मार्कण्डेयादिवाक्येषु ग्रहणकाले यामचतुष्टयादिषु भोजननिषेधात् तदुपलक्षणताया अपि प्रसङ्गात्।

विष्णुरपि।

चन्द्रार्कोपरागे नाश्नीयादविमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परे-ऽहनि।

ब्रह्मपुराणे।

> नाश्नीयाद्ग्रह तत्काले ग्रस्तयोश्चन्द्र-सूर्य्ययोः।
> मुक्तयोस्तु कृतस्नानः पश्चाद्भुञ्जीत सर्वेऽमनि॥

अत्र तु "पश्चात्कुर्य्यादिति पाठः तत्राशनमिति विपरिणतमनु-षज्यते।

विष्णुधर्मोत्तरे।

> चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव।

ग्रस्तस्तु भवेत्तत्र न पूर्वं भोजनक्रिया ॥ इति ।
नाचरेत्तद्ग्रहे चैव तथैवास्तमुपागते ।
यावत्स्यादुदयस्तस्य नाश्नीयात्तावदेव तु ।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नात्वा चैव यथाविधि ॥

'तत्र' तस्मिन्नहोरात्रे ।

गङ्ग-लिखितौ ।

तस्मिन्नहनि नाश्नीयात् ग्रस्तास्तं यावदेव तु ।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नात्वा चैव यथाविधि ॥

विष्णु-शातातपौ ।

अहोरात्रन्तु नाश्नीयात् चन्द्र-सूर्य्यग्रहे सदा ।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥
सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः ।
धौतपापो विशुद्धात्मा मोदते तत्र देववत् ॥
नाद्यात्सूर्य्यग्रहात्पूर्वं अह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात्स्नात्वाश्नीयात्तु मुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
स्नात्वा दृष्ट्वा परेऽह्न्यद्यादस्तास्तमितयोस्तयोः ॥

ब्रह्मवैवर्त्ते ।

अर्द्धरात्रादधश्चन्द्रं राहुर्ग्रसति नारद ।
तदा मुक्तौ प्रकर्त्तव्यं वह्निरेव च भोजनम् ॥

पद्मपुराणे ।

अर्द्धरात्रादधश्चोर्द्धं यदा चन्द्रग्रहो भवेत् ।

पूर्वं पूर्वेच भोक्तव्यमुत्तरे चोत्तरेऽपि च ॥

'पूर्वेच' पूर्वाह्णे, 'उत्तरे' उत्तराह्णेऽपि ।

स्कन्दपुराणे ।

यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत् ।

भोक्तव्यं तात पूर्वाह्णे नापराह्णे कथञ्चन ॥

पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत् ।

तदा दिवा न कर्त्तव्यं भोजनं शिखिवाहन ॥

मार्कण्डेयः ।

ग्रहणन्तु भवेदिन्दोः प्रथमादधियामतः ।

भुञ्जीतावर्त्तनात् पूर्वं प्रथमे प्रथमादधः ॥

'आवर्त्तनं' दिनमध्यं। अनेन यस्मिन् यामे ग्रहणं ततः पूर्वं यामचयं त्यक्त्वा भुञ्जीतेत्युक्तं भवति ।

स्मृत्यन्तरे ।

सन्ध्याकाले यदा राहुर्ग्रसते शशि-भास्करौ ।

तदा दिवा न भोक्तव्यं आतुर-स्त्री-शिशून् विना ॥

ब्रह्मवैवर्त्ते ।

चन्द्र-सूर्य्यग्रहे नाद्यादर्वाक् यामचतुष्टयं ।

वेधदिवसमित्याहुर्लुप्तधर्मो भगुनन्दन ॥

वृद्धगौतमः ।

सूर्य्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयं ।

चन्द्रग्रहे तु यामांस्त्रीन् बाल-वृद्धातुरैर्विना ॥

मार्कण्डेयः ।

सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनं ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ।
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भोजनक्रिया ॥

एतद्बालादिविषयं असमर्थविषयं वा समर्थस्य तु भोजने प्रायश्चित्तमुक्तं कात्यायनस्मृतौ षट्त्रिंशन्मते च ।

चन्द्र-सूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति ॥

स्मृत्यन्तरे ।

सायाह्ने सङ्गवेऽश्नीयाच्छारदे सङ्गवादधः ।
मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रहे ॥

'शारदे' अपराह्ण इत्यर्थः, यदपराह्णं शरदिति श्रुतेः, 'रविग्रह' इति शशिग्रहस्याप्युपलक्षणं, एतच्च पुत्रवद्गृहस्थविषयं ।

तथाच जैमिनिः ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ।
पारणं चोपवासञ्च न कुर्यात् पुत्रवान् गृही ॥ इति ।

स्मृत्यन्तरे ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥

ननु यदा सन्ध्याकाले सूर्य्यग्रहस्तदा दिवा तावदुक्तवाक्याच्च भोजनं नापि रात्रौ, "अमुक्तयोरस्तगतयोर्दृष्ट्वा स्नात्वा परेऽहनीति वचनात्। नाप्युपवासः पुत्रवतो गृहस्थस्य तन्निषेधात् अतः सन्ध्याकाले ग्रहणे ग्रस्तास्तमये पुत्रवता गृहिणा किं कार्य्यं,

उच्यते। तदा मार्कण्डेयपुराणः "पापाब्दे ग्रहणं चेत् स्यादिति पञ्च-गव्यमश्नीयः।

दक्षः ।

उपकुर्याच स्नानं सन्ध्यायामुदिते रवौ ।
चन्द्र-सूर्योपरागे च प्राजापत्येन तत्समम् ॥

विष्णुः ।

अयने विषुवे चैव चन्द्र-सूर्यग्रहे तथा ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥

अत्र केचिदहोरात्रोपोषितः पूर्वस्मिन्दिने ग्रहोपवास इति व्याचक्षते, तदयुक्तं चन्द्र-सूर्यग्रहणमात्राहोरात्रपरित्यागेनाहोरात्रा-न्तरग्रहणे प्रमाणाभावात् ।

ब्रह्मपुराणे ।

नित्यन्द्वयोरयनयोस्तथा विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपं ।
यः करोति प्रयतात्मा तस्य तस्याक्षयं च तत् ॥

यमः ।

अयने विषुवे चैव चन्द्र-सूर्यग्रहे तथा ।
ग्रहोपवासी यः स्नायात्सर्वपापैः प्रमुच्यते ॥

लिङ्गपुराणे ।

एकरात्रमुपोष्यैवं स्नात्वा दद्याच्च शक्तितः ।
मधुकाद्येन सोमस्य निवपितः पापमोचनः ॥

चिरायं वसुपोऽप्येवं ग्रहणे चन्द्र-सूर्य्ययोः।

स्नात्वा दद्याच्च विधिवन्मोदते ब्रह्मणा सह॥

मार्कण्डेयपुराणे।

चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महापदे।

अक्षयं कथितं पुण्यं तथार्कं तु विशेषतः॥

'दृष्टे' दर्शनयोग्य इत्यर्थः।

व्यासः।

सूर्य्यवारे रविग्राहः सोमे सोमग्रहस्तथा।

चूड़ामणिरिति ख्यातस्तत्रानन्तफलं लभेत्॥

वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्र-सूर्य्ययोः।

तत्पुण्यं कोटिगुणितं ग्रासे चूड़ामणौ स्मृतम्॥

कात्यायनः।

स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले।

कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः॥

'स्वर्धुनी' गङ्गा।

व्यासः।

सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः।

सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे॥

इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः।

गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश॥

गङ्गाकोटिसहस्रस्य यत्फलं लभते नरः।

तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे॥

दिवाकरेण शुद्धेन दशवर्षसहस्रकम् ॥
चन्द्र-सूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥

देवीपुराणे ।

कार्त्तिके ग्रहणं श्रेष्ठं गङ्गा-यमुनसङ्गमे ।

गङ्गा-यमुनमित्यत्र "सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः ।

मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने ।
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ॥
फाल्गुने वरुणा पुण्या चैत्रे चैव सरस्वती ।
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ॥
ज्यैष्ठे तु कौशिकी पुण्या आषाढ़े तापिका नदी ।
श्रावणे सिन्धुनामा तु तथा भाद्रे तु गण्डकी ॥
आश्विने शरयूः श्रेष्ठा भूयःपुण्या तु नर्मदा ।
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ॥
सूर्य्ये च राहुणा ग्रस्ते तमोभूते महामुने ।
नर्मदातोयसंस्पर्शात्कृतकृत्या भवन्ति ते ॥
ये सूर्य्ये विधिमेवेन ग्रस्ते रेवाजलं जनाः ।
स्पृशन्ति चावगाहन्ति न ते प्राकृतमानवाः ॥
स्नात्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम् ।
स्पृष्ट्वा गोमेधतुल्यन्तु पीत्वा सौत्रामणिं लभेत् ॥
स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः ।
रवि-चन्द्रोपरागे तु ग्रहणे सोमके तथा ।

एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती ॥
त्रिपादित्वफलं चैव ग्रहणे समुदाहृतं ।
वर्षे ग्रहणे जाते तदपि प्राप्नुयान्नरः ॥
अन्तरग्रहणेष्वेषु पुण्यं यत्समुदाहृतं ।
तदेव कालमाहात्म्यादुपरागेऽधिकं भवेत् ॥

मत्स्यपुराणे ।

गङ्गा कनखले पुण्या प्रयागं पुष्करं गया ।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे ॥

ब्रह्मवैवर्त्ते ।

मकरे वर्त्तमाने तु ग्रहणं चन्द्र-सूर्य्ययोः ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥

शातातपः ।

सैंहिकेयो यदा सूर्य्यं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयम् ॥

आह व्यासशृङ्गः ।

राहुग्रस्ते यदा सूर्य्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

विष्णुः ।

राहुदर्शनदत्तं हि श्राद्धमाचन्द्र-तारकम् ।
गुणं च सर्वकामीयं पितॄणामुपतिष्ठते ॥
सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

शातातपः ।

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।

आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

देवलः ।

यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा ।

सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

श्राद्धं प्रकृत्य कूर्मपुराणे ।

नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्र-सूर्य्ययोः ।

बान्धवानाञ्च मरणे नारकी स्यात्ततोऽन्यथा ।

काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ॥

मार्कण्डेयपुराणे ।

विप्रैष्टे ब्राह्मणे प्राप्ते सूर्य्येन्दुग्रहणेऽयने ।

अमावस्यापौर्णमास्योः श्राद्धं कुर्वीत चेच्छया ॥

अत्र सूर्य्यग्रहणादिकालेषु तथा इच्छया श्राद्धं प्रति सर्वश्राद्धं कुर्य्यादथवा पूर्वोक्तेष्वेव कालेषु इच्छया स्वर्गादिफलकामनया श्राद्धं कुर्य्यादितीच्छयेत्यर्थः, न पुनर्यदीच्छति कर्त्तुं तर्हि कुर्य्यात् न चेन्न कुर्य्यादिति ।

शातातपः ।

आपत्स्वग्नौ तीर्थे च चन्द्र-सूर्य्यग्रहे तथा ।

आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात् सदैव हि ॥ इति ।

कश्चिन्तूत्तरार्द्धमेवं पठति ।

आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा । इति ।

भविष्योत्तरे ।

स्नानाभावे दिवाभावे प्रवासे पुण्यकर्म्मणि ।
हेमन्तादूं संपदे च तथा स्त्री-शूद्रयोरपि ॥

जावालिः ।

संक्रान्तौ पुण्यकालस्तु षोड़शोभयतः कलाः ।
चन्द्र-सूर्य्योपरागे तु यावद्दर्शनगोचरः ॥

तत्र केचिदाहुः ।

चन्द्र-सूर्य्योपरागे तु निमित्तत्वप्रतिपादनात् स्नानस्यैव च निमित्तत्वात् स्नानमात्रे प्राप्ते "यावद्दर्शनगोचरः" इति "राहुदर्शने" इत्यादिवचनाच्चाक्षुषस्नानविषयस्यैव निमित्तत्वाच्चाक्षुष एव स्नाने दर्शनपदस्य मुख्यत्वात्तेन न मेघादिच्छन्ने स्नानादि कर्त्तव्यमिति, तदयुक्तं चक्षुर्जनितस्नानविषयविवक्षायां ।

नेक्षेतोद्यन्तमादित्यं नास्तगन्तुं[१] कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम् ॥

इति मनुना उपसृष्टस्य चन्द्रादित्यदर्शननिषेधात् स्नानाद्यभावप्रसङ्गात् तद्बाधे तु स एव दोषः । न च शास्त्रीयस्नानविवक्षायां देशान्तरग्रहणेऽपि स्नानादिप्रसङ्ग इति वाच्यं ।

सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

इति षट्त्रिंशन्मतनिगमवचनेन तत्र स्नानादिनिषेधात् ग्रस्तं चन्द्रं सूर्य्यं वाऽनवेक्षमाणैरेव शिष्टैः स्नानाद्याचरणाच्च ।

---

(१) नास्तं यान्तमिति ख० ।

किञ्च यदा चक्षुर्जनितज्ञानविषयता न तदा स्नानादि सम्भवति, यदा च स्नानादि न तदा चेत्यनुपपन्नार्थं वाक्यं स्यात्, योग्यता-विवक्षायां मेघादिच्छन्नेऽपि स्नानादिकं कर्त्तव्यं स्वरूपयोग्यताया-स्तत्रापि भावात् । व्यवहितस्य तु अयोग्यतया न स्नानादिनियमो यदि तर्हि च अर्द्धं न निरीक्ष्यते तत्रापि स्नानादि न स्यात् । मेघादिच्छन्नेऽपि शिष्टैः स्नानाद्याचरणाच्च । तस्माद्यावति काले चन्द्र-सूर्य्योपरागः शास्त्रात्प्रतीतः तावान् पुण्यकाल इत्यर्थः । यदारभ्य चाक्षुषज्ञानविषयत्वयोग्यता विवक्षितेति केचित् ।

अपरे तु ग्रस्तास्तमयाभिप्रायेण व्याचक्षते यावद्दर्शनगोचरः तावत्पुण्यकालः यदा त्वस्तंगतो न दृश्यते तत्र तदा पुण्यकाल इति । तथाच ग्रस्तास्तमये च शिष्टाः पूर्व्वमेव स्नानाद्यनुतिष्ठन्ति नोर्द्धं ।

शिवरहस्ये ।

सूर्य्येन्द्वोर्ग्रहणं यावत्तावत्कुर्य्याज्जपादिकम् ।
न स्वायान्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥

शङ्ख-लिखितस्मृतौ तु चन्द्र-सूर्य्यग्रहो यावदिति प्रथमः पादः ।

वृद्धवशिष्ठः ।

चिद्गाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः ॥

अत्र केचिदाहुः ।

स्पर्शसमये देवपितॄणामभिधानात्तत्साधनमविशेषात् सर्व्वं देव-पितृदेवत्यं कर्म कार्य्यमिति तदयुक्तं ।

स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम् ।

इति ब्रह्मवैवर्त्तवचनेन होम-देवार्चनयोर्मध्ये विधानात्।

ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते॥

इति वचनाच्च।

तस्माद्धोम-देवपूजाव्यतिरिक्तविषयमेतत्।

पद्मपुराणे।

उपमर्द्दे लक्षगुणं ग्रहणे चन्द्र-सूर्य्ययोः।
पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम्॥

शातातपः।

अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत्।
षड़शीतिमुखे चैव विमोक्षे चन्द्र-सूर्य्ययोः॥

विमोक्षे वर्त्तमाने न तु विमुक्तयोरित्यर्थः, "उपरागे तु तत्कालमिति वशिष्ठवचनात्।

षट्त्रिंशन्मते।

सर्व्वेषामेव वर्णानां सूतकं राहुसूतके।
सचेलं तु भवेत् स्नानं सूतकान्नञ्च वर्ज्जयेत्॥

'सूतकान्नं' राहुसूतकान्नं, न व्रतिनां व्रते न सत्रिणां सत्रे न राज्ञां राजकर्म्मणि कुर्व्वति इतमन्नं विवर्ज्जयेत्।

विष्णुपुराणे।

चन्द्र-सूर्य्यग्रहे स्नायात्सूतके मृतकेऽपि च।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति॥
सूतके मृतके चैव न दोषो राहुदर्शने।

तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

दान-श्राद्धादिविषयमेतत् न तु स्नानमात्रविषयम्।

ग्रहणे शवसाशौचं विमुक्ते सूतकं स्मृतम्।

तयोः स्नानमात्रेण उपस्पृश्य क्रियाक्रमः ॥

इति ब्रह्माण्डपुराणवचनविरोधात् स्नान-होम-देवपूजा-दानक्रियानुष्ठाने चि क्रम उपपद्यते। स्नानमात्रानुष्ठाने स्नानस्य पूर्ववाक्येनैव सिद्धेर्द्वितीयवाक्यवैयर्थ्यप्रसङ्गाच। भवतपचे द्वितीयवाक्येनैव स्नानसिद्धेः पूर्ववाक्यवैयर्थ्यप्रसङ्ग इति चेत्। न। अज्ञातज्ञापितविशेषसम्बन्धप्रतिपादनार्थत्वात् यावत्तावच्छब्दानुपपत्तिप्रसङ्गाच स्नानचोदाहृतवाक्ये उपरागादावेव विधानाच राहुसूतके मृत-सूतकयोरभावाच।

तथाच स्मृत्यन्तरे।

सूतके मृतके चैव यदि स्याद्राहुदर्शनं।

तावत्तत्सूतकं नास्ति यावद्राहुर्न मुञ्चति ॥

स्कन्दपुराणे।

सूतके मृतके चैव सूतकं राहुदर्शने।

तावदेव भवेत्तच यावन्मुक्तिर्न दृश्यते ॥

षट्त्रिंशन्मते।

आर्त्तकर्मपरित्यागो राहोरन्यच सूतके।

राहुसूतकं विना अन्यस्मिन् सूतक इत्यर्थः। अपरे त्वेवं व्याचक्षते सूतके यः आर्त्तकर्मपरित्यागः स राहुसूतकं विनेति। कश्चित्तु "राहोरन्यच दर्शनादिति पाठः, बहुवाक्यसंक्षोभप्रसङ्गाच, तथाच स्नानमात्रविषयमेतत्।

मत्स्यपुराणे ।

चन्द्र-सूर्य्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्यात् दत्तमक्षयकारकम् ।

क्वचित्तु दत्तमित्यत्र श्राद्धमिति पठ्यते । अथ गर्गः ।

पुष्यमाजपदञ्चैव याम्यं भाग्यञ्च पैतृकं ।
ऐन्द्राग्नमग्निदैवत्यं सप्तैतान्यनला गणाः ॥

'आजपदं' पूर्वा भाद्रपदा । 'याम्यं' भरणी । 'भाग्यं' पूर्व्वफल्गुनी । पैतृकं मघा । 'ऐन्द्राग्नं' विशाखा । 'अग्निदैवत्यं' कृत्तिका ।

आनले मण्डले दृष्टं ग्रहणं रवि-सोमयोः ।
राज्ञां भयङ्करं विद्यात्प्रजानां बहुदोषकृत् ॥
अहिर्बुध्न्यं तथा पौष्णं मूलमाप्यञ्च शाङ्करं ।
वारुणं सर्पदैवत्यं वारुणं मण्डलं स्मृतं ॥

'अहिर्बुध्न्यं' उत्तरा भाद्रपदा । 'पौष्णं' रेवती । 'आप्यं' पूर्वाषाढ़ा । 'शाङ्करम्' आर्द्रा । 'वारुणं' शततारकाः । 'सर्पदैवत्यमश्लेषा ।

एतस्मिन्नुपरागे स्यान्मण्डले सोम-सूर्य्ययोः ।
दुर्भिक्षमयनाशस्तु प्रजानामिति निश्चयः ॥
ऋक्षाणामार्यमादीनां चतुर्णाञ्च पुनर्वसुः ।
सौम्यञ्चैवाश्विदैवत्यं वायव्यं मण्डलं भवेत् ॥

'आर्यमादीनि उत्तराफाल्गुन्यादीनि । 'सौम्यं' मृगशीर्षः । 'अश्विदैवत्यं' अश्विनी ।

समरं सभयञ्चैव दुर्भिक्षं कुरुते चिरात् ।
व्याधिप्रव्याधिकोपश्च मण्डलेऽस्मिन्नुपप्लुते ॥

ज्येष्ठा ब्राह्मं तथा मैत्रं ग्राम्द्रेशं वासवं तथा ।
वैष्णवं वैश्वदेवञ्च पुरुहूतञ्च मण्डलम् ॥

'ब्राह्मं' रोहिणी । 'मैत्रम्' अनुराधा । 'ग्राम्द्रेशम्' अभिजित् । 'वासवम्' धनिष्ठा । 'वैष्णवम्' श्रवणं । 'वैश्वदेवम्' उत्तराषाढ़ा ।

मण्डलेऽस्मिन् समुत्पन्ने ग्रहणे जगतां शुभम् ।
आनन्दं सर्वभूतानां विदधाति विशेषतः ॥

काश्यपश्चैतान्येव मण्डलान्युक्त्वा ।

आग्नेयीं कारयेच्छान्तिं शान्तिं कुर्याच्च वारुणीं ।
वायव्या शान्तिरिष्येत माहेन्द्रीं तत्र कारयेत् ॥

इति तत्तद्देवतायाग-होम-जपादिकमुक्तवान्, तस्माद्राजभिर्लोकहितार्थं तथा कार्यं । एवं जगतोग्रहणदोषस्य शमनञ्च ।

प्रतिपुरुषन्तु यथा ।

एषां तु भास्करस्थाने राहुश्चन्द्रमुपक्रमेत् ।
कर्मक्षयपरिक्लेशान् प्राप्नुवन्ति च ते जनाः ॥
पितृपक्षविनाशाय सूर्य्यस्थाने भवेद्ग्रहः ।
मातृपक्षविनाशाय चन्द्रस्थाने भवेद्ग्रहः ॥
होरायां गृह्यते यत्र नक्षत्रे वा निशाकरः ।
प्राणसन्देहमाप्नोति स वा मरणमृच्छति ॥
अभिभवति हि दैहिकेयश्चन्द्रार्कौ यस्य यस्य जन्मनक्षत्रे ।
तस्यानलकादिभयं विद्यादुग्रं मनस्तापं ॥
अन्येति जन्मनक्षत्रे पर्वेते शशि भास्करौ ।
तज्जातीनां भवेत्पीड़ा नराः शान्तिविवर्जिताः ॥

षड्जन्मगता येषां जन्मपतये च वारिसंस्थाः ।
बहुरोग-मृत्युजननो दानाहुतयो जपश्च कर्त्तव्यः ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
ग्रहणकालनिर्णयः ।

---

# अथ दशमोऽध्यायः ।

## अथोपाकर्मकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

'अध्यायानां' वेदानां, 'श्रावण्यां' श्रावणस्य पौर्णमास्यां श्रवणेन युक्तेऽहनि वा । पञ्चम्यां हस्तेन युक्तायां उपाकर्म कार्यं । अपरे तु हस्तेन युक्तेऽहनि वा पञ्चम्यां वेति व्याचक्षते, 'ओषधिभावे' प्रादुर्भावे, 'श्रावणस्येति च सर्वैः सम्बध्यते ।

आश्वलायनः ।

अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन वा श्रावणस्य पञ्चम्यां हस्तेन वेति ।

निगमः ।

श्रावण्यां श्रावणीकर्म यथाविधि समाचरेत् ।
उपाकर्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे ।
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणेन वा ॥

कात्यायनः ।

अथातोपाकर्म[१] श्रवणेन श्रावण्यां पौर्णमास्यां ।

बौधायनः ।

---

(१) अथात् उपाकर्म इत्येव पाठो भवितुं युक्तः ।

श्रावण्यां पौर्णमास्याममावास्यां चोपाकृत्य छन्दांस्यधीयीत एतेषां पक्षाणां स्वगृह्यानुसारेण व्यवस्था। यदा तत्र श्रावणे मासि ओषधयो न प्रादुर्भवन्ति ग्रहसंक्रान्तिदोषा वा कथञ्चिद्वा श्रावणमासातिक्रमः तदा प्रोष्ठपद्यां कार्य्यं।

अत एव शौनकः तद्वार्षिकमित्येतदाचक्षत इति।

वर्षाकाले भवं 'वार्षिकं'।

वशिष्ठोऽपि।

अथातः स्वाध्यायोपाकर्म्म श्रावण्यां प्रोष्ठपद्यां वेति।

'प्रोष्ठपदी' भाद्रपदस्य पौर्णमासी।

गोभिलः।

प्रोष्ठपदीं हस्तेनोपाकरणमिति।

प्रोष्ठपदीं प्राप्येत्यर्थः।

मनुरपि।

श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्॥

'अपिशब्देन भाद्रपदश्रवण-हस्त-पञ्चमीनामुपादानं। तथाच गृह्यपरिशिष्टकारिका।

अप्स्वोषधयश्चिन्मासे तु न भवन्ति चेत्।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते॥ इति।

उपाकर्म्मप्रभृति सार्द्धांश्चतुरो मासान् शुक्लपक्षेषु निरन्तरं स्वाध्यायमधीयीतेत्यर्थः।

वशिष्ठः।

अर्द्धपञ्चमान्मासानधीत्योत्सृजति, पञ्चार्द्धमासान् षडर्द्धमासान् वा।

गौतमः ।

श्रावणादिवार्षिकं प्रोष्ठपदीं वोपाकृत्याधीयीत छन्दांस्यर्द्धपञ्च-मान्मासान् पञ्च दक्षिणायनान् वा ।

हारीतः ।

अर्द्धपञ्चमान्मासानधीत्योत्सृजति पञ्चार्द्धषडान् वा ।

कात्यायनः ।

उपाकृत्योदगयने ततोऽधीयीत धर्मवित् ।

एतच्च ग्रहणाध्ययनं गृहस्थस्यापि । यदाह शौनकः ।

समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जातीया येऽपीत्येके ।

'इतरे' ब्रह्मचारिणः । अतएव गृहस्थस्यापि ग्रहणाध्ययनेऽधिकारं ज्ञापयितुं तत्प्रकरणेऽध्ययनविधिः ।

कालवृद्धावुपाकर्मोत्कर्षः कात्यायनेन दर्शितः ।

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।

अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥

यत्त्वनुत्कर्षप्रतिपादकं ऋष्यशृङ्गवचनं ।

दर्शश्राद्धं नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

उपाकर्म महालय्या चैतदिष्टं दृषादितः ॥ इति ।

तच्छन्दोगविषयं । तेषां हि कालवृद्धावपि सिंहेऽर्क एवोपाकर्म । यदाह गार्ग्यः ।

सिंहे रवौ तु पुष्यर्क्षे मध्याह्ने विचरेद्रविः ।

छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्वछन्दसां ।

शुक्लपक्षे तु हस्तेन उपाकर्मापराह्निकम् ॥

एतच्च ग्रहणाद्यदुष्टश्रावण्यादौ कार्य्यम् ।

तथाच स्मृतिः ।

उपाकर्म प्रकुर्व्वन्ति क्रमात्सामर्ग्यजुर्विदः ।

ग्रहसंक्रान्त्ययुक्तेषु हस्त-श्रवण-पर्व्वसु ॥

तथा ।

संक्रान्तौ ग्रहणे चैव सूतके मृतके तथा ।

गणस्नानं न कुर्वीत नारदस्य वचो यथा ॥

अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रिया ।

दुःख-शोकामयप्रस्ता राष्ट्रे तस्मिन् द्विजातयः ॥

तथा ।

यदि स्याच्छ्रावणं पर्व्व ग्रहसंक्रान्तिदूषितम् ।

स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥

स्मृतिमहार्णवे ।

संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते ।

तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥

अत्र केचिदाहुः। हस्तयुक्तायां पञ्चम्यां केवलायां वेति विकल्पः, न तत्र संक्रान्तियुक्तपर्वणो विकल्पः तत्र दोषश्रवणात्। न च हस्तयुक्तायामन्यस्यां तिथौ पञ्चम्यां वेति विकल्पः। हस्तयुक्ताया-मित्यस्य विशेषाकाङ्क्षायां उपात्तपञ्चम्यैवान्वयात्। "यदि स्याच्छ्रावणं पर्वेत्यादिवाक्यस्य पर्वणो ग्रहसंक्रान्तिदोषे पञ्चमीमात्रे उपाकर्म-विधायकत्वात्तस्मिन् पक्षे बहुदोषप्रसङ्गात् । नन्वेवं पञ्चमीपदस्यावृत्तिः

प्रसज्यते सा च बह्वोषदुष्टा। नैवं। हस्तयुक्तायामित्यस्य विशिष्टाका-ङ्क्षायामवश्यभाविनि पक्षद्वयेऽप्यध्याहारे बुद्धिस्थस्यैवाध्याहार इत्य-भिधानात् तथापि हस्तयुक्तत्वाभावे केवलेति। तदयुक्तं। पञ्चम्यां वेति पञ्चम्याश्रियानन्तरविकल्पप्रतीतेस्तद्विशेषापेक्षायां हस्तयुक्ताया-मित्यस्य तद्विषयताया एव युक्तत्वात्। एवं च पक्षद्वयेऽपि बुद्धि-स्थस्यैवाध्याहारे सत्यस्मिन् पक्षे पञ्चमीपदं यथाश्रुतमन्यत् भवत्पक्षे तु हस्तयुक्तत्वाभावविशिष्टपञ्चमीपरं इति विशेषः। ननु हस्तयुक्त-पञ्चम्यां प्रोष्ठपद्या विकल्पः कस्मात्र भवति। उच्यते। स्ववाक्योपात्त-त्यागे वाक्यान्तरीयानामयणात्, एवश्च विकल्पे स्थिते अष्टदोषोऽपि बलादापतितः स्वीक्रियते। तस्मात्पञ्चम्या हस्तयुक्तत्यनन्तरेव विकल्पः। तथापि हस्तयुक्ताया अभावे केवलेति, एतच्च वाजस-नेयिविषयं। तथाच स्मृतिमहार्णवे वचनान्तरं।

संक्रान्तिग्रहणं वापि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः॥

अथ केचित् पूर्ववाक्यबाधारस्यादाजसनेयिपदस्योपलक्षणतां मन्यमानाः तैत्तिरीयाणामपि पञ्चम्यामुपाकर्मेच्छन्ति। तदयुक्तं। लक्षणा-प्रसङ्गात् लक्षणातश्चोपहारस्य युक्तत्वात्। यदि च पूर्ववाक्यस्य बाधार-स्यादच लक्षणा तर्हि "पुरोडाशञ्चतुर्धा करोतीत्यस्य बाधारस्यादाग्नेयं चतुर्धा करोतीत्यच लक्षणाप्रसङ्गः। अच च पञ्चमी तस्मात्मतैव गृह्यते नान्यसाधनता अप्रकृतत्वात्, तस्माद्वाजसनेयिविषयमेतत्। तिष्ठतु वाज-सनेयिवाक्यं तथापि न पूर्वस्माद्वाक्यात् ग्रहसंक्रान्तिदोषे तैत्तिरीया-णामुपाकर्म प्राप्नोति। तथाहि अयोपाकर्मणि स्मृतिषु नानाकाला-

विहिताः तेषां च तत्तद्गृह्यानुसारेण व्यवस्थितविकल्पाश्रयणं युज्यते। न च तैत्तिरीयगृह्ये पञ्चम्यामुपाकर्म श्रूयते। येषां तु गृह्ये पञ्चम्यामपि श्रूयते तेषामव्यवस्थितविकल्पप्राप्तौ यदा श्रावण्यात्पञ्चमीयस्यावे न कालान्तरमिति व्यवस्थाप्राप्ताविदं वचनमुपतिष्ठते, एवं चापेक्षितं समर्पयिष्यते न तु तैत्तिरीयाणां उपाकर्मणि अप्राप्तकालविधौ, तस्माद्ग्रहसंक्रान्तिदुष्टायां श्रावणस्य पौर्णमास्यां तैत्तिरीयकैः प्रोष्ठपद्यां उपाकर्म कार्यमिति सिद्धं।

अत्र केचिदाहुः।

पर्वणि ग्रहणेऽपि चतुर्दशीयोगेऽपि श्रवणेनोपाकर्म कार्य्यं।

चयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवं।

माङ्गल्येषु समस्तेषु ग्रहणे चन्द्र-सूर्य्ययोः॥

इति वचनात्। प्रकारान्तरेणापि वेधः स्मृत्यन्तरे दर्शितः।

द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः।

एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः।

खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनत्रयम्॥

दिनत्रयमत्र पूर्वोत्तरं "त्र्यहं खण्डग्रहे तयोरिति वचनात् तदयुक्तं।

नित्य-नैमित्तिके जप्ये होमे यज्ञक्रियासु च।

उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते॥

इति वचनात्। हस्त-श्रवण-पर्वाण्यौदयिकानि ग्राह्याणि। तथाच परिशिष्टे।

धनिष्ठा-प्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितं।

श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

व्यासः ।

श्रवणेन तु यत्कर्म उत्तराषाढ़संयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥
धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं विद्यादुपाकरणसंज्ञितम् ॥

निगमः ।

ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी ।
तपोहन्त्युत्तराषाढ़ा उपाकर्मणि वैष्णवे ।
धनिष्ठामिश्रिते कार्य्यमुपाकरणसंज्ञितम् ॥

कालिकापुराणे ।

चतुर्दश्यां समुत्पन्नावसुरौ मधु-कैटभौ ।
वेदान्स्वीकुर्व्वतः पद्मयोनेस्तौ जह्रतुः श्रुतीः ॥
हत्वा तावसुरौ देवः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
अभूतस्मश्रुतिर्ब्रह्मा पर्वण्यौदयिके पुनः ।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते ।
आसुरं वर्जयेत्कालं वेदाहरणशङ्कया ॥

वृहत्प्रचेताः ।

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।
ब्राह्मणान् भोजयेत् तत्र पितॄनुद्दिश्य देवताः ॥

भविष्योत्तरे ।

संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये।
स्नानं कुर्वीत मतिमान् श्रुति-स्मृतिविधानतः॥
ततो देवान् पितॄंश्चैव तर्पयेत्परमाम्भसा।
उपाकर्म द्विवेदोक्तमृषीणां चैव तर्पणम्।
कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य शक्तितः॥

अत्र चौदयिके पर्वण्युपाकर्म तैत्तिरीयकैः कार्य्यं। एतदुक्तं बह्वृच-परिशिष्टकारिकासु।

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते॥ इति।

अन्येस्तु पूर्वविद्धा एव।

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम्॥

इति वचनात्।

अत्र केचिदाहुः। नैतत् युज्यते तथाहि अत्र तैत्तिरीयका एव पर्वणीति न नियन्तुं शक्यन्ते अन्येषामपि चरणानां पर्वण्युपाकर्म-विधानात्। न च पर्वण्यौदयिके यदुपाकर्म तैत्तिरीयका एव कुर्युरिति वाक्यार्थो युज्यते, विशिष्टानुवादे वाक्यभेदप्रसङ्गात् विशे-षणानामप्राप्तेरनुवदितुमशक्यत्वात् एतावति च विशिष्टे कर्मणि तैत्तिरीयकाणां विधानानुपपत्तेः कर्त्तुर्हि कर्म विधीयते न कर्मणि कर्त्ता।

किञ्च उपाकर्म तत्कालश्च पौर्णमासी तयोर्गृह्यग्रन्थेष्वेव विहित-त्वात् नात्र कारिकायां तद्विधानं। अत्र तु पौर्णमासीकालस्याङ्ग-

औदयिककालेन सम्बन्ध उद्दिश्यते। तत्र यदि तैत्तिरीयकैरौदयिककालस्यापरः सम्बन्ध उद्दिश्यते तदा सम्बन्धद्वयाभिधानात् भिद्यते वाक्यं।

किञ्च तैत्तिरीयकाः कर्त्तारोऽप्यङ्गमेव, न चाङ्गानां मिथः सम्बन्धोऽस्ति। न चारुणैकहायनीन्यायेन पश्चात्ततोगुणानां सम्बन्ध इति वाच्यं। तत्र हि अरुणगुणैकहायनीद्रव्यविशिष्टः क्रयो विधीयते अनन्तरं द्रव्य-गुणयोः परस्पराकाङ्क्षत्वात्समानाधिकरणत्वात् अन्वयो भवति। अत्र पुनः कारिकायां नोपाकर्मविधानं। न च पर्वौदयिकतैत्तिरीयकयोः द्रव्य-गुणत्वेनापि सामानाधिकरण्यं अन्योन्यद्वयाकाङ्क्षा च अतोऽविवक्षितत्ववदविवक्षितार्थं तैत्तिरीयपदमुपलक्षणार्थं भूत्वा-ऽनुवादः, शाखान्तराधिकरणन्यायेन च सर्वशाखासु उपाकर्मव्यवस्था, तैत्तिरीयाणामुक्तं पर्वौदयिकत्वमविरोधादन्यैरपि ग्राह्यं।

तथाच परिशिष्टे विहितं।

स्वशाखातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्॥

"श्रावणी दुर्गनवमीत्यादिवचनस्य कर्मविशेषानुपादानात् हिरण्यगर्भस्य पवित्रारोपणं विषयः, उपाकर्माङ्गभूतमाभ्युदयिकस्य श्रावणीकर्म चेति। तस्मात्तैत्तिरीयाणामेवौदयिके पर्वण्युपाकर्मेत्ययुक्तमिति। तदयुक्तं। यत्र त्वनन्यगतिपदं तत्र पदवैयर्थ्यभिया विशिष्टस्योद्देश्यत्वं यथा "अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिषु, उभयपदस्य तु प्राथम्येनाग्नेयत्वविरात्रित्वनिमित्तत्वमिति भ्रमापनोदनार्थत्वाच्चानन्यगतिकता। न च वाक्यभेदः, उद्देश्यविशेषणविवक्षायां हि स

मं तु विशिष्टोद्देशे। प्रपञ्चितं चैतद्वद्देवेन। "योऽत्र विप्रतिपद्यते तं प्रति विशिष्टविध्याश्रयणेन परिहारो वक्तव्यः शास्त्रत्वात्"। अपि च पूर्वोदाहृतवचनैरौदयिके पर्वण्युपाकर्मप्राप्तेरनुवादोपपत्तेः, कर्मण्यपि च कर्तृविधिरुपपन्नः अप्राप्तविषयत्वात् विधेः। न च सम्बन्धद्वयविधानाद्वाक्यभेदः, विशिष्टविध्याश्रयणात्, यत्नकर्तृभेदेन पौनरुक्त्यपरिहारात् अन्यथा सर्वस्यात्युच्छेदापत्तेः। एवमनभ्युपगमे च लक्षणा-निष्प्रयोजनानुवादौ स्याताम्। ननु यथा वैश्वदेवेन यजेतेत्यत्र विशिष्टविधौ गौरवप्रसङ्गात् वैश्वदेवशब्दो लक्षणया ह्यभिन्यायेन प्रकृतयागेषु प्रवर्त्तत इति स्वीकृतं, तथा विशिष्टविधिगौरवाल्लक्षणापि स्वीक्रियत इति चेत्। न। तत्रापि लक्षणाया अभावात्। न हि विश्वेदेवदेवतायोगाद्वैश्वदेवशब्दप्रवृत्तिः, किन्तु विश्वदेवकर्तृयोगात्। तथाच तैत्तिरीयके श्रूयते "यद्विश्वेदेवाः समयजन्त तद्विश्वेदेवस्य वैश्वदेवत्वमिति, अर्थवादगतशब्दप्रवृत्तिनिमित्तत्वं सर्वत्र स्वीकृतं "यदाजिमीयुस्तदाज्यानामाज्यत्वमित्येवमादिषु, यत्तु लक्षणाभिधानं तदभ्युपगमादपवादेन विशिष्टविधेयतया लक्षणास्वीकारे अव्यवस्थाप्रसङ्गात्। किञ्च तत्र विशिष्टविधौ गौरवं कर्मान्तरातिदेशकल्पना च अनुवादश्च सप्रयोजनः। अत्र विशिष्टविधौ गौरवमात्रं तदभावे तु लक्षणा निष्प्रयोजनश्चानुवाद इति वैषम्यं। विशिष्टविधौ च गुणानां पार्ष्णिकसम्बन्ध उपपद्यते। कर्त्तुश्च कर्मानुष्ठानार्थं कालविशेषाकाङ्क्षा विद्यत एव। न चात्र शाखान्तराधिकरणन्यायः, "पर्वण्यौदयिके कुर्युः श्रावणमित्यनेनैवान्येषामपि प्राप्तौ तैत्तिरीयकपदवैयर्थ्यप्रसङ्गात्। न च तैत्तिरीयग्रह्ये पर्वौदयिकत्वं विहितं। यदि च कालिकापुराणे गताध्यानसाधारण्यात् तैत्तिरीयव्यतिरिक्तानामप्यौ-

दयिके पर्वण्युपाकर्म तदा बह्वृचानामपि तत्रैवोपाकर्म स्यात् वाक्यान्तरपर्यालोचनया तु तेषां कालान्तराश्रयणमित्यत्र समानं। किञ्चैवं बह्वृचपदमप्यविवक्षितं स्यात् तैत्तिरीयपदविवक्षायामुक्तदूषणस्य तत्रापि समानत्वात्। तस्मादेवं व्यवस्था यदैकस्मिन्नेव दिने कर्मकालव्यापि पर्व तदा सर्वेषां तत्रोपाकर्म यदा तु दिनद्वयेऽपि कर्मकालव्यापि न वा तदा तैत्तिरीयाणां औदयिके पर्वण्युपाकर्म अन्येषां त्वन्यत्रेति ।

---

## अथोत्सर्जनकालः ।

तत्र याज्ञवल्क्यः ।

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः ॥

पौषमासस्य रोहिण्यां कृष्णाष्टम्यां वा जलसन्निधौ ग्रामाद्बहिर्वेदानामुत्सर्जनं कुर्यात् येन प्रकारेणोपाकर्मप्रभृत्यध्ययनं कृतं तं प्रकारमिदानीं परित्यजेत् न तु सर्वात्मनेत्यर्थः, अतएवोत्सर्जनानन्तरमाह मनुः ।

पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥

श्रावण्यां यद्युपाकर्मकरणं तदोत्सर्जनं, पुष्यस्य शुक्लप्रतिपदि पूर्वाह्णे यदा प्रोष्ठपद्यां तदा माघस्येत्यर्थः, "अर्द्धपञ्चमान् मासानधीयीतेति तेनैवोक्तत्वात् ।

बौधायनः ।

श्रावण्यां पौर्णमास्यां आषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेत् ।

आपस्तम्बः ।

तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत ।

अत्र रोहिणी याज्ञवल्क्यवचनानुसारेण पौषमासस्य ग्राह्या ।

कात्यायनः ।

उपाकृत्योदगयने ततोऽधीयीत धर्मवित् ।
उत्सर्गश्चैक एवैषां तैष्यां प्रोष्ठपदेऽपि वा ॥

छन्दोगानामुत्सर्जनकालमाह गार्ग्यः ।

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्वहिः ।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्वछन्दसाम् ॥

परिशिष्टे ।

मासे प्रोष्ठपदे हस्तात्पुष्यपूर्वौ भवेद्यदि ।
तदा च श्रवणे कुर्य्यादुत्सर्गं छन्दसां द्विजः ॥

खादिरगृह्ये ।

पुष्येणोत्सर्जनं कुर्य्यादुपाकर्मदिनेऽथ वा ।

एतच्च कर्मद्वयं प्रत्यब्दं कार्य्यं ।

यथाह कात्यायनः ।

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैः छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीड़मानैरपि सदा तत्तेषां सिद्धिकारकम् ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये दशमोऽध्यायः ।

---

# अथ एकादशोऽध्यायः ।

## अथ संक्रान्तिनिर्णयः ।

तत्र संक्रान्तिभेदाः देवीपुराणे ।

द्वादशैव समाख्याताः समाः संक्रान्तिकल्पनाः ।

'संक्रान्तिकल्पनाः' संक्रान्तिभेदाः, द्वादशैव मेषादयो मीनान्ताः समाख्याताः, ते च संक्रान्तिसामान्यसम्बन्धेन विहितानां प्रतिषिद्धानां कर्मणां समाः साधारणा इत्यर्थः ।

ब्रह्मवैवर्त्ते ।

द्वादशैव भवन्त्येषां द्विज नामानि मे शृणु ।
एकं विष्णुपदं नाम षडशीतिमुखं तथा ।
विषुवञ्च तृतीयञ्च अन्ये द्वे दक्षिणोत्तरे ॥

कुम्भालि-गो-हरिषु विष्णुपदं वदन्ति
स्त्री-चाप-मीन-मिथुने षडशीतिवक्त्रम् ।
अर्कस्य सौम्यमयनं ग्रस्थिधाम्नि याम्यं
चक्रे झषे विषुवति लज-तौलिनोः स्यात् ॥

'अलिः' वृश्चिकः। 'गौः' वृषभः। 'हरिः' सिंहः। 'स्त्री' कन्या । 'चापं' धनुः। 'ग्रस्थिधाम्नि' कर्कटके । 'याम्यं' दक्षिणायनं। 'सौम्यं' उत्तरायणं । 'झषः' मकरः। 'अजः' मेषः। 'तौली' तुला॥

वशिष्ठोऽपि ।

अयने द्वे विषुवे द्वे चतस्रः षड्शीतयः।
चतस्रो विष्णुपादाश्च संक्रान्त्यो द्वादश स्मृताः॥
मृग-कर्कटसङ्क्रान्ती द्वे तूदग्दक्षिणायने।
विषुवती तुला-मेषौ तयोर्मध्ये ततोऽपराः॥
वृष-वृश्चिक-कुम्भेषु सिंहे चैव यदा रविः।
एतद्विष्णुपदं नाम विषुवादधिकं फलम्॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः।
षडशीतिमुखी प्रोक्ता षडशीतिफला गुणैः॥

'तयोर्मध्ये' मकर-कर्कटयोर्मध्ये, 'विषुवती', क्वचित् "गोलमध्ये ततोऽपरा इति पाठः, 'गोलः' राशिचक्रं।

धनुर्मिथुन-कन्यासु मीने तु षडशीतयः।

ज्योतिःशास्त्रे।

वृष-वृश्चिक-सिंहेषु कुम्भे विष्णुपदी स्मृता।

तथा।

विषुवे तुला-मेषौ मत्स्य-स्त्री-मिथुन-धनूंषि षडशीतिः।
मृग-कर्कटयोरयनं राशिषु शेषेषु विष्णुपदी॥

नक्षत्रविशेषयोगेनैकैकस्याः सप्त संज्ञाः कथिताः देवीपुराणे।

सप्तधा सा तु बोद्धव्या एकैकैव यथा शृणु।

येन प्रकारेणैकैकैव मेषादिसंक्रान्तिः सप्तधा सप्तप्रकारा शृणु।

मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी।
राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप॥
सूर्य्ये घोरा विधौ ध्वाङ्क्षी भौमवारे महोदरी।

बुधे मन्दाकिनी नाम मन्दा सुरपुरोहिते ॥
मिश्रिता शुक्रवारे स्याद्राक्षसी च शनैश्चरे ।
एताः संक्रान्तयः सप्त फलमासां तथोच्यते ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रेर्ध्वाङ्क्षीं विजानीयादुग्रैर्घोरा प्रकीर्त्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरैर्बंधेस्तु राक्षसी ।
मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षेषु संक्रमे ॥

'ध्रुवाणि' स्थिराणि चोत्तराणि रोहिणी च। 'मृदूनि' अनुराधा-चित्रा-रेवती-मृगशीर्षाणि ।'लघूनि' अभिजित्हस्ताश्विनी-पुष्याणि। 'उग्राणि' पूर्वात्रयं भरणी मघा च। 'चराणि' पुनर्वसु-श्रवण-धनिष्ठा-स्वाती-शतभिषाः।'क्रूराणि' तीक्ष्णानि तानि च मूल-ज्येष्ठार्द्राश्लेषाः: 'मिश्रं' कृत्तिका विशाखा च

चितुःपञ्चसप्ताष्टनवद्वादश एव च ।
क्रमेण घटिका ज्ञेतास्तत्पुण्यं पारमार्थिकम् ॥

यथासंख्येन सर्वासु संक्रान्तिषु सप्त काष्ठाः द्रष्टव्याः, पारमार्थिकं च वसोर्धारादिलभ्यं सूक्ष्मतमसंक्रान्तिकाले धर्मानुष्ठाने यल्लभ्यते तदेव फलमेतास्वपि घटिकासु लभ्यत इत्यर्थः । तस्मिन् पुण्यं तत्पुण्यं । तथा ।

मन्दा विप्रजनैः शस्ता मन्दाकिन्यस्तु राजनि ।
ध्वाङ्क्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा ॥
महोदरी तु चोराणां शौण्डिकानां जयावहा।
चण्डाल-पुक्कशानाञ्च ये चान्ये क्रूरकर्मिणः ।

सर्व्वेषां कारुकाणाञ्च मिश्रिता वृत्तिवर्द्धिनी ॥

'मन्दाकिन्यस्तु राजनीति क्षत्रियस्य प्रशस्ता भवन्तीत्यर्थः। 'मौक्षिकाणां जयावहेत्यत्र राक्षसीति द्रष्टव्यं। एवञ्च या यस्य जयावहा स तस्यां भूतायां अभ्युदयसाधनानि कर्म्माणि कुर्य्यात्। यस्य या अजयावहा तस्यां दोषनिवृत्त्यर्थं शान्तिकानि कुर्य्यात्। अन्यमपि शान्तिकानुष्ठानार्थं विशेषमाह।

नृपाः पीड्यन्ति पूर्व्वाह्ने मध्याह्ने तु द्विजोत्तमाः।
अपराह्ने तथा वैश्याः शूद्राश्चास्तमये रवेः॥
पिशाचास्तमये वापि अर्द्धरात्रे तु राक्षसाः।
अर्द्धरात्रे व्यतीपाते पीड्यन्ते नट-नर्त्तकाः॥
उषःकाले तु संक्रान्तौ हन्ति गोक्षाभिणो जनान्।
हन्ति प्रव्रजितान् सर्व्वान् सन्ध्याकाले विशेषतः॥
संक्रान्तिर्जायते यत्र भास्करे भूसुते शनौ।
विदुर्म्माषि भयं तत्र दुर्भिक्षावृष्टि-चौरजम्॥
व्याद्युत्थितस्य किन्तुघ्ने शकुनौ कौलवे रवेः।
संक्रान्तिस्तैतिले नागे प्रसुप्तस्य चतुष्पदे॥
विनष्टस्य गरे विष्ट्यां ववे वणिजि बालवे।
विद्याद्यादेः क्रमादिष्टं निर्द्दिष्टं मध्यमं फलम्॥
प्रद्योतनस्य संक्रान्तिर्यादृशेनेन्दुना भवेत्।
तन्मासि तादृशं प्राहुः शुभाशुभफलं नृणाम्॥

नागरखण्डे।

रवेः संक्रमणं राशौ संक्रान्तिरिति कथ्यते।

स्नान-दान-तपः-श्राद्ध-होमादिषु महाफला ॥

रवेः राश्यौ संक्रमणं या संक्रान्तिः सा यथान्तरसंक्रान्तिभ्यो महाफलेति कथ्यत इत्यर्थः ।

शातातपः ।

रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः ।
सप्तजन्मनि रोगी स्याद्निर्धनश्चैव जायते ॥

क्वचित्तूत्तरार्द्धमन्यथा पठ्यते ।

सप्तजन्मान्तरे रोगी दुःखभागी सदा भवेत् ॥
संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥
अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्र-सूर्ययोः ॥

स्कान्दे नागरखण्डे ।

य एते तनवः प्रोक्ताः कालाः संक्रान्तिपूर्वकाः ।
नैतेषु विद्यते विघ्नं यतस्त्वक्षयसंज्ञिताः ॥
अश्रद्धयापि यद्दत्तं कुपात्रेभ्योऽपि मानवैः ।
अकालेऽपि च तत्सर्वं सत्यमक्षयतां व्रजेत् ॥

देवीपुराणे ।

विषुवेषु च यज्ज्ञप्तं दत्तं भवति चाक्षयम् ।
एवं विष्णुपदे चैव षडशीतिमुखेषु च ॥

भारद्वाजः ।

षडशीत्यान्तु यद्दत्तं यद्दानं विषुवद्वये ।

दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते ॥

वशिष्ठः।

अयनेषु च यद्दत्तं षडशीतिमुखेषु च।

चन्द्र-सूर्योपरागे च दत्तं भवति चाक्षयम् ॥

अयने कोटिगुणञ्च लक्षं विष्णुपदीफलम्।

षडशीतिसहस्रन्तु षडशीत्यां स्मृतं बुधैः ॥

शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये।

विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकं ॥

वृद्धवशिष्ठः।

अयने विषुवे चैव त्रिरात्रोपोषितः पुमान्।

स्नात्वा योऽर्च्चयते भानुं सर्वकामफलं लभेत् ॥

आपस्तम्बः।

अयने विषुवे चैव ग्रहणे चन्द्र-सूर्ययोः।

अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥

एतच्च पुत्रवद्गृहस्थव्यतिरिक्तविषयं।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्ययोः।

उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥

इति त्रिणो गृहस्थस्य तत्रोपवासनिषेधात्।

ब्रह्मपुराणे।

तुलां प्रत्यागमसूर्ये विषुवे दिवसे सति।

ब्राह्मणेभ्यः प्रदेयानि वस्त्राण्यभिनवानि वा ॥

तथा।

मेषविषमिथुनौ सूर्ये मेऽमिदं हत-क्रमतम् ।
जपाश्च देवाद्देवेभ्यः पूजा कार्या प्रयत्नतः ॥

कालिकापुराणे ।

कनकं कुलिशं नीलं पद्मरागञ्च मौक्तिकम् ।
एतानि पञ्चरत्नानि न्यसेद्देवस्य मूर्द्धनि ॥
रत्नानां चाप्यभावे तु कर्षं कर्षार्द्धमेव च ।
सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे ॥
विधिवच्च तथाभ्यर्च्य गन्धेनाज्येन भूरिणा ।
प्रणाम्य महयित्वा तु प्रदद्यात् घृतकम्बलम् ॥
दत्त्वा चोपस्करं भूयो ब्राह्मणान् यतिभिः सह ।
सम्भोज्य दक्षयित्वा तु कल्पयेदनिवारितम् ॥

'कुलिशं' हीरकं। 'दक्षयित्वा' दक्षिणया सम्पूज्य। 'कल्पयेद्भो-जनमिति शेषः ।

उपोष्य सर्वमेवैतत् कुर्याद्वह्निपुरःसरम् ।
पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्त्र्यहम् ॥
तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्त्तनं बुधः ।
देवतानां पितॄणाञ्च उभाभ्यां तर्पणं तथा ॥

'पारयेत्' पारणं कुर्यात्। तिलस्नान-पारणयोर्नाय क्रमो विवक्षितः। उभाभ्यामिति तादर्थ्ये चतुर्थी ।

होमं तैश्च प्रकुर्वीत सर्वदेवोत्तरायणे।
तान् वै देवाश्च विप्रेभ्यो हाटकेन समं ददेत् ॥
यत्नादेव करोत्येवं चित्तं प्रभौ निवेश्य यः ।

उत्तरायणमासाद्य नरः कल्पात् स मोदते ॥

ब्रह्मपुराणे ।

शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ।
महाजया तदा सा वै सप्तमी भास्करप्रिया ॥
स्नानं दानं तपो होमः पितृ-देवादिपूजनम् ।
सर्वं कोटिगुणं प्रोक्तं तपनेन महाजया ॥
सप्तम्यां मानवो भक्त्या घृतेन स्नापयेद्रविम् ।
सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत् ॥
पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः ।
विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् ॥
कर्बुरेण विमानेन किङ्किणीजालमालिना ।
तेजसा रविसङ्काशः कान्त्या चेन्दुसमो भवेत् ।
स्थित्वा तत्र चिरं कालं राजा भवति निश्चयः ॥
मयैषा कथिता पुण्या सप्तमी त्रिपुरान्तक ।
तामुपोष्य नरो भक्त्या भव्यान् मङ्गलान् लभेत् ।
ततो याति परं ब्रह्म यत्र गत्वा न शोचति ॥

संक्रान्तिविशेषेण देयविशेषमाह विश्वामित्रः ।

मेषसंक्रमणे भानौ मेषदानं महाफलम् ।
वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥
वस्त्रान्न-पान-दानानि मिथुने विहितानि तु ।
घृतधेनुप्रदानन्तु कर्कटे परिशस्यते ॥
ससुवर्णं छत्रदानं सिंहे च विहितं सदा ।

कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥
तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम्।
कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥
अत्र 'कीटः' वृश्चिकः।
धनुःप्रवेशे वस्त्राणां यानानाञ्च महाफलम्।
झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥
कुम्भप्रवेशे दानं तु गवामम्बु-तृणस्य च।
मीनप्रवेशे स्नानमाल्यानामपि चोत्तमम् ॥

दानान्यथैतानि मया द्विजेन्द्राः
प्रोक्तानि काले तु नरः प्रदत्ता।
प्राप्नोति कामं मनसाभीष्टम्
तस्मात्प्रयच्छन्ति हि कालदानम् ॥

स्कान्दे।

धेनुं तिलमयीं राजन्दद्याद् यश्चोत्तरायणे।
सर्वान् कामानवाप्नोति विन्दते परमं सुखम् ॥

विष्णुधर्मोत्तरे।

उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम्।
तिलपूर्वमनड्वाहं दत्त्वा रोगैः प्रमुच्यते ॥

शिवरहस्ये।

पुरा मकरसंक्रान्तौ शङ्करो गोसवे कृते।
तिलानुत्पादयामास तृप्तये सर्वदेहिनाम् ॥
तस्मात्तत्र तिलैः स्नानं कार्यं चोद्वर्तनं बुधैः।

देवतानां पितॄणाञ्च सोदके सर्पवत् तिलैः ॥
तिला देयाश्च विप्रेभ्यः सर्वदैवोत्तरायणे।
तिलांश्च भक्षयेत्पुण्यान् होतव्याश्च तथा तिलाः ॥
तस्यां तिथौ तिलैर्हुत्वा येऽर्चयन्ति द्विजोत्तमान्।
त्रिदिवे ते विराजन्ते गोसहस्रप्रदायिनः ॥
तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः।
सतिलैस्तण्डुलैर्देवं पूजयेद्विधिवद्विजः ॥
घृताभिषेकं वा कुर्यान्महापुण्यफलेप्सया।
घृतपूर्णेन भाण्डेन साविधेन तदर्चिताम् ॥
गव्येनाज्येन वा शम्भोः प्रदद्यात् घृतकम्बलम्।
सर्पिषा रूपकं रम्यं कृत्वा श्रेयोऽभिवृद्धये ॥

इयं च संक्रान्तिरतिसूक्ष्मकाला।
तथाच देवीपुराणे।

एतत्स्थूलविभागन्तु मुक्तिकामस्य कीर्त्तितम्।
परमार्थेन या संख्या कथयामि नृपोत्तम ॥
स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्।
तस्यां त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः ॥
तत्पराच्छतभागस्तु त्रुटिरित्यभिधीयते।
त्रुटेः सहस्रभागो यः तत्कालं रविसंक्रमे ॥
तत्काले तु द्रवीभूतं त्रैलोक्यं सचराचरम्।
अथ ब्रह्मापि सन्दिग्धं उवाच सुरसत्तमः ॥
दानाध्ययन-जप्यादि विस्पष्टं वक्ष्यते मतः।

ययोर्मुहूर्त्तास्तु लभ्येत अन्यथा तत्क्षणस्य न ॥

अतस्तादृशमतिसूक्ष्मायां कर्मानुष्ठानं न शक्यत इति सन्निहित-कालो ग्राह्यः, स च कियान् ग्राह्य इत्यपेक्षायामाह वसिष्ठः ।

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥

अधस्त्रिंशन्नाड्यः ऊर्ध्वञ्च त्रिंशन्नाड्यः पुण्यकालः । यद्वा त्रिंश-न्नाड्यः पूर्वं पञ्चदश पश्चात् पञ्चदशेति ज्ञेयं । एवं हि वक्ष्य-माणदेवीपुराणवचनेन सह संवादो भवति ।

जाबालः ।

संक्रान्तौ पुण्यकालस्तु षोड़शोभयतः कलाः ।

अत्र 'कलाः' नाड्यः वक्ष्यवाक्यानुरोधात् ।

मरीचिः ।

नाड्यः षोड़श पूर्वेण संक्रान्तेरपरेण च ।
राशेर्दर्शनमात्रेण पुण्यकालः प्रकीर्त्तितः ॥

शातातपः ।

अर्वाक्षोड़श विज्ञेया नाड्यः पश्चाच्च षोड़श ।
कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्त्तितः ॥

अत्र केचिदाहुः उभयतः षोड़शघटिकापुण्यत्ववचनं विष्णुपदी-विषयम् "पुण्यकालो विष्णुपद्याः प्राक् पश्चादपि षोड़श" । इति स्कन्दपुराणवचनात्, तदयुक्तं ।

अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् ।
षड़शीतिमुखे चैव विमोके चन्द्र-सूर्ययोः ॥

इतिवचनाद्दौ षडशीत्याञ्च दानं विधाय परमसूक्ष्मत्वात् दानाधिकरणत्वानुपपत्तेः कालविशेषाकाङ्क्षायां शातातपेनोक्तम्। अर्वाक् षोड़श विज्ञेया इति।

तस्मादस्य वचनस्य तदनुगुणं सर्व्वसंक्रान्तिविषयत्वमेव युज्यते न पुनरनुपात्तविष्णुपदीमात्रविषयत्वमिति। "पुण्यकालो विष्णु-पद्या इति वाक्यस्य गतिर्वक्ष्यते।

अन्ये त्वाहुः "अर्वाक् षोड़श विज्ञेया इति वचनं विष्णुपदी-षड़शीति-विषयं। तदुक्तं वशिष्ठेन।

षड़शीत्यां व्यतीतायां षष्टिरुक्तास्तु नाड़िकाः।
पुण्याख्या विष्णुपद्याञ्च प्राक्पश्चादपि षोड़श॥

अत्र चशब्दात् षड़शीत्यामपि प्राक् पश्चादपि षोड़शेति गम्यते इति। एतदपि पूर्व्वमेव निराकृतं देवीपुराणे।

अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः॥

संक्रान्तौ निमित्ते विहितस्य स्नान-दानादेर्निषिद्धस्य वाध्ययनादेः पालनं भोगः "भुज् पालनाभ्यवहारयोरिति स्मरणात्।

सान्निध्यन्तु भवेत्तत्र ग्रहाणां संक्रमे रवेः।
व्यवहारो भवेल्लोके चन्द्र-सूर्य्योपलक्षितः।
कालो विकल्पते सर्व्वं ब्रह्माद्यं सचराचरम्॥

कालशब्द-संक्रमणयोः काले संक्रान्तिप्राप्ते 'विकल्पते' विगत-शब्दं भवतीत्यर्थः।

पुण्य-पापविभागेन फलं देवी प्रयच्छति।

'देवी' संक्रान्तिकालस्वरूपा दुर्गा, एतदेव संक्रान्त्युपक्रमेऽभिहितं।

समायन-ऋतु-मास-पक्षाहादिक्रमेण तु ।
स्थूल-सूक्ष्मविभागेन देवी सर्वगता विभो ॥

संक्रान्त्यध्यायसमाप्तावप्युक्तं ।

देवी कालगता यस्य यथा सूक्ष्मा प्रकीर्त्तिता ।
साधकी सर्वकामानां महाभयविनाशिनी ॥ इति ।
एकधापि कृतं तस्मिन् कोटि-कोटिगुणं भवेत् ।
धर्म्मादिवर्द्धते ह्यायूराज्यं पुत्र-सुखादयः ।
अधर्म्माद्व्याधिशोकादि विषुवायनसन्निधौ ॥

सन्निधावपि वचनेनायने विषुवे च सन्निधौ फलविशेषो दर्शितः । तथा ।

अयनेषु विकल्पोयस्तस्मे निगदतः शृणु ।
यावद्विंशत्कला भुक्ताः तत्पुण्यं तूत्तरायणे ।
गिरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने ॥

'अयनेषु विकल्प इत्यस्यायमर्थः या अयने दिवा संक्रान्तौ पूर्व्वापरविभागेन सामान्यतः प्राप्ताः पञ्चदश नाद्यः यत्तु रात्रिसंक्रान्तौ प्रहरद्वयं तत्र विंशतिनाद्योऽधिकाः सम्भवनीयाः, तेनार्द्धरात्रात् प्राक्पश्चाद्वा संक्रमे दिनद्वयं पुण्यमिति। यद्वा या अयने पूर्व्वापरविभागेन पञ्चदश तास्वेता विंशत्याद्यो विभज्य योज्याः, तथाचोभयतः पञ्चविंशतिनाद्यः पुण्या इत्युक्तं भवति। अथवा पूर्व्वास्वेव पञ्चदशस्तु उभयतो दशदशाधिका पुण्या इत्यर्थः ।

अन्ये त्वेवं व्याचक्षते विंशतितमा कला संक्रान्तिक्षणादूर्ध्वं यावद्भवति तावत्पुण्यं । अन्ये त्वेवं व्याचक्षते यावदित्ययमं याकल-

विधि-परिणामेषु वर्त्तते, यावत्यो विंशतिघटिकाः पुण्यकाल-त्वायने भुक्ता घटिकास्तावदधिकं तत्पुण्यमुत्तरायण इति विकल्पो विशेषः, निरंशे चांशकशून्ये संक्रान्तिकाले भास्करोऽमकरस्थितो भवति, दिनान्ते दक्षिणायने उदगयनं देवानां दिवसः, ततश्च दक्षिणायनमिति स्वरूपानुवादः।

ब्रह्मवैवर्त्ते।

विषुवे षण्मुहूर्त्तं स्यात् षडशीतिमुखे चयं।
तथा विष्णुपदे चौणि पुण्यानि कवयो विदुः॥

इति मरीच्यादिवाक्येषु यदल्पकालप्रतिपादनं तत्पुण्यातिशय-प्रतिपादनार्थं न तु नियमार्थमिति द्रष्टव्यं।

अतएव शातातपः।

या याः सन्निहिता नाड्यस्ताः पुण्यतमाः स्मृताः।

ज्योतिःशास्त्रे।

मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ।
षडशीतिमुखेऽतीते तथोदगयने च भूरिफलं॥

अथ मध्यशब्देन संक्रान्तिप्रत्यासन्नपूर्वापरकालपरत्वं संक्रान्ति-मध्यमकालस्यातिसूक्ष्मत्वात्।

बौधायनः।

भविष्यदयने विष्णौ वर्त्तमाने तथा विषौ।
षडशीतिमुखेऽतीते अतीते चोत्तरायणे॥

वशिष्ठः।

मध्यन्तु विषुवे पुण्यं प्राक् विष्णोर्दक्षिणायने।

षड़शीतिमुखेऽतीते अतीते चोत्तरायणे ॥

जैगाषिः ।

याम्यायने विष्णुपदे तथादौ
दानायनान्तं विषुवे तु मध्यं ।
वदन्त्यतीते षड़शीतिवक्त्रे
महर्षयः खायने च सौम्ये ॥

"षड़शीतिमुखेऽतीते वृत्ते च विषुवद्वये । क्वचित्पाठः "अतीते विषुवद्वय इति ।

"भविष्यत्ययने पुण्यमतीते चोत्तरायणे" । अत्र चशब्दाद्भविष्यत्यपि पुण्यं विज्ञेयम् ।

ब्रह्मवैवर्त्ते ।

त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः ।
भविष्यत्ययने पुण्या अतीते चोत्तरायणे ॥

अत्र चशब्दादुत्तरायणे पश्चादपि चत्वारिंशद्घटिकाः पुण्या इति दर्शितं ।

मध्ये दानं विषुवति दक्षिणे वैष्णवे पुरा ।
षड़शीतिमुखेऽतीते ध्यतीते चोत्तरायणे ।
इत्येष निर्णयो दाने संक्रान्तौ त्वयनेषु च ॥

वशिष्ठः ।

अतीतानागते पुण्ये द्वे उदग्दक्षिणायने ।
उपरागे तु तत्कालमतीते चोत्तरायणे ॥

अनागतेऽपि पुण्यत्वप्राप्त्यर्थं "अतीते चोत्तरायणे" इत्युक्तं,

उदगदक्षिणायनयोरतीतानागतयोः पुण्यमित्युक्तं तत्कियति काल-इत्यपेक्षायामाह ।

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः ।
वर्त्तमाने तुला-मेषे नाड्यस्तूभयतो दश ॥

स्कन्दपुराणे ।

युगान्तेषु तु षड्विंश षडशीतिमुखे तथा ।
कुलीरे विंशदेवाद्या मकरे त्रिंशदुत्तराः ॥

वशिष्ठः ।

षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिकाः ।
पुण्याख्या विष्णुपद्याञ्च प्रागपि च षोडश ॥

कश्चित्तु “षष्टिभुक्तास्तु नाडिका इति पाठः । तत्र षडशीति-मुखीनां संक्रान्तीनां चतसृणामेकैकस्याः पञ्चदश पञ्चदशेति । तेन पुण्याख्याः षष्टिनाड्यो भवन्ति । एतद्वाक्यपर्य्यालोचनया केचिद्वदन्ति “अतीतानागतो भोगो नाड्यः पञ्चदश स्मृता इति देवीपुराणवचनं षडशीतिविषयमिति । तदयुक्तं, देवीपुराणवचनं अतीतानागतभोगप्रतिपादकं इदन्त्वतीतपुण्यशेषप्रतिपादनार्थमित्यु-पसंहारानुपपत्तेः । तथाच ज्योतिःशास्त्र उक्तं “षडशीतिमुखेऽतीते तथोदगयने च भूरिफलमिति । अपि च देवीपुराणे संक्रान्तिमा-त्रधर्मप्रकरणमेकं अपरञ्च विशेषसंक्रान्तिधर्मप्रकरणं । तत्र सामान्य-धर्मप्रकरणे इदं वाक्यं पठ्यते “अतीतानागतो भोगो नाड्यः पञ्चदश स्मृता इति । तत्रोपसंहारपक्षे प्रकरणबाधोऽपि प्रसज्यते । तस्मात्षड-शीतिमुखीषु प्रत्येकमतीतपञ्चदशघटिकासु पुण्यविशेषप्रतिपाद-

नार्थमेतदिति सोपसंहारः। यदि लेकस्याः षष्टिनाड्यः पुण्या इत्यर्थः स्यात् तदेतन्मूलश्रुत्यन्तरकल्पनाप्रसङ्गः। यदा तु प्रत्येकं पञ्चदशघटिकासु पुण्यविशेषप्रतिपादनार्थमेतद्वाक्यं तदा न मूलश्रुत्यन्तरकल्पनं। "अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः"। इति वचनेनातीतास्वपि पञ्चदशघटिकासु पुण्यप्रतिपादनार्थं "षडशीतिमुखेऽतीते तथोदगयने च भूरिफलमिति वचनेनातीते फलविशेषप्रतिपादनात् तन्मूलश्रुत्यैवोपपत्तौ "षडशीतिमुखेऽतीते नाड्यः पञ्चदश स्मृताः"। इति स्कन्दपुराणवचनात्। तस्मात्पूर्वैव व्याख्या ज्यायसी।

बौधायनः।

पुण्यं विषुवति प्रोक्तं दशपूर्वा दशापराः।
पुण्यकालोऽर्कसंक्रान्तौ स्नान-दान-जपादिषु॥

बृहस्पतिः।

भविष्यत्ययने पुण्याश्चिंशदेव तु दक्षिणे।
अतीत उत्तरे नाड्य इति प्राहुः पुराविदः॥

गौतमः।

अर्वाक् षोडश नाड्यस्तु पराः षोडश एव तु।
तावेव दक्षिणे पूर्वमतीते चोत्तरायणे॥

सर्वसंक्रान्तिषु पूर्वं षोडश नाड्यः परतश्च षोडश नाड्यः पुण्याः तावेव समूहौ षोडशद्वयलक्षणौ दक्षिणायने पुण्यतमौ। "अतीते चोत्तरायणे" चकारात् पूर्वमपीत्यर्थः। क्वचित्तु "ता एव दक्षिणे पूर्वमिति पाठः सुगम एव। यद्येषु वाक्येषु पूर्वापरविभागेन संक्रान्तिविशेषे पुण्यकालप्रतिपादनं तदपि पुण्यातिशयप्रतिपादनार्थं न नियमार्थ-

मित्यवगन्तव्यं। "मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादा-वित्यादेर्नियमपरत्वे "पुण्याख्या विष्णुपद्याश्च प्राक् पश्चादपि षोड़शेति "तद्योगस्याप्यधश्चोर्ध्वं चिंशन्नाड्यः पविचिता इत्यादावव्याप्तं स्यात्।

गोभिलः।

रात्रौ संक्रमणे भानोर्दिवा कुर्यात्तु तत्क्रियाम्।
पूर्वस्मात्परतो वापि प्रत्यासत्तेश्च तत्फलम्॥

केचिदेतद्वाक्यं अर्द्धरात्रजातविषुवद्विष्णुपदीविषयतया व्याचक्षते तयोरेवार्द्धरात्रजातयोः व्यवस्थया दिनद्वयस्य पुण्यत्वादिति। तदयुक्तं। अर्द्धरात्रिसंक्रान्तौ पूर्वापरदिनद्वययोः प्रत्यासत्तौ विशेषाभावाद्विषु-वद्विष्णुपदीव्यतिरिक्तार्द्धरात्रिसंक्रान्तौ दिनद्वयपुण्यत्वस्य यत्प्रमाणत्वं तत्प्रमाणत्वाच्च। तस्मात् पूर्वापरकालभाविसर्वसंक्रान्तिविषयमेतत् "प्रत्यासत्तेश्च तत्फलमिति वचनात्।

गार्ग्यः।

काले न्यूनेऽर्द्धरात्रौ तु यदा संक्रमणं भवेत्।
तदहः पुण्यमिच्छन्ति गार्ग्य-गालव-गोतमाः॥

देवीपुराणे।

अर्द्धरात्रे असम्पूर्णे दिवा पुण्यमनागतम्।
सम्पूर्णे अर्द्धरात्रे तु उदयेऽस्तमयेऽपि च॥
मानार्द्धे भास्करे पुण्यं अपूर्णे सर्वरौद्रके।
सम्पूर्णे उभयोर्दैर्घ्यमतिरेके परेऽहनि॥

न आगतम् 'अनागतं', संक्रान्तिकालेन नपुंसके भावे क्तः, अप्राप्ते संक्रान्तिकाल इति यावत्। 'उदयः' प्रातःसन्ध्या। 'अस्तमयः' सायंसन्ध्या।

'मानार्द्धं' प्रहरद्वयं, 'भास्करः' दिवसः, भास्करोपलक्षितत्वात् भासं करोतीति व्युत्पत्तेश्च, स अपूर्णे शर्वरीदले इत्यमर्द्धं असंपूर्णे अर्द्धरात्र-इत्यर्थः। सन्ध्याकाले रात्रौ च संक्रमणे दिवसगतं प्रहरद्वयं पुण्यमित्यर्थः। असंपूर्णे अर्द्धरात्रे उभयोः पूर्वोत्तरदिवसयोः प्रहरद्वये देयमित्यर्थः। अतिरेके अर्द्धरात्रात्परतः संक्रमणे परेऽहनि प्रहरद्वये देयमित्यर्थः। अस्तमये पूर्वदिनप्रहरद्वयं ग्राह्यं, उदये तूत्तरदिनप्रहरद्वयं प्रत्यासत्तेः, कश्चित्तु "अतीते शर्वरीदले इति पठते।

अन्ये त्वेवं पठन्ति ।

असंपूर्णेऽर्द्धरात्रे तु उदयेऽस्तमयेऽपि च ।
मानार्द्धं भास्करे पुण्यं संपूर्णे शर्वरीदले ॥ इति ।

अत्रासंपूर्णेऽर्द्धरात्र इत्यनेनैव असंपूर्णे शर्वरीदले इत्युक्तं। अथापि यत्पुनरुच्यते तत्पुण्यसम्बन्धार्थं यथा दिवापुण्यं तथा असंपूर्णेऽपि शर्वरीदले पुण्यमित्यर्थः।

अत्र केचिदाहुः। अर्द्धरात्रिसंक्रमणे उभयोरह्नोरेव संक्रान्तिनिमित्तस्य स्नानादेर्नैमित्तिकस्य सकृदनुष्ठानात्तत्समुच्चयः, न तु व्यव-विकल्पो दिनद्वये तस्याष्टदोषदुष्टत्वात् तस्माद्व्यवस्थया पूर्वाह्ने परेऽह्नि वा स्नानादिपुण्यविकल्पो वेदितव्यः। अत्र व्यवस्थाकारणमेतद्वाक्यं।

षडशीतिमुखेऽतीते दृष्टे च विषुवद्वये ।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥

न तावदेतद्वाक्यं उदयास्तमयन्यूनार्द्धरात्रसंक्रान्तिविशेषविषयं तत्र प्रहरद्वयपुण्यत्वस्योक्तत्वात्। नापि दिवससंक्रान्तिविषयं "संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कला इति वचनविरोधात्। यदि च

द्विषये संक्रान्तौ "षड़शीतिमुखेऽतीत इत्येतावदेव वक्तव्यं किं "षोड़शोऽभ्यतः कला इत्यनेन, अस्मिन् सति षोड़शकलातिरिक्तस्यापि कालस्य पुण्यतापत्तिरिति चेत्, न, राशिसंक्रान्तेषु प्रहरद्वयस्य पुण्यत्वादर्थादन्यस्यापि विशेषापेक्षायां तस्यैवोचितत्वात् तस्याः षोड़शकलाद्यतीतत्वादिति, तस्मादर्द्धरात्रे षड़शीतिमुख्यां अतीतायां परदिने पुण्यं विषुवदये च तस्ने तत्र-परदिने पुण्यमित्येवं दक्षिणायने अर्द्धरात्रे भविष्यति पूर्वदिनं पुण्यं, उत्तरायणे अर्द्धरात्रे अतीते सति परदिनं पुण्यमिति व्यवस्था। एवं पूर्वं अर्द्धरात्रे यान्यवचनानि तानि "षड़शीतिमुखेऽतीते इति वाक्येन पूर्वदिनार्द्धं उत्तरदिनार्द्धं च व्यवस्थापितानि, विष्णुपद्यां तु व्यवस्थावचनाभावाद्व्यवस्थां प्रति साकाङ्क्षा सती अनन्तरवाक्येन व्यवस्थाप्यते।

आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत्।
अर्द्धरात्रे व्यतीपाते विशेयमपरेऽहनि॥

आद्यावहनि पुण्यं विजानीयाद्यद्यर्द्धरात्रेऽभिन्ना पूर्वदिनतिथ्या एकैव तिथिर्भवति यदि संक्रान्तिकाले तिथिरन्या स्यात्तदा आद्यावहनि न पुण्यमित्यर्थसिद्धं किन्तु परदिन एवेति। अर्द्धरात्रे व्यतीते पुनर्भिन्नायामभिन्नायां वा तिथौ संक्रमणे परेऽहन्येव पुण्यं ज्ञेयमिति तदयुक्तं, षड़शीतिमुखे विष्णौ विषुवे चोत्तरायणे पूर्वमपि पुण्यकालस्य प्रतिपादितत्वात्। न च विष्णुपद्यपि व्यवस्थां प्रति साकाङ्क्षा, तस्या अपि प्राक् पुण्यत्वप्रतिपादकवचनस्योदाहृतत्वात्। न च देवीपुराणीयेनैव साकाङ्क्षत्वपरिहार इति नियमे प्रमाणमस्ति। न च तानि वचनानि

दिवासंक्रान्तिविषयापि "षड़शीतिमुखेऽतीत इति देवीपुराणवचनं अर्द्धरात्रिसंक्रान्तिविषयमिति व्यवस्थायां प्रमाणमस्ति । तस्मात् आदौ पुण्यं विजानीयादिति सर्वसंक्रान्तिसाधारणं । अतश्च परिशेषात् दिवा-संक्रान्तिविषयमेतत् । न च तद्विषयत्वे "संक्रान्तेः पुण्यकालस्तु षोड़-शोभयतः कला इति वचनविरोधः। पुण्यविशेषप्रतिपादनपरत्वात्, न च दिवासंक्रान्तिविषयत्वे "षोड़शोभयतः कला इत्यस्य वैयर्थ्यं, घटिका-विशेषलाभार्थत्वात् । न च रात्रिसंक्रान्तिषु प्रहरद्वयस्य पुण्यत्वादर्थाद्-स्यापि विशेषापेक्षायां तस्यैव ग्रहणं, अर्थालाभेऽपि शब्दतः प्रतिपाद-नस्य युक्तत्वात् । न च तस्मादपि लाभः, षोड़शद्वय-प्रहरद्वययोर्भेदात् । एतेन यत् केचिदुक्तं "आदौ पुण्यं विजानीयादिति वाक्यमर्द्धरात्रजा-तविषुवद्वयविषयं तद्धि मध्ये सम्पादनीयत्वाद्व्यवस्थामपेक्षते, विष्णुपदौ तु प्राक्पुण्याभिधानानिराकाङ्क्षेति न तद्विषयमिति तदपि निराकृतं।

अन्ये त्वाहुः "आदौ पुण्यं विजानीयादित्यर्द्धरात्रभवत्सर्व्वसंक्रान्ति-विषयं भवतु "षड़शीतिमुखेऽतीते इत्यपि भवतु बाधकाभावादिति तदयुक्तं। यदोत्तरभागा संक्रान्तिः अर्द्धरात्रे भवति पूर्व्वदिनतिथौ कि-ञ्चित्तदा तद्वचनद्वयविरोधप्रसङ्गात्। एकेनैव वचनेन व्यवस्थासिद्धेर्न्न वच-नद्वयाद्व्यवस्थेति तस्मात् "आदौ पुण्यं विजानीयादिति वचनमर्द्धरात्र-भवत्सर्व्वसंक्रान्तिविषयं "षड़शीतिमुखेऽतीत इति तु दिवासंक्रान्ति-विषयमित्यन्ये, तदप्ययुक्तं, अर्द्धरात्रजातयोर्मकर-कर्कटयोर्द्दिनद्वयपु-ण्यत्वाभावस्य वक्ष्यमाणत्वात् तदभावे व्यवस्थानपेक्षणात् न तद्विषय-मेतद्वाक्यं किन्तु मकर-कर्कटसंक्रान्तिव्यतिरिक्तार्द्धरात्रभवसंक्रान्ति-विषयमिति सिद्धं ।

वशिष्ठः ।

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितं ।
रात्रौ संक्रमणे पुण्यं दिनार्द्धं स्नान-दानयोः ॥
अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्द्ध्वं संक्रमणे चोर्द्ध्वं उदयात्प्रहरद्वयं ॥
पूर्व्वं चेदर्द्धरात्रे तु यदा संक्रमते रविः ।
प्राक्दिनद्वयं पुण्यं मुक्त्वा मकर-कर्कटौ ॥

अर्द्धरात्रात्पूर्व्वं परतश्च संक्रमणे पूर्व्वोत्तरदिनप्रहरद्वयपुण्यत्ववचनं विषुवस्यायनविषयं न तु विष्णुपदी-षड़शीतिविषयं ।

विष्णुपद्यां धनुर्मीन-नृयुक्कन्यासु वै यदा ।
पूर्व्वोत्तरगते रात्रौ भानोः संक्रमणं भवेत् ॥
पूर्व्वाह्ने पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्ने तु पञ्चैव श्रौते स्मार्त्ते च कर्म्मणि ॥

इति निगमवचनविरोधात् । नाप्ययनविषयं तत्र समग्रदिनस्य पुण्यत्वात् ।

तथाच यमपार्श्वः ।

आयनसंक्रमं पुण्यं दिनार्द्धं स्नान-दानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिनम् ॥

यत्र तु "विषुवत्ययने दिन इति पाठः तत्रायमर्थः दिने रात्रौ वा संक्रमणे विषुवदयनयोर्दिनार्द्धं पुण्यमिति, अस्मिन् पाठे लयनविषय-तापि स्वीक्रियते । यत्तु केषाञ्चिद्व्याख्यानं दक्षिणोत्तरायणयोर्दिन एव संक्रमे सति दिन एव पुण्यकाल इति तत् कुहनादुपेक्षणीयं ।

अपरे तु भिन्नवाक्यं पुण्यातिशयप्रतिपादनार्थमिति मन्यमानाः सर्वसंक्रान्तिष्वर्द्धरात्रादर्वागूर्द्ध्वं वा जातासु दिनार्द्धं पुण्यमिच्छन्ति।

स्कन्दपुराणे।

धनुर्मीनावतिक्रम्य कन्यायां मिथुनं तथा।
पूर्वापरविभागेन रात्रौ संक्रमते यदा॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः।
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि॥

"उदये पुण्यतमा इति वचनात् परदिनं पुण्यतममिति मन्यते। "पूर्वं चेदर्द्धरात्रे" इति वचनं केचिदेवं व्याचक्षते, अर्द्धरात्रे पूर्वं यदि संक्रान्तिर्भवति तदा दिनद्वयं पुण्यं प्राहुः, पूर्वदिनं चावर्त्तनादुपरितनं, उत्तरमावर्त्तनात् पूर्वं, "संपूर्णे त्वर्द्धरात्रे" इति देवीपुराणवचनानुरोधात्। पूर्वं चार्द्धरात्रे जातौ मकर-कर्कटौ भुक्त्वा विहाय तयोर्दिनद्वयं पुण्यं न भवति किन्तु रात्रिः पुण्या, तत्रत्यैव तयोर्भोग-इत्यर्थः। अन्यत्रोक्तं किञ्चित् "भुक्त्वा मकर-कर्कटाविति वचनेन मकर-कर्कटयोर्दिनद्वयस्य पुण्यत्वं पर्युदस्यते न तु रात्रौ पुण्यत्वमुच्यते एकपदस्यार्थद्वयासम्भवात्, न हि भवति देवदत्तं भुक्त्वा भोजनार्थं विप्रा आकारयितव्या इत्युक्ते देवदत्तस्य तत्रैव भोजयितव्य इत्यपरोऽर्थ इति, तदयुक्तं, "भुक्त्वा मकर-कर्कटावित्यत्र तयोर्दिनद्वयम-पुण्यमित्यत्र न तात्पर्यं किन्तु रात्रिः पुण्या इत्यन्यथा तयोः पुण्यकालप्रतिपादनं न कृतं स्यात् सर्वसंक्रान्तीनां पुण्यकालप्रतिपादनस्य च प्रक्रान्तत्वात्। एवं दृष्टान्तेऽपि देवदत्तं भुक्त्वेत्यत्र देवदत्तोना-

कारयितव्य इत्यत्र न तात्पर्यं किन्तु यत्रौ तत्रैव भोजयितव्य इत्यत्र अन्यथा तत्र निमन्त्रितस्यापि भोजनदानप्रतिपादनं न कृतं स्यात् नि-मन्त्रितानां सर्वेषां भोजनदानप्रतिपादनस्य च प्रकृतत्वात्। तस्मादेकस्य पदार्थद्वये तात्पर्याभावाच्च कश्चिद्दोषः। यत्तूक्तं प्राप्तमेव पर्युदस्यते न च दिनद्वयस्य पुण्यत्वं प्राप्तं दिनार्द्धस्यैव पुण्यत्वोक्तेः, तेन दिनशब्देन दिनार्द्धं लक्षयितव्यमित्यन्योऽपि दोष इति, तदप्ययुक्तं, मुख्यासम्भवे लाक्षणिकार्थपरिग्रहस्यादोषत्वात्। न हि प्रत्यासन्ने संक्रमणे सत्येकस्यैव दिनस्यार्द्धमेव पुण्यं तस्मिन्नेव व्यवहिते तु दिनद्वयं समग्रं इति सम्भवति। तेनायनद्वये रात्रौ पुण्यमिति तदयुक्तं, "मुक्त्वा मकर-कर्कटावित्यस्य मकर-कर्कटयोः रात्रौ पुण्यमित्येवंपरत्वे प्रमाणाभावान्मकर-कर्कट-व्यतिरेकेण हि दिनद्वयं पुण्यमित्युक्ते, तयोर्दिनद्वयपुण्यत्वाभावमात्रं सिध्यति न तु रात्रौ पुण्यत्वं। ततश्च वचनान्तरपर्यालोचनया मकरे ह्युत्तरं दिनं पुण्यं दिनान्तरमिति कर्कटे च पूर्वदिनमिति एकैकदि-नपुण्यत्वप्रतिपादकवचनवत्केवलमकर-कर्कटसंक्रान्तिपुण्यत्वप्रतिपादक-वचनान्तराभावाच्च। तेनायनद्वये अर्द्धरात्रसंक्रान्तावेकस्मिन्नेव दिने पुण्यं न त्वयनद्वय एव रात्रौ पुण्यमिति।

तथाच बौधायनः।

अस्तं गते यदा सूर्ये चरं याति दिवाकरः।
प्रदोषे वार्द्धरात्रे वा तदा पुण्यं दिनान्तरम्॥ इति।

अत केचिदाहुः।

अस्मिन् वचने "प्रदोषे" इत्यनेन वचनेन यदि प्रदोषजाताया-मकरसंक्रान्तेः परदिने भोजनः प्रतिपाद्येत तदा चापचसंक्रमपुण्यं

"दिनार्द्धमित्यादिना यज्ञपार्श्व-वशिष्ठवचनेन "धनुर्मीनावतिक्रम्येत्या-दिना स्कन्दपुराणवचनेन "असंपूर्णे अर्द्धरात्रे उदयेऽस्तमयेऽपि चेत्या-दिना देवीपुराणवाक्येन च विरोधः प्रसज्येत । "अस्तं गते यदा सूर्ये इत्यादिवचने च अस्तं गते इत्यनेनैव प्रदोषार्द्धरात्रयोर्लम्भत्वात् पृथक्ग्रहणमनर्थकमित्यपरो दोषः । तस्मादेतद्वचनमेवं व्याख्येयं प्रदोषे चेत्ययं वाशब्दो यथार्थे "वोपमान विकल्पयोरिति निघण्टु-स्मरणात् । तदयं दृष्टान्त-दार्ष्टान्तिकयोरर्थः यथा प्रदोषे पूर्वदि-नार्द्धं पुण्यं तथार्द्धरात्रे परदिनं पुण्यं । द्वितीयोऽयं वा शब्दस्तथार्थे अव्ययानामनेकार्थत्वात् ।

अन्ये त्वस्तं गत इत्यस्य वैयर्थ्यभियान्यथा व्याचक्षते, अस्तं गते प्रदोषे च यथा पूर्वदिनं पुण्यं एवमर्द्धरात्रे परतश्च मकरसंक्रमे परं दिनं पुण्यमिति ।

अपरे तु वचनानामार्जवपरिहारार्थं प्रदोषे मकरसंक्रान्तौ दिन-द्वयेऽपि विकल्पेन पुण्यमिच्छन्ति ।

अन्ये त्वाहुः प्रदोषे मकरसंक्रान्तौ परदिनपुण्यत्वाभिधानात् "धनुर्मीनावतिक्रम्येतिवचनं प्रदोषव्यतिरिक्तार्द्धरात्रपूर्वकालविषय-मिति, तदयुक्तं, "धनुर्मीनावतिक्रम्येतिवाक्यगतस्य पूर्व्वशब्दस्य मक-रसंक्रान्तौ प्रदोषव्यतिरिक्तार्द्धरात्रपूर्वकालपरत्वे संक्रान्त्यन्तरे त्वर्द्ध-रात्रपूर्वसमस्तकालपरत्वे वैरूप्यापत्तेः ।

अन्ये त्वाहुः अर्द्धरात्र इत्यत्र अतीत इति पूरणीयं "संपूर्णे उभयोर्दैयमतिरेके परेऽहनीतिवचनात्, तदयुक्तं, अस्य संक्रान्त्यन्तर-विषयत्वात् "प्राक्दिनद्वयं पुण्यं मुक्त्वा मकर-कर्कटाविति वचनात् ।

ग्रन्थान्तरे ।

कार्मुकन्तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वार्द्धरात्रे वा तदा भोगः परेऽहनि ॥
मिथुनात् कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्य्यादहनि पूर्व्वतः ॥

तेनार्द्धरात्रजातयोर्मकर-कर्कटयोर्दिनद्वये न पुण्यं किन्तु मकर-संक्रान्तौ परदिने कर्कटे च पूर्व्वदिने पुण्यमिति ।

केचित्तु संपूर्णे चार्द्धरात्र इति वाक्यमर्द्धरात्रजातविष्णुपदीविषयत्वेन व्याचक्षते। तन्मते हि विष्णुपद्यामेव व्यवस्थया दिनद्वये पुण्यमिति।

अन्ये त्वर्द्धरात्रजातविषुवद्विषयत्वेन व्याचक्षते। तन्मते हि विषुव एव व्यवस्थया दिनद्वये पुण्यं। अतएव मकर-कर्कटयोः पर-पूर्व्व-भोगसंक्रान्त्युपलक्षणत्वमिति तदुभयमप्ययुक्तं विषुवद्विष्णुपदीव्यतिरि-क्तसंक्रान्तावपि व्यवस्थया दिनद्वयपुण्यत्वस्य प्रतिपादितत्वात्कारणं विना संकोचप्रसंगाच्च मकरकर्कटपदयोर्विना कारणमुपलक्षणत्वप्रसं-गाच्च दर्शितमार्गेण वचनसामञ्जस्येनैवोपपत्तेः ।

अन्ये त्वेवं व्याचक्षते अर्द्धरात्रे पूर्णे यदि संक्रान्तिर्भवति तदा दिनद्वयं पुण्यं अव्यापन्नाव्ययनयोश्च प्राज्ञः, 'मुक्त्वा' वर्जयित्वा, पूर्णेऽर्द्ध-रात्रे जातौ मकर-कर्कटौ तयोर्हि दिनद्वयं पुण्यं न भवति किन्त्वपुण्यं अव्यापन्नाव्ययनयोश्चेत्यर्थः, मकर-कर्कटयोर्दिनद्वयेऽभावाच्च इति यावदिति ।

तथाच श्रुतिः ।

यस्मिन् चेन्द्राविष्णुस्मं काद्राग्नौ चेतावरदं ।

संक्रान्तिः पश्चिमो ज्ञेया दानाध्ययनकर्मसु ॥

अनेन वाक्येन मकर-कर्कटयोर्दिनद्वयस्यापुण्यत्वमुक्तं, तत् दानाध्ययनकर्मविषयं द्रष्टव्यं, 'दानं' अध्यापनं वेदस्य, अध्ययनमपि तस्यैव, यानि कर्माणि तेषु च दानाध्ययनकर्मसु दिनद्वयं पुण्यं वेदितव्यं। तथाचाध्यापकानामध्येतॄणां च समाचारः। ते हि रात्रौ मकर-कर्कटयोर्दिनद्वयं नाध्यापयन्ति नाधीयन्ते च। तदयुक्तं, प्रकरणसमावेशसम्भवे तदुत्कर्षस्यानुचितत्वात्। निशाद्वयं दिवा रात्रौ वा संक्रान्तौ दिवापुण्यप्रतिपादकानि वाक्यानि दर्शितानि, अधुना रात्रिपुण्यप्रतिपादकानि वाक्यानि प्रदर्श्यन्ते।

भविष्यत्पुराणे सुमन्तुवाक्यं।

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।
नैमित्तिकन्तु कुर्वीत स्नानं दानं च रात्रिषु ॥
ग्रहणोद्वाह-संक्रान्ति-यात्रार्त्तिप्रसवेषु च।
श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥

विष्णुः।

विवाह-व्रत-संक्रान्ति-प्रतिष्ठा-ऋतु-जन्मसु।
तथोपराग-पातादौ स्नाने दाने निशा शुभा ॥

'ऋतुः' गर्भाधानं। 'पातः' व्यतीपातः।

गोभिलः।

राहुदर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु।
स्नान-दानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥

अत्र केचिदाहुः।

एतानि वाक्यान्यर्केतरसंक्रान्तिविषयाणीति । अतएव गोभिलेनोक्तं ।

राचौ संक्रमणे भानोर्द्दिवा कुर्य्यात्तु तत्क्रियाम् ॥ इति ।

आयनसंक्रमं पुण्यं दिनार्द्धं स्नान-दानयोः ।

राचौ संक्रमणे भानोर्विषुवत्ययने दिनं ॥ इति च ।

रात्रिवाक्येषु तु ग्रहविशेषनामरहितं संक्रान्तिमात्रं श्रूयते तेनार्केतरसंक्रान्तिविषयमेतदिति । तदयुक्तं ।

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।

राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥

इति वशिष्ठवचनविरोधात् । यच्चाच जितामित्रादिमतं रात्रेः सर्वकर्मानङ्गत्वात्कथंचिद्दिवा स्नानाद्यसम्भवे रात्रावपि प्रत्यवायपरिहारार्थं संक्रान्तिनिमित्तकमवश्यं स्नानाद्यनुष्ठेयमित्येवंपराणि रात्रिवाक्यानि ।

राचौ संक्रमणे भानोर्द्दिवा कुर्य्यात्तु तत्क्रियाम् ।

इति दिवाग्रहणेन रात्रिव्युदासात् रात्रिसंक्रमणे दिनार्द्धपुण्यत्वाभिधानाच्चेति ।

यच्चान्येषां मतं परमसूक्ष्मतमसंक्रान्तिकालान्तर्भावेन स्नान-दानादिकं येन रात्रावपि कर्तुं शक्यते तच्चातिशयफलं, अनन्तर्भूतसंक्रान्तिरात्रिस्तु कालः कर्मानङ्गमेवान्यथा हि रात्रौ संक्रमणे सन्निहितनाडीपरित्यागेन व्यवस्था दिनद्वयस्नानादिविधानमनुपपन्नं प्रहरद्वयपुण्यत्ववचनाच्च । एतच्च कुतोऽवगतमिति चेत्, पौराणिकाद्वाक्यादेवं । तथाह्युक्तं ।

धर्माद्धि वर्द्धते ह्यायूराज्य-पुत्र-सुखादयः ।
अधर्माद्व्याधि-शोकादि विषुवायनसन्निधौ ॥ इति ॥

न च परमसूक्ष्मेण संक्रान्तिकालेन सह कश्चित्कश्चित्पदार्थस्य सन्निधानं सम्पादयितुं समर्थः, तदन्तर्भावेन तु क्रियमाणे कर्मणि सिद्धस्तस्य सन्निधिः । अतः स्नान-दानादौ प्रयोगस्यान्तर्भूतसंक्रान्तिकालस्यैकस्य रात्रावनुष्ठानमिति । तदयुक्तं । संक्रान्तिनिषेधस्योभयतः षोड़शनाड़िकापुण्यत्वस्य रात्रिसंक्रान्तावप्यनपायात् ।

रात्रौ संक्रमणे भानोर्दिवा कुर्यात्तु तत्क्रियां ।
पूर्वस्मात्परतो वापि प्रत्यासत्तेश्च तत्फलम् ॥

इति वचनस्य रात्रिसंक्रान्तौ प्रत्यासन्नदिनपुण्यप्रतिपादकस्य रात्रिव्युदासकत्वाभावात् दिनार्द्धवचनस्यासन्नदिनार्द्धपुण्यत्वप्रतिपादकस्य रात्रिनिवर्त्तकत्वाभावाच्च ।

संक्रान्तेः पुण्यकालस्तु षोड़शोभयतः कलाः ।
अतीतोऽनागतो भोगो नाड्यः पञ्चदश स्मृताः ।
या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ॥

इत्येवमादीनां वाक्यानां संकोचप्रसङ्गात् । रात्रौ स्नानादिप्रतिपादकानां भविष्यत्पुराणादिवाक्यानां विना कारणेन संकोचप्रसङ्गात् । तस्माद्रात्रिसंक्रान्तौ रात्रौ दिवा च पुण्यं प्रत्यासत्तिविशेषात्तु फलविशेष इति सिद्धं ।

अपरे त्वाहुः अयने विषुवे च दिनद्वये पञ्चनाड्यः ।

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
पूर्वापरविभागेन रात्रौ संक्रमते यदा ॥

दिनान्ते पञ्चनाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि ॥

इति स्कन्दपुराणवचनात् ।

विष्णुपद्यां षडशीतिमुखे सर्वस्मिन्नपि श्रौते स्मार्त्ते च कर्मणि रात्रौ प्रसङ्गवचनात्पूर्वापरदिनस्थपञ्चघटिकास्तु पुण्यकालमिति ।

विष्णुपद्यां धनुर्मीन-नृयुक्कन्यासु वै यदा ।
पूर्वोत्तरगते रात्रौ भानोः संक्रमणं भवेत् ॥
पूर्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्मणि ॥

इति निगमवचनात् । यथानिषेधेऽपि पूर्वापरनाडीग्रहणम-विशिष्टं संक्रान्तिकालव्याप्तिमूलत्वात् ।

विषुवादिमूलतमं पुण्यमाह गालवः ।

स्थिरभे विष्णुपदं षडशीतिमुखं द्वितनुभे तुला-मेषे विषुवे तुर्य्ये दक्षिणायनं सौम्यकं मृग्ये ।

पूर्वश्लोकेर्थोऽस्मात्मेतत् ।

अथ ।

अयनांशकतुल्येन कालेनैव स्फुटं भवेत् ।
मृगकर्कादिगे सूर्य्ये याम्योदगयने सति ।
तदा संक्रान्तिकालाः स्युरन्ता विषुवदादयः ॥

अयमर्थः । राशिं प्रति त्रिंशदंशका भवन्ति सूर्य्योऽत्र प्रतिदिन-मेकैकमंशं भुङ्क्ते । तत्र यावद्भिरंशैरयनच्युतिर्भवति तावता सूर्य्यस्य भोग्यकालेन भाविना विष्णुपदादिकानां च्युतिर्भवति ततश्च दाद-

ग्रभिरंशैरवनच्युतिर्भवति तत्र भाविन्याः संक्रान्तेर्दशभिर्दिनैरर्वाक् पुण्यकालो भवति तस्मिन् संक्रान्तिनिमित्तं दानादि कर्त्तव्यमिति। एवं न्यूनातिरिक्तेऽपि बोद्धव्यम् ।

तथाच जौनाविः ।

आचानिषेधा अपि सूक्ष्मकाले
यद्दं स्थिरीकर्त्तुमशक्नुवन्तः ।
आलोच्य तन्त्रस्य तथोपदिष्टं
भवन्ति नित्यं परिपूर्णकामाः ॥

पक्षान्तरसंक्रमसमयस्यापि पुण्यकालमाह जैमिनिः ।

नक्षत्रराशौ रविसंक्रमे स्यु-
रर्वाक्परश्चापि रवेस्तुनाड्यः ।
पुण्यास्तथेन्दोस्त्रिधरापतेर्वे-
गेकैव नाड़ी मुनिभिः प्रभोक्ता ॥

नाड्यश्चतस्रः सपञ्चाः कुजस्य
बुधस्य तिस्रोऽमलवः पञ्चानि ।
सार्द्धाश्चतस्रः पलसप्तयुक्ता-
गुरोश्च शुक्रे सपञ्चाश्चतस्रः ॥

द्विनागनाड्यः पञ्चसप्तयुक्ताः
शनैश्चरस्याभिहिताः सपुण्याः ।
आसन्न-मध्ये जप-दान-होमं
कुर्वन्नवाप्नोति नरेन्द्रधाम ॥

नक्षत्रे राशौ वा सूर्यस्य संक्रमणे सति पूर्वतः परतोऽपि 'रवेस्तु-

नाद्यः' षोड़शघटिकास्तु, पुण्यकालः। इन्दोस्तु 'विधरापलैर्युक्' चत्वोदशभिः पलैर्युक्ता, एकैव घटिका। 'कुजस्य' मङ्गलस्य, तु एक-पलयुक्तास्तस्रो घटिकाः। बुधस्य चतुर्दशपलयुक्ताः तिस्रः। 'गुरोः' वृहस्पतेः, सप्तत्रिंशत्पलयुक्तास्तस्रः। शनैश्चरस्य पलसप्तकयुक्ताः 'दिनागनाद्यः' नागा अष्टौ दिराहता नागाः 'दिनागाः'।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तश्रीकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्ग-चिन्तामणौ परिशेषखण्डे कालनिर्णये संक्रान्तिनिर्णयः।

---

# अथ द्वादशोऽध्यायः।

## अथ श्राद्धकालनिर्णयः प्रारभ्यते।

### आदौ नित्यश्राद्धकालनिर्णयः।

तत्र अमावास्यानिर्णयस्तावल्लिख्यते। तथा अमावास्यायास्त्रयो-भेदा आदिपर्वनिर्णये दर्शिताः। तत्र सम्पूर्णायाममावास्यायां अप-राह्णे श्राद्धं कर्त्तव्यम् "अपराह्णः पितृणामिति श्रुतेः।

तथाच शातातपः।

दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितं।
अपराह्णे पितॄणां तु तत्प्रदानं प्रशस्यते॥

यमः।

पश्चाह्ने निर्वपेत्तेभ्यो ह्यपराह्णे तु पैतृकम्।

यदा तु दिनद्वयसम्बन्धिनी तदापि यस्मिन्दिने अपराह्णव्या-पिनी तत्रैव श्राद्धमनुष्ठेयम्।

तथाच छान्दोगपरिशिष्टे कात्यायनः।

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः॥

'पिण्डान्वाहार्यकं श्राद्धं' पिण्डपितृयज्ञानन्तरं क्रियमाणं, 'क्षीणे राजनि' क्षीणे चन्द्रे अमावास्यायामित्यर्थः। 'वासरस्य तृतीयेऽंशे' त्रिधाविभक्तस्य दिवसस्य तृतीयभागे अपराह्ण इत्यर्थः। यदा च

दिनद्वयेऽप्यपराह्णव्यापिनी न भवति तदापि पूर्वदिनसंबन्धिनी सिनीवाल्येव ग्राह्या। तथाच स एवाह।

> यदा चतुर्दशीयामन्तुरीयमनुपूरयेत्।
> अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते॥

'क्षीयमाणा' अपरस्मिन्दिवसे सर्वापराह्णव्यापिनी न भवतीत्यर्थः। तथाच यज्ञपार्श्वोऽपि।

> अर्द्धं चतुर्दशी यत्र अर्द्धं पञ्चदशी भवेत्।
> चतुर्दश्यवसाने तु पितृयज्ञन्तु कारयेत्॥

'अर्द्धं' दिवसस्योत्तरार्द्धं।

वृद्धबौधायनः।

> चतुर्दश्याः चतुर्यामे अमावास्या च दृश्यते।
> श्वोभूते प्रतिपच्चैव भूते कथ्यादिका क्रिया॥

तथाच गोभिलः।

यः परमोविप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी यः परः सन्निकर्षः सामावास्या यद्वः खे चन्द्रमा न दृश्यते साममावास्यां कुर्वीत दृश्यमानेऽप्येके अमावास्यायां भवतीति।

व्यासोऽपि।

> दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृताः।
> सिनीवाली यदा पित्र्ये कुहूर्दैवे तु कर्मणि॥

अतश्चतुर्दश्यन्तेऽपि पिण्डान्वाहार्यकार्थो निर्वापः कर्त्तव्य इति स्थिते केचिदाहुः। नैतदस्ति चतुर्दश्यां तन्निर्वाप इति पिण्ड-पितृयज्ञानन्तरं हि तद्विहितं पिण्डपितृयज्ञश्चामावास्यायामपराह्णे

विहितः, "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति कल्प-सूत्रकारवचनात् ।

यत्तु मतं चौपवसथ्यदिवसोपलक्षणार्थोऽमावास्याशब्द इति, तन्न, लक्षणायां प्रमाणाभावात् विधावन्याय्यत्वाच्चाच्च । या च श्रुतिः । "तस्मात्पूर्वेद्युः पितृभ्यः क्रियते उत्तरमहर्देवान् यजन्ते पितृभ्य एवं तद्यज्ञं निष्क्रीय यजमानः प्रतनुत इति । तथा अन्वाधानं प्रकृत्य "अपराह्णे पिण्डपितृयज्ञेन चरन्तीति कल्पसूत्रकारवचनं, तदे-तदस्मिन्नौपवसथ्येऽहनि अपराह्णे अमावास्यास्ति तद्विषयमिति कृत्वा न पूर्वदिनमात्रपरं, न तु लक्षणायां प्रमाणं भवितुमर्हति ।

अन्ये त्वाहुः चन्द्रक्षयोपलक्षितदिनान्तर्गतायाममावास्यायामपि पिण्डान्वाहार्यकं न कर्त्तव्यं तस्य पिण्डपितृयज्ञानन्तरं विहितत्वात् । पिण्डपितृयज्ञश्च चन्द्रादर्शनवत्याममावास्यायां विहितः । तथाच श्रुतिः "यदेवैष न पुरस्तान्न पश्चाद्ददृशेऽथ तेभ्यो ददातीति । सूत्र-कारवचनं "यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुते इति । न चादर्शनं क्षयोपलक्षणपरं, "श्वोऽपि राजनीत्यस्यादर्शने-ऽप्यनतिक्रमात् । न च क्रमोऽविवक्षितः प्रमाणाभावात् । अथ मतं यदैकस्मिन् दिने द्वयं तदायं क्रमो नान्यदेति, यदा चौपवसथ्य एव चन्द्रादर्शनं तदैकस्मिन् दिने द्वयमन्यदा पिण्डपितृयज्ञो यजनीय-दिनं प्रत्युत्कृष्यत इति । तन्न । तदाप्युत्कर्षन्यायेनान्वाहार्यकस्याप्युत्क-र्षात् । यत्तु लौगाक्षिवचनं ।

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः॥ इति ।

तत् पिण्डपितृयज्ञपिण्डान्वाहार्य्यकान्यपितृकार्य्यविषयमस्तु। तदे-तदयुक्तं पूर्व्वोदाहृतवचनविरोधात्। यथोक्तं चतुर्द्दश्यन्ते न निर्वाप इति, तदयुक्तं यतः छन्दोगपरिशिष्टे पिण्डपितृयज्ञं प्रकृत्याह कात्यायनः।

यथोक्तं दृश्यमानेऽपि न चतुर्द्दश्यपेक्षया।

अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत्॥इति।

यत्तु दृश्यमानेऽपि चन्द्रे पिण्डपितृयज्ञः, तदयुक्तं दृश्यमाने-ष्येके इत्यादिभिर्वाक्यैर्वा न चतुर्द्दशीविवक्षया, 'तदन्ते' चतुर्द्दश्यन्ते। यदा त्वपरदिने अपराह्णव्यापिनी तदा अमावास्यां प्रतीक्षेतेति दृश्यमानेऽपि चन्द्रे निर्वापः, तथा "यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुरुत इत्यादिश्रुतिविरोधः स्यादित्याशङ्क्य अदर्शन-श्रुतिः, यथोपलक्षणं मत्वाह स एव, यदुक्तं "यदहःस्वेव दर्शनं नेति चन्द्रमाः तत्क्रियोपलक्षणं ज्ञेयं क्षीणे राजनीत्यपीति, यच्चान्य-त्पूर्व्वपक्षितं चन्द्रोदयोपलक्षितदिनान्तर्गतायां अमावास्यायामपि न पिण्डपितृयज्ञान्वाहार्य्यक इति तदपि यथोक्तदृश्यमानेऽपीत्यादि-कात्यायनवचनेन निराकृतमेव, दृश्यमानेष्वेकदेत्यनेन गोभिलीय-वचनेन च हारीतेनापि निराकृतं।

यस्यां सन्ध्यागतः सोमो लृणाग्र इव दृश्यते।

अपराह्णे चयस्यां पिण्डानां करणं ध्रुवम्॥

इत्यत्र पिण्डानामिति निर्द्देशः पिण्डपितृयज्ञं नातिवर्त्तितु-मीहते।

पुनः कात्यायनः।

यदा चतुर्द्दशीयामं तुरीयमनुपूरयेत्।

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥ इति ।

किञ्च यजनीयदिनात् पूर्वदिने हि पिण्डपितृयज्ञ-श्राद्धे विहिते "तस्मात् पितृभ्यः पूर्वेद्युः क्रियते" इति । यदा च प्रतिपद्दिने पूर्वाह्णेऽथवा मध्याह्नेऽमावास्या समाप्यते तदा तदहरेव याग इति पूर्वस्यां चन्द्रोदयवत्यां पिण्डपितृयज्ञादि, "सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणीत्यस्य पिण्डान्वाहार्यकव्यतिरिक्तविषयत्वे प्रमाणाभावाच्चेति । इन्दुक्षयस्तु कदा भवतीत्यपेक्षायां स एवाह ।

अष्टमेंऽशे चतुर्दश्यां क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमेंऽशे तु पुनः किल भवेदणुः ॥ इति ॥

इह खलु ग्रहचारविदो राशिश्चतुर्भागैः द्वादशभिर्द्वादशभिश्चन्द्रमसः क्षयः तदा चन्द्रापकर्षे चैकैका तिथिर्भवतीति वर्णयन्ति, अतश्चतुर्दश्यी वा अमावास्या वा द्वादशांशो भवति। तत्र चतुर्दश्यामष्टमांशान्ते चन्द्रः क्षीयते अमावास्याष्टमेंऽशे पुनरणुर्भूत्वा जायते। किलशब्दोऽत्र ज्यौतिषिकैः किल तदाख्यायतइत्येतदर्थमाह।

अत्र शतपथश्रुतिः ।

स एष संवत्सरः प्रजापतिः षोड़शकलस्तस्य सन्ध्य एव पञ्चदशकला ध्रुवैवास्याः षोड़शी कला स रात्रिभिरेवापूर्यते च क्षीयते सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्या इति ।

अथायमाशयः षोडशकलस्य चन्द्ररूपस्य प्रजापतेः कृष्णपक्षप्रतिपदमारभ्य चतुर्दश्यन्तासु तिथिषु क्रमादेकैककलाक्षयेऽपि चतुर्दश्या-

कलाः क्षीणा भवन्ति चतुर्दशीहतीयांशे तु पञ्चदशमपि कला क्षीयते ततोऽमावास्यायां ध्रुवया अविनश्वरया षोडश्या कलया भूलोकमागत्य सर्वं प्राणिजातं प्रविशति अमावास्याहतीयांशे तु तयैव षोडश्या कलया द्विवसमपेक्ष्य पुनः प्रादुर्भवतीति ।

अमावास्याविशेषे चन्द्रक्षयस्य कालमाह कात्यायनः ।

आग्रहायणमावास्या तथा ज्येष्ठस्य या भवेत् ।
विशेषमासां ब्रुवते चन्द्रचारविदो द्विजाः ॥
अथास्य एव प्रहरेऽवतिष्ठते
चतुर्थभागो न कलावशिष्टः ।
तदन्त एव क्षयमेति चन्द्रः
एवं ज्योतिश्चक्रविदो वदन्ति ॥

अस्यार्थः वृषस्थे चन्द्रे ज्येष्ठामावास्या वृश्चिकस्थे चाग्रहायणमावास्या इति, ते च चन्द्रस्य परमोच्च-नीचस्थाने, तद्वशाच्चन्द्रस्य गतिवैलक्षण्यं, यदन्यास्वमावास्यास्वष्टमे प्रहरे स्वल्पं तदनयोरमावास्ययोः प्रथम एव भवतीति । ये तु चन्द्रादर्शन एव पिण्डपितृयज्ञादिकं मन्यन्ते न तस्य चयेऽपि तान्निराकर्तुं कदाचिद्द्वितीयायामपि चन्द्रादर्शनं दर्शयति ।

यस्मिन्नब्दे द्वादशैकस्य मध्ये
तस्मिन् हतीयापरतो न दृश्यते ।
एवञ्चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥

अस्यार्थः । मध्ये मासो यस्मिन्नब्दे द्वादशाधिको भवति तस्मि-

अब्दे मलमासानन्तरं तृतीयायां अपरस्यां द्वितीयायां तिथौ चन्द्रो न दृश्यते न चैतावता चन्द्रदर्शनविहितः पिण्डपितृयज्ञस्त्य ज्यते । अतश्चन्द्रचारं विदित्वा तस्मिन् क्षीणेऽपि चतुर्दशीमिश्रायाममावास्यायामपराह्णे पिण्डपितृयज्ञादिकं कुर्य्यादिति ।

एवञ्च यापि शातपथी श्रुतिः ।

तद्वा एकतन्माहि मासन्नं पितृभ्यो ददाति यद्देवैव न पुरस्तान्न पश्चाद्दृश्येऽथ तेभ्यो ददाति एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एतां रात्रिं क्षीयते तस्मिन् क्षीणे ददाति तथैतेभ्योऽसमदं करोति अथ यदा क्षीणे ददातीति ।

यानि तु सिनीवालीनिषेधकानि तानि निरग्निकश्राद्धविषयाणि।

अन्ये त्वाहुः तानि वचनान्यपराह्णप्रविष्टचतुर्दशीविद्धसिनीवालीविषयाणीति ।

अनेनाभिप्रायेणाह वृद्धमनुः ।

यस्यामस्तं रविर्याति पितरस्तामुपासते ।
तिथिस्तेभ्यो यतो दत्ता अपराह्णे स्वयम्भुवा ॥ इति ॥

अपराह्णव्यापिनी चेत् सिनीवाली तदैव सा ग्राह्या अन्यदा कुहूरेव ग्राह्येत्युक्तं भवति ।

तदाह हारीतः ।

अपराह्णे पितृणान्तु यापराह्णानुयायिनी ।
सा ग्राह्या पितृकार्य्येषु न पूर्वाह्णानुयायिनी ॥

यदाप्युभयदिनेऽप्यपराह्णसम्बन्धस्तदापि संग्रहरूपं निर्णयमाह स एव ।

शक्तिमा या चतुर्दश्या अमावास्या भवेत् क्वचित् ।
खर्विकान्तां विदुः केचिदुपेन्दुमिति चापरे ॥

यस्मिन्दिने चतुर्दश्यां सत्याममावास्यामावास्या भवति सा खर्वि-केत्युच्यते खर्वशब्दस्याल्पवाचित्वात्। अनेनैव चशब्देन अनुपयुक्तता दर्शिता। अतः केचिद्ग्राह्येत्येवं विदुः, अपरे तु उपेन्दुमनुष्ठानाय प्रयुक्तां कुरुध्वमित्येवं विदुरित्यर्थः। एवं सन्देहे निर्णयमाह।

वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि।
यामांस्त्रीनाधिकान् वापि पितृयज्ञस्तदा भवेत् ॥

अमावास्यावृद्धौ खर्विका नाव्यपेत्यर्थः। अथ द्विपक्षे तु वर्द्धि-तापि सिनीवाल्युपेयेति। पैठीनसिरपि।

आदित्यस्योदये या वा अमावास्या विवर्द्धते।
अपरेति च विज्ञेया पितृणां दत्तमक्षयं ॥

या चतुर्दशी भवत्यपराह्णव्यापिनी अमावास्या वर्द्धते तस्यां पितृणान्दत्तमक्षयमित्यर्थः।

तथा हारीतः।

सिनीवाली तु कर्त्तव्या पूर्वा सर्वा च यज्वभिः।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः ॥
पर्वणोऽंशे द्वितीये तु कार्या दृष्टिर्द्विजातिभिः।
द्वितीयाचरितं यस्माद्बह्वृचाश्वलायनाः ॥

बौधायनः।

सिनीवालीमुपोष्याथ कुर्वन्तीह परेऽहनि।
पितृयज्ञं तदा कुर्युः स्वकाले तैत्तिरीयकाः ॥

पूर्वाह्णे चेदमावास्या अपराह्णे न चेद्यदि ।

अत्र च हारीतवचनं ।

प्रतिपद्यपि कर्त्तव्यं श्राद्धं श्राद्धविदो विदुः॥ इति ॥

अत्र च हरिहरेणोक्तं, अनिर्ज्ञातमूलमिदं वचनं परस्परव्याहत-पदोपबद्धं चेति। तथा हि "पूर्वाह्णे चेदित्येतावत् प्रतिपद्दिनविषयं, पूर्वाह्णशब्देन च दिवसस्य तृतीयभागो वा पूर्वार्द्धं वा, एवञ्च सति सर्व्वथा कस्मिंश्चिदपराह्णे न भवेदित्येतन्न युज्यते यस्मात् प्रतिपद्दिने पूर्वाह्णमात्रावस्थितायास्तदूर्द्ध्वदिने अपराह्णसम्बन्धस्यावश्यकत्वात् षड्घटिकाधिकतिथिह्रासस्याभावात्। अथ यदि प्रतिपद्दिनापराह्णस्यैव भवेदित्युच्यते तर्हि "पूर्वाह्णे चेदित्यनर्थकं स्यादिति। तेनैवं व्याख्येयं तिथिवृद्धौ प्रतिपद्युक्तायां अमावास्यायामेव श्राद्धविधानं, तथा पितृयज्ञानन्तरं मनुना विहितं, पिण्डपितृयज्ञस्यानन्तरं श्रुत्यापराह्णे विहितो नान्यथा कर्त्तुं शक्यः तस्य चिरकालत्वात् तेनैव सकलापराह्णव्याप्त्यमावास्याश्राद्धस्य का गतिरित्यत उक्तं पूर्वाह्ण इति नापराह्णे इत्यर्थः। एवं चापराह्णव्यापिन्यां सिनीवाल्यामावास्यायां श्राद्धविधानमग्निमद्विषयं, अनग्निकानान्तु कुतपकालव्यापिन्यां कुहूममावास्यायां श्राद्धविधानं।

तथाच लौगाक्षिस्मृतौ सौरपुराणे च ।

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः ॥

व्यासोऽपि ।

दृष्टचन्द्रा सिनीवाली कार्या विप्रैस्तु साग्निकैः ।

नष्टचन्द्रा कुहूः कार्या शूद्रैर्विप्रैरनग्निकैः ॥

बौधायनोऽपि।

सिनीवाली कुहूश्चैव मृत्युघ्ने श्राद्धकर्मणि।

साग्निकैस्तु सिनीवाली कुहूः कार्य्याथनग्निकैः ॥ इति ॥

कुहूरिति कुतपकालव्यापिनी।

तथाच हारीतः।

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा।

पित्र्ये कर्मणि विद्वद्भिः कार्या कुतपकालिकी ॥

कुतपलक्षणन्तु मत्स्यपुराणे।

अह्नोमुहूर्त्ता विख्याता दश पञ्च च सर्वदा।

तत्राष्टमो मुहूर्त्तोयः स कालः कुतपः स्मृतः ॥

एवं सति दिनद्वयसम्भिन्नायां अमावास्यायां सत्यां या कुतप-कालव्यापिनी सैवानग्निकैर्ग्राह्येत्युक्तं भवति।

अत एव बौधायनः।

मध्याह्नात् परतो यत्र चतुर्द्दश्यनुवर्त्तते।

सिनीवाली तु सा ज्ञेया पितृकार्य्ये तु निष्फला ॥

बृहस्पतिरपि।

मध्याह्नाद् या त्वमावास्या परस्तात्संप्रवर्त्तते।

भूतविद्धा तु सा ज्ञेया न च पञ्चदशी भवेत् ॥

कार्ष्णाजिनिरपि।

भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा।

श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥

यदा तु दिनद्वयेऽपि कुतपकालव्यापिनी न भवति तदा भूतविद्धैव ग्राह्या ।

तथाच बौधायनः ।

घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा ।
भूतविद्धापि कर्त्तव्या दैवे पित्र्ये च कर्मणि ॥

प्रतिपत्सु घटिकैकापि कर्मकालसम्बन्धिनी यदि न स्यादित्यर्थः।

जावालिरपि ।

प्रतिपत्स्वप्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा कार्य्या पित्र्ये कर्मणि सर्वदा ॥

यदा तु दिनद्वयेऽपि कुतपकालव्यापिनी अमावास्या पूर्वाह्णे तदा वृद्धौ साम्ये वा परा ग्राह्या, क्षये पूर्वा ।

तथाच प्रचेताः ।

सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि ।
ज्ञातान्ते चेत्तु मध्याह्ने श्राद्धादि स्यात् कथं तदा ॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥ इति।

कात्यायनोऽपि ।

क्षीयमाणाममावास्यां प्रथमेऽहनि लक्षयेत् ।
वर्द्धमानाममावास्यां द्वितीयेऽहनि लक्षयेत् ॥

यत्तु वृद्धवसिष्ठवचनम् ।

अरुणोदयवेलायाममावास्या यदा भवेत् ।
स कालः परमो ज्ञेयः पितॄणाम्दत्तमक्षयम् ॥ इति।

तत्पितृतर्पणादिविषयम् ।

यदपि निगमवचनम् ।

मुहूर्त्तममावास्या प्रतिपद्यपि चेद्भवेत् ।

तदानीमुत्तमं ज्ञेयं पर्वग्रेषञ्च पर्ववत् ॥ इति ।

तत्सुतापुत्त्रादिविषयम् ।

अतएव च पद्मपुराणे ।

अमा वा प्रतिपद्युक्ता सर्वपापहरा तिथिः ।

चन्द्र-सूर्य्यग्रहतुल्या स्नान-दान-जपादिषु ॥

अन्यत्र तु "तद्दानमुत्तममिति निगमवचनपाठः ।

यदपि प्रचेतसोक्तम् ।

घटिकैकाप्यमावास्या भवेद्यदि चतुर्द्दशी ।

तदा क्षयं मतं देवे पित्र्ये कर्मणि चोदितम् ॥ इति ।

तदपि देव-पितृप्रधानोपवासादिविषयं । ननु पितृकार्य्यविषय-मेव किमिति न भवति। उच्यते। यदा पूर्वदिन एवापराह्णव्यापिनी तदा तावत्पूर्व्वैवेति निरूपितम् ।

सिनीवाली तदा पित्र्ये दैवे च सततं कुहूः ॥

इति जावालिवचनेन, भूतविद्धा पितृकृत्ये प्रशस्ते तत्र तुल्यादिषु भूतविद्धापि पूज्येति परिसङ्ख्यानमुपपन्नं। नापि दिनद्वयेऽपराह्णव्या-पित्वाभावविषयमिदं, उक्तादेव हेतोः। न च पूर्वान्तरदिनयोरपराह्ण-व्यापित्वे अमावास्या भूतविद्धापि पूज्येति व्यवस्था घटते तत्र हि तिथिसाम्यवृद्धौ परा ग्राह्या, तिथिक्षये च पूर्व्वैवेति तुल्यादिपरि-सङ्ख्यानमनर्थकम । तस्माद्देवकार्य्यपरमेतत्,

तथा स्कन्दपुराणे दर्शितम्।

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी।

सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम्॥ इति।

तदाह प्रचेताः।

नागविद्धा च या षष्ठी सप्तम्या च तथाष्टमी।

दशम्येकादशी विद्धा त्रयोदश्यां चतुर्दशी।

भूतविद्धा अमावास्या न ग्राह्या मुनिपुङ्गवैः॥ इति।

तेनोपवासादिदेवकार्य्ये भूतविद्धाया अमावास्याया अपूज्यत्वो-
पदेशात् तुलादियोगे भूतविद्धा पूज्येति।

हारीतः स्मरति,

"प्रतिपन्मिश्रा भवेद्देवकार्य्ये पूज्यैव, तुलामकरयोगे भूतविद्धाऽपि पूज्येति"।

ननु देवकार्य्यविषयत्वेऽपि बाधेनैव निवेश इति पितृकालविष-
यताकिन्नाश्रीयते। उच्यते। बाधगौरवभिया तावदेकस्मिन्नेव कार्य्ये
निवेशः। न च विनिगमने कारणाभावः,

यतः कात्यायनेन।

नागविद्धा तु या षष्ठी दशम्येकादशी तथा।

भूतविद्धाप्यमावास्या वर्जनीया विपश्चिभिः॥

इत्युक्तोत्तं।

तुला-मकर-मीनेषु कन्यायां मिथुने तथा।

भूतविद्धाप्यमावास्या पूज्या भवति सर्व्वतः॥

नैतत्सापवर्गादेतदपि देवकार्य्यविषयमिति तच्च च व्रतोपवा-
सादिदेवकार्य्यविषयत्वं सामान्यतिथिप्रस्तावे दर्शितम्।

इति अमावास्यानिर्णयः।

## अथाष्टकाः ।

अष्टकाशब्देन मार्गशीर्षादिमाघचतुष्टयापरपक्षाष्टम्यः "हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टम्योऽष्टका इति गौतमस्मरणात्। तेषाञ्चिन्त्यते तिस्र एवाष्टकाः तिस्रश्चान्वष्टकाः ।

तथाच विष्णुः ।

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका इति ।

अष्टकानामनु पश्चाद्भवन्तीत्यन्वष्टका अष्टकानामुपरितना नवम्यः ।

कूर्मपुराणे ।

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।

तिस्रश्चान्वष्टकाः पुण्याः माघी पञ्चदशी तथा ॥ इति ।

विष्णुधर्मोत्तरे ।

आग्रहायण्यतिक्रान्तौ कृष्णास्तिस्रोऽष्टकास्तथेति ।

अथ पूर्वोक्ताष्टकाचतुष्टयव्यतिरिक्तापि भाद्रपदापरपक्षेऽष्टका तस्याश्चेतिहासपूर्वकमुत्पत्तिः प्रशंसा चोच्यते पद्मपुराणे ।

अग्निष्वात्ता इति ख्याता यत्रैषां यत्रसंस्थिताः ।

अच्छोदा नाम तेषान्तु मानसी कन्यका नदी ॥

तमथामावसुनाम पितरं वीक्ष्य सङ्गता ।

वव्रे वरार्थिनी सङ्गं कुसुमायुधपीडनात् ॥

योगं कृत्वा तु तेनाथ व्यभिचारेण भामिनी ।

धरान्तु स्पृशते पूर्वं पपाताथ भुवस्तले ॥

यथो अधोमुखी दीना लज्जिता तपसः क्षयात् ।

सापि तं प्रार्थयामास पुनरात्मसमुद्भवे ॥

विलप्यमाना पितृभिरिदमुक्ता तपस्विनी ।
इदमूचुर्महाभागाः प्रसादशुभया गिरा ॥
अष्टाविंशे भाविनी त्वं(१) द्वापरे मत्स्ययोनिजा ।
नाम्ना सत्यवती ख्याता व्यासस्य जननी शुभा ॥
व्यतिक्रमात् पितृणाञ्च कष्टदुःखमवाप्स्यसि ।
तस्माद्राज्ञो वसोः कन्या त्वमवश्यं भविष्यसि ॥
प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि ।
आयुरारोग्यदा नित्यं सर्वकामफलप्रदा ॥

ब्रह्मवैवर्त्त-वायुपुराणयोः ।

अथ कालं प्रवक्ष्यामि श्राद्धकर्मणि पूजितम् ।
काम्य-नैमित्तिकाजस्रं श्राद्धधर्मविधायिभिः ॥
पुत्त्रदा धनमूलाः स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे धनिष्ठादिपूर्वा चैन्द्री उदाहृता ।
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी ॥
आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत् सदा ।
शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः ॥
अन्वष्टका पितॄणां वै नित्यमेव विधीयते ।
या चान्या तु चतुर्थी स्यात्ताञ्च कुर्य्याद्विशेषतः ॥
तासु श्राद्धं बुधाः कुर्य्युः सर्वस्वेनापि नित्यशः ।
परत्रेह च सर्वेषु नित्यमेव सुखी भवेत् ॥

---

भविष्यो त्वमिति ख० ।

पूजकानां यशोत्कर्षो नास्तिकानामधोगतिः।
पितरः सर्वकालेषु तिथिकालेषु देवताः॥
सर्वे पुरुषमायान्ति निपातमिव धेनवः।
यस्य ते प्रतिगच्छेयुरष्टकाभिरपूजिताः॥
मोघस्तस्य भवेल्लोको लब्धञ्चास्य विनश्यति।
देवांस्तु दायिनो यान्ति तिर्यग्गच्छन्त्यदायिनः॥

अत्र चतुर्थी फाल्गुनकृष्णपक्षाष्टमी "हेमन्त-शिशिरयोश्चतुर्णा-मपरपक्षाणामष्टमीष्वष्टका इति शौनकस्मरणात्। पौषमासकृष्णाष्ट-मीमारभ्येति तिस्रोऽष्टका इत्येतन्मतपरिग्रहे चतुर्थी भाद्रपदमासाप-रपक्षाष्टमी वक्ष्यितदर्शितपद्मपुराणेतिहासानुसारात्। ब्रह्मपुराणे च चतसृष्वष्टकासु क्रमेण देवतानिरूपणे पितृतर्पकद्रव्यनिरूपणे च भाद्रपदापरपक्षाष्टम्या पठनात्।

ऐन्द्र्यान्तु प्रथमायाञ्च शाकैः सन्तर्पयेत् पितॄन्।
प्राजापत्या द्वितीया स्यात् मांसैः शुद्धैश्च तर्पयेत्॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम्।
वर्षासु मध्ये शाकैश्च न्तुर्थ्यामेव सर्वदा॥ इति।

अत्र शाक-मांसापूपशब्दाः श्राद्धार्हस्य सर्वस्यापि भोज्यस्य तत्तद्द्रव्यप्रधानकत्वप्रतिपादनपराः, न तु द्रव्यान्तरनिवृत्तिपराः, यतो विधेरेकविध्यन्तराबाधेनैव तावद्गतिन्यायं मन्यन्ते किमुत बहु-तरविध्यन्तरबाधेनेति। दृष्टं हि शाकप्रधानस्य भोज्यस्य तर्पकत्वं न तु केवलशाकस्येति।

आह वशिष्ठः।

आवण्याग्रहायण्योश्चान्वष्टकासु पितृभ्यो दद्यात् । अष्टकान्वष्टकास्वपि चावश्यकमेव श्राद्धम् ।

यदाह पितामहः ।

अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च ।

विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ इति ।

वायुपुराणे ।

"तिर्यग्गच्छत्यदाचिन इत्यष्टकाश्राद्धमकुर्वाणस्य तिर्य्यग्योनिप्राप्तिरूपानिष्टाभिधानाच्च ।

विष्णुना च "अमावास्याः तिस्रोऽष्टकाः तिस्रोऽन्वष्टका माघीप्रौष्ठपद्यूर्द्धं कृष्णत्रयोदशी व्रीहि-यवपाकौ वा इत्यनुक्रम्योक्तम् ।

एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ।

विष्णुधर्मोत्तरेऽप्युक्तं ।

श्राद्धकालममावास्या नित्यं पार्थिवसत्तम ।

पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ॥

प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी ।

आग्रहायणतिक्रान्तौ कृष्णास्तिस्रोऽष्टकास्तथा ॥

शाकेन प्रथमा कार्य्या मांसेन तदनन्तरम् ।

तृतीया च तथापूपैर्नित्यमेव विजानता ॥

एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः

श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ इति ।

देवलस्मृतौ ।

मानवः श्राद्धकल्पोऽयं मनुना समुदाहृतः ।

बहुपिण्डाष्टका च स्यादेकपिण्डा तु नाष्टका ॥ इति ।

अत्र बहुपिण्डैकपिण्डशब्दौ पार्व्वणैकोद्दिष्टविधिनिषेधपरौ ।

ब्रह्मपुराणे ।

अष्टकासु च कर्त्तव्यं श्राद्धं नैमित्तिकासु वै ।

अन्वष्टकासु क्रमशो मातृपूर्व्वन्तदिष्यते ॥ इति ।

अथ स्मृतिः ।

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा ।

अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ इति ।

शङ्खस्मृतिः ।

अन्वष्टकां तथा मातुः श्राद्धं चैव मृतेऽहनि ।

एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत् पृथक् भवेत् ॥ इति ।

विष्णुधर्म्मोत्तरे चास्मिन् मातृश्राद्धे पृथग्विधिरुक्तः ।

अन्वष्टकासु च स्त्रीणां श्राद्धं कार्य्यं तथैव च ।

अष्टकाविधिना कृत्वा क्रमेणैतासु पञ्चकम् ॥

माघे राजन् पितामह्याः श्राद्धं कार्य्यं यथाविधि ।

तथैव प्रपितामह्या वैश्वदेवपुरःसरम् ॥

पिण्डनिर्व्वपणं कार्य्यं तस्यैव पितृवन्नृप ।

भुक्तवत्सु च विप्रेषु तत्र कर्म्म निबोध मे ॥

प्रादेशमात्रा राजेन्द्र चतुरङ्गुलमायताः ।

तावदेव समुत्सेधाः षट्कर्षूस्तत्र कारयेत् ॥

प्रत्येकं कर्षूमूले तु परिस्तीर्णकृताग्नः ।

अग्नीषोमयमानाञ्च याराकृत्वा यथा पुरा ॥

कर्षूत्रतीयमूलेषु पुत्रपाणान्तु कारयेत् ।
पिण्डनिर्वपणं प्राज्ञरेकैकस्मिन् यथाविधि ॥
कर्षूणां त्रितयं तत्र क्षीराज्याभ्यां प्रपूरयेत् ।
कर्षूत्रितयमूले च स्त्रीणां निर्वपणं भवेत् ॥
दध्ना मांसेन पयसा कर्षूणाञ्चैव पूरयेत् ।
अन्नोदकविमिश्रेण कार्य्यं मनुजपुङ्गव ।
भवतीभ्यो भवत्वेतदक्षय्यमिति तत् त्यजेत् ॥

इत्यष्टकानिरूपणम् ।

---

## अथ वृद्धिश्राद्धकालनिर्णयः ।

वृद्धिर्नाम पुत्त्रजन्मादिनिमित्तोपलक्षितः कालः ।

तथाच वृद्धवशिष्ठः ।

पुत्त्रजन्म-विवाहादौ वृद्धिश्राद्धमुदाहृतम् ।

जाबालिः ।

यज्ञोद्वाह-प्रतिष्ठासु मेखलाबन्ध-मोक्षयोः ।
पुत्त्रजन्म-वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

विष्णुपुराणे ।

जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्त्रस्य कुर्वीत पिता श्राद्धञ्चाभ्युदयात्मकम् ॥

कात्यायनोऽप्याह ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥ इति ।

अथ संस्काराः ।

गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरण-निष्क्रमण-अन्नप्राशन-चूड़ोपनयन-व्रतचर्य्याध्ययन-समावर्त्तन-विवाह-गोदानानि, तत्रैतेषु विवाहान्तेषु सुतसंस्कारेषु पिता स्वपितृभ्यो दद्यात्। शेषे संस्कार्य्य एवेत्येतद्विस्तरेणोक्तमेवाधिकारिनिरूपणे श्राद्धकल्पे।

विष्णुपुराणे।

कन्या-पुत्रविवाहेषु प्रवेशे नववेश्मनः।
नामकर्मणि बालानां चूड़ाकर्मादिके तथा॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही॥

पुत्रशब्दो मुखदर्शने पुत्रजन्मनीत्यर्थः।

ब्रह्मपुराणे।

कर्मण्यथाभ्युदयिके माङ्गल्ये चातिशोभने।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च।
पितृन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्॥

वशिष्ठः।

पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा।
उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु॥

अथानुकल्पमाह।

वृद्धशातातपः।

पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्ववासरे।
श्राद्धत्रयन्तु कुर्वीत वैश्वदेवन्तु तान्त्रिकम्॥

एकस्मिन्नपि दिने क्रियमाणानां कालभेदेनानुष्ठानमाह।

पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।
ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥

एवंविधस्यापि कालभेदस्याप्यभावे त्वाह ।

वृहन्मनुः ।

अलाभे भिन्नकालानां नान्दीश्राद्धत्रये बुधः ।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥

बौधायनसूत्रे ।

वेदकर्मणि प्रयोगात् पूर्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेदिति। "नान्दीमुखा एवमुक्ता भवन्ति, नैकाहेन पित्र्यं दैवं कुर्वन्ति यस्ये-काह्ना पित्र्यं दैवञ्च कुर्वाणः प्रजा अस्य प्रमायुका भवन्ति, तस्मात् पूर्वेद्युः पितृभ्यः क्रियते यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुते" इति ब्राह्मणं ।

अत्र वक्ष्यमाणसकलश्राद्धकालोद्देशवाक्ये याज्ञवल्क्यवाक्ये वृद्धिशब्दस्याशेषनान्दीमुखश्राद्धकालोपलक्षणपरत्वात् कर्माङ्गश्राद्ध-काला अपि गृहीताः ।

तानाह पारस्करः ।

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥

निषेककालः षोडशरात्र्यात्मको भार्याया ऋतुकालः । तत्र पुंनक्षत्रान्वितदिने गर्भाधानस्य कर्माङ्गं श्राद्धं कार्यम् । सोम-पदमाधानाग्निहोत्रादिकर्मणामुपलक्षणार्थम् ।

इति वृद्धिश्राद्धकालनिरूपणम् ।

---

## अथ कृष्णपक्षश्राद्धनिर्णयः।

तत्र वाजसनेयकत्वेव कात्यायनः।

अपरपक्षे श्राद्धं कुर्वीतोर्द्धं वा चतुर्थ्यां यदहः सम्पद्येतेति। अपरपक्षे प्रतिपत्प्रभृत्यमावास्यान्ते कृष्णपक्षे ऊर्द्धं वा चतुर्थ्याः यस्मिन्नहनि श्राद्धसाधनसम्पत्तिः तस्मिन्नहनि श्राद्धं कुर्वीतेति।

गौतमोऽपि।

अमावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वापरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्य-देश-ब्राह्मणसन्निधाने कालनियमः शक्तित इति। अपरपक्षे एकस्मिन्नहनि श्राद्धमित्येकः पक्षः प्रत्यहमित्यपरः। 'कालनियमः शक्तितः' यथासामर्थ्यं कालव्यवस्थेत्यर्थः। अत्र च नित्यं श्राद्धम्।

तथाच कात्यायनः।

शाकेनापि नापरपक्षमतिक्रामेदिति।

यत्तु मार्कण्डेयपुराणादिषु।

"प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदेत्यादिभिर्वचनैरपरपक्षान्तर्गतासु सर्वास्वपि तिथिषु प्रत्येकं फलसम्बन्ध उक्तो न तेनापरपक्षश्राद्धस्य नित्यता हीयते दर्श-पौर्णमासादिवन्नित्यत्व-काम्यत्वयोरुपपत्तेः। यदापि चैतदेकस्मिन्नेवाहनि क्रियते तदामावास्याश्राद्धात् पृथगेव कार्य्यम्।

अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।

इत्येव याज्ञवल्क्यवचने अमावास्यायाः कृष्णपक्षस्य पृथगुपन्यासात्।

अतो यत्कैश्चिदुक्तम् । "अमावास्याश्राद्धेन सह आपरपक्षिकं श्राद्धं विकल्प्यत इति, तदपास्तं । यच्चिगमश्वरणं "अपरपक्षे चतुर्दशःप्रभृतेताममावास्यायां विशेषेणेति, तत्तृष्णोऽप्युभयपक्षाविरोधीति न विकल्पे प्रमाणमिति स्मृतिचन्द्रिकाकारः । केचित्तु विकल्पमेव मन्यन्ते ।

आहापस्तम्बः ।

मासि मासि कार्य्यमपरपक्षापराह्णः श्रेयांस्तथापरपक्षस्य जघन्यान्यहानि इति ।

'जघन्यानि' दशम्यादीनि, नैतत्पूर्व्वेषां नवम्यादीनामश्रेयस्त्वाभिधानार्थं, किन्तु पूर्व्वेभ्यः परेषां श्रेष्ठतमत्वप्रतिपादनार्थं । तदेतच्चतुर्द्दशीं वर्जयित्वाह मनुः ।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्द्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा इति ॥

अत्र चतुर्द्दशी नित्यं न वर्जनीया किन्तु शस्त्रादिहतव्यतिरिक्त-पित्रदेवत्यश्राद्धे एवेति ।

आह याज्ञवल्क्यः ।

प्रतिपत्प्रभृति ह्येकां वर्जयित्वा चतुर्द्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ इति ।

शस्त्रग्रहणमन्येषामपि केषाञ्चिदकारणानामुपलक्षणार्थमिति वच्यते ।

---

## अथ भाद्रपदापरपक्षः।

अथ यद्यपि "अपरपक्षे श्राद्धं कुर्वीत" "मासेनापि नापरपक्षम-तिक्रामेदित्यादिभिर्द्वादशापरपक्षव्यापकैः सामान्यवचनैर्भाद्रपदापर-पक्षोऽपि गृहीत एव तथापि तत्र पुष्कलफलप्रतिपादनार्थं तदतिक्रमे प्रत्यवायातिशयप्रतिपादनार्थं च स्मृति-पुराणादौ विशेषतस्तदा-भिधानं कृतम्।

तद्यथा विष्णुधर्मोत्तरे।

उत्तरादयनाद्राजन् श्रेष्ठं स्यादक्षिणायनम्।
चातुर्मास्यं चतुर्मासं तत्र सुप्ते तु केशवे॥
प्रौष्ठपदापरपक्षस्तत्रापि च विशेषतः।
पञ्चम्यूर्द्ध्वन्तु तत्रापि दशम्यूर्द्ध्वं ततोऽप्यति।
मघायुक्ता तु तत्रापि श्रेष्ठा राजन् त्रयोदशी॥ इति।

उत्तरायणाद्दक्षिणायनं श्राद्धकरणे श्रेष्ठम्। तस्माद्दक्षिणायना-दपि तन्मध्यवर्त्तुपेन्द्रनिद्रादिनादाषाढ्याः पौर्णमास्याः प्रभृति-मासचतुष्टयं श्रेष्ठम्। तस्मादपि सर्वस्मात् प्रौष्ठपदमासापरपक्षः। तत्रापि पञ्चम्या ऊर्द्ध्वं दशदिवसाः। तत्रापि दशम्या ऊर्द्ध्वं पञ्च। तत्रापि मघायुक्ता त्रयोदशीति।

ब्रह्मपुराणे।

अयनुक्तृष्णपक्षे तु श्राद्धं कार्यं दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा।
आमावास्येषु विशेषेण प्रविष्टेषु पितृप्रियैः॥

अथ विष्णुधर्मोत्तरपुराणे।

प्रौष्ठपदसंबन्धिनि कृष्णपक्षे श्राद्धमित्युक्तम् ।

ब्रह्मपुराणे तु "अश्वयुक्संबन्धिनीति, सोऽयमनयोर्विसंवादः परिह्रियते। तथा हि इह खलु शुक्लपक्षप्रतिपदुपक्रम्य मासगणनाप्रवर्त्तिकां पौर्णमासीं मध्यावयवीकृत्यामावास्यान्तं चान्द्रमासं दाक्षिणात्याः परिकल्पयन्ति। औत्तराहास्तु कृष्णपक्षप्रतिपदुपक्रम्य मासगणनाप्रवर्त्तकपौर्णमास्यन्तम्। एवञ्च सति दाक्षिणात्यव्यवहारेण प्रौष्ठपदयुक्तायां पौर्णमास्यां प्रौष्ठपदमासस्याद्यपक्षसमाप्तौ तदुत्तरः पक्षः अश्वयुङ्मासमध्ये भवति। एक एवायं पक्षो व्यवहारद्वयेन व्यपदेशद्वयं लभते।

आदित्यपुराणे ।

प्रावृष्यृतौ यमः प्रेतान् पितॄंश्चाथ यमालयात् ।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वयं कृतम् ।
काङ्क्षन्ति पुत्र-पौत्रेभ्यः पायसं मधुसंयुतम् ॥
तस्मात्तांस्तत्र विधिना तर्पयेत् पायसेन तु ।
मध्वाज्य-तिलमिश्रेण तथा शीतेन वाम्भसा ॥
ग्रासमात्रं परं श्राद्धं दत्तं यः प्राप्नुयात्ततः ।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम् ॥
यावत् सन्धारयेद्देहं प्रत्यहं स्वात्मविक्रयात् ।
श्राद्धन्तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ॥ इति ।

अथ नागरखण्डे पितॄन् प्रति ब्रह्मवचनम् ।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।

यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे।
तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम्॥

शाट्यायनिराह।

नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः।
कन्यागतान्वितश्चेत् स्यात् स कालः श्राद्धकर्मणि॥

ब्रह्मपुराण-मार्कण्डेयपुराणयोः।

दिव्य-भौमान्तरीक्षाणि स्थावराणि चराणि च।
पिण्डमिच्छन्ति पितरः कन्याराशिगते रवौ॥
कन्यागते सवितरि यान्यहानि तु षोडश।
चतुर्भिस्तानि तुल्यानि देवो नारायणोऽब्रवीत्॥
राजसूयाश्वमेधाभ्यां य इच्छेत् दुर्लभं फलम्।
अप्यम्बु शाकमूलाद्यैः पितॄन् कन्यागतेऽर्च्चयेत्॥

यद्यपि कन्यागमनं मासमात्रे भवति तथाप्यपरपक्षस्यैव पूर्व्ववाक्य-वचनान्तरसंवादाच्च तत्रैव श्राद्धमित्यनुसन्धेयम्।

आदित्यपुराणेऽपि।

कन्यागते सवितरि यान्यहानि तु षोडश।
चतुर्भिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्॥ इति।

अत्र यद्यपि वचनेषु पक्षस्यैव श्राद्धकालत्वमुक्तं, पक्षश्चायं पञ्च-दशतिथ्यात्मकोऽपि कदाचित्तिथिवृद्धौ षोडशदिनात्मको भवति। तत्रैकदिनस्यानिर्माभूत् इत्यनेनाभिप्रायेणात्र तिथिषोडशकमित्युक्तं अमावास्योत्तरप्रतिपदमपि वा संगृहीतुं पूर्व्वां पौर्णमासीं वा, तस्यां हि नान्दीमुखानां श्राद्धं वक्ष्यते। अथ पक्षमध्ये यस्मिन् कस्मिंश्चि-

इत्यहानि कन्यासंक्रमणे सति प्रतिपदादिषोडशश्राद्धान्युपादेयानि इत्येवं वेदितव्यं । न तु संक्रमणात् पूर्वाणि हेयानीत्येवम् ।

अतएवाह वृद्धमनुः ।

मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूर्णः श्राद्धं तत्र विधीयते ॥ इति ।

अत्र कन्यागतत्वोक्तिः प्रशस्ततरत्वप्रतिपादनार्था न तु कन्यागतराहित्येऽप्येतत्परित्यागार्था ।

आदित्यपुराणे ।

पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं विधीयते ।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत् ॥

इत्यादित्यपुराणेऽप्येतदेवोक्तम् ।

आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
तत्र श्राद्धं प्रकुर्वीत कन्यां गच्छतु वा न वा ॥ इति ।

कार्ष्णाजिनिः ।

पुत्रानायुस्तथारोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांश्च पुष्कलान् ॥

एवं भाद्रपदापरपक्षे श्राद्धे कृते विशिष्टप्राप्तिरुक्ता। तदकरणे त्वनिष्टप्राप्तिमाह कार्ष्णाजिनिः ।

प्रेतास्तथैव तिष्ठन्ति पञ्चमं यो व्यतिक्रमेत् ।
तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिम् ॥

नागरखण्डे ।

आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति ।

ग्रासेनापि दरिद्रोऽपि सोऽव्ययत्वमुपेष्यति ॥
आसनं शयनं भोज्यं स्पर्शं सम्भाषणं तथा।
तेन सार्द्धं करिष्यन्ति ये ते पापतमा नराः ॥
भविष्यन्ति न सन्देहः सन्तत्या च विवर्जिताः।
न सुखं धन-धान्यञ्च तेषाञ्चापि कदाचन ॥ इति ।

ब्रह्मपुराणे ।

सूर्य्ये कन्यागते कुर्य्यात् श्राद्धं यो न गृहाश्रमी ।
धनं पुत्त्राः कुतस्तस्य पितृनिश्वासपीड़या ॥
न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

अथ केनचित्प्रकारेण श्राद्धमन्तरेणोक्तस्य पक्षस्यातिक्रमे तन्नि-मित्तस्य श्राद्धस्य तदुत्तरदिनेष्ववधिविशेषावच्छिन्नेषु कर्त्तव्यतोच्यते।

यमस्मृतौ ।

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः ॥

'हंसः' सूर्य्यः। 'उभयपक्षपञ्चम्योरन्तर इति भाद्रपदकृष्णपञ्चम्याः परस्तादाश्विनशुक्लपञ्चम्याः पूर्व्वमन्तरालकाल इत्यर्थः। अनेनाश्विन-शुक्लपक्षपञ्चमीपर्य्यन्तं श्राद्धमभ्यनुज्ञातं भवति।

ब्रह्मपुराणे ।

यावच्च कन्या-तुलयोः क्रमादास्ते दिवाकरः ।
तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा ॥

तथा ।

कन्यागते सवितरि पितरो यान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्वा यावत् वृश्चिकदर्शनम् ॥
ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥

नागरखण्डे ।

न ददाति नरः श्राद्धं पितॄणां चन्द्रसङ्क्षये ।
क्षुत्पिपासापरीताङ्गाः पितरस्तस्य दूषिताः ॥
प्रेतपक्षं प्रतीक्षन्ते गुरुवाञ्छासमन्विताः ।
कर्षका जलदं यद्दिवा-नक्तमतन्द्रिताः ॥
प्रेतपक्षेऽप्यतिक्रान्ते यावत्कन्यागतो रविः ।
तावत् श्राद्धं प्रवाञ्छन्ति दत्तं स्वैः पितरः सुतैः ॥
ततस्तुलागतेऽप्येवं सूर्ये वाञ्छन्ति पार्थिव ।
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपाससमाकुलाः ॥
तस्मिन्नपि व्यतिक्रान्ते काले वृश्चिकगे रवौ ।
निराशाः पितरो दीनास्ततो यान्ति निजालयम् ॥
मासद्वयं प्रतीक्षन्ते गृहद्वारसमाश्रिताः ।
वायुभूताः पिपासार्त्ताः क्षुत्क्षामाः पितरो नृणाम् ।
यावत्कन्यागतः सूर्यः तुलास्थश्च महीपते ॥

सुमन्तुराह ।

कन्याराशौ महाराज यावत्तिष्ठेत् विभावसुः ।
तस्मात्कालात् भवेद्देयं वृश्चिकं यावदागतः ॥
येषां दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।

तस्यां दद्याच्च येद्दत्तं पितृणां वै मघासु च ॥

अथ मघासहितो भाद्रपदापरपक्षः।

यत्तु आद्धकर्षणोक्तम्।

आकाङ्क्षन्ति स्म पितरः पञ्चमं पक्षमाश्रिताः।

तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ॥ इति।

तत्फलातिशयहानिपरं न सर्वथा फलहानिप्रतिपादकम्। एतच्चापरपक्षश्राद्धं मलमासे न कर्त्तव्यम् इति मलमासनिर्णये निरूपितम्। अथ चेदं विचार्यते। किमयमापरपक्षिकस्य एकस्यैव श्राद्धस्यात्मकस्य प्रयोगः, किं वा भिन्नानां श्राद्धानां एते प्रयोगा इति, उक्तं पक्षद्वयमपीति। अथ केचित्तावदाहुः। एकस्यैव श्राद्धस्यायं प्रयोगः यदाह शाट्यायनिः।

नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः।

कन्यागताश्रितश्चेत् स्यात् कालः स श्राद्धकर्मणि ॥

अथ सङ्घातगुणेषु समुच्चय इति न्यायात् तिथीनां श्राद्धे समुच्चयोऽवगम्यते। न चानात्मके श्राद्धे तदुपपद्यत इति, तदेव श्राद्धमावर्त्तते। तेन सोमयागे विहिताङ्गसम्पत्त्यर्थमावृत्तिरभ्युपगता यथा एवमिहापीति। "अपरपक्षे श्राद्धं कुर्वीतोर्द्धं वा चतुर्थ्या यदहः सम्पद्येतेति वाजसनेयसूत्रकात्यायनवचनात्पक्षस्याङ्गत्वमवगम्यते, पक्षश्च पञ्चदशतिथ्यात्मकः, एवं समुच्चय एव।

तथा गौतमोऽपि।

अमावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वापरपक्षस्य यथा श्राद्धं सर्वस्मिन् वा द्रव्य-देश-ब्राह्मणसम्भवे कालनियमः शक्तित इति।

अथ चापरपक्षपञ्चमीप्रभृतिपञ्चामावास्यानां विकल्पः प्रतीयते । तेनामावास्यावदेकस्मिन्नेव श्राद्धे समग्रः कृष्णपक्षोऽप्यङ्गमेव । ततश्च तत्सिद्ध्यर्थमावृत्तिरेव युक्ता ।

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ॥

इति ब्रह्मपुराणवचने द्वितीयाश्रवणादत्यन्तसंयोगावगमादेकमेव श्राद्धमावर्त्तनीयमिति प्रतीयते । नन्वेवं सति "यदाग्नेयोऽष्टाकपालो-ऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति" इत्यत्राप्येकस्मिन्नेव यागे कालसमुच्चयः स्यात् ततश्च षड्भागप्रसिद्धिस्तन्त्रविदां व्याहन्येत । उच्यते । तत्रापि समुच्चय एव चशब्दश्रवणात्, न त्वाग्नेयद्वयं, षड्भागप्रसिद्धिस्त्वादत्यभिप्रायेणेति । न तु वृत्ति-वार्त्तिक-निबन्ध-कृद्भिरेवं केश्चिदुक्तं, तेनैक एवायं प्रयोग इति ।

अन्ये त्वाहुः । भिन्नानां श्राद्धानामेते प्रयोगाः श्राद्धभेदात् ।

अन्ते वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् ।
स पक्षः पञ्चमः पूज्यः श्राद्धषोडशकं प्रति ॥ इति ।

अत च सङ्ख्यया कर्मभेदः प्रतीयते । न चैवं "एकादश प्रयाजान् यजतीतिवदभ्यासाश्रया, तत्र प्रकृतौ सङ्ख्यान्तरश्रवणादेवमाश्रितम्, न त्वत्राप्युदाहृतवाक्यैरेकत्वावगमादभ्यासाश्रया भविष्यति । भवेदेवं यदि तान्युत्पत्तिवाक्यानि इदं चोत्पन्ने कर्मणि गुणविधायकं भवेत्, न त्वेतदस्ति, अनेकगुणश्रवणेनोत्पत्तिवाक्यत्वावगमात् । अतएव "प्रति-पद्धनलाभाय द्वितीया द्विपदप्रदेत्यादिभिर्वचनैरपरपक्षान्तर्गतासु सर्वास्वपि तिथिषु प्रत्येकं फलसम्बन्ध उक्तः । तेन भिन्नानां श्राद्धा-

नामेते प्रयोगा इति। वयं तु ब्रूमः। उदाहृतानन्यथासिद्धविविध-वाक्यदर्शनात् पक्षद्वयमपि युक्तमिति। तेन प्रयोगैक्यपक्षे समाप्ति-दिन एव दक्षिणा देया प्रयोगाङ्गत्वाद्दक्षिणायाः, प्रयोगभेदे तु प्रतिदिनमेवेति।

---

## अथ मघात्रयोदशीश्राद्धनिर्णयः।

मनुस्मृतौ।

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात् तु त्रयोदशीम्।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च॥

यमस्मृतौ।

गाथाश्च पितृभिर्गीताः कीर्त्तयन्ति पुराविदः।
अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम्॥
पायसं मधु-सर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च।
आजेन सर्वलोहेन वर्षासु च मघासु च॥

अथ पितृगाथा भवतीत्युक्त्वाह विष्णुः।

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः।
प्रावृट्काले सिते पक्षे त्रयोदश्यां समाहितः॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत्।
कार्त्तिकं सकलं वापि प्राक्छाये कुञ्जरस्य च॥

तथा पैठीनसिराह।

छागेन सर्वलोहेन वर्षासु च मघासु च।
पुत्रो वा यदि वा पौत्रो यो नो दद्यात्त्रयोदशीम्॥

जायते किमसौ कश्चिद्धार्मिको वंशवर्द्धनः ॥

महाभारते ।

अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणायुतः ॥

शङ्ख-लिखित-यमाश्चाहुः ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
आर्तं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव ॥
मधु-मांसेन शाकेन पयसा पायसेन वा ।
एष दास्यति नः श्राद्धं वर्षासु च मघासु च ॥

याज्ञवल्क्योऽपि ।

यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः ॥
प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं प्रकर्त्तव्यं मधुना पायसेन वा ॥

प्रशस्ततरा चैषा तिथिर्भाद्रपदपरपक्षेऽन्यः तिथ्यन्तरेभ्यः ।

तथाच ब्रह्मपुराणे ।

यो वा संवर्द्धयेद्देवं प्रत्यहं आत्मविक्रयात् ।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां विशेषेण वर्षासु च मघासु च ॥
नास्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते ।
अत्रैव दत्ताः पितरो लभन्त्यक्षतमक्षयम् ॥

मार्कण्डेयपुराणे ।

उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम् ।
चातुर्म्मास्यं तु तत्रापि प्रसुप्ते केशवेऽधिकम् ॥
प्रोष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चपूर्व्वश्च तत्रापि दशपूर्व्वं ततोऽप्यति ।
मघायुक्ता च तत्रापि शस्ता राजन् चयोदशी ॥ इति ।

अत्र 'पञ्चपूर्व्वं' पञ्चमीमारभ्य, 'दशपूर्व्वं' दशमीमारभ्येत्यर्थः । आवश्यकञ्च तच्छ्राद्धं ।

उक्तं हि विष्णुधर्म्मोत्तरे ।

श्राद्धकालममावास्या नित्यं पार्थिवसत्तम ।
पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ॥
प्रौष्ठपद्यामतीतायां तथा कृष्णा चयोदशी ।
अष्टकान्वष्टकाश्चिस्तथैव च नृपोत्तम॥
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥ इति ।

विष्णुः ।

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी-प्रौष्ठपद्यूर्द्ध्वं कृष्णा चयोदशीत्युपन्यस्य एतांस्तु श्राद्धकालान्नित्यानुमेव लोकसृष्टवान् ।

अथात्र निषेधवचनानि ।

ज्योतिर्व्वृहस्पतिः ।

कृष्णपक्षे चयोदश्यां श्राद्धं यः कुरुते नरः ।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम् ॥

यद्पिंशल्यते ।

अष्टौ त्रयोदशीश्राद्धं न कुर्य्यात्पुत्रवानपि ।
उपवासञ्च संक्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ॥

वामनपुराणे ।

त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात् पुत्रवान् गृही ।
नेष्यतेऽप्योपवासश्च कैश्चिद्द्व्ययनद्वये ॥

आपस्तम्बः ।

त्रयोदश्यां बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्तीति ।

कात्यायनश्चाह ।

युवानस्तत्र म्रियन्ते इति ।

स्कान्दे नागरखण्डे ।

यो वाञ्छति नरो मुक्तिं पितृभिः सह चात्मनः ।
असन्तानस्य वक्तव्यं श्राद्धं प्रोक्तं त्रयोदशी ।
सन्तानयुक्तो यः कुर्य्यात् तस्य वंशक्षयो भवेत् ॥

आनर्त्त उवाच ।

त्रयोदश्यां कृते श्राद्धे कस्माद्वंशक्षयो भवेत् ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥

भर्तृयज्ञ उवाच ।

आसीद्रथान्तरे कल्पे पूर्वं पार्थिवसत्तम ।
चित्राख्यो नाम पाञ्चालदेशीयः पितृभक्तिमान् ॥
मधुना कालशाकेन खड्गमांसेन केवलम् ।
स हि श्राद्धं त्रयोदश्यां कुरुते पायसेन च ॥

कदाचिद्ब्राह्मणैर्भूयः संपृष्टः कौतुकान्वितैः ।
अन्येषु विद्यमानेषु विविधेषु कुतो नृप ॥
मधात्तु खड्गमांसं नः कालशाकं प्रयच्छति ।
अप्रत्याख्येयमित्याहुः श्राद्धे दत्तं हविर्द्विजैः ॥
इति तद्युज्यतेऽस्माभिस्तद्दाने कारणं वद ।
एतच्छ्रुत्वा वचस्तेषां ब्राह्मणानां नृपोऽब्रवीत् ॥
अवाच्यमपि वक्ष्यामि शृणुध्वं सुसमाहिताः ।
अहमासं पुरा हिंस्रो लुब्धकः पितृभक्तिमान् ॥
भ्रमन् कदाचित्प्राप्तोऽहमग्निवेश्याश्रमं निशि ।
स शिष्यानादिशन् विप्रो दूरस्थेन मया श्रुतः ॥

अग्निवेश्य उवाच ।

माघे पैत्र्ये यदा चन्द्रो हंसश्चैव करे स्थितः ।
यथोदयात्तु सा छाया विज्ञेया कुञ्जराह्वया ॥
श्राद्धेऽप्यतिप्रशस्ता सा पितृणां तृप्तिकारिणी ।
तस्मातः श्राद्धसम्भाराः संस्क्रियन्तामतः शुभाः ॥

'पैत्र्यर्क्षं' मघा । 'हंसः' सूर्य्यः । 'करः' हस्तः ।

पितास्य उवाच ।

इति तस्य मुनेर्वाक्यमाकर्ण्याहमचिन्तयम् ।
अहद्यापि करिष्यामि प्रातः श्राद्धक्रियामिति ॥
ततः प्रभाते श्राद्धीयद्रव्यार्थं पर्य्यटन् वने ।
खड्गमांसं कालशाकं मधु च प्राप्तवानहम् ॥
यथोपपन्नैस्तैर्द्रव्यैस्तथोदयां समाश्रितः ।

निजान् पितॄन् समुद्दिश्य सजातीयान्नभोजनम् ॥
श्राद्धेन तादृशेनापि पितरो द्वादशाब्दिकीम्।
तृप्तिमापुरहञ्चापि नृपो जातिस्मरोऽभवम् ॥
अतो मघात्रयोदश्यामेतैरेव हि साधनैः।
करोमि श्रद्धया श्राद्धं तत्प्रभावमनुस्मरन् ॥
तस्य तद्वचनं श्रुत्वा ये चान्ये च जना भुवि।
अद्यप्रभृति त्रयोदश्यां श्राद्धकर्त्तृन् सुधान्विताः ॥
ईर्षाञ्चक्रस्ततस्तेषु वसु-रुद्रादयः सुराः।
नभस्यस्य त्रयोदश्यां श्राद्धं कर्त्तुमुदान्विताः।
प्रापुश्च परमां सिद्धिं स्पर्द्धमानाः सुरोत्तमैः ॥
अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति।
कन्यागते सहस्रांशौ तस्य श्राद्धस्य सङ्क्षयः ॥
इति शापेन देवानां निर्दग्धेयं मघातिथिः।
ततः प्रभृति नैतस्यां क्रियते श्राद्धमुत्तमम् ॥
यः प्रमादाच्च कुरुते तस्य श्राद्धस्य सङ्क्षयः।
एतत्त्रयोदशीश्राद्धं वंशोच्छेदस्य कारणम् ॥
अतः श्राद्धं विना देयं तद्दिने मधुपायसम्।
खड्गमांसं कालशाकं मांसं वार्ध्रीणसस्य च ॥
'वार्ध्रीणसः' वृद्धच्छागः।
तस्याभावेऽपि दातव्यं क्षीरोदनमनुत्तमम्।
तस्मिन्नहनि विप्रेभ्यः पितॄणां तुष्टये नृप।
तस्याभावेऽपि दातव्यं अन्नं तिलविमिश्रितम् ॥ इति।

अथ केचिदाहुः। त्रयोदश्यां श्राद्धनिषेधवाक्यानामप्रामाण्यमेव “यत्किञ्चिन्मधुना मिश्रमित्यादिमनुवचनविरोधात्। मनुस्मृतिर्हि स्वाध्यायवत्प्रसिद्धतरत्वात् बहुभिः सम्प्रदायेन पठ्यमानत्वाच्चाभ्रष्ट-पाठासम्भवान्मूलान्तराच्च दृढतरेभ्यो नाममात्रेणाप्यप्रसिद्धेभ्यः केन-चिदप्यपठ्यमानेभ्योऽनवस्थितपाठेभ्यः सम्भावितभ्रान्त्यादिमूलेभ्यः स्व-विरोधे प्रत्यक्षश्रुतिवद्बलीयसीति।

अतएव बृहस्पतिः।

वेदार्थप्रतिबद्धत्वात् प्रामाण्यं तु मनोः स्मृतं।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥ इति।

मनुरप्याह।

यः कश्चित् कस्यचित् धर्मो मनुना परिकीर्त्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥ इति।

उच्यते। यत्तावदुक्तं मनुस्मृतेः श्रुतितुल्यत्वेन विरुद्धस्मृत्यन्तरेभ्यो बलीयस्त्वमिति तत्कल्पनामात्रं। बृहस्पतिवचनन्तु मन्वर्थविपरीतानां बुद्धादिस्मृतीनामप्रामाण्यमाह, न तु शिष्टैर्वैदिकैरङ्गीकृतकात्या-यनादिस्मृतीनां वेदार्थप्रतिबद्धत्वादित्यस्य प्रामाण्यहेतोस्तास्वपि विद्यमानत्वात्। अतो मनुशब्देनात्र वेदार्थस्मर्त्तारः कात्यायनादयो-ऽप्युपलक्ष्यन्ते। अथवा मनु ज्ञाने इति धातुपाठात् वेदार्थज्ञानवान्मु-निर्मनुरुच्यते। तस्मान्मनुस्मृतिविरोधेऽपि कात्यायनादिस्मृतीनां नाप्रामाण्यं भवितुमर्हति।

अन्ये त्वाहुः। कस्यचिदपि श्राद्धस्य निषेधानुपपत्तेर्निषेधवाक्या-नामप्रामाण्यमिति। तथाहि न तावन्नित्यस्य श्राद्धस्य निषेधोऽयं।

अत आह मनुः ।

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूल-फलैर्वापि पितृभ्यः प्रीतिमावहन् ॥

दक्षोऽप्याह ।

अज्ञात्वा चाप्यकृत्वा च अदत्त्वा यः समश्नुते ।
देवादीनामृणीभूत्वा सप्रजः स व्रजत्यधः ॥ इति ।

पण्डितपरितोषे तु "नरकं स व्रजत्यधः" इति चतुर्थः पादः पठितः।

मार्कण्डेयपुराणे ।

तस्मात्तुष्टेन तुष्टेन देवर्षि-पितृ-देवताः ।
भूतानि चानुदिवसं पोष्याणि स्वतनुर्यथा ॥

तथा "अहरहः स्वधाकुर्यादोदपात्रात्तथैव च पितृयज्ञं समाप्नोतीत्येवमेतैर्वचनैर्नित्यस्य श्राद्धस्याहरहर्विधानादकरणे चाधोगमनाभिधानात् यथोदयां तदनुष्ठानं न प्रतिषेधः प्रतिषेद्धुमर्हति । नापि नैमित्तिकस्य निषेधः । न तावन्मृताहनिमित्तकस्य ।

अत आह याज्ञवल्क्यः ।

मृताहनि तु दातव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ इति ।

कात्यायनोऽप्याह ।

ततः संवत्सरं प्रेतायान्नं दद्यादन्नाभावहनि प्रेतः स्यादिति ।

श्राद्धानां चैव सर्वेषां श्रेष्ठं सांवत्सरं स्मृतम् ।
तत्प्रयत्नेन वै कुर्यादकुर्वन्नरकं व्रजेत् ॥

एवमन्यास्वपि स्मृतिषु च पुराणेषु च मृताहादिविहितस्य

मृताहादिष्वपेक्षितत्वात्तदनुष्ठानं न प्रतिषेधः प्रतिषेद्धुमर्हति। नापि वृद्ध्यादिनैमित्तिकस्य।

अकृत्वा मातृयागन्तु वैदिकं यः समाचरेत्।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः॥
वृद्धिश्राद्धन्तु कर्त्तव्यं जातकर्मादिकेषु वै।
तच युग्मान् द्विजानाढ्यमातृपूर्वांश्च मातृवत्॥ इति।
पुत्रजन्मनि कर्त्तव्यं जातकर्मसमं नरैः॥

इत्यादिभिर्वाक्यैः पुत्रजन्मादिकालेषु जातकर्मवदावश्यकत्वेन विहितत्वात्तदनुष्ठानमिति न प्रतिषेधः प्रतिषेद्धुमर्हति। नापि चयोदशीनिमित्तकस्य पार्वणस्यैव। यतः।

नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे।
एकैकस्य न कुर्व्वीत पार्वणन्तु समाचरेत्॥

इति तस्याप्यावश्यकत्वेन विधानात्। एकस्यैव तु वर्गस्य न कुर्व्वीत् पार्वणन्तु समाचरेत् पितृवर्गस्य मातामहवर्गस्य चैवं वर्गद्वयस्य तु कुर्य्यादित्यर्थः। न चैकवर्गाय दीयमानस्य श्राद्धस्य निषेधः, तथाविधस्य तन्निमित्तकस्य श्राद्धस्य प्राप्तेरभावात्।

पितरो यच पूज्यन्ते तच मातामहा ध्रुवम्।

इति धौम्यवचनेन वर्गद्वयस्यैव श्राद्धविधिदर्शनात्। नापि काम्यस्य, तस्यापि चयोदशीसम्बन्धेनैव विहितत्वात्। तदेवं विषयासम्भवात् प्रतिषेधवाक्यानामप्रामाण्यमिति। उच्यते। नित्यनैमित्तिकस्य च कदाचित् प्रतिषेधो भवति यथा सूतकादौ। विशेषविहितस्यापि चयोदशीनिमित्तकस्य विशेषवचनेन तस्यापविशेषेण

प्रतिषेधः सम्भवति । यथा “नातिरात्रे षोडशिनं गृह्णातीत्यत्र ग्रहणप्रतिषेधः । यथोद्गौश्राद्धस्य च नित्यत्वाद्यथाकथञ्चिदनुष्ठान-प्राप्तौ सत्यामपि धौम्यस्मृतौ यामोक्तादेकवर्गीयश्राद्धस्यानुष्ठाने प्रसक्ते प्रतिषेधसम्भवात् । तस्माद्विषयासम्भवात् प्रतिषेधवाक्यानां प्रामाण्यं मतम् । तस्मादत्र व्यवस्था वक्तव्या ।

तत्र तावच्चूडाधरः ।

मघायथोद्गौश्राद्धविधिवाक्यानि वर्गद्वयोद्देशेनानुष्ठीयमानं श्राद्धमाश्रयन्ते निषेधस्त्वेकवर्गोद्देशेनानुष्ठीयमानम् ।

अतएव कार्ष्णाजिनिः ।

श्राद्धं नैवैकवर्गस्य यथोदश्यामुपक्रमेत् ।

न ह्यमासे यथो यस्य प्रजां हिंसन्ति तस्य ते ॥ इति ।

एकवर्गस्य पित्रादिमात्रस्य नोपक्रमेत् किन्तु मातामहादि-सहितस्य कुर्य्यात् यथा पुत्राणां श्राद्धकरणे न यथोद्गौप्रतिषेध-दोष इत्यर्थः ।

अन्ये त्वाहुः । सन्ति प्रमीतानां पितृभावप्राप्तानां वर्गाः पितृ-वर्गो मातृवर्गो मातुलवर्ग इत्येवमादयः । अथवा पितृपक्षीयाणां सपिण्डानां वर्गो मातृपक्षीयाणां सपिण्डानाञ्च वर्ग इत्येवं वर्गद्वयम् । एषां वर्गाणां मध्ये कस्यचिदेकस्यैव वर्गस्य सर्वेषां वर्गाणां श्राद्धे तस्याधिकारेण पुत्रेण दिनान्तरे कस्यचिद्वर्गस्य श्राद्धं कृतं करिष्यते च कस्यचिदित्येवमादि किञ्चित्कारणमनुसन्धाय मघा-यथोदश्यां न कर्त्तव्यं किन्तु सर्वेषां वर्गाणां कर्त्तव्यम् । यतो मघा-यथोदश्याः पितृतृप्तिकारणभूतानां तिथीनां मध्ये श्रेष्ठतमत्वात्

सर्व्वेषां पितृणां मधुमिश्रपायसादिद्रव्येण दीयमानस्य श्राद्धस्या-पेक्षितत्वात् येभ्य एव न दीयते त एव कुपिताः श्राद्धकर्त्तुः प्रजां नाशयन्तीति वर्गद्वयस्य विषयत्वेन सङ्कोचश्रुतिः प्रामाणिकी। तदेवं निषेधवाक्यानामेकस्यैव वर्गस्य क्रियमाणं श्राद्धं विषय इति सिद्धम्। अन्ये त्वाहुः पुत्रवतापि गृहिणा क्रियमाणं मघोदशीश्राद्धं विषय-इति। यथाह ज्योतिर्बृहस्पतिः।

कृष्णपक्षे मघोदश्यां यः श्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम्॥

षड्त्रिंशन्मते।

गृही मघोदशीश्राद्धं न कुर्य्यात्पुत्रवानपि।
उपवासं च सङ्क्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः॥

स्मरन्ति च।

मघोदश्यान्तु वै श्राद्धं न कुर्य्यात्पुत्रवान् गृही।
नेष्यते चोपवासश्च कश्चिदृष्ययनद्वये॥

आपस्तम्बः

मघोदश्यां बहुपुत्रोदर्शनीयापत्योयुवमारिणस्तु भवन्तीति।

कात्यायनश्चाह।

युवानस्तत्र म्रियन्ते इति।

गोविन्दराजस्तु पुत्रमरणरूपेण दोषेण मघोदशीश्राद्धनिवृत्तिं मन्यते। स चैवमाह, निषेधिकत्वादस्य फलस्य काम्यमानमेवैतद्भ-वति, न नैवमेव। तदुक्तम्।

काम्यमानं फलं ज्ञानं नानिच्छोस्तद्भविष्यति। इति।

तस्मात् क्रियमाणेऽपि श्राद्धे न पुत्रमरणरूपमकाम्यमानं कर्मफलं भविष्यति, इति गृहिणा पुत्रवतापि कार्य्यं त्रयोदशीश्राद्धमिति।

तदप्युक्तम् ।

त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात्पुत्रवान् गृही ।

इत्यादि निषेधवाक्येऽपेक्षितानर्थरूपफलविशेषप्रापणं "पञ्चत्वं तस्य ज्ञातीयाज्ज्येष्ठपुत्रस्य निश्चितमित्यादिवाक्यैः क्रियते न पुनः कस्य-चिन्मरणे अभिचाररूपं त्रयोदशीश्राद्धं विधीयते, निषिध्यमान-क्रियाफलस्यानर्थरूपत्वाच्च कश्चिदिच्छति। न च सकृदुच्चरितं वाक्यं कञ्चित्पुरुषं प्रतीष्टार्थत्वेन कञ्चिच्च प्रत्यनर्थत्वेन पुत्रमरणं बोधयितुं शक्तं, वाक्यभेदप्रसङ्गात् । पण्डितपरितोषकारस्त्वेवं गोविन्दराजमतं प्रतिचिक्षेप । न तावदत्र स्वर्गकामो यजेतेतिवत् कामपदं श्रूयते । न चाभिचरन् यजेतेतिवत् फलसम्बन्धबोधकं वचनमस्ति । न च विश्वजिद्राचिसत्रवदध्याहार-विपरिणामौ सम्भवतः, अन्यथाप्युपपत्तेः।

मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति ।

इत्यादिश्रुतीनां वर्त्तमानापदेशन्यायेन पर्वश्राद्धनिषेधभूतानां निन्दार्थवादत्वोपपन्नत्वाच्च कुतोऽत्र फलपदप्राप्तिर्दूरे च काम्यमा-नता । तदाह ।

न ह्येवं काम्यशब्देन विना युक्ता फलश्रुतिः ।
वर्त्तमानापदिष्टेन करणत्वं न गम्यते ॥

इति । तस्मात् ।

कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य ज्ञातीयाज्ज्येष्ठपुत्रस्य निश्चितम् ॥

इत्यादिश्रुतीनामर्थवादत्वेनोपपत्तिः, यथा "बर्हिषि रजतं न देय-मिति श्रुतेः "पुरा ह्यस्य संवत्सराद्गृहे रोदनं भवति यो बर्हिषि रजतं ददातीति। किञ्चैवंवादिना "नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे। एकस्यैव न कुर्य्यात् स पार्वणन्तु समाचरेदिति कथं समर्थनीयम्। तस्मा-दविचारितमनोहरे गोविन्दराजव्याख्याने नातीवादरः करणीयः।

यत्तु केश्चिदुक्तं मघात्रयोदश्यां श्राद्धाचरणस्य धर्म्मरूपत्वात् तदनुष्ठाने पुत्रमरणाद्यनिष्टं फलं भवतीति न युक्तमिति। तथा हृष्टाः सन्तः पितरोऽनिष्टं फलं प्रयच्छन्तीत्यपि न युक्तमिति। तन्न वक्तव्यं। यतः शास्त्रबोधितोऽर्थो न युक्तिमात्रेण निवर्त्तयितुं शक्यते शास्त्रैकगम्यस्यार्थ-युक्त्यविषयत्वात्।

यत्तु महाभारते दानधर्म्मेषु।

ज्ञातीनान्तु भवेच्छ्रेष्ठः कुर्व्वन् श्राद्धं त्रयोदशीम्।
नावश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे॥

इति पुत्रमरणरूपस्य दोषस्यापवादमाशङ्क्य निराकरणं कृतं, त-दपि नात्यन्तकृतं। नावश्यमित्यभिधाने दोषस्य पाक्षिकत्वाभ्यनुज्ञानात्।

यत्त्ववश्यं न नियम एवेति स्मृतिचन्द्रिकाकारस्य व्याख्यानं तदयुक्तम्। उदाहृतवाक्यविरोधात्। तस्मात् पुत्रवता गृहिणा त्रयोदशीश्राद्धं न कर्त्तव्यमिति। तदयुक्तं। पुत्रवतोऽपि गृहिणो-ऽनेकवर्गश्राद्धानुष्ठाने दोषाभावस्य पूर्व्ववाक्यावगतत्वात्।

केचित्तु तत्पायसादिद्रव्यव्यतिरिक्तद्रव्येण श्राद्धाचरणं निषिद्ध-मित्येवंविधं विषयमाहुः। तदयुक्तं। पायसादिद्रव्येणापि श्राद्धकरणे नागरखण्डे दोषस्योक्तत्वात्। पुत्रवतोऽपि गृहिणोऽनेकवर्गश्राद्धा-

तुल्याने दोषाभावस्य पूर्ववाक्यावगतत्वात्। हरिहरस्त्वेवं दूषणमुक्तवान्। अयुक्तमेतत् अपदार्थवाक्यापत्तेः। पुत्री ग्रही श्राद्धं न कुर्यादित्येते पदार्थाः पायसव्यतिरिक्तद्रव्येण श्राद्धं न कर्त्तव्यमिति च वाक्यार्थ इति।

अथचेदृशीं व्यवस्थामाह। भाद्रपदापरपक्षान्तर्गतमघान्वितत्रयोदश्यां नित्यं महाफलञ्च श्राद्धं। तदर्थमेव च पितृणां पौराणिकीगाथासु पुत्रप्रार्थनं महता प्रबन्धेन श्रूयते। अत त्रयोदशीश्राद्धसंबन्धीनि निषेधवाक्यानि सामान्यप्राप्तरूपत्वाद्भाद्रपदापरपक्षत्रयोदशीं परित्यज्य शेषास्वेकादशसु त्रयोदशीषु कृतार्थत्वात्मानमिति। एतत्तु विशेषतो भाद्रपदापरपक्षत्रयोदश्यामेव श्राद्धनिषेधस्य नागरखण्डेतिहासे स्पष्टमेव दर्शितत्वात् अनतिसाधनीयं। तदेवं निषेधवाक्यं एकस्यैव वर्गस्य क्रियमाणश्राद्धविषयमिति सिद्धं।

तथाच वचनान्तरम्।

> नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषे।
> एकस्यैव न कुर्य्यात्तु पार्वणन्तु समाचरेत्॥

अत केचिदाहुः किमयं निषेधः वर्हिषि रजतं न देयमितिवत्, उतोक्तानुवादः न गिरा गिरेति ब्रूयादितिवत्। पूर्वस्मिन् कल्पे अभागिप्रतिषेधः, न खलु पार्वणं कुर्य्यादित्युक्ते कथमप्येकवर्गप्राप्तिरस्ति। पर्वणि अमावास्यायां क्रियमाणत्वात् पार्वणम्। तत्र च त्रिपौरुषेयत्वविधिः।

यदाह याज्ञवल्क्यः।

> द्वौ दैवे प्राक् त्रयः पित्र्ये एकैकमुभयत्र वा।

मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ इति।

अवश्यकर्त्तव्यतया श्रुतेरेकवर्गस्यापि यथाकथञ्चित्प्राप्तिरिति चेत्। न। तत्र सर्वथा वर्गद्वयप्राप्तेः।

तदाह धौम्यः।

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।

अविशेषेण कर्त्तव्यमन्यथा नरकं व्रजेत्॥ इति।

किञ्चैवंवादिना निषेधो विधिश्चेत्युभयमप्यभ्युपगन्तव्यम्। निषेधे सति तावत्पार्वणानुवादो न युज्यते। बहुवर्गस्य वृद्धिश्राद्धस्यापि प्राप्तेः पार्वणं कुर्य्यादिति विधिरभ्युपगन्तव्यः। न चैकस्मिन्भावे द्वितीयाभ्युपगमो युज्यते। तस्मादेरकुत्सोद्गेयं न गिरा गिरेति ब्रूयादितिवदनुवाद एवास्त्विति चेत्। न। अनर्थकानुवादानुपपत्तेः। गत्यन्तराभावे हि पिण्डपितृयज्ञेन होतारं वृणीत इति नित्यानुवादोऽभ्युपगतः। इह तु न सत्याङ्गतौ भवितुमर्हति। तथापि पार्वणं कुर्य्यादित्युक्ते चयोदशीकालस्यापि प्रशस्तत्वात्।

सपिण्डीकरणे विप्रान् भोजयेत्पार्वणे यथा।

इति स्मृतेः पार्वणेतिकर्त्तव्यताकं श्राद्धं प्राप्नोति तदर्थोऽयं निषेधः।

चन्द्रक्रमनियतकालत्वात् सपिण्डीकरणस्याप्राप्तिः। तदसत्। यदि हि नियतदिवसमेतत्त्रयोदश्यां प्राप्नुयादेतद्वर्गमेव निषेधो गत्यन्तराभावादवतिष्ठेत यतस्त्वनियमेनापि प्राप्नोति तदा निषेधो युज्यते। तस्मादेकवर्गसपिण्डीकरणप्रतिषेध एवायं।

एकवर्गस्य न श्राद्धं चयोदश्यामुपक्रमेत्। इति।

न कुर्य्यात्प ये चात्र प्रजां हिंसन्ति तत्र ते। इति।

तर्हि कथं बोद्धव्यं सपिण्डिते इतरतृप्तेरसम्भवात् नैतत्कालस्यापि पितृवत्सम्भवात् तत्काले सर्वएव मातामहादयस्तत्र तृप्तिमाकाङ्क्षन्ति तच्च तत्परिहारेण नान्यद्दिवसेऽपि प्रत्यक्करणं श्राद्धमिति चयोदश्यामेव क्रियत इत्यभिप्रेत्याह "न हन्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते" इति।

अतएवाह।

एकस्यैव न कुर्य्यात्तु पार्वणन्तु समाचरेत्।

एकस्यैव वर्गस्य यच्छ्राद्धं तन्न कुर्य्यात्। नचैकस्य श्राद्धं सपिण्डनमन्तरेण क्वचिद्विहितमस्ति। तस्मात्तस्यैवायं विशेषतः प्रतिषेधः पुत्रमरणनिन्दार्थवादोऽपि तस्यैव करणे सम्भवतीति ज्ञेयं न तु पार्वणश्राद्धकरणे।

यत्तु कात्यायनवचनं "युवानस्तत्र म्रियन्ते" इति तस्यार्थः। अक्षयतृप्तिफलत्वाच्चयोदशीश्राद्धस्य तस्य युवानोऽपि मर्त्तुमिच्छन्ति न तु म्रियन्ते इति।

तथाच:पस्तम्बः।

चयोदश्यां बहुपुत्रो बहुमित्रः सन्दर्शनीयापत्योऽपुत्रमरणश्च भवतीति।

अपुत्रमरण इत्यर्थः। अन्यथा बहुपुत्रादिश्रुतिर्विरुध्येत। यथोक्तम्।

युग्मु कुर्वन् दिनर्क्षेषु सर्वान् कामानवाप्नुयात्।
अयुग्मु तु पितृश्राद्धं प्रजामाप्नोति पुष्कलम्॥

'युग्मु' द्वितीयादिषु। 'अयुग्मु' चयोदशीप्रतिपदादिषु। 'ऋक्षेषु'

भरण्यादिषु। किञ्च याज्ञवल्क्येन ज्ञातिश्रैष्ठ्यं चयोदशीश्राद्धफलमुक्तं न तु ज्येष्ठपुत्रमरणम्।

इदमनुवाह।

द्वादश्यां भूमिलाभञ्च: त्रयोदश्यां बहुप्रज:।
आयुषन्तीं प्रजाश्चैव धनं वस्त्रञ्च विन्दति॥

तथाच मघात्रयोदशीश्राद्धं विधायाहतुः शङ्ख-लिखितौ।

प्रजां पुष्टिं यश: स्वर्गमारोग्यं भूतिमेव च।
नृणां श्राद्धे तथा प्रीताः प्रयान्ति च पितामहाः॥
ज्ञातीनाञ्च भवेच्छ्रेष्ठः कुर्वन् श्राद्धं त्रयोदशीम्।
नावश्यञ्च युवानोऽस्य प्रमियन्ते नरा गृहे॥ इति।

तदेतदयुक्तम्। तथाहि तत्र यत्तावदुक्तं नैकवर्गश्राद्धं सपिण्ड-नमन्तरेण क्वचिदिष्टमस्तीति। तदयुक्तं। चयाहश्राद्धस्यैक-वर्गीयस्य विधानात्।

यत आह सङ्ग्रहकारः।

याज्ञवल्क्येन कालस्तु अमावास्यादिनोदितः।
अविशेषेण पित्र्यस्य तथा मातामहस्य च॥
युगपच्च स विज्ञेयो वचनाद्वक्ष्यमाणकात्।
कालभेदेन तन्नं स्याद्देशभेदेन चैव हि।
तस्मात्तत्र विधानात्तु यौगपद्यं प्रतीयते॥
अमावास्यादिकालेषु कालैकत्वात् सहक्रिया।
मृताहनि तदाभावान्न युज्येत सहक्रिया॥

अस्यायमर्थः। "अमावास्याष्टकावृद्धिरित्यादिना याज्ञवल्क्य-

वचनेन पितृश्राद्धस्य सामान्येनामावास्यादिकाल उक्तः। स च युगपदनुष्ठीयमानयोः पितृश्राद्ध-मातामहश्राद्धयोरङ्गत्वेनावगम्यते। “मातामहानामप्येवं तन्त्रं वा वैश्वदेविकमिति तस्मिन्नेव प्रकरणे वैश्वदेविकतन्त्रत्वाभिधानस्य युगपदनुष्ठान एवोपपद्यमानत्वात्। अत एककाल एवानुष्ठीयमानत्वेनावगतयोः पैतृक-मातामहश्राद्धयोः समानतन्त्रता युज्यते। मृताहे तु प्रतिपुरुषमायुःप्रमाणभेदात् पितृ-मातामहक्षयाहभेदेन मातामहश्राद्धस्य पितृक्षयाहो न काल इति तन्निबन्धनात् समानतन्त्रता न युज्यते। नन्वेतेनैव न्यायेन पितृ-पितामहादिक्षयाहभेदात् पितृक्षयाहे पितामहादीनां श्राद्धं न कर्त्तव्यं स्यात्।

नैवम्। “कुर्वीत दर्शवच्छ्राद्धमित्यतिदेशवचनात् पितामह-प्रपितामहयोरपि पितृक्षयाहे देवतात्वात्। न च वाच्यं दर्शवदित्यतिदेशवचनादेव।

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।

इति वचनात् मातामहादीनामपि देवतात्वमिति।

अत आह व्यासः।

दर्शवत्साम्नयोद्देशः सपिण्डीकरणे कृते।

आह पारस्करः।

पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम्।
सर्वत्रानेकगोत्राणामेकस्यैव मृतेऽहनि॥

देवत्वं गतस्य सपिण्डीकरणेन पितृत्वं प्राप्तस्य पितुः क्षयाहनि औरसस्य पुत्रस्य त्रिपौरुषं त्रिदेवत्यं श्राद्धं कर्त्तव्यं अनेकगोत्राणां

भिन्नगोत्राणां दौहित्रादीनामनपत्यमातामहक्षयाहादिश्राद्धमेकोद्दिष्टमेवेत्यर्थः। तेन दर्शवदित्यतिदेशप्राप्ते षड्दैवत्ये त्रिपौरुषमिति पुनरभिधानात् पितृक्षयाहे पितामहादीनां परिसङ्ख्या भवति। ननु यत्त्रिपुरुषं तदौरसस्येति त्रिपौरुषोद्देशेनौरसस्य नियमात्तस्यैवोद्देश्यविशेषणत्वेनाविवक्षितत्वात् न मातामहादिपरिसङ्ख्या।

नैवम्। क्षयाहनि त्रिदैवत्यश्राद्धप्राप्त्यभावात्। "दर्शवत्त्वाब्दयोर्द्देश" इति वचनात् सपिण्डीकरणोत्तरकालं मृताहेऽपि सामान्येन त्रिदैवत्यप्राप्तिरिति चेत्, एवं तर्ह्यनेनैव मातामहादीनां परिसङ्ख्या भविष्यति। किञ्चौरसस्य त्रिपौरुषमिति अत्र त्रिपदस्याविवक्षितत्वे वाक्यमेवानर्थकं स्यात्। न हि त्रिपौरुषमत्रिपौरुषस्य श्राद्धमस्ति येन त्रिपौरुषमौरसस्य अत्रिपौरुषमन्येषामित्येवं व्यवस्थानात्सार्थकं वाक्यं भवेत्। एकवर्गीयसकलविहितश्राद्धनिषेध एवार्थं भवत्विति चेत्। न। व्यामोहादेकवर्गीयश्राद्धप्राप्तेरपि प्रागभिहितत्वात् तत्रापि निषेधप्रतिपत्तेर्दुर्निवारकत्वात्। अस्तु उभयत्रापि निषेधप्रवृत्तिरिति चेत्। न। विधिवैषम्यप्रसङ्गात् विधिप्राप्तप्रतिषेधे शास्त्रान्तरबाधकापेक्षत्वात् व्यामोहप्राप्तप्रतिषेधे च तन्निरपेक्षत्वात्। वैषम्यपरिहारार्थं विधिप्राप्तस्यैव निषेधोऽस्त्विति चेत्, शास्त्रबाधं विना निषेधसम्भवे तद्बाधस्यानुपपत्तेः। तेन यथा रागप्राप्तलाभे विधिलुप्ते निषेधो न प्रवर्त्तते एवं व्यामोहप्राप्तलाभेऽपीति न किञ्चिदनुपपन्नं। "पितरो यत्र पूज्यन्ते" इति धौम्यवचनेनैव चयोदश्यामेकवर्गश्राद्धनिषेधसिद्धिः, विशेषनिषेधोऽयं दोषविशेषप्रदर्शनार्थः।

स च दोषविशेषः "श्राद्धं नैकवर्गस्येति कार्ष्णाजिनिवचनेन दर्शितः।

यत्तु पुत्रमरणे इत्यकारप्रश्लेषेण व्याख्यानं कृतं तदयुक्तं। उदाहृतनागरखण्डेऽपि इतिहास-कात्यायनादिवचनविरोधात्। यत्तु सिञ्चन इत्यस्यैकार्थत्वेन व्याख्यानं तदपि लक्षणाप्रसङ्गादयुक्तं। यत्तु त्रयोदश्यां बहुपुत्रादिफलश्रवणं तदनेकवर्गश्राद्धविषयं। यदोक्तम् निषेधे सति पार्वणानुवादानुपपत्तेर्निषेधो विधिश्चेति द्वयमभ्युपगन्तव्यं, नचैकस्मिन्सम्भवे तद्युक्तमिति, तदप्ययुक्तं। विधि-निषेधयोरुभयोरपि प्रतीतेर्बाधकाभावात्। एकवर्गश्राद्धनिषेधेन बहुवर्गस्य वृद्धिश्राद्धस्य प्राप्तेस्तद्बाधनार्थं "पार्वणन्तु समाचरेदिति विधिरभ्युपगन्तव्यः। अन्यथा भवत्पक्षेऽप्यस्यैव वैयर्थ्यं स्यात्। स्यादेतत् एवं सति क्षयाहश्राद्धमपि व्यावर्त्तते तस्य षाट्पौरुषत्वाभावात्। अथोच्यते षाट्पौरुषत्वाभावेऽपि पार्वणविधिना क्रियमाणत्वात् पार्वणं। तर्हि वृद्धिश्राद्धमपि न व्यावर्त्तते तस्यापि पार्वणविधिनानुष्ठीयमानत्वात्। उच्यते। त्रयोदश्यां क्रियमाणस्य मुख्यपार्वणविधिना क्रियमाणस्य मुख्यपार्वणत्वाभावात् पार्वणसदृशं पार्वणमित्यभ्युपगन्तव्यं। क्षयाहश्राद्धस्य सदृशं वृद्धिश्राद्धन्तु न तथेति तदेव व्यावर्त्तते न क्षयाहश्राद्धमिति केचित्। तदयुक्तं। षाट्पौरुषस्य श्राद्धस्यातिसुसदृशस्यालाभे क्षयाहादिश्राद्धव्यावृत्तेरपि युक्तत्वात्। एतेनैव सिद्धं एकवर्गश्राद्धं सर्वमपि न कर्त्तव्यमित्यपरे। तदप्ययुक्तं। निषेधो हि व्यामोहप्राप्तश्राद्धविषय इत्युक्तं। तेन तत्पर्यालोचनया तावत्सपिण्डनक्षयाहश्राद्धादि न व्यावर्त्तते। नापि "पार्वणन्तु समाचरेत् इत्यस्याकृ-

वर्गद्वयश्राद्धस्य चयाहादिश्राद्धानाञ्च व्याहत्तिः चयोदशामावस्या-कविहितश्राद्धविशेषविधितयोपपत्तेः। तथाहि "श्राद्धकाममावास्यामिति, "अमावास्यास्तिस्रोऽष्टका इति विष्णुधर्मोत्तर-विष्णुस्मृतिवचनाभ्यामुदाहृतचयोदशामावस्यकं श्राद्धं विहितं तच्च पार्वणमेवेत्यनेनोच्यते। एवं चास्मिन्नुपपद्यमाने वाक्ये न श्राद्धान्तर-निवृत्तिपरत्वे प्रमाणमस्ति। तेनैतत्सिद्धं व्यामोहप्राप्तैकवर्गश्राद्ध-निषेधोऽयमेकस्यैव न कुर्यादिति। पार्वणं समाचरेदिति तु चयो-दशीविहितावश्यकश्राद्धविशेषविधिरिति। ननु तथाप्यतिदेशादेव पार्वणसिद्धिरिति किं विधिना। उच्यते। पितृव्यादीनामेकोद्दिष्टं प्राप्तं तद्बाधनार्थमयं पार्वणविधिः।

तच कात्यायनः।

सपिण्डीकरणादूर्द्धं पित्रोरेव हि पार्वणं।
पितृव्य-भ्रातृ-मातृणामेकोद्दिष्टं सदैव तु॥ इति।

एतत्पितृव्यादिसमभिव्याहारात् मातृसपत्नीपरं वेदितव्यं।

अपुत्राणां सांवत्सरिकश्राद्धमाहापस्तम्बः।

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये।
तेषामपि तु देयं स्यादेकोद्दिष्टं न पार्वणं॥
मित्र-बन्धुसपिण्डेभ्यः स्त्री-कुमारीभ्य एव च।
दद्यात्ते मासिकं श्राद्धं सांवत्सरमतोऽन्यथा॥

प्रचेताः।

सपिण्डीकरणादूर्द्धमेकोद्दिष्टं विधीयते।
अपुत्राणान्तु सर्वेषामपत्नीनां तथैव च॥

'अपत्नीनां' अकृतविवाहानां ।

ऋषिः ।

भ्रात्रे भगिन्यै पुत्राय भर्तुरे मातुलाय च ।

पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणं ॥

एवमेभिर्वाक्यैः पितृव्यादीनामेकोद्दिष्टं प्राप्तमिति तद्बाधनार्थं पार्वणविधिः । तेन "पितृव्य-भ्रातृ-मातॄणामपुत्राणां तथैव च । मातामहस्याप्यपुत्रस्य श्राद्धं तत्पितृवद्भवेत्" इति आद्वकर्णवचनं चयोदश्यीविषयं ज्ञेयं । 'पितृवदिति पार्वणविधिनेत्यर्थः । यत्तु "पितृवद्भवे-दित्यवश्यकर्त्तव्यताद्योतनार्थमिति व्याख्यातं तदयुक्तं । पितृवद्भवे-दित्यस्यावश्यकत्वमात्रविषयत्वेन संकोचे कारणाभावात् पितृव्यादिश्रा-द्धैकोद्दिष्टविधीनान्तु चयोदश्यीव्यतिरिक्तविषयत्वेन संकोचः आद्वक-र्णवचनस्य च चयोदश्यीविषयत्वेन संकोचश्च, पार्वणं समाचरेदित्य-न्यथासिद्धत्वादुक्तमाश्रयितुं । तेन निषेधवाक्यान्युक्तैकवर्गश्राद्धवि-षयाणीति सिद्धं ।

अन्ये तु ।

अयनद्वितये श्राद्धं विषुवद्द्वितये तथा ।

युगादिषु च सर्वासु पिण्डनिर्वपणादृते ॥

इति पुलस्त्यवचनाद्भाद्रपदापरपक्षचयोदश्यास्य युगादित्वात्पि-ण्डनिर्वपणं विना श्राद्धं कर्त्तव्यमिति, निषेधवाक्यानां पिण्डदानसहितं श्राद्धं विषय इत्याहुः ।

काम्यश्राद्धविषयत्वेन वा प्रतिषेधवचनानि व्यवस्थापनीयानि । यतः कामसम्बन्ध एव श्राद्धे दोषः स्मर्यते । तथाहि चयोदश्यीश्राद्ध-

कर्त्तुः ज्ञातिश्रैष्ठ्य-वक्षपुत्त्रलादिफलं कीर्त्तयद्भ्यां व्यासापस्तम्बाभ्यां पुत्त्रमरणे दोषोऽपि तत्रैवोद्भावितः।

इति अपरपक्षत्रयोदशीश्राद्धनिर्णयः।

---

## अथापरपक्ष एव चतुर्दशीश्राद्धनिर्णयः॥

तत्र याज्ञवल्क्यः।

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीं।

शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते॥ इति॥

मार्कण्डेय-ब्रह्मपुराणयोः।

युवानः पितरो यस्य मृताः शस्त्रेण वा हताः।

तेन कार्य्यं चतुर्द्दश्यां तेषां तृप्तिमभीप्सता॥

ब्रह्मवैवर्त्त-वायुपुराणयोः।

युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत्।

शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्द्दशीम्॥

वृद्धमनुः।

चतुर्द्दशीं वर्जयित्वा श्राद्धं श्राद्धविशारदाः।

प्रीयन्ते पितरस्तस्य ये च शस्त्रहता रणे॥

काम्योपक्रमे च मनुः।

ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्द्दश्यान्तु सुप्रजाः।

प्रीयन्ते पितरस्तस्य ये च शस्त्रहता रणे॥ इति।

शस्त्रग्रहणमुपलक्षणं।

अतएव ब्रह्मपुराणे।

प्रायोऽनशन-शस्त्राग्नि-विषोद्बन्धनिनान्तथा ।
चतुर्दश्यां भवेत् श्राद्धं तृप्त्यर्थमिति निश्चयः ॥ इति।

नागरखण्डेऽपि ।

अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।
उपसर्गमृतानाञ्च विषमृत्युमुपेयुषाम् ॥
वह्निना च प्रदग्धानां जलमृत्युमुपेयुषां ।
सर्प-व्याघ्रहतानाञ्च शृङ्गैरुद्बन्धनैरपि ॥
श्राद्धन्तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप ।
तेषां तस्मिन् कृते तृप्तिस्ततस्तत्पक्षजा भवेत् ॥

'अपमृत्युः' अकालमृत्युः अप्राप्तजरसामेव मृत्युरित्यर्थः। यक्ष-भूत-ग्रहाद्युपसृष्टानान्तु यन्मरणं तदुपसर्गान्मरणं। 'तत्पक्षजा' सर्वस्मिन्नपरपक्षे श्राद्धकरणाद्यावती तृप्तिस्तावतीत्यर्थः।

मरीचिरपि ।

विष-सर्प-श्वापदादितिर्यग्ब्राह्मणघातिनां ।
चतुर्दश्यां क्रियाः कार्या अन्येषान्तु विगर्हिताः ॥

विषादिभिर्घातो येषां ते तथोक्ताः। अनेन शस्त्रादिहतानामेव चतुर्दशीकालमात्रं नियम्यते, न तु चतुर्दश्यामेव शस्त्रादिहतानां, किन्तु तेषामन्यस्मिन्नपि काले भवत्येव श्राद्धमिति।

प्रचेतापि।

वृक्षारोहण-लोहाद्यैर्विद्युज्ज्वाला-विषादिभिः ।
नख-दंष्ट्रिविपन्नानां तेषां शस्ता चतुर्दशी ॥ इति ।

आदिशब्देन गिरिशिखरादिविषमस्थानारोहण-लगुडकुठार-

भिघातोदकमोपलपातादयः प्रोक्तंसधर्माणो मरणोपायाः संग्टह्यन्ते।
यत्तूक्तविरुद्धार्थं शाकटायनवचनं।

अत्राग्निभ्यां विपन्नानां संन्यासे वा ग्टहे पथि ।

श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्द्दशीम् ॥ इति ।

तत्प्रायश्चित्तार्थविहितजलाग्न्यादिमरणप्रयुक्तप्राणिविषयम्, ये तु पापमृत्यवस्तेषामेव चतुर्द्दश्यां श्राद्धं कर्त्तव्यं। "दृचारोहणेत्यादौ प्रचेतोवचने पापमृत्युप्रायपाठात्। अतएव प्रमीते पत्यौ विहिताग्निप्रवेशविधिनानुमरणकृतां योषितामपि न चतुर्द्दशीश्राद्धं। तदेवमविहितैर्जल-ज्वलनादिभिर्म्मृतानां मनु-ब्रह्मपुराणवचनप्रामाण्यात् संग्राम-प्रायोपवेशनमृतानाञ्च कृष्णचतुर्द्दशीश्राद्धमिति सिद्धं। तच्चकृतसपिण्डीकरणस्यायेकोद्दिष्टमेव कर्त्तव्यं।

यदाह गार्ग्यः।

चतुर्द्दश्यान्तु यत् श्राद्धं सपिण्डीकरणात्परं।

एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः॥ इति।

मनुः।

एकपिण्डीकृतानान्तु पृथक्त्वं नोपपद्यते।

सपिण्डीकरणादूर्द्धं मृते कृष्णचतुर्द्दशीम् ॥ इति।

भविष्यत्पुराणे।

समत्वमागतस्यापि पितुः शस्त्रहतस्य तु।

एकोद्दिष्टं सुतैः कार्यं चतुर्द्दश्यां महालये ॥

प्रेतत्वपरित्यागेन पितृत्वं प्राप्तैः पितामहादिभिः सह सपिण्डीकरणे प्रेतत्वपरित्यागेन पितृत्वप्राप्त्या साम्यमागतस्यापीत्यर्थः। शस्त्र-

एतच्च पितुर्महालये चतुर्दश्यामेकोद्दिष्टश्राद्धे कृतेऽपि दिनान्तरे पार्वणश्राद्धं कार्यं एकोद्दिष्टश्राद्धेन पितामहादितृप्त्यसिद्धेः । नन्वेवं मृताहेऽप्येकोद्दिष्टे कृते पार्वणश्राद्धमपि पितामहादितृप्तिसिद्ध्यर्थं कर्त्तव्यं स्यात् । नैवं । पितुर्मृताहे पितामहादेस्तर्पणीयत्वा-स्मरणात्तत्तृप्त्यर्थं श्राद्धस्यानुष्ठानं स्यात् । महालये तु ।

काङ्क्षन्ति पुत्र-पौत्रेभ्यः पायसं मधुसंयुतं ।
तस्मात्तांस्तच विधिना तर्पयेत्पायसेन तु ॥

मध्वाज्यतिलमिश्रेणेति पितामहादेरपि तर्पणीयत्वस्मरणात् तत्तृप्तये दिनान्तरे पार्वणश्राद्धं कार्यमेव । यस्य तु पितामहोऽपि शस्त्रादिहतस्तस्य महालये पितामहश्राद्धमपि चतुर्दश्यामेकोद्दिष्टं कार्यं । तथाच स्मृत्यन्तरे । "एकस्मिन् द्वयोर्वैकोद्दिष्टविधिरिति । एकस्मिन् पितरि पितामहे वा शस्त्रादिना हते पित्रादित्रयमध्ये द्वयोर्वा शस्त्रादिना हतयोश्चतुर्दश्यामेकोद्दिष्टविधिना प्रत्येकं श्राद्धं कार्यमित्यर्थः । द्वयोरेकोद्दिष्टविधानेन प्रत्येकं श्राद्धे कृतेऽपि प्रपितामहतृप्तिसिद्ध्यर्थं दिनान्तरेऽपि श्राद्धं कार्यं । पित्रादिषु त्रिष्वपि शस्त्रादिना हतेषु पृथगेकोद्दिष्टान्येव कार्याणि ।

अत्र कश्चिदाह ।

"एकस्मिन् द्वयोर्वेत्यभिधानात्त्रिषु पितृ-पितामह-प्रपितामहेषु नैकोद्दिष्टविधिरिति गम्यते, तेन त्रिषु शस्त्रादिहतेषु चतुर्दश्यां पार्वणविधिरेव । युक्तं चैतत् । सपिण्डीकृतानां त्रयाणामपि चतुर्दशी-विहितरूपकालसम्भवे सत्यपि शस्त्रहतादिप्राप्तिकृतैककालासम्भव-निबन्धनस्यैकोद्दिष्टविधेरनवतारात् । अनेनैवाभिप्रायेणापरार्केणाप्युक्तं

"तत्र चैकस्य शस्त्रहतत्वे एकोद्दिष्टविधानं न तु त्रयाणां, त्रयाणां तत्र तु पार्वणमेवेति । त्रयाणां 'तथात्वे' शस्त्रहतत्वे, नैकोद्दिष्टविधानं किन्तु तत्र पार्वणमेवेति तस्यार्थः ।

अन्ये त्वाहुः । अयुक्तमेतत् । "एकस्मिन् द्वयोर्वेत्यस्योपलक्षणत्वात् एकोद्दिष्टविधेश्च शस्त्रादिहतत्वनिमित्तत्वाच्च कालासम्भवनिबन्धनत्वं कालासम्भवस्याश्रुतत्वात् । एकोद्दिष्टविधेस्तन्निबन्धनत्वे कल्पनामात्रमूलत्वापत्तेः । अतएव देवस्वामिनाभिहितं, "त्रिष्वपि शस्त्रादिहतेषु पृथगेकोद्दिष्टत्रयमेव कार्यं न तु पार्वणं आहृतवचनाभावादिति । तदयुक्तं । उपलक्षणत्वे लक्षणाप्रसङ्गात् ।

अत्र शस्त्रादिहतानां चतुर्दश्यामेव एकोद्दिष्टमिति वाक्यार्थावगमात् मृताहादौ पार्वणं कर्त्तव्यं । ये तु चतुर्दश्यामेव शस्त्रादिभिर्म्मृतास्तेषां मृताहे किं पार्वणमेकोद्दिष्टं वेति संशयेऽभिधीयते । चतुर्दशीनिमित्तिकस्य मृताहनिमित्तकस्य च श्राद्धकर्म्मणोऽय-कालसमवायप्रकरणोक्तन्यायेन भेदेऽपि युगपदनेकनिमित्तोपनिपाते एकेनैव नैमित्तिकेन कुतपादिकालाविरोधे द्वितीयस्यानवकाशे देश-काल-कर्त्तृ-देवतैक्ये विशेषाग्रहणात्तन्त्रेण नैमित्तिकानुष्ठाने सति स्वकुलवृद्धपरम्परानुसारान्मृताहेऽपि यैरेकोद्दिष्टपक्षपरिग्रहः कृतः तेषां मृताहनिमित्तकमपि चतुर्दश्यामेकोद्दिष्टमेव । यैस्तु पार्वणपरिग्रहः कृतः स तैरुदितहोमवदावज्जीवपरिग्रहीत एवेति चतुर्दश्यामपि न तैरसौ परित्याज्यः । यस्तु चतुर्दश्यां पार्वणनिषेधः श्राद्धस्य स चतुर्दशीनिमित्तस्य न मृताहनिमित्तकस्यापि । ननु चतुर्द्दश्यां न पार्वणमित्यत्र चतुर्दशीनिमित्तकं यच्चतुर्दश्यामिति विशेषणा-

ध्याहार-वाक्यभेदौ स्यातां। मैवं। प्रकृतत्वादिना विशेषलाभ-स्योपन्यस्तदोषानास्पदत्वात्। अन्यथावघातादिनियमोऽपूर्वीयेण न सम्बध्यते। यच्च नागरखण्डे चतुर्दश्यां क्रियमाणस्य पार्वणस्य वैफल्य-मुक्तं। तदपि चतुर्द्दशीनिमित्तकस्येति। अथ च किं चतुर्दशीनि-मित्तमेकोद्दिष्टं मृताहनिमित्तं च पार्वणमिति श्राद्धद्वयं कुर्यात् एकमेव वा अङ्गवैधर्म्यादृष्टप्रमाणविशेषत्वेन तन्त्रानुष्ठानासम्भवात् संशयः। तत्र समानेऽहनि नैकः श्राद्धद्वयं कुर्यादित्यस्य निषेधस्य भिन्ननिमित्तकश्राद्धगोचरत्वाभावात् श्राद्धद्वयं कुर्यात्। मैवं। दैव-तैक्यात्प्रधानद्वयसहानुष्ठाने भूयसां श्राद्धधर्माणामनुग्रहाय पार्वण-धर्मैरेकोद्दिष्टधर्म्मबाधे पार्वणेनैव नैमित्तिकद्वयसिद्धौ न भेदेन श्राद्ध-द्वयानुष्ठानमिति। ननु काम्यमपि चतुर्दशीश्राद्धमस्ति कामप्रवण-प्रवृत्तित्वाच्च नराणां काम्यप्रवृत्तेरुत्कटत्वाच्चतुर्दशीनिमित्तके श्राद्धे-ऽनुष्ठेये सत्येकोद्दिष्टधर्मा एव प्राप्नुवन्ति, भवेदेवं यदि भूयसामनुग्र-होऽत्र विशेषो नावगम्येत। अस्तु वास्यान्तिथौ निमित्तभेदात् नैमि-त्तिकभेदे श्राद्धद्वयमिति। महालयपक्षे च कथञ्चिच्चतुर्द्दश्यां श्राद्धा-सम्भवे तत्पक्षमध्ये कस्मिंश्चिदपि दिने श्राद्धं कर्त्तव्यं प्रशस्ततर-मुख्यकालासम्भवेऽपि तत्पक्षकर्त्तव्यस्य श्राद्धस्यावश्यकत्वात् दिनान्तरे च शस्त्रहतानामपि पार्वणमेव चतुर्दश्यामेवैकोद्दिष्टविधानात्। चतुर्दश्यां शस्त्रादिहतानामेकोद्दिष्टं कर्त्तव्यमित्यत्र कारणमुक्तं नागरखण्डे।

आनर्त्त उवाच।

कस्माच्छस्त्रहतानाञ्च प्रोक्ता श्राद्धे चतुर्दशी।

एकोद्दिष्टं कुतश्चात्र कारणं प्रब्रवीहि मे ॥

मार्कण्डेय उवाच ।

बृहत्कल्पे पुरा राजन् हिरण्याक्षो महासुरः ।
बभूव बलवान् शूरः सर्वदेवभयङ्करः ॥
ब्रह्मा प्रतोषितस्तेन विधाय विविधं तपः ।
कृष्णपक्षे चतुर्दश्यां नभस्ये मासि संस्थिते ॥

ब्रह्मोवाच ।

परितुष्टोऽस्मि ते वत्स प्रार्थयस्व यथेप्सितं ।
अदेयमपि दास्यामि दुर्लभं यत्सुरासुरैः ॥

हिरण्याक्ष उवाच ।

भूताः प्रेताः पिशाचाश्च राक्षसा दैत्य-दानवाः ।
बुभुक्षिताः प्रधावन्ति मां नित्यं पद्मसम्भव ॥
पितृपक्षे कृते श्राद्धे कन्यासंस्थे दिवाकरे ।
एतस्मिन्नहनि प्राप्यतृप्तिः स्यादर्थसम्भवा ।
तदेषामत्र दिवसे तृप्त्युपायं कुरु प्रभो ॥

ब्रह्मोवाच ।

यः कश्चिन्मानवः श्राद्धं स्वपितृभ्यः प्रदास्यति ।
पितृपक्षे चतुर्दश्यां नभस्ये मासि संस्थिते ॥
प्रेतानां राक्षसानाञ्च भूतानां तद्भविष्यति ।
मम वाक्यादसन्दिग्धं ये चान्ये कीर्त्तितास्त्वया ॥
दुर्मृत्युना मृता ये च संग्रामेषु हताश्च ये ।
एकोद्दिष्टे सुतैर्दत्ते तेषां तृप्तिर्भविष्यति ॥

एवमुक्त्वा ततो ब्रह्मा गतश्चादर्शनं नृप ।
हिरण्याक्षोऽपि संहृष्टः स्वमेव भवनं ययौ ॥
यच्च शस्त्रहतानाञ्च तस्मिन्नहनि दीयते ।
एकोद्दिष्टं नरैः श्राद्धं तत्ते वक्ष्यामि कारणं ॥
सङ्ख्ये शस्त्रहता ये च निर्विकल्पेन चेतसा ।
युध्यमाना न ते मर्त्या जायन्ते मनुजाः पुनः ॥
पराङ्मुखा ये हन्यन्ते पलायनपरायणाः ।
ते भवन्ति नराः प्रेता एतदाह पितामहः ॥
संमुखा अपि वै दैन्यं हन्यमाना वदन्ति च ।
पश्चात्तापं च वा कुर्युः प्रहारैर्जर्जरीकृताः ।
तेऽपि प्रेता भवन्तीह मनुः स्वायम्भुवोऽब्रवीत् ॥
कदाचिच्चित्तचलनं शूराणामपि जायते ।
तेषामपि दिने तत्र देयं प्रेतत्वशङ्कया ॥
अपमृत्युहतानाञ्च सर्वेषामेव देहिनां ।
प्रेतत्वं जायते यस्मात् तस्मात् तेषां हि तद्दिनं ॥
श्राद्धार्थं पार्थिवश्रेष्ठ विशेषेण प्रकीर्त्तितं ।
एकोद्दिष्टं प्रकर्त्तव्यं तस्मात्तत्र(१) दिने नरैः ।
सपिण्डीकरणादूर्द्ध्वं तत्ते वक्ष्यामि कारणं ॥
यदि प्रेतत्वमापन्नः कदाचित्तत्पिता भवेत् ।
तदर्थं तत्र कर्त्तव्यं श्राद्धं तत्र दिने नृप ॥
पितामहाद्यास्तत्रापि श्राद्धं नार्हन्ति कर्हिचित् ।

---

(१) श्राद्धं तत्रेति ग० ।

अथ चेद्भ्रान्तितो दद्यात्म्रियते राचवैन्तु तत् ॥
ब्रह्मणो वचनाद्राजन् भूत-प्रेतैश्च दानवैः ।
तेनैकोद्दिष्टमेवात्र कर्त्तव्यं न तु पार्व्वणं ॥
पितृपक्षे चतुर्द्दश्यां कन्यासंस्थे दिवाकरे ।
एतस्मात्कारणात् श्राद्धं पार्व्वणं नैव कारयेत् ।
एतस्मिन्नहनि प्राप्ते व्यर्थं श्राद्धं भवेद्यतः ॥
इत्यपरपक्षचतुर्द्दशीकालनिर्णयः ।

---

## अथायनादयः श्राद्धकालाः ।

तत्र विष्णुपुराणे ।

उपप्लवे चन्द्रमसो रवेश्च
त्रिष्वष्टकास्वप्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत्पितरो वदन्ति ।

अत्र किल "पानीयमपीति वचनादावश्यकता श्राद्धस्योच्यते इति मन्यन्ते। यत्तु "आदित्यसंक्रमं विषुवद्वयं व्यतीपातो जन्मर्क्षं चन्द्र-सूर्यग्रहस्तथा। एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः" इति विष्णुवचने ग्रहणादेः काम्यश्राद्धकालत्वमुक्तं, तत्र नित्यत्वनिराकरणक्षमं वाक्यद्वयबलेनाग्निहोत्रादिवन्नित्यत्व-काम्यत्व-घोरविरोधात् ।

आह शङ्खः ।

हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने ।
विषुवत्ययने चैव सर्वमानन्त्यमुच्यते ॥

अत्रायनद्वयं ।

“विषुवत्सूर्यसंक्रम इत्यस्मिन् याज्ञवल्क्यवचने अयनयोर्विषुवतोश्च संक्रान्तिपदेनैव संग्रहसिद्धावपि यत्पृथगभिधानं तत्संक्रान्त्यन्तरेभ्यो विषुवत्, विषुवादयनमिति यथा पूर्वं प्राशस्त्यातिशयप्रतिपादनार्थमिति मन्तव्यं ।

तथाच विष्णुधर्मोत्तरे ।

श्राद्धे संक्रमणं भानोः प्रशस्तं पृथिवीपते ।
विषुवद्वितयं तत्र अयने द्वे विशेषतः ॥

विषुवतोरयनयोश्च लक्षणं नागरखण्डे ।

यदा स्यान्मेषगो भानुस्तुलां वाथ यदा व्रजेत् ।
तदा स्याद्विषुवाख्यस्तु कालस्वाक्षयकारकः ॥
मकरे कर्कटे चैव यदा भानुर्व्रजेन्नृप ।
तदायनाभिधानश्च विषुवाच्च विशिष्यते ॥

अस्मिंश्च काले पिण्डनिर्वपणं विनैव श्राद्धं कर्त्तव्यं ।

यदाह पुलस्त्यः ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च कर्त्तव्यं(१) पिण्डनिर्वपणादृते—इति ॥

एतेषु कालेषु पिण्डनिर्वपणं विना श्राद्धं कर्त्तव्यं । एतत्काल-

(१) युगादिषु च सर्वासु इति ख० ।

निमित्त एव श्राद्धे पिण्डनिर्वपणप्रतिषेधोऽयं, न मृताहादिनिमित्तकप्रसङ्गादयनादिष्वापतितं, यस्मात् "अयनद्वितये श्राद्धमित्यनेनायनादिभिर्नित्यान्वितं श्राद्धमवगम्यते। तन्निमित्तकमेव च तैर्नित्यान्वितं नान्यत् नित्यान्वयस्यानित्यान्वयाद्‌बलीयान् भवति।

किञ्च।

अत्र हि विधीयमानस्य श्राद्धस्य पिण्डनिर्वपणादृते इति विशेषणं न प्रसङ्गात् तत्कालपतितमृताहादिश्राद्धमाश्रयितुमर्हति यद्येवंविधं श्राद्धमेतेषु कालेषु विधीयते, तथाहि भावार्थविधिरित्येष गुणो भवति।

शातातपस्मृतौ लिङ्गपुराणे च।

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।

अकुर्वाणस्तु यच्छ्राद्धं पङ्के गौरिव सीदति॥

इतिवचनं श्राद्धस्यावश्यकतां गमयति।

कूर्मपुराणे चास्य श्राद्धस्य नैमित्तिकत्वेनावश्यकत्वं प्रतिपाद्य काम्यत्वं प्रतिपादितं।

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु।

तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथा॥

त्रयोदशी मघायुक्ता वर्षासु च विशेषतः।

तस्य पाकश्राद्धकाला नित्याः प्रोक्ता दिने दिने॥

नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्र-सूर्ययोः।

बान्धवानाञ्च मरणे नारकी स्यादतोऽन्यथा॥

काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु।

अयने विषुवे चैव व्यतीपातेऽप्यनन्तकं॥

संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ।
नक्षत्रेषु च सर्वेषु कार्यं काम्यं विशेषतः—इत्यादि ॥

मार्कण्डेयपुराणे ।

विशिष्टब्राह्मणप्राप्तौ सूर्येन्दुग्रहणेऽयने ।
विषुवे रविसंक्रान्तौ व्यतीपाते च पुत्रक ॥
श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने ।
जन्मर्क्षग्रहपीड़ासु श्राद्धं कुर्वीत चेच्छया ॥ इति ॥

अत्र सूर्यग्रहणादिकालेषु तथा इच्छया श्राद्धं प्रति इच्छा वा श्राद्धं कुर्यात् । अथवा पूर्वोक्तेष्वेव कालेषु इच्छया स्वर्गादिफलकामनया श्राद्धं कुर्यादितीच्छयेत्यस्यार्थः । न पुनर्यदीच्छति कर्त्तुं तर्हि कुर्यादिति ।

इत्ययनादयः श्राद्धकालाः ।

## अथ द्रव्य-ब्राह्मणसम्पत्त्युपलक्षितः कालः ।

तत्र हारीतः ।

तीर्थे द्रव्योपपत्तौ च न कालमवधारयेत् ।
पात्रञ्च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥

'तीर्थं' गयादि । 'द्रव्यं' अन्नादि । श्रोत्रियत्वादिविशेषणविशिष्टञ्च ब्राह्मणं प्राप्य न कालान्तरं प्रतीक्षेत । किन्तु तस्मिन्नेव काले श्राद्धं कुर्यात् । अत्र च सद्य इति वचनादावश्यकत्वं प्रतीयते ।

यत्तु मार्कण्डेयपुराणे ।

विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने ।
श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने ॥
जन्मर्चग्रहपीड़ासु श्राद्धं कुर्व्वीत चेच्छया ॥ इति ।

अत्र चेच्छापदं नित्यत्वेन विरुध्यते, तथा व्याख्यातमेवायनादिश्राद्धकालनिरूपणे ।

ब्रह्मपुराणे ।

यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निवत् ।
तेनैकेनापि कर्त्तव्यं श्राद्धं विषुववच्छुभं ॥
श्राद्धीयद्रव्यसम्प्राप्तिर्यदा स्यात्साधुसम्मता ।
पार्व्वणेन विधानेन श्राद्धं कार्य्यं द्विजोत्तमैः ॥

विष्णुपुराणे ।

द्रव्य-ब्राह्मणसम्पत्त्युपलक्षिते काले काम्यमपि श्राद्धमुक्तं ।

तथाहि ।

तच्च काम्यान् शृणुष्वेत्यनन्तरं भवति वचनं ।

श्राद्धार्हमागतं द्रव्यं विशिष्टमथवा द्विजं ।
श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥

इति ब्राह्मणसम्पत्त्युपलक्षितकालनिरूपणं ।

---

## अथ गजच्छाया ।

स्कन्दपुराणादौ ।

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणी या च गजच्छायेति सा स्मृता ॥ इति ।

'इन्दुः' चन्द्रमाः, 'पितृदेवत्ये नक्षत्रे' मघायां, 'हंसः' सूर्यः, 'करे' हस्तनक्षत्रे। 'तिथिर्वैश्रवणीया' त्रयोदशी ।

नरसिंहपुराणे ।

इन्दौ हंसस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैश्रवणी नाम सा च्छाया कुञ्जरस्य तु ॥

ब्रह्मपुराणे ।

योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञकः ।
भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते ॥ इति ।

अयमर्थः सूर्ये हस्तस्थिते चन्द्राधिष्ठिताभिर्मघाभिः त्रयोदश्यां योगो गजच्छायसंज्ञकः स च भाद्रपदापरपक्षे सम्भवति। "विभाषा सेनासुराच्छायेति छायाशब्दस्य नपुंसकत्वं ।

इन्दौ हंसस्थिते या तु अमावास्या करान्विता।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥

'हंसः' सूर्यः, हंसदेवत्वात् हस्तनक्षत्रमपि 'हंसः'। 'करान्विता' चन्द्रयुक्तहस्तान्विता ।

सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ॥ इति ।

'सैंहिकेयः' राहुः। 'पर्वसन्धिषु' अमावास्या-प्रतिपदोः सन्धिषु ।

---

## अथ प्रकीर्णकालः ।

मत्स्यपुराणे ।

अतः परं प्रवक्ष्यामि विष्णुना यदुदीरितं ।

श्राद्धं साधारणं नाम भुक्ति-मुक्तिफलप्रदं ॥
अयने विषुवे युग्मे सामान्ये चार्कसंक्रमे ।
अमावास्याष्टकायाञ्च कृष्णपक्षे विशेषतः ॥
आर्द्रा-मघा-रोहिणीषु द्रव्य-ब्राह्मणसङ्गमे ।
गजच्छायाव्यतीपाते विष्टि-वैधृतिवासरे ॥

तथा ।

वैशाख्यामुपरागेषु तथोत्सवमहालये ।

ब्रह्मपुराणे ।

श्राद्धं देयमृणान्नीह मासि मास्युडुपक्षये ।
पूर्णमासेऽपि च श्राद्धं कर्त्तव्यमृक्षगोचरे ॥
नित्यं श्राद्धं विधेयञ्च मनुष्यैरिह गीयते ।
वृद्धिश्राद्धञ्च कर्त्तव्यं जातकर्मादिके बुधैः ॥
कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्वणेनेह विधिना श्राद्धं तत्तु विधीयते ॥

आह जातूकर्णः ।

ग्रहोपरागे च सुते च जाते
पित्र्ये मघायामयनद्वये च ।
नित्यञ्च शङ्खे च तथैव पद्मे
दत्तं भवेन्निष्कसहस्रतुल्यं ॥

अत्र च नित्यं दत्तमित्यन्वयावगमात् ग्रहोपरागादिषु श्राद्धादेर्नित्यतां ब्रूवते । अथवा "नित्यमहरहर्यावज्जीवं पित्र्ये मघायामिति भाद्रपदापरपक्षस्थितमघास्थित्यर्थः ।

मन्वादि-पद्मयोर्लक्षणमपि स एवाह ।

मन्वादिमारभामावास्यां क्षीणचन्द्रां[१] द्विजोत्तमाः ।
अष्टकासु भवेत्पद्मं तत्र दत्तं तथाक्षयम् ॥ इति ।

मन्वादिस्तवाह ।

यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च ।
पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम् ॥ इति ।

विष्णुधर्मोत्तरे ।

आश्विनस्यापरं पक्षं प्रथमं कार्त्तिकस्य तु ।
यस्तु श्राद्धं सदा कुर्यात्सोऽश्वमेधफलं लभेत् ॥
निद्रान्त्यजति सर्वात्मा यस्मिन् काले जनार्द्दनः ।
तत्र श्राद्धमथानन्तं नात्र कार्या विचारणा ॥

तथा ।

अक्षयञ्च ततः श्राद्धं विज्ञेयं राहुदर्शने ।
व्रीहिपाकेन कर्त्तव्यं यवपाकेन पार्थिव ।
न तौ वर्ज्यौ महाराज विना श्राद्धं कथञ्चन ॥

शातातपः ।

नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नं वर्षासु च मघासु च ।
तस्मादद्यात्सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च ॥

आह पितामहः ।

अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च ।

---

(१) क्षीणसोमामिति ग० ।

विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

इति प्रकीर्णकालः।

इति नित्यश्राद्धकालः।

---

## अथ काम्यश्राद्धकालः।

तत्र तावत्तिथयः।

आह कात्यायनः।

अथ काम्यानि भवन्ति, स्त्रियोऽप्रतिरूपाः प्रतिपदि। द्वितीयायाञ्च तृतीयायाञ्च सर्वान् कामान्। चतुर्थ्यां क्षुद्रपशवः। पुत्राः पञ्चम्यां। षष्ठ्यां श्राद्धभागी। कृषिः सप्तम्यां। वाणिज्यमष्टम्यां। एकशफं नवम्यां। दशम्यां गावः। परिचारका एकादश्यां। द्वादश्यां धन-धान्य-कुप्यं। ज्ञातिश्रैष्ठ्यं हिरण्यानि त्रयोदश्यां युवानस्तत्र म्रियन्ते। शस्त्रहतस्य चतुर्दश्यां। अमावास्यायां सर्वमिति।

आपस्तम्बः।

सर्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन् प्रीणयन्ति। कर्तुः कालाभिनियमात् फलविशेषः। प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते। द्वितीये स्तेनाः। तृतीये ब्रह्मवर्चस्विनः। चतुर्थे क्षुद्रपशुमान्। पञ्चमे मधुमांसो बहुपत्यो न चानपत्यः प्रमीयते। षष्ठे दुःशीलश्च। सप्तमे कृषिः। अष्टमे पुष्टिः। नवमे एकखुराः। दशमे व्यवहारर्द्धिः। एकादशे कृष्णायसत्रपुसीसं। द्वादशे पशुमान्। त्रयोदशे च बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति। चतुर्दशे तु आयुर्वृद्धिः। पञ्चदशेषु पुष्टिः सततं श्राद्धं कुर्वन्नाप्नोतीति।

अधिकारे विष्णुः ।

अहे सुरूपाः स्त्रियः प्रतिपदि । कन्यां वरां द्वितीयायां । सर्व्वान् कामान् तृतीयायां । चतुर्थ्यां श्रियं । पञ्चम्यां द्यूतविजयं । षष्ठ्यां कृषिं । सप्तम्यां वाणिज्यं । अष्टम्यां वाजिनः । पशून् नवम्यां । दशम्यां गावः । पुत्राः ब्रह्मवर्चस्विनश्चैकादश्यां । कनक-रजते द्वादश्यां । सौभाग्यं त्रयोदश्यां । सर्वान् कामान् पञ्चदश्यां । शस्त्रहतानां श्राद्धकर्मणि चतुर्दशी शस्ता ।

श्राद्धं कुर्यादित्यधिकारे हारीतः ।

पञ्चमीं पुत्रकामः । षष्ठीं धनकामः । सप्तमीं पशुकामः । अष्टमीं शस्त्रहतानामारोग्यकामः । नवमीं सेनाकामः । दशमीमन्नाद्यकामः । एकादशीमृद्धिकामः । द्वादशीं स्त्रीकामः । त्रयोदशीं यशस्कामः । चतुर्दशीं भूतिकामः । स्वस्तिकामोऽमावास्यायां सर्वकामः ।

पैठीनसिः ।

पञ्चम्यां पुत्रकामोयजेत । षष्ठ्यां पशुकामः । सप्तम्यामृद्धिकामः । अष्टम्यामन्नाद्यकामः । नवम्यां ब्रह्मवर्चसकामः । दशम्यां सर्वकामः । एकादश्यां धनकामः । द्वादश्यां क्षेमकामः । त्रयोदश्यां स्त्रीवश्यत्वं । चतुर्दश्यां शस्त्रेण हतानां । सर्वकामोऽमावास्यायां ।

मनुः ।

कुर्वन् प्रतिपदि श्राद्धं सुरूपान् लभते सुतान् ।
कन्यकान्तु द्वितीयायां तृतीयायान्तु वन्दिनः ॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतं कृषिं वापि सप्तम्यां लभते नरः ॥

अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा।
स्यान्नवम्यामेकखुरं दशम्यान्तु खुरं बहु॥
एकादश्यां तथारोग्यं ब्रह्मवर्चस्विनः सुतान्।
द्वादश्यां जातरूपञ्च रजतं कुप्यमेव च॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु सुप्रजाः।
प्रीयन्ते पितरश्चात्र ये शस्त्रेण हता रणे॥
इत्यादींश्च विनिर्दिष्टान् विपुलान् मनसः प्रियान्।
श्राद्धदः पञ्चदश्यान्तु सर्वान् कामान् समश्नुते॥

'वर्च्चस्विनः' स्नातकान्।

ब्रह्मपुराण-मार्कण्डेयपुराणयोः।

कन्यागते सवितरि दिनानि दश पञ्च च।
पार्वणेनैव विधिना श्राद्धं तत्र विधीयते॥
प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा।
वरार्थिनी तृतीया तु चतुर्थी शत्रुनाशिनी॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पुष्टो भवेन्नरः।
गणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम्॥
स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामताम्।
वेदांस्तथाप्नुयात्सर्वानेकादश्यां क्रियापरः॥
द्वादश्याञ्च प्रजालाभं प्राप्नोति पितृपूजकः।
प्रजां मेधां पशुं वृद्धिं स्वातन्त्र्यं पुष्टिमुत्तमां॥
दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीं।
अवाप्नोति न सन्देहः श्राद्धं श्राद्धपरो नरः॥

युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्य्यं चतुर्द्दश्यां तेषां तृप्तिमभीप्सता ॥
श्राद्धं कुर्वन्नमायां तु यत्नेन पुरुषः शुचिः ।
सर्वान् कामानवाप्नोति स्वर्गं चानन्त्यमश्नुते ॥

विष्णुधर्मोत्तरे ।

स्त्रियः स्वरूपाश्च गृहे कन्याजन्म तथा धनम् ।
सर्वान् कामान् यशश्चैव श्रियं द्यूतजयं कृषिं ॥
वाणिज्यं पशवश्चैव वाजिनश्च तथा सुतान् ।
सुवर्णं रूप-सौभाग्यं प्राप्नोति श्राद्धदः क्रमात् ॥
प्रतिपत्प्रभृतिष्वेतद्यावद्राजंस्त्रयोदशीं ।
चतुर्दश्यान्तु कर्त्तव्यं ये नराः शस्त्रघातिताः ॥
　　श्राद्धं सदा पञ्चदशीषु कुर्वन्
　　कामान् समग्रान् लभते मनुष्यः ।
　　तस्मात् प्रयत्नेन नरेन्द्र कार्य्यं
　　श्राद्धं सदा पञ्चदशीषु तज्ज्ञैः ॥

विष्णुधर्म्मे

कन्यागते सवितरि कृष्णपक्षेऽष्टमी तु या ।
सा च पापहरा पुण्या शिवस्यानन्दवर्द्धिनी ॥
स्नानं दानं जपो होमः पितृ-देवाभिपूजनं ।
सर्व्वं प्रीतिकरं ह्याद्धि कृतं तस्यां त्रिलोचने ॥
विशेषतः कृतं श्राद्धं होमश्च विधिवन्मुने ।
तस्माच्छ्राद्धं प्रयत्नेन तस्यां कुर्य्याद्विचक्षणः ॥

एकभक्तन्तु पञ्चम्यां षष्ठ्यां नक्तं विदुर्बुधाः ।
उपवासस्तु सप्तम्यामष्टम्यां पूजयेच्छिवम् ॥
पूजयित्वा शिवं भक्त्या पितुः श्राद्धन्तु कल्पयेत् ।
कृत्वा तु विधिवच्छ्राद्धं भुञ्जीत पितृसेवितं ॥
यस्तस्यां कुरुते श्राद्धं पूजयित्वा त्रिलोचनं ।
तस्य वर्षाणि तृप्ताः स्युः पितरो दश पञ्च च ॥

इति काम्यास्तिथयः ।

---

## अथ नक्षत्राणि ।

तत्र मनुः ।

युक्षु कुर्व्वन्दिनर्क्षेषु सर्व्वान् कामान् समश्नुते ।
अयुक्षु च पितॄनर्च्चन् प्रजां प्राप्नोति पुष्कलाम् ॥

'युक्षु' समेषु, 'अयुक्षु' विषमेषु ।

यमः ।

युक्षु कुर्वन् दिनर्क्षेषु सर्व्वान् कामानवाप्नुयात् ।
गजच्छायां पितॄनर्च्चन् प्रजाः प्राप्नोति पुष्कलाः ॥

याज्ञवल्क्यः ।

स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ।
सुतान् श्रैष्ठ्यञ्च सौभाग्यं समृद्धिं मुख्यतां शुभाम् ॥
प्रवृत्तचक्रताञ्चैव वाणिज्यप्रभृतींस्तथा ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धर्म्मविद्याभिषक्सिद्धिं कुप्यङ्गामप्यजादिकम् ।

अन्नानामथ विधिवद् यः श्राद्धं सम्प्रयच्छति ॥

कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।

आस्तिकः श्रद्धधानश्च व्यपेतमदमत्सरः ॥

'प्रवृत्तचक्रता' अप्रतिहतज्ञानशालित्वं ।

विष्णुः ।

स्वर्गं कृत्तिकासु । अपत्यं रोहिणीषु । ब्रह्मवर्चसं सौम्ये । कर्म्मणां सिद्धिं रौद्रे । भुवं पुनर्वसौ । पुष्टिं पुष्ये । श्रियं सार्पे । सर्व्वान् कामान् पित्र्ये । सौभाग्यं भाग्ये । धनमार्य्यम्णे । ज्ञातिश्रैष्ठ्यं हस्ते । रूपवतः सुतांस्त्वाष्ट्रे । वाणिज्यसिद्धिं वायौ । कनकं विशाखासु । सुमित्राणि मैत्रे । राज्यं शाक्रे । कृषिं मूले । समुद्रयानसिद्धिमाप्ये । सर्व्वान् कामान् वैश्वदेवे । श्रैष्ठ्यमभिजिति । सर्व्वान् कामान् श्रवणे । बलं वासवे । आरोग्यं वारुणे । कुप्यद्रव्यमाजे । गृहमाहिर्बुध्ने । गाः पौष्णे । तुरगानाश्विने । जीवितं याम्ये ।

'सौम्यं' मृगशिरः । 'रौद्रम्' आर्द्रा । 'सार्पम्' अश्लेषा । 'पित्र्यं' मघा । 'भाग्यं' पूर्व्वफल्गुन्यः । 'आर्य्यम्णं' उत्तरफल्गुन्यः । 'त्वाष्ट्रं' चित्रा । 'वायुः' स्वातिः । 'मैत्रम्' अनुराधा । 'शाक्रं' ज्येष्ठा । 'आप्यं' पूर्व्वाषाढ़ा । 'वैश्वदेवम्' उत्तराषाढ़ा । 'वासवं' धनिष्ठा । 'वारुणं' शतभिषक् । 'आजं' पूर्व्वभाद्रपदा । 'आहिर्बुध्नम्' उत्तरभाद्रपदा । 'पौष्णं' रेवती । 'आश्विनम्' अश्विनी । 'याम्यं' भरणी ।

विष्णुधर्म्मोत्तरे ।

स्वर्गं ह्यपत्यानि तथा ब्रह्मवर्च्चसमेव च ।

रौद्राणां कर्म्मणां सिद्धिं भुवं पुष्टिं तथा श्रियं ॥

सर्व्वान् कामांश्च सौभाग्यं धर्म्मं ज्ञातिप्रधानतां।
रूपयुक्तांश्च तनयान् वाणिज्यं धनसम्पदं॥
कनकं सुहृदो राज्यं सफलांश्च तथा कृषिं।
समुद्रयानलाभञ्च सर्व्वान् कामांस्तथैव च॥
श्रैष्ठ्यं कामांस्तथा सर्व्वान् बलमारोग्यमेव च।
कुप्यद्रव्यं गृहं गावस्तुरङ्गांश्चैव जीवितं॥
कृत्तिकादिभरण्यन्ते क्रमादुडुगणे नरः।
एकैकस्मिन् क्रमात्कुर्व्वन् श्राद्धमाप्नोत्यसंशयं॥
मार्कण्डेयपुराणे।
कृत्तिकासु पितॄनर्च्चन् स्वर्गमाप्नोति मानवः।
अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां लभेत्॥
शौर्य्यमार्द्रास्ववाप्नोति क्षेत्रादि च पुनर्वसौ।
पुष्टिं पुष्ये सदाभ्यर्च्य अश्लेषासु वरान् सुतान्॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फाल्गुनीषु च।
प्रदानशीलो भवति सापत्यश्चोत्तरासु वै॥
प्रयाति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः।
रूपयुक्तस्तु चित्रासु तथापत्यान्यवाप्नुयात्॥
वाणिज्यलाभं स्वातस्यां विशाखा पुत्रकामदा।
कुर्व्वतां चानुराधासु दद्युश्चक्रप्रवर्त्तितां॥
आधिपत्यञ्च ज्येष्ठासु मूले चारोग्यमुत्तमं।
आषाढ़ासु यशःप्राप्तिः उत्तरासु विशोकतां॥
श्रवणे तु शुभान् लोकान् धनिष्ठासु धनं महत्।

वेदवित्त्वं त्वभिजिति श्रियमिच्छिं च वारुणे ॥
अजाविकं प्रौष्ठपदे विन्देत् भार्यां तथोत्तरे ।
रेवतीषु तथा कुप्यमश्विनीषु तुरङ्गमान् ॥
श्राद्धं कुर्वंस्तथाप्नोति भरणीष्वायुरुत्तमं ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित् ॥

ब्रह्मवैवर्त्ते ।

यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे ।
तानि त्वं शृणु काम्यानि नक्षत्रेषु पृथक् पृथक् ॥
श्राद्धयोगे तु यः श्राद्धं करोति सततं नरः ।
अग्निदारांस्तु धीमान् यो जायते च गतज्वरः ॥
अपत्यकामो रोहिण्यां सौम्ये तेजस्विता भवेत् ।
क्रूराणां कर्मणां सिद्धिमार्द्रायां श्राद्धमाचरेत् ॥
क्षेत्रभागी भवेत्पुत्री श्राद्धं कुर्वन् पुनर्वसौ ।
पुष्टिकामः पुनस्तिष्ये श्राद्धं कुर्वीत मानवः ॥
आश्लेषासु पितृनर्चन् वीरान् पुत्रानवाप्नुयात् ।
श्रेष्ठो भवति ज्ञातीनां मघाश्राद्धं समाचरेत् ॥
फाल्गुनीषु पितृनर्चन् सौभाग्यं लभते नरः ।
प्रदानशीलः सापत्य उत्तरासु करोति यः ॥
सं(?)स्तु मुख्यो भवति हस्ते यस्तर्पयेत्पितृन् ।
चित्रायां चैव यः कुर्यात् पश्येद्रूपवतः सुतान् ॥
स्वातीषु चैव यः कुर्यात् वाणिज्ये लाभमाप्नुयात् ।
पुत्रार्थं तु विशाखासु श्राद्धमीहितमानवः ॥

अनुराधासु कुर्वाणो भुवश्चक्रं प्रवर्त्तयेत् ।
आधिपत्यं लभेत् श्रेष्ठं ज्येष्ठासु सततं तु यः ॥
मूलेनारोग्यमिच्छन्ति आषाढ़ासु महेश्वरः ।
उत्तरासु आषाढ़ासु वीतशोको भवेन्नरः ॥
श्रवणे मनुलोकेषु प्राप्नुयात्परमां गतिं ।
राज्यभागं धनिष्ठासु प्राप्नुयाद्विपुलं धनं ॥
श्राद्धं त्वभिजिति कुर्वन् वेदान् साङ्गानवाप्नुयात् ।
नक्षत्रे वारुणे कुर्वन् भिषक्ये सिद्धिमाप्नुयात् ॥
पूर्वप्रोष्ठपदे श्राद्धो विन्देच्छागाविकं बहु ।
उत्तरास्वनतिक्रम्य विन्देत् गावः सहस्रशः ॥
बहुकुप्यकृतं द्रव्यं विन्देत् कुर्वंस्तु रेवतीं ।
अश्वानामश्वयुजे भुङ्क्ते भरण्यामायुरुत्तमं ॥
इमं श्राद्धविधिं कुर्वन् शशबिन्दुर्महीमिमां ।
कृत्स्नाञ्च लेभे योऽकृष्टो समवर्धं प्रशास वां ॥

कूर्मपुराणे ।

स्वर्गञ्च लभते कृत्वा कृत्तिकासु द्विजोत्तमः ।
अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्चसं ॥
रौद्राणां कर्मणां सिद्धिमार्द्रायां शौर्य्यमेव च ।
पुनर्वसौ क्षेत्रसिद्धिं पुष्ये पुष्टिमवाप्नुयात् ॥
सर्वान् कामांस्तथा सार्पे पित्र्ये सौभाग्यमेव च ।
आर्यम्णे तु धनं विद्यात् फाल्गुन्यां पापनाशनं ॥
ज्ञातिश्रैष्ठ्यं तथा हस्ते चित्रायाञ्च बहून् सुतान् ।

वाणिज्यसिद्धिं स्वातौ तु विशाखासु सुवर्णकं ॥
मैत्रे बहूनि मित्राणि राज्यं शाक्रे तथैव च ।
मूले कृषिं लभेत् ज्ञानं सिद्धिमाप्ये समुद्रतः ॥
सर्वान् कामान् वैश्वदेवे श्रैष्ठ्यन्तु श्रवणे पुनः ।
धनिष्ठायां तथा कामान् वारुणे च परं बलं ॥
अजैकपादे कुप्यं स्यादाहिर्बुध्ने गृहं शुभं ।
रेवत्यां बहवो गावः अश्विन्यान्तुरगांस्तथा ।
याम्ये तु जीवितं तस्य यः श्राद्धं संप्रयच्छति ॥

अथान्यान्यपि ब्रह्मपुराणवचनानि विद्यन्तेऽपि सर्वथा पूर्वाक्रामतिरिक्तार्थानीति न लिख्यन्ते ।

ब्रह्मपुराणे ।

मघासु कुर्वन् श्राद्धानि सर्वान् कामानवाप्नुयात् ।
प्रत्यक्षमर्चितास्तेन भवन्ति पितरः सदा ॥

इति काम्यानि नक्षत्राणि ।

---

## अथ वाराः ।

अथ विष्णुः ।

सततमादित्येऽह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोति । सौभाग्यं चान्द्रे । समरविजयं कौजे । सर्वान् कामान् बौधे । विद्यामभीष्टां जैवे । धनं शौक्रे । जीवितं शनैश्चरे ।

'कौजे' मङ्गलदिने । 'जैवे' वृहस्पतिदिने ।

विष्णुधर्मोत्तरे ।

अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव।
आरोग्यमथ सौभाग्यं समरे विजयं तथा॥
सर्वान् कामांस्तथा विद्यां धनं जीवितमेव च।
आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन् सदा नरः।
क्रमेणैतदवाप्नोति नात्र कार्या विचारणा॥

कूर्मपुराणे।

आदित्यवारे त्वारोग्यं सोमे सौभाग्यमेव च।
कुजे सर्व्वत्र विजयं सर्वान् कामान् बुधस्य तु॥
विद्यामभीष्टान्तु गुरौ धनं वै भार्गवे पुनः।
शनैश्चरे लभेदायुरारोग्यञ्च सुदुर्लभं॥

भविष्यत्पुराणे ब्रह्मोवाच।

ये त्वादित्यदिने प्राप्ते श्राद्धं कुर्वन्ति मानवाः।
सप्त जन्मानि ते जाताः सम्भवन्त्यविरोधिनः॥
पञ्चतारं भवेद्यत्र नक्षत्रं गोवृषध्वजे।
वारे तु देवदेवस्य वासरः पुत्त्रदः स्मृतः॥
उपवासो भवेदत्र श्राद्धं कार्यं तथा भवेत्।
प्राशनं वापि पिण्डस्य मध्यमस्य प्रकीर्त्तितं॥
सोपवासस्तु वै भत्वा पूजयेच्चैव गोपतिं।
धूप-माल्योपहारैस्तु दिव्यगन्धसमन्वितैः॥
एवं पूज्य विवस्वन्तं तस्यैव पुरतो निशि।
भूमौ स्वपिति वै वीर जपन् मेतं महामते॥
प्रातरुत्थाय च स्नानं कृत्वा दत्त्वार्घ्यमुत्तमं।

रक्तचन्दनसंमिश्रैः करवीरैर्गणाधिपं ॥
प्रपूज्य यत्नभूतेशमीशानं तु त्रिलोचनं ।
वीरञ्च पूजयित्वा तु ततः श्राद्धं प्रकल्पयेत् ॥
पञ्चभिर्ब्राह्मणैर्देव दिव्यैर्भौमैश्च सुव्रत ।
दिव्यमङ्गस्तव देवं ब्राह्मणैः परिकल्पयेत् ॥
पित्र्यांस्तु ब्राह्मणान् भौमान् प्रकल्प्यान्धकसूदनं ।
कुर्यादेवं ततः श्राद्धं पार्वणं भास्करप्रियं
श्राद्धे तथ समाप्ते तु मध्यात्पिण्डं सुमध्यमं ।
पुरतो देवदेवस्य स्थित्वा मन्त्रेण सुव्रत ॥
स एष पिण्डो देवेश योऽभीष्टस्तव सर्वदा ।
अश्नामि पुरतस्तुभ्यं येन मे सन्ततिर्भवेत् ॥
प्रसादात्तस्य देवस्य यन्मे प्रार्थयते मनः ।
इत्थं संपूजितो ह्यत्र भास्करः पुत्रदो भवेत् ॥
अतोऽयं पुत्रदो वारो देवस्य परिकीर्त्तितः ।
एवमत्र सदा यस्तु भास्करं पूजयेन्नरः ।
उपवासपरः श्राद्धे स पुत्रं लभते ध्रुवं ॥
धनं धान्यं हिरण्यञ्च आरोग्यं सुखमुत्तमं ।
स्वर्गलोकं स्वयं प्राप्तस्ततो राजा भवेद्भुवि ॥
प्रभया द्विजसंकाशः कान्त्या अन्तकसन्निभः ।
वीर्य्येण गोपतेस्तुल्यो गाम्भीर्य्यः कलशोद्भवः ॥

'अविरोधिनः' प्रत्युक्त्याः । रोहिण्यश्लेषा-मघा-हस्ताख्यानि चत्वारि वै नक्षत्राणि पञ्चताराणि । श्रेष्ठो गौः गोवृषः स ध्वजो यस्य सः

'गोवृष-ध्वजः'। वृष-व्याघ्र-पुङ्गव-कुञ्जराणां श्रेष्ठवाचिनामुत्तरपदे भरतर्षभादिषु दर्शनात्। 'देवदेवः' सूर्यः। उपवासोऽत्र शनैश्चरदिने आ-द्यमादित्यवारे। एतच्च "प्रातरुत्थायेत्यादिना ग्रन्थेन व्यक्तीभविष्यति। मध्यमपिण्डप्राशनमत्र यजमानस्यैव प्रतीयते, श्राद्धान्तरेषु तु पत्न्या वि-हितत्वात् तत्कर्तृकमेव। अन्ये तु दम्पत्योः पुत्रकामयोः सहाधिकारा-द्विशेषाभिधानात् द्वयोरपि पिण्डप्राशनमिति युक्तं। दृश्यते च पुत्रीय-कर्मान्तरे द्वयोरपि हविःशेषप्राशनं। तद्यथा। शतपथे। "क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामित्यादि। तथा तत्रैव होमानन्तरं "ऊत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छतीति। 'गोपतिः' सूर्यः, स च सुवर्णादिप्रतिमादिभविष्यत्पुराणोक्तप्रकारेण व्योम्नि वा पूजनीयः। 'श्वेतः' महाश्वेताख्यः षड्क्षरः सूर्यमन्त्रः श्रों श्वशोल्काय नमः इत्येवंप्रसिद्धः। अर्घ्यदानमन्त्रश्चसूर्याभिमुखो भूत्वा स्थण्डिले कुर्यात्। 'पूजयित्वेति पुनः पूजनोपादानात् पूज्यान्तरावगतौ यथाश्रुतेश्वादयः पञ्च देवताः प्रणवादिभिश्चतुर्थ्यन्तैः स्वनामभिः पीठे पूज्याः। दिण्डी मङ्गा भोजकाख्या ब्राह्मणविशेषास्तेषोत्तरापथे प्रसिद्धाः, तदन्ये भौमाः। अत्र वैश्वदेविकस्थाने मङ्गानुपवेश्य पित्र्यस्थाने ब्राह्मणान्तरानुपवेशयेत्। एवमत्र सदेति विशिष्टफलसाभार्थं श्राद्ध-मित्यवचनं, 'प्रभा' श्रौज्ज्वल्यं, 'द्विजः' चन्द्रमाः। 'कान्तिः' तेजः 'अम्बूकः' वरुणः, "वरुणो वै अम्बूक इति श्रुतेः। वरुणश्चादित्यः, "वरुणो माघमासे तपतीति दर्शनात्। 'गोपतिः' पशुपतिः प्रभुरित्यर्थः। 'कलशोद्भवः' अगस्त्यः, स च गम्भीरतरसमुद्रपानादतिगम्भीरतया विवक्षितः।

ब्रह्मपुराणे ।

भरण्याङ्गारकयुक्ता वा चतुर्थी जायते यदा ।
तस्यां श्राद्धकृदिन्द्रो न प्रेतो जायते नरः ॥

स्कन्दपुराणे ।

अमायां यदि सोमः स्यात् सप्तम्यां वै दिवाकरः ।
चतुर्दश्यां चतुर्थ्यां वा वारः क्ष्मात्मजस्य तु ।
तदा श्राद्धं प्रकर्त्तव्यं पितॄणां तृप्तिमिच्छता ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
गच्छन्ति पितरः स्वर्गे विमानवरमास्थिताः ।
तावन्तमेव कालं हि श्राद्धकर्त्तुस्तथा फलम् ॥

इति काम्या वाराः ॥

---

## अथ काम्याः प्रकीर्णकालाः ।

तत्र विष्णुपुराणे ।

मासि माघसिते पक्षे पञ्चदश्यां नरेश्वर ।
तथाष्टकासु कुर्वीत काम्यान् कालान् शृणुष्व मे ॥
श्राद्धार्हमागतं द्रव्यं विशिष्टमथवा द्विजम् ।
श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥
विषुवे चापि संप्राप्ते ग्रहणे शशि-सूर्य्ययोः ।
समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति ॥
नक्षत्र-ग्रहपीडासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ॥

मार्कण्डेयपुराणे।

कार्य्यं श्राद्धममावास्यां मासि मास्युडुपक्षये।
तथाष्टकास्वप्यवश्यमिष्टं कालं निबोध मे॥
विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने।
विषुवे रविसंक्रान्तौ व्यतीपाते तु पुत्रक॥
श्राद्धार्हद्रव्यसम्प्राप्तौ तथा दुःस्वप्नदर्शने।
जन्मर्क्ष-ग्रहपीड़ासु श्राद्धं कुर्वीत चेच्छया॥

विष्णुरप्याह।

संक्रान्तिविषुवे चैव विशेषेणायनद्वयम्।
व्यतीपातोऽथ जन्मर्क्षं चन्द्र-सूर्य्यग्रहस्तथा॥
इत्येतान् श्राद्धकालांस्तु काम्यानाह प्रजापतिः।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥

ब्रह्मवैवर्त्ते।

अमावास्यां प्रयत्नेन श्राद्धं कुर्य्याच्छुचिः सदा।
सर्वान् कामानवाप्नोति स्वर्गं चान्ते समश्नुते॥
दत्तं दद्यादमावास्यां सोमस्याप्यायनं महत्।
एवमाप्यायितः सोमस्त्रीन् लोकान् धारयिष्यति॥
सिद्ध-चारण-गन्धर्व्वैः स्तूयते नित्यपूजितः।
सर्व्वैः पुष्पैर्मनोज्ञैश्च सर्वकामपरिच्छदैः॥
नृत्य-वादित्र-गीतैश्च अप्सरोभिः सहस्रशः।
उपक्रीड़विमानस्थः पितृभक्तो दृढव्रतः॥
स्तुवन्ति देव-गन्धर्व्वाः सिद्धचारास्तं सदा।

पितृभक्तस्त्वमावास्यां सर्वान् कामानवाप्नुयात् ।
पितृन् देवान् समभ्यर्च्य भक्त्या यतोऽक्षयं फलम् ॥

तथा ।

पुष्टिं प्रज्ञां स्मृतिं मेधां पुत्रानैश्वर्यमेव च ।
कुर्वाणः पौर्णमास्यान्तु सर्वं सम्पूर्णमश्नुते ॥

ब्रह्मपुराणे ।

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यान्तु कर्त्तव्यं वराहवचनं यथा ॥

भाद्रपदमासान्तर्गते यत्र क्वचन दिने कन्याराशौ रविसंक्रमणे जाते तन्मासमध्यवर्त्तिन्यां पौर्णमास्यां नान्दीमुखानां पितॄणां श्राद्धं कर्त्तव्यम् । तच्चावश्यकं "प्रत्यब्दमिति वचनात् । नान्दीमुखशब्देन चात्र प्रपितामहात्परे विवक्षिताः यस्मादस्मिन्नेव पुराणेऽस्य वचनस्यानन्तरमेवोक्तम् ।

ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्रयः ।
प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते ॥ इति ।

अत्र पितामहवचनेन प्रपितामहः लक्षणीयः यदुक्तं ब्रह्मपुराणवचनात् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः सम्प्रकीर्त्तिताः ।
तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ॥ इति।

अत्र नान्दीमुखवचनमेतत्पौर्णमासीनिमित्तकश्राद्धविधिनैकवाक्यतापन्नमाश्वलायनादिसूत्रान्तरे नान्दीमुखशब्देन प्रपितामहात्परे त्रयो न

धाराः। अथैतेषु नान्दीमुखसंज्ञाः किमर्थाः। अथ यथा वसवः पितरो गताः इत्यादौ च वस्वादिभ्योऽवचनादभेददृष्टिविधानार्थः, तथाच वाराहकल्पीयः पितृगणभेदप्रकरणोक्तनान्दीमुखानामितरग-णाभेददृष्टिविधानार्थं उच्यते। तेन अतोऽन्ये अश्रुमुखसंज्ञा इत्या-दिना मङ्गलसुखयोगान्नान्दीमुखशब्दनिष्पत्तिरभिप्रेतेति दर्शितम्। अतो नाभेददृष्ट्युपदेशार्थः। अथ कौण्डपायिनीये मासहोमेऽग्निहोत्र-मिति परशब्दः परत्र प्रयुज्यमानस्तद्भावमापन्नस्यौपमिकाग्निहोत्रध-र्मातिदेशार्थः, तथाच नान्दीमुखशब्दोऽपि पुत्रजन्मादिकालविहित-प्रसिद्धनान्दीमुखधर्मातिदेशार्थः उक्तोत्तरत्वात्। न ह्ययं परशब्दः परवाक्यविवक्षया प्रयुक्तः, किन्तु मङ्गलसुखयोगादिति। अतोऽत्र प्रशंसैव प्रयोजनं मन्यामहे।

हारीतः।

अष्टकामाघाभ्युदयास्तीर्थयात्रोपपत्तयः।
पितॄणामतिरेकोऽयं मासिकार्थो ध्रुवः स्मृतः॥

ब्रह्मवैवर्त्त-वायुपुराणयोः।

अथ काम्यं प्रवक्ष्यामि श्राद्धकर्मणि पूजितम्।
काम्य-नैमित्तिकाजस्रं श्राद्धकर्मविधायिभिः।
पुत्राराधनभूताः पुरस्कालिक एव च॥

इति काम्याः प्रकीर्णकालाः।

---

## अथ सामान्यतः श्राद्धतिथिनिर्णयः।

तत्र यस्यां तिथौ श्राद्धं विहितं सा चेद्दिनद्वयव्यापिनी तदा

यस्मिन्दिने अपराह्णव्यापिनी तत्रैव श्राद्धमनुष्ठेयम्।

तथाच निगमः।

पूर्वाह्णिकास्तु तिथयो दैवकार्य्यफलप्रदाः।
अपराह्णिकास्तथा ज्ञेयाः पित्र्ये तु शुभप्रदाः[1] ॥

दक्षः।

पूर्वाह्णे दैवकार्य्याणि मनुष्याणां च मध्यमे।
पितॄणां चापराह्णे तु कार्य्याण्येतानि यत्नतः ॥

यदा तु दिनद्वये चापराह्णव्यापिनी तदा पूर्वैव ग्राह्या।

यथाह वृद्धमनुः।

यस्यामस्तं रविर्याति पितरस्तामुपासते।
तिथिस्तेभ्यो यतो दत्ता अपराह्णे स्वयम्भुवा ॥

मनुरपि।

यस्यामस्तं रविर्याति पितरस्तामुपासते।
सा पितृभ्यो यतो दत्ता अपराह्णे स्वयम्भुवा ॥

यस्यां अपराह्णसम्बन्धे सत्यस्तमयानुवृत्तिः सा पितृकार्य्ये प्रशस्ता न त्वस्तमयमात्रसम्बद्धेत्यर्थः।

तथाच हारीतोऽपि।

अपराह्णः पितॄणां तु चापराह्णानुयायिनी।
सा ग्राह्या पितृकार्य्ये तु न पूर्वाह्णानुयायिनी ॥

यदा तूभयदिनद्वयेऽप्यपराह्णव्यापिनी न लभ्यते तदापि पूर्वैव।

यथाह वृद्धयाज्ञवल्क्यः।

---

(१) शुभावहा इति ख०।

देवकार्य्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।
पितृकार्य्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः॥

भविष्यत्-सौरपुराणयोः।

प्रातः प्रातस्तपोव्या स्यात् तिथिर्दैवतकेषुभिः।
मूलं हि पितृकार्य्येषु पेयं प्रोक्तं महर्षिभिः॥

नारदीयपुराणेऽपि।

तिथेः प्राक्तं सुराख्यं हि उपोष्यं कवयो विदुः।
पित्र्यं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः॥
पित्र्येऽस्तमयवेलायां स्पृष्टेत्पूर्व्वैर्निगद्यते।
न तत्रौदयिकी ग्राह्या दैवेत्यौदयिकी तिथिः॥ इति।

गोभिलोऽपि।

सायाह्नव्यापिनी या तु पार्व्वणे सा उदाहृता।
सापि मुहूर्त्तव्याप्तितेवास्तमयसम्बन्धिनी ग्राह्या।
तथाच बौधायनः।

उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्य-कव्ययोः॥

मनुः।

यस्यामस्तं रविर्याति पितरस्तामुपासते।
सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयम्भुवा॥ इति।

अपराह्णव्यापिन्येवास्तमयसम्बन्धिनी ग्राह्या न तु तत्कृत्येति-वचनात् प्रतीयते। यतो सायन्तनिककालाभावाच्छ्राद्धमेव न कर्त्तव्यं अनधिकारात्, सत्यं किन्तु यस्तुतः त्रिमुहूर्त्तावा व्याप्ति।

तिथ्यादिषु भवेद्यावान् ह्रासोवृद्धिः परेऽहनि।
तावान् ग्राह्यस्तु पूर्वेद्युरदृष्टोऽपि स्वकर्मणि॥

इति वचनात् अधिककालकल्पनया अपराह्णेऽपि सत्त्वात्। एतद्द्विनपक्षे, साम्ये वृद्धौ तूत्तरैव ग्राह्या।

तथाच व्याघ्रः।

खर्वोदर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्।
खर्व-दर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी॥

एतद्वाक्यविषयविवेकस्तु तिथिविशेषश्राद्धे, शुक्लपक्षे पूर्वाह्णव्यापिनी तिथिर्ग्राह्या, कृष्णपक्षेऽपराह्णव्यापिनी तिथिर्ग्राह्या।

द्वे शुक्ले द्वे तथा कृष्णे युगादीन् कवयो विदुः।
शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके॥

इत्यादिवचनेभ्यः पूर्वाह्णापराह्णौ "आवर्त्तनात् पूर्वाह्णो ह्यपराह्णस्तथापर इति दर्शितौ अह्नः पूर्वापरौ भागौ, इति निर्णयः, शेषं पूर्ववत्। यदा तूभे तुल्यकालैकदेशं व्याप्नुतस्तदा वृद्धौ क्षये साम्येऽप्युत्तरैव न पुनः वृद्धावेवोत्तरा क्षये साम्ये तु पूर्वेति "पूर्वा तु कर्त्तव्येत्यादिवचनस्य मृताहतिथिविषयत्वात् प्रथमातिक्रमे कारणाभावाच्च।

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
विद्यमानोभवेदङ्गं नोच्छ्रितोपक्रमेण तु॥

इत्यादिवचनात्। एकोद्दिष्टादिश्राद्धेषु पुनर्मध्याह्नव्यापिनी ग्राह्या।

तथाच वृद्धगौतमः।

मध्याह्नव्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेत्।

अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥

बौधायनोऽपि ।

मध्याह्नव्यापिनी या तु तिथिः पूर्वापरापि वा ।

तस्यां पितृभ्यो दातव्यं श्राद्ध-शुद्धौ न कारणम् ॥

तथाच हारीतः ।

आमश्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यतः ।

पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

दैविकश्राद्धे तु पूर्वाह्णव्यापिनी तिथिर्ग्राह्या ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

इत्यादिवचनात् तस्य च पूर्वाह्ण एव विधानात् ।

तथाच मनुः ।

पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम् ।

एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

दैविकश्राद्धलक्षणं पारस्करोक्तं ग्राह्यम् ।

देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।

तन्नित्यश्राद्धवत्कुर्याद्द्वादश्यादिषु यत्नतः ॥

इति निर्णयः, शेषं पूर्ववत् । यदापि तिथिवृद्धिवशात् उभे अपि समग्रं कर्मकालं व्याप्नुतः क्षयवशाद्वा कर्मकालं न स्पृशतस्तदाप्युत्तरैव ग्राह्या ।

द्विमुहूर्तं त्रिरह्नो वा सा तिथिर्वृद्धि-क्षययोः ।

उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ ॥

अपराह्णादीनां घटिकैकापि दृश्यते ।

उदये वा तिथिर्ग्राह्या विपरीता तु पैतृकी ॥

इति वचनात् । नन्वस्मादेव वचनात् यदापि पूर्वाह्नं व्याप्नोति उदयेऽपि त्रिमुहूर्त्तादूर्ध्वव्यापिनी पूर्वाह्नं व्याप्नोति तदाप्युत्तरैव कस्मान्न ग्रह्यते "कर्मणोयस्येत्यादेः सामान्यशास्त्रत्वादिति । उच्यते । सत्यं, यत्रोभयदिनेऽपि कर्मकालव्यापिनी तिथिः कर्मकालं न स्पृशति वा तत्र का तिथिर्ग्राह्येति सन्देहे वचनाकाङ्क्षायां सामान्य-शास्त्रादिविशेषशास्त्रस्य प्रौढ्प्रवृत्तेरुक्ता तिथिर्ग्रह्यते। यत्र पुनरेक-स्मिन्नेव दिने विहितकर्मकाले विहिततिथिलाभेन का तिथिर्ग्राह्येति सन्देहाभावान्निर्णायकवचनानवकाशः ।

इति सामान्यतः श्राद्धनिर्णयः ।

---

## अथ प्रेतश्राद्धकालः ।

तत्र तावन्नवसंज्ञकानां श्राद्धानां, तत्र चान्तर्दशाहं क्रियमाणानां नवश्राद्धसंज्ञां निवेशयन्नाश्वलायनोद्दशाहपर्यन्तं नवश्राद्धकालं मन्यते "नवश्राद्धं दशाहानि नवमिश्रन्तु षड्ऋतून्" इति। एतान्तु षट्सख्या देश-कालविभागमेकादशाहिकस्य च नवश्राद्धसंज्ञकत्वमाह, नागर-खण्डे भर्तृयज्ञः ।

पौचि षट्कलशार्थे तानि वै शृणु साम्प्रतम् ।
यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं तु कारयेत्(१) ॥
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ।

---

(१) कल्पयेदिति ग० ।

ततः सद्यञ्चनस्थाने हतीयं श्राद्धमिष्यते ॥
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नवश्राद्धानि तानि वै ।
सञ्ज्ञाश्चायां वैतरिणां ततश्चैमवाप्नुयात् ॥

ब्रह्मपुराणे ।

हतीयेऽहनि कर्त्तव्यं प्रेतदाश्चावणौ द्विजाः ।
सूतकान्ते ग्टहे श्राद्धमेकोद्दिष्टं प्रपद्यते ॥

आह कात्यायनः ।

चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

व्यासः ।

प्रथमे सप्तमे चैव नवमैकादशेऽहनि ।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

आह मनुः ।

आद्यं श्राद्धमशुद्धोऽपि कुर्य्यादेकादशे तथा ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

'आद्यं' नवं ।

पैठीनसिः ।

सद्यःशौचे प्रदातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्ध-शय्यासनादिषु ॥

कूर्मपुराणे ।

प्रेताय च ग्टहद्वारि चतुर्थे भोजयेद्द्विजान् ।

द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म सबान्धवैः ॥
चतुर्थे बान्धवैः सर्वैरस्थ्नां सञ्चयनं भवेत्।
पूर्वान् द्विजान् प्रभुञ्जीत युग्मांश्च श्रद्धया शुचीन्॥
पञ्चमे नवमे चैव तथैवैकादशेऽहनि।
युग्मांश्च भोजयेद्विप्रान् नवश्राद्धन्तु तद्विदुः ॥

ब्रह्मपुराणे।

चतुर्थे ब्राह्मणान् पञ्च पञ्चमेऽहनि भुञ्जतां।
नवमे वैश्यजातीनां शूद्राणां दशमात्परे ॥

ऋषिः।

प्रेतार्थं सूतकान्ते तु ब्राह्मणान् भोजयेत्ततः।
नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि ॥

एवञ्च सत्येकादशाहिकानवश्राद्धादशौचान्ते विधीयमानं ब्राह्मणभोजनं कर्मान्तरमिति गम्यते।

बृहस्पतिः।

चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः।
गावः सुवर्णं वित्तञ्च प्रेतमुद्दिश्य शक्तितः ॥

'चतुर्थेऽहनि' सञ्चयाह इत्यर्थः।

यदिष्टं जीवतस्तस्य यच्चान्यद्दयितं भवेत्।

'तस्य' प्रेतस्य, 'जीवतः', 'यदिष्टं' किञ्चिद्भोज्यं, यच्चान्यद्दयितमित्यर्थः।

इति नवश्राद्धकालः।

---

## अथ षोडशश्राद्धानीत्येवंप्रसिद्धानां प्रेतश्राद्धानां कालः ।

तत्र ब्रह्मपुराणे ।

नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसङ्ख्यया ।
कर्त्तव्याः श्रुतितस्तेषां तत्र विप्रांस्तु भोजयेत्(१) ॥

श्राद्धकल्पः ।

द्वादश प्रतिमासानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव इत्येतच्छ्राद्धषोडशम् ॥

षाण्मासिके इत्येतेन विहितयोः श्राद्धयोर्निरूपणमाह ।

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा ॥

एकेनाह्ना त्रिभिर्वा यदा षण्मासा न्यूनाः स्युः संवत्सरश्च तदा षाण्मासिकाब्दिके श्राद्धे कर्त्तव्ये इत्यर्थः ।

भविष्यत्पुराणे ।

अखिलश्चयने श्राद्धं त्रिपक्षे मासिकानि च ।
दिनयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश ॥

दिनयोस्तिथ्योरित्येकेनाह्ना न्यूने षष्ठे द्वादशे च मास इत्यर्थः ।

तथा पैठीनसिः ।

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।

(१) तर्पयेदिति ख० ।

मासिकानि स्वकीये तु दिवसे द्वादशेऽपि च ॥

तथा ।

सपिण्डीकरणादर्वाक्कुर्य्यात् श्राद्धानि षोड़श ।
एकोद्दिष्टविधानेन कुर्य्यात्सर्वाणि तानि तु ॥

ब्रह्मपुराणे ।

द्वादशेऽहनि मासे च त्रिपक्षे च ततः परम् ।
मासि मासि तु कर्त्तव्यं यावत्संवत्सरं द्विजैः ॥
ततः परतरं कार्य्यं सपिण्डीकरणं क्रमात् ।
कृते सपिण्डीकरणे पार्वणं चोच्यते पुनः ।
ततः प्रभृति निर्मुक्तः प्रेतत्वात् पितृतां गतः ॥

व्याघ्रपादः ।

एकादशे चतुर्थे च मासि मासि च तत्परम् ।
प्रतिसंवत्सरञ्चैवमेकोद्दिष्टं मृताहनि ॥

अग्निमत्प्रेतश्राद्धे विशेषमाह कात्यायनः ।

श्राद्धमग्निमतः कार्य्यं दाहादेकादशेऽहनि ।
ध्रुवाणि तु प्रकुर्वन्ति प्रमीताहानि सर्वदा ॥

त्रिपक्षिकादूर्द्ध्वानि 'ध्रुवाणि' । अतएव आत्मकर्ण्यः ।

ऊर्द्ध्वं त्रिपक्षात् यत् श्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥ इति ।

हारीतस्त्वसमर्थविषये मासिकानां कालविकल्पमाह ।

मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति ।
द्वादशाहेन वा कुर्य्यादेकाहे द्वादशाथ वा ॥ इति ।

अथोपरितने प्रकरणे वृद्धाद्युपस्थितानां सपिण्डीकरणापकर्षं वक्ष्यते तन्निबन्धनं च मासिकानामपकर्षं पुनराद्यन्तिम्य तत्रैव वक्ष्यामः, अत्र च मासिकानि मासोपक्रम एव कर्त्तव्यानि। तथाहि मासंबन्धि मासिकं, माससंबन्धश्च मासान्तर्गतदिनसंबन्धेनाप्युपपद्यते, एवञ्च प्रथमातिक्रमे कारणाभावात् मासोपक्रम एव कर्त्तव्यता नि-श्चीयते। एवञ्च "प्रथममासिकोनमासिक-द्वितीयमासिक-त्रैपक्षिक-तृतीय-चतुर्थ-पञ्चमोनषाण्मासिक-षाण्मासिक-सप्तमाष्टम-नवम-द-शमैकादशमासिकोनाब्दिकानि षोड़श श्राद्धानि क्रमेण दद्यादिति कल्पसूत्रविहितक्रमोऽप्युपपद्यते। अन्यथा स न स्यात् षाण्मासिकस्यो-नषाण्मासिकोत्तरकालत्वात्, एवमन्यत्रापि। यत्तु "ततो द्वादश-भिर्मासैः श्राद्धानि दशपञ्चयेति वचनान्मासान्ते मासिकं कार्य्यमि-त्युक्तं, तद्विचारासहत्वादुपेक्षणीयं। तस्मादाचारानुगुण्याच्च मासोप-क्रम एव मासिकानीति सिद्धम्।

इति षोड़शश्राद्धानीत्येवंप्रसिद्धानां कालः।

---

## अथ सपिण्डीकरणकालः।

तत्र यथाकालं दशसु मासिकेषु अनुष्ठितेषु पूर्णे संवत्सरे तदूर्द्ध-निरग्निकोऽनग्निकसपिण्डीकरणस्य कालः।

तथाच मार्कण्डेयपुराणे मासिकान्तानि श्राद्धान्युक्ताभिहितम्।

अथ संवत्सरे पूर्णे यथावत्क्रियते नरैः।

सपिण्डीकरणं सम्यक् तत्रापि विधिरुच्यते॥

कालश्चानग्निककर्तृकानग्निमद्दैवत्यसपिण्डीकरणाङ्गत्वं नैमित्तिकं च कालान्तरमुक्तं भविष्यत्पुराणे ।

सपिण्डीकरणं कुर्य्यात् यजमानो ह्यनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥

अयञ्च पुलस्त्येन ।

निरग्निकः सपिण्डत्वं पितुर्मातुश्च धर्मतः ।
पूर्णे संवत्सरे कुर्य्यात् वृद्धिर्वा यदहर्भवेत् ॥

'वृद्धिः' चौल-मौञ्जी-विवाहादिरूपोऽभ्युदयः। उपलक्षणं चैतत्। नान्दीश्राद्धनिमित्तभूतस्य कर्ममात्रस्य, एतत् "स्वाध्यायाध्ययनाद्युपसमाप्तावित्युशनोवचने "कर्तुर्नान्दीमुखमिति शाट्यायनवचने च स्फुटीभविष्यति। सेषा यस्मिन् दिने वृद्धिरापद्येत ततः प्रागेवापकृष्य सपिण्डीकरणं कृत्वा तदङ्गभूतं नान्दीमुखसंज्ञितं श्राद्धं कुर्य्यादित्यर्थः। अनेन प्रवृत्ताधिकारस्योपरिसमापितप्रेतश्राद्धस्य चौल-मौञ्जी-विवाहाधानादौ तदङ्गभूतेन नान्दीमुखश्राद्धेनाधिकारोऽपि दर्शितः।

आह लघुहारीतः ।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च ।
सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः ॥

नागरखण्डे ।

ततः सपिण्डीकरणं वत्सरादूर्द्धतः स्मृतम् ।
वृद्धिर्वा गामिनी चेत्स्यात् तदर्वागपि कारयेत् ॥

आधानाङ्गभूतान्नान्दीश्राद्धात् प्रागपकर्षमभिप्रेत्याह उशनाः ।

पितुः सपिण्डीकरणं वार्षिके मृतवत्सरे ।

आधानाद्युपनयनाद्यावेतत्प्रागपि वत्सरात् ॥

तत्र चापकर्षमात्रे सपिण्डीकरणे तदन्तमपकर्षं स्यादिति व्याख्यात् पूर्व्वाणि मासिकादीन्यपकृष्य कृत्वा सपिण्डीकरणं कर्त्तव्यम्।

इदमिष्टोऽप्याह ।

श्राद्धानि षोड़शादत्त्वा नैव कुर्य्यात् सपिण्डनम् ॥
तच्छ्राद्धौ तु कृते प्रेतः पितृत्वं नोपपद्यते ॥

अपकर्षपक्ष एवैतत्, अनपकर्षे तु क्रमविधानादेव तत्सिद्धिः ।

अतएव शाट्यायनिः ।

प्रेतश्राद्धानि सर्व्वाणि सपिण्डीकरणं तथा ।
अपकृष्य प्रकुर्व्वीत कुर्व्वन्नान्दीमुखं ततः ॥

यत्तु लौगाक्षिवचनम् ।

यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भञ्च देयं तस्यापि वत्सरम् ॥ इति ।

तत्तु तदन्तापकर्षन्यायेन कृतेष्वपि मासिकेषु "तान्येव तु पुनः कुर्य्यादिति कल्पसूत्रकारवचनोक्तपुनरनुष्ठानविषयत्वेन व्याख्येयम्।

अपकृष्येत्यनुवृत्तावाह उशनाः ।

वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।
श्राद्धी स नरके घोरे पितृभिः सह पच्यते ॥

अनुपस्थितायां वृद्धौ यः प्रेतश्राद्धान्यपकर्षेदित्यर्थः। वृद्धिश्राद्धमन्तरेणानपकर्षोऽयं समर्थविषयः। असमर्थविषये तु वृद्धिश्राद्धप्रत्युपस्थानं विनाप्यपकर्षणम् ।

अपकृष्यमाणस्य च कालविशेषमाह गोभिलः ।

पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यद्दर्वां वृद्धिरापद्येतेति । अत्र केचित् "पूर्णे संवत्सरे यद्दर्वां वृद्धिरापद्येतेत्येतयोः पक्षयो-रनग्निकैकविषयत्वं "षण्मासे त्रिपक्षे वेत्येतयोस्तु साग्निकैकविषयत्व-मिति व्यवस्थां मन्यन्ते उद्भावयन्ति चात्र पैठीनसिवचनम् ।

त्रिपक्षेऽग्निमतः कालो वृद्धौ चेष्टापूर्त्तकर्मसु ।
सपिण्डीकरणं कुर्यात् पूर्णे सम्वत्सरेऽपि च ॥ इति ।

अनग्निमत्सपिण्डीकरणवचनान्यप्युपन्यस्यन्ति । तत्रेदं वक्तव्यं यद-ग्निमत्त्वविशेषणवत्त्रिपक्षादिपक्षाः सन्ति सन्तु ते तथा संवत्सरान्ते कर्त्तुं समर्थस्यापि मुख्यकल्पाः(१) । अनग्निकस्य त्वसामर्थ्यप्रयुक्ताः प्रकृतगोभिलवचनोक्तसंवत्सरपक्षेणैकवाक्यतां गताः सन्तः सन्त्वनुकल्पाः । चतुर्विंशतिमते ।

सपिण्डीकरणं चाब्दे सम्पूर्णेऽभ्युदयेऽपि वा ।
द्वादशाहे तु केषाञ्चित् मतमेकादशे तथा ॥

इत्यनग्निकसपिण्डीकरणकालः ।

---

## अथ साग्निकसपिण्डीकरणकालः ।

तथाह लघुहारीतः ।

अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा त्वहौ ।
प्रेतश्चेदग्निमांस्तु स्यात् त्रिपक्षे वै सपिण्डनम् ॥

अत्र त्वहौ श्राद्धकर्त्ता यद्याहवनीयरहितः प्रेतस्त्वाहवनीयवान्

---

(१) मुख्यकाला इति ख० ।

भवेत् तदा स कर्त्ता तस्य प्रेतस्य मृताहदिवसादारभ्य षण्मासे पूर्वं सपिण्डीकरणं कुर्य्यात्।

तथा।

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् यदा।
द्वादशाहे भवेत्कार्य्यं सपिण्डीकरणं सुतैः।

अत्र मृताहादारभ्य द्वादशे दिने इति वेदितव्यम्।

आह कात्यायनः।

एकादशाहं निर्वर्त्त्य पूर्वं दर्शाद्यथाविधि।
प्रकुर्वीताग्निमान् विप्रो मातापित्रोः सपिण्डनम्॥

अस्याभिप्रायः। अग्निमता अमावास्यायां पिण्डपितृयज्ञः पिण्डा-न्वाहार्य्यकश्च कर्त्तव्यम्। तच्च प्रमीतमातापितृकस्य सपत्नीकपित्रादि-देवत्यं। न चाकृतसपिण्डीकरणयोस्तयोर्दर्शश्राद्धादौ देवतात्वमुप-पद्यते तस्य सपिण्डीकरणकालिकत्वस्मरणात्। अतः पिण्डपितृ-यज्ञश्राद्धयोः लोपो मा भूदिति मत्वाग्निमान् विप्र एकादशाहे कर्त्तव्यं प्रेतकार्य्यं निर्वर्त्त्य दर्शात् प्रागेव यस्मिन् कस्मिन्नहनि मातापित्रोः सपिण्डीकरणं कुर्य्यादिति।

अतएवाह प्रजापतिः।

नासपिण्ड्याग्निमान् पुत्त्रः पितृयज्ञं समाचरेत्।
न पार्व्वणं नाभ्युदयं कुर्व्वन् लभते फलम्॥ इति।

विप्रग्रहणमुपलक्षणं क्षत्रियादिष्वपि न्यायस्य तुल्यत्वात्।

पक्षान्तरमाह हारीतः।

या तु पूर्व्वममावास्या मृताहाद्दशमी भवेत्।

सपिण्डीकरणं तस्याः कुर्यादेव सुतोऽग्निमान् ॥

मृताहादारभ्य षष्ठमासमध्ये भवति तस्मात् परा यामावास्या तस्यामित्यर्थः ।

अतएवाह आश्वलायनः ।

सपिण्डीकरणं कुर्यात्पूर्वेद्यर्षेऽग्निमान् सुतः ।
परतो दर्शादौ वा पूर्णेऽब्दे च तथापरः ॥

मृताहमारभ्य दर्शादौ तस्मात् परतो यः प्रथमो दर्शो भवेत् तस्मिन्नग्निमान् सुतः पित्रोः सपिण्डीकरणं कुर्यादित्यर्थः । दर्शादौ-ग्रहणं आग्नौचोपलक्षणार्थं । तदेवं साग्निकस्य षट् सपिण्डीकरण-काला उक्ता भवन्ति, द्वादशाहः, दशाहात्परकालीनाया अमा-वास्यायाः पूर्वं किमप्येकमहः, दशाहात्परममावास्या चेति ।

इति साग्निकसपिण्डीकरणकालाः ।

इति त्रैवर्णिकानां ।

---

## अथ शूद्रस्य सपिण्डीकरणकालः ।

तत्र सपिण्डीकरणं कर्त्तव्यमित्यनुवृत्तौ विष्णुः ।

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितम् ॥ इति ।

अमावास्याश्राद्धकारिशूद्रविषयमेतदिति वृद्धाः, वचनबलाद्दा-शौचमध्य एव श्राद्धाङ्गीकरणम् ।

इति शूद्रस्य सपिण्डीकरणकालः ।

---

## अथ सांवत्सरिककालनिर्णयः ।

### तत्र तावत् क्षयाहनिर्णयः ।

ब्रह्मपुराणे ।

प्रतिसंवत्सरं कार्य्यं मातापित्रोर्मृतेऽहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

मात्रादीनां श्राद्धं कार्य्यमित्यनेनार्थात् पुत्रादीनां कर्त्तव्यमुक्तं । एतच्चाधिकारिमात्रोपलक्षणार्थं । भ्रातुरित्यत्राऽपुत्रस्येत्यनुवर्त्तनीयं । ज्येष्ठस्येत्यनेन तु कनिष्ठस्य भ्रातुर्नावश्यकं सांवत्सरिकमिति दर्शितं । तथाच ।

न पुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः ।

इति नियताधिकारनिराकरणात् । स्नेहादिना त्वनियतेनाधिकारेण पुत्रस्य कनिष्ठस्यापि सांवत्सरिकं कर्त्तव्यमेव ।

तथाचोक्तं ।

अपि स्नेहेन कुर्य्यातां सपिण्डीकरणं विना । इति ।

प्रभासखण्डे ।

मृताहनि पितुर्यस्तु न कुर्य्याच्छ्राद्धमादरात् ।
मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि ।
नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः ॥

भविष्यत्पुराणे ।

सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतम् ।
क्रियते यत् खगश्रेष्ठ मृतेऽहनि बुधैः सदा ॥

मृतेऽहनि पितुर्यस्तु न कुर्य्याच्छ्राद्धमादरात् ।
मातुश्च खगशार्दूल वत्सरान्ते मृतेऽहनि ॥
नाहं तस्य खगश्रेष्ठ पूजां प्रतीच्छामि नो हरिः ।
न ब्रह्मा न च वै रुद्रो न चान्ये देवतागणाः ॥
तस्माद्यत्नेन कर्त्तव्यं वर्षे वर्षे मृतेऽहनि ।
नरेण खगशार्दूल भोजकेन विशेषतः ॥
भोजको यस्तु वै श्राद्धं न करोति खगाधिप ।
मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि ॥
स याति नरकं घोरं तामिस्रं नाम नामतः ।
ततो भवति दुष्टात्मा नगरे शूकरः खगः ॥

तत्र मृताहशब्देन मरणावच्छिन्ना तिथिर्विवक्षिता संवत्सरान्ते मुख्यमृताहस्यासम्भवात् । न हि तान्येवाहानि परिवर्त्तन्ते । न च्छ्राद्धं प्रातिस्विकं नामास्ति चिह्नं वा, यतो यत्र क्वचिदह्नि सांवत्सरिकं प्राप्नुयात् । संवत्सरान्तमहर्गणनेति चेत् । न । मृताहपदस्यानर्थक्यापत्तेः । अतो मरणावच्छिन्ना तिथिर्विवक्षिता । अहर्ग्रहणं रात्रेरप्युपलक्षणार्थं, तेन रात्रिमृतस्यापि सा तिथिर्लभ्यते, एवञ्च संवत्सरान्ते मृताहसम्बन्धिन्यां तिथौ सांवत्सरिकं कर्त्तव्यमिति लभ्यते ।

अत्र च ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥
यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ॥

सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥

इति देवलादिवचनानुसाराद्यथा कर्मकालेऽविद्यमानाया अपि तिथेः सम्पूर्णत्वकल्पनया ग्रहणं न तथा मृताहवर्त्तिन्यास्तिथेर्मरण-सम्बन्धितया ग्रहणं किन्तु मरणकालिक्या एव। अतः सांवत्सरिके मृताहशब्देनोक्ता मरणकालिक्येव तिथिर्वेदितव्या।

तदाह नारदीयपुराणे वशिष्ठः।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ॥

'तात्कालिकी' यस्मिन् काले उपवासादिव्रतपारणं मरणं वा तात्कालिक्येव तयोस्तिथिः, न पुनरतत्कालवर्त्तिनी प्रातरादिषु त्रिमुहूर्त्तादिमाना, पित्र्ये सांवत्सरिकादौ अस्तमयवेलायां अप-राह्णःस्पृष्टापि मरणकालिकी तिथिः सम्पूर्णा निगद्यते, एतदुक्तं भवति मरणकालिक्यां तिथौ सांवत्सरिके कर्त्तव्ये प्राप्ते यदि सायमस्तमयवेलायामपि दिनान्तेऽस्ति तदा सा कुतपापराह्णयोरस्तीति मत्वा तदुपलक्षित एव दिवसे कुतपकालिकं श्राद्धं कर्त्तव्यमिति। अत्र चात्र मृताहशब्देनोपलक्षणत्रयविशिष्टमहोरात्रमभिप्रेतं।

तदाह व्यासः।

मास-पक्ष-तिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि।
प्रत्यब्दं तत्तथाभूतं क्षयाहं तस्य तं विदुः॥ इति।

'तथाभूतमित्युपलक्षणत्रयोपेतं।

अत्र च सांवत्सरिकादिपितृकार्य्ये चान्द्रस्यैव मासस्य ग्रहणमाह व्यासः।

विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्ये च मासश्चान्द्रमसः स्मृतः ॥ इति ।

लघुहारीतः ।

चक्रवत्परिवर्त्तेत सूर्य्यः कालवशाद्यतः ।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् ॥
मासचिह्नं तु कर्त्तव्यं पौष-माघाद्यमेव हि ।
यतस्तच्च विधानेन मासः स परिकीर्त्तितः ॥

पौषादिसंज्ञा चान्द्रस्यैव, तथाहि पुष्येण युक्तश्चन्द्रो यस्यां पौर्णमास्यां सा पौषी सा यस्मिन्मासे स पौषो मासः, एवं माघादयोऽपि ।

तदाह पाणिनिः ।

नक्षत्रेण युक्तः कालः तस्मिन् पौर्णमासीति संज्ञायामिति ।

न च सौर-सावनयोरेवंविधास्ति संज्ञा एवंविधपौर्णमासीयोगनियमो वा, अतः सांवत्सरिकादौ चान्द्र एव मासो ग्राह्यः ।

यत्पुनर्वचनम् ।

यस्मिन् राशौ गते सूर्य्ये विपत्तिं याति मानवः ।
तद्राशावेव कर्त्तव्यं पितृकार्य्यं मृतेऽहनि ॥

तदेतदधिमासमृतविषयं ।

अधिमासविपत्तिश्चेत् सौरं मानं समाश्रयेत् ।
स एव दिवसस्तस्य श्राद्ध-पिण्डोदकादिषु ॥

अथ क्षयाहद्वैधे निर्णयः । तत्र क्षयाहश्राद्धे तिथिद्वैधे कर्मकालव्यापिनी ग्राह्या ।

यदाह व्यासः।

कर्म्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।

तया कर्म्माणि कुर्वीत ह्रास-वृद्धी न कारणम्॥

स्कन्दपुराणे।

यस्मिन् काले तु यत्कर्म तत्कालव्यापिनी तिथिः।

तत्र सांवत्सरिकं द्विविधं पार्वणमेकोद्दिष्टं च, तत्र पार्वणस्यापराह्णः कालः एकोद्दिष्टस्य मध्याह्नः।

तथाच वृद्धगौतमः।

मध्याह्नव्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेत्।

अपराह्णव्यापिनी या तु पार्वणे सा तिथिर्भवेत्॥

अत्र केचिदाहुः। यदा तिथिसाम्ये द्वयोरपि तिथ्योरपराह्णसम्बन्धस्तदानीं पार्वणेतिकर्त्तव्यताके सांवत्सरिके पूर्व्वैव तिथिर्ग्राह्या, तत्र यद्यपि परस्मिन्नपि दिने कर्म्मकालव्याप्तिसम्भवः तथापि प्रथमातिक्रमे कारणाभावात् पूर्वस्मिन्नेवाहनि श्राद्धम्।

आह सुमन्तुः।

दिनद्वयव्यापिनी चेत्स्यात् मृताहस्य तु या तिथिः।

पूर्व्वस्यां निर्वपेत्पिण्डमित्याङ्गिरसभाषितम्॥

वृद्धयाज्ञवल्क्यः।

देवकार्य्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।

पितृकार्य्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः॥

शिवरहस्य-सौरपुराणयोः।

प्रातः प्रान्त उपोष्या स्यात्तिथिर्दैवफलेप्सुभिः।

मूलं हि पितृदृष्ट्यर्थं पैत्रं प्रोक्तं महर्षिभिः ॥

'मूलं' आरम्भः।

नारदीयपुराणेऽपि।

तिथेः प्रान्तं सुराख्यं हि उपोष्यं कवयो विदुः।
पैत्रं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः ॥

निगमः।

पूर्व्वाह्णिकास्तु तिथयो देवकार्य्ये फलप्रदाः।
अपराह्णिकास्तथा ज्ञेयाः पित्र्यर्थे तु सुखावहाः ॥

अत्रापराह्णः सूक्ष्मकालप्रकरणे वक्ष्यमाणेष्वपराह्णेष्वन्यतमो वेदितव्यः।

तथाच शिवरहस्य-ब्रह्मवैवर्त्त-सौर-नारदीयपुराणेषु।

दर्शश्च पौर्णमासश्च पितुः सांवत्सरं दिनम्।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ इति।

तदेवं तिथिसाम्ये पूर्वा प्राप्नोति सिद्धम्।

वैषम्ये त्वाह बौधायनः।

या तिथिस्तदहोरात्रं यस्यामभ्युदियाद्रविः।
वर्द्धमानस्य पक्षस्य ह्रासे लस्तमियाद्रविः ॥

ह्रासावेव विषयीकृत्य स एवाह।

अपराह्णद्वयव्यापी प्रमीतस्य यदा तिथिः।
क्षये पूर्वा तु कर्त्तव्या वृद्धौ कार्य्या तथोत्तरा।

यत्तु व्याघ्रेण तिथिसाम्येऽपि परतिथिपक्षवस्तुतं।

खर्व्वो दर्पस्तथा हिंस्रा त्रिविधं तिथिलक्षणम्।

खर्व्व-दर्पौ परौ पूर्व्वौ हिंसा स्यात् पूर्व्वकालिकी ॥

तदेतत्सामान्यशास्त्रं यथाश्रुत्यतिरिक्ततिथिविषयमाश्रयद्दिनद्वयसमव्याप्तपराह्णव्यापित्वे तिथिवृद्धौ परैव प्राप्नोति। तदयुक्तं। यदा हि तिथिवृद्धिवशाद्दिने अपि समयं अपराह्णं व्याप्नुतस्तदा साम्यवद्वृद्धावपि "द्युव्यापिनी चेत्स्यादित्याद्यनेकवचनवशात् "प्रथमं वा नियम्येत कारणादतिक्रमः स्यादित्यनेनैव न्यायेन पूर्व्वतिथिग्रहणस्य युक्तत्वात्। तथा दिनद्वये अपराह्णैकदेशव्यापित्वसाम्ये पूर्व्वेति वक्ष्यते। तथा दिनद्वयसमव्याप्तपराह्णव्यापित्वे वृद्धावपि पूर्व्वेति, तच्च साम्ये तिथिः पूर्व्वैव ग्राह्या। यद्यपि "द्युव्यापिनी चेत्स्यादिति वचनानि यथाश्रुततिथिसाम्यव्यतिरिक्तविषयत्वेनाप्युपपद्यन्ते सर्व्वशास्त्रस्य ह्युततिथिसामान्यव्यतिरिक्तसाम्यविषयत्वेन, तथापि बहुशास्त्रानुरोधात् सर्व्वशास्त्रमेव बाध्यत इति चेत्। न। वृद्धावपि तुल्यत्वात्। "अपराह्णद्वयव्यापी प्रमीतस्य यदा तिथिरित्यादिवचनस्य तुल्यापराह्णैकदेशद्वयव्यापितिथिद्वयविषयत्वात् अन्यथा तिथिक्षये समस्तापराह्णद्वयव्यापित्वासम्भवात्, "क्षये पूर्व्वा तु कर्त्तव्येत्यभिधानानुपपत्ते वाक्यभेदप्रसङ्गाच्च न वाक्यद्वयकल्पना युक्ता। यद्यपि पौरुषेयत्वाद्वाक्यभेदो न दोषायेति मन्यसे, तथापि अनेकवचनन्यायविरुद्धकल्पना निष्प्रामाणिकी।

ये त्वाहुः यदा अमावास्या दिनद्वयेऽप्यपराह्णसम्भविनी तदा क्षये पूर्व्वा वृद्धौ साम्ये चोत्तरा।

सिनीवाली कुहूश्चैव भुञ्जते श्राद्धकर्म्मणि(१)।

---

(१) पितृकर्म्मणीति ख०।

स्नातान्ते चेत्तु मध्याह्ने श्राद्धादि स्यात् कथं तदा ॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूः स्मृता(१) ।
साम्येऽपि च कुहूर्ज्ञेया वेदे-वेदाङ्गवेदिभिः ॥

इति वचनात् । श्राद्धान्तरेऽप्येवं पार्वणविकारत्वात् तथा । तथाचोक्तं व्यासेन ।

द्वितीयादिषु युग्मानां पूज्यता नियमादिषु ।
एकोद्दिष्टक्रियादौ हि-ह्रासादिचोदनात् ॥ इति ।

तदयुक्तम् । उदाहृतवचनवाक्यविरोधात् । तेन यदा तिथिर्वृद्धिवशाद्दिनद्वयेऽपि समयापराह्णव्यापिनी तदा पूर्वैव, साम्ये तु दिनद्वये समयापराह्णव्यापिनीति न तत्रास्य प्रसक्तिः । यदोभे अपि समयापराह्णं न व्याप्नुतः तदा चाधिकापराह्णव्यापिनी या ग्राह्या ।

तथाच हारीतः ।

अपराह्णं पितृणान्तु यापराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वास्तानुयायिनी ॥

यदा तु द्वितीयेऽहनि स्वल्पमपराह्णं व्याप्नोति पूर्वैवैकदेशव्यापिनी तदा द्वितीयैवारम्भयोगित्वादपि ग्राह्या ।

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।
विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु ॥

इति विष्णुवचनात् । अन्यथाप्यारम्भयोगिन्या एव तिथेर्ग्रहणमुक्तं ।

व्रतविद्याप्यमावास्या प्रतिपन्निश्चितापि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिनी ॥ इति ।

---

(१) कुहूर्मतेति म० ।

मत्स्यपुराणेऽपि कुतप एवारम्भो विहितः ।

मध्याह्ने सर्व्वदा यस्मान्मन्दीभवति भास्करः ।

तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥ इति ।

न च "भूतविद्धाप्यमावास्येत्यमावास्यायामेवायं विशेषः नान्य-त्रेति वक्तव्यं, यतः ।

मध्याह्नव्यापिनी या तु तिथिः पूर्व्वा परापि वा ।

इति तिथिमात्रावगतेः । यदा तूभे अपि तुल्यमपराह्णैकदेशं व्याप्नुतः तदा तिथिवृद्धौ परैव ग्राह्या क्षये साम्येऽपि पूर्व्वैव । तदुक्तम् ।

अपराह्णद्वयव्यापी प्रमीतस्य यदा तिथिः ।

क्षये पूर्व्वा तु कर्त्तव्या वृद्धौ कार्य्या तथोत्तरा ॥

"दर्शश्च पूर्णमासं चेत्युदाहृतवचनाच्च । साम्येऽपि पूर्व्वैव "द्युचर्य्या-पिनीत्यादिवचनात् । खर्व्वशास्त्रन्तु क्षयाहविषयबहुवाक्यानुरोधात् तद्व्यतिरिक्तविषयं ज्ञेयं अतएवोदाहृतवाक्ये खर्व्वग्रहणं न कर्त्तव्यं । यदा पूर्व्वा सायाह्नव्यापिनी चापराह्णं स्पृशति तदा पूर्व्वैव ग्राह्या ।

तदुक्तं मनुना ।

द्युचर्य्यापिनी चेत् स्यात्[१] मृताहस्य यदा तिथिः ।

पूर्व्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदि ॥

तथाच बौधायनः ।

उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ ।

द्विमुहूर्त्ता त्रिरह्नश्च सा तिथिर्हव्य-कव्ययोः ॥ इति ।

अस्यार्थः । भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं 'दैवतं' देव-

(१) चरणमेतत् सर्व्वेष्वादर्शपुस्तकेषु समाक्षरयुक्तमेव वर्त्तते ।

देवत्यं, तस्मिंश्चास्तमिते तत्कालीनमह्नो मुहूर्त्तचयं 'पित्र्यं' पितृदेवत्यं, अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमाद्धव्य-कव्ययोर्ग्राह्येति तदेवमस्तमयात्पूर्वं त्रिमुहूर्त्ता ग्राह्येति स्थिते यद्भविष्यत्पुराणोक्तम् ।

व्रतोपवास-स्नानादौ घटिकैकापि या भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके ॥ इति ।

'विपरीता' अस्तमयसम्बन्धिनी ।

यच्च व्यासोक्तम् ।

अस्तसमयवेलायां कलामात्रापि या भवेत् ।
सैव प्रत्याब्दिके ग्राह्या नेतरा पुत्रहानिदा ॥ इति ।

यच्च वसिष्ठोक्तम् ।

पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते । इति ।

तदेतत्पूर्वदिनापराह्णत्रिमुहूर्त्तव्यापिन्याः "किं पुनर्न्यायेन प्रशंसार्थं, न तु घटिकादिमात्रकालीनायाः परिग्रहार्थं, तथाविधायाः कर्मापर्य्याप्तत्वात् उत्तरदिने कर्मपर्य्याप्तापराह्णव्यापिकालाभाच्च ।

अतएव हारीतः ।

अपराह्णः पितृणान्तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्य्ये तु पूर्वा नास्तानुयायिनी ॥ इति ।

भविष्यत्पुराणेऽपि ।

व्रतोपवास-नियमे घटिकैका यदा भवेत् ।
सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकी ॥

अस्तादिशब्दाश्चापराह्णपरा एव ।

तथाच वृद्धमनुः ।

यस्मामस्तं रविर्याति पितरस्तामुपासते।
तिथिस्तेभ्यो यतो दत्ता ह्यपराह्णे स्वयम्भुवा॥

मनुरपि।

यस्मामस्तं रविर्याति पितरस्तामुपासते।
सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयम्भुवा॥

न चास्तमययोगिन्या ग्रहणं युक्तं, अस्तमयसमये श्राद्धनिषेधात्। अपराह्णेऽपि श्राद्धनिमित्ततिथ्यभावे यदि श्राद्धं क्रियते तदा तामुपासते इत्यनुपपन्नम् अपराह्णस्य दत्तत्वेन हेतुवन्निगदार्थवादानुपपत्तेश्च तामुपासत इत्यविध्यश्रुतेः। अस्तमयशब्देनापि केवलेनाग्नौ तिष्ठतीतिवत्समीपलक्षणयापराह्णो लक्ष्यते, "अग्निः प्रातर्दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदे नास्तमेति वेदैरशून्यस्त्रिभिरेति सूर्य्य इत्यत्रास्तमेतीत्येतावन्मात्रं विवक्ष्यते तदा अपराह्णे देवसम्बन्धाभावात्तदेव शून्य इत्युपसंहारो नावकल्प्येत, तस्मात् 'अस्तमेति' अस्तसमीपे अपराह्णे एतीत्यर्थो ग्रहीतव्यः। एवं सति यत्र यत्रास्तमयसम्बन्धिन्यां तिथौ श्राद्धं विधीयते तत्र तत्र तस्यां अपराह्णव्यापिन्यां तिथौ श्राद्धं विहितमभिमन्तव्यम्। अन्यथा कुतपरौहिणापराह्णवाक्यैर्विरोधः स्यात्।

अस्तमयवेलायां कलामात्रापि वा तिथिः।
सैव प्रत्याब्दिके श्राद्धे न परा पुत्रघातिनी॥

इति वचनादस्तमयमात्रकाले या तिथिः सैव प्रत्याब्दिके श्राद्धे गृह्यते चेत्तदास्तमयकाल एव श्राद्धं प्राप्नोति वचनबलात्। अथ सन्ध्याकाले तत्समीपे च श्राद्धप्रतिषेधात् तदा न क्रियत इति

प्रयुज्येत तत्रापराह्न कालेऽन्यतिथेरभावेन श्राद्धकरणे सैव प्रत्याब्दिके इति विधेर्थो नानुष्ठितः स्यात्। इतरस्यां पुत्रहानिदायां प्रतिषिद्धायां तिथावनुष्ठानं भवेत्।

यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु॥
यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु॥

इति देवलवचनाभ्यां उदयास्तमययोगिन्योस्तिथ्योः सकलत्वाभिधानात् यदा कदाचित्कृतं कर्म विहिततिथावेव कृतं भवतीति चेत्। न। यथास्तमयसम्बन्धेन पूर्वेद्युस्तस्याः सकलत्वं तथैव परेद्युरप्युदयसम्बन्धेन सकलत्वात्। अस्तमयवेलायां दिनद्वयेऽपि विद्यमानत्वेन न ज्ञायते सैव प्रत्याब्दिके इति,का विधीयते पूर्वा वा परा वेति, का च प्रतिषिध्यते नेतरा पुत्रहानिदेति। किञ्च एवं परिभाषितं अवास्तवं सकलत्वं यदि गृह्यते तदा सर्वा एवोदयास्तमययोगित्वेन सकला न कदाचित् खण्डतिथिरस्ति। तत्र सर्वासां सकलत्वेन सर्वकर्मकालव्यापित्वात्

यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिरिति।
मध्याह्नव्यापिनी वा स्यात् एकोद्दिष्टे तिथिर्भवेत्।
पराह्णव्यापिनी वा स्यात् पार्वणे वा तिथिर्भवेत्॥

इत्यादिवचनजातस्य निवर्त्तनीयाभावात् आनर्थक्यमेव स्यात्। किञ्च किमपराह्णबाधेनास्तमयवेलाकलायां प्रत्यब्दश्राद्धविधानं अथवा त्रिमुहूर्त्तं निरस्येति त्रिमुहूर्त्तबाधेन वा। आद्ये पक्षे अपराह्णः पितृणामिति श्रुतिविरोधः।

तदुक्तं स्मृत्यन्तरे।

अपराह्णः पितॄणान्तु यापराह्णानुयायिनी।

सा ग्राह्या पितृकार्य्ये तु न सा याह्नानुयायिनी॥

इति सम्पूर्णायामपि तिथावस्तमयवेलायां श्राद्धं प्रसज्येत। किञ्च प्रत्याब्दिकशब्देन किं श्राद्धमभिधीयते कर्मान्तरं वा, श्राद्धपक्षेऽपि मृताहश्राद्धमक्षयतृतीयाश्राद्धञ्चेति यावत्प्रमाणान्तरवशादवधार्यते तावदपराह्णः पितॄणामिति श्रुत्या कथञ्चिन्न बाध्यते। द्वितीये पक्षे चायं विशेषः तिथ्यभावे अपराह्णे श्राद्धे कृते मृताहे श्राद्धं न कृतं स्यात्

मास-पक्षे तिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि।

प्रत्यब्दन्तु तथाभूतं मृताहं तस्य तं विदुः॥

इति तल्लक्षणात्। न चैवमपि दिनान्ते विद्यमानया तिथ्या तदहः स्पृष्टमिति तन्मृताहः स्यादिति तत्रापि श्राद्धं प्राप्नोतीति वक्तव्यम्।

यतः।

अनग्निमत उत्क्रान्ते साग्नेः संस्कारकर्मणः।

शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथा तिथिः॥

इति मरणकालीनतिथिवशेन मृताह इत्युक्तं न मरणतिथियोगवशेन, अन्यथैकस्मिन्नहनि तिथिद्वययोगे सत्युभयत्रापि श्राद्धं प्राप्नोति न क्वचिद्वा अविशेषात्। "पूर्वस्यां निर्वपेत्पिण्डमित्यादौ च सप्तम्या तिथेराधारत्वावगमात् तत्तिथिं विना श्राद्धे क्रियमाणे

अकाले यत्कृतं कर्म विधिशौचविवर्जितम्।

अकृतं तद्विजानीयात् पुनरिज्या श्रुतेर्बलात्॥

इत्यापतति, तस्मान्मास-पक्ष-तिथिस्पृष्ट इत्यस्यायमर्थः, यस्मिन्

मासे यस्मिन् पक्षे यस्यां तिथौ यो मृतस्तस्य तेषु विद्यमानेषु मृताह-इति। अस्तमयवेलाशब्देन किं सायंसन्धिरुच्यते ततोऽर्वाग्वा उपरि वा, आद्ये पक्षे अह्नीति नोपपद्यते, सम्पूर्णादित्यमण्डलोपलम्भावच्छ:-शब्दं प्रयुञ्जते वृद्धाः। द्वितीय पक्षे मध्याह्नादुपरि सर्वाप्यस्तमय-वेला स्यात्।

उदये वर्द्धमानाभिरामध्याह्नं तपेद्रविः ।
ततः परं ह्रसन्तीभिर्गोभिरस्तं स गच्छति ॥

इत्यस्तमयसम्बन्धिनः कालस्य मध्याह्नादुपरि पुराणे प्रतिपाद-नात्। तथा सति "अपराह्णः पितॄणामिति श्रुत्या सह विरोधो न भवेत्। तृतीयपक्षोऽपि न युक्तः अह्न्यस्तमयवेलायामित्यह्न्यस्तमय-वेलायाः सामानाधिकरण्यानुपपत्तेः। तस्मादयमर्थोऽस्य वचनस्य, अह्न्यस्तमयवेलायां अह्नि दिवसमध्ये यास्तमयवेला योऽस्तमयसन्नि-हितः कालः सायाह्नस्त्रिमुहूर्त्तः पञ्चमोविभागस्तस्य प्रवेशे या कला-मात्राप्यस्ति सैव प्रत्याब्दिके ग्राह्या तस्याः श्राद्धादिमुहूर्त्तपञ्चक-रूपापराह्णव्यापित्वात्, नेतरा पूर्वा या सायाह्नमात्रवर्त्तिनी श्राद्ध-योग्यं न अपराह्णं व्याप्नोति सा पुत्रदारानिदा न ग्राह्येत्यर्थः। एवंविधे वचनार्थे नानुपपन्नं किञ्चित्। नापि वचनान्तरस्यानर्थक्यं विरोधो वा। अथवा पूर्वस्मिन्नहनि लोकप्रसिद्धास्तमयकालव्यापिनी द्वितीयेऽहनि तदेकदेशव्यापिनी यदा तदा द्वितीयेऽहनि पूर्वतिथ्य-पवादेन श्राद्धं नियम्यते इति निरवद्यम्। स्मृतिचन्द्रिकाकारः। अस्तमयस्पृष्टापि तिथिः पूर्वैव ग्राह्येति। न चात्र चतुर्थप्रहरोत्तरा-र्द्धव्यतिरिक्तापराह्णे काले तिथिसंयोगासम्भवेन तिथियुक्तापराह्ण-

कालाभावादननुष्ठानमेव श्राद्धस्येति वाच्यम्। यदाह नारदीयपुराणे वशिष्ठः।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते॥ इति।

अस्तमयवेलायां या स्पृष्टा मृततिथिस्तत्तिथौ कर्त्तव्ये पित्र्ये आब्दिकादिश्राद्धे पूर्णा निगद्यतेत्यर्थः। अस्तमयवेलायां स्पृष्टेत्यनेनास्तमयसमये कलासद्भावेऽपि मृततिथेः पूर्णत्वमुक्तं इति मन्तव्यम्।

यत्तु स्मृत्यन्तरम्।

दिनान्ते पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।
उदये च तथा पित्र्ये दैवे चैव च कर्मणि॥ इति।

पित्र्ये कर्मणि कालत्वेन चोदिततिथिसम्बन्धिन्यो दिनान्ते वर्त्तमानाः पञ्च नाड्यः पुण्यास्ततः प्रकृतनाडीतिथियोगजन्यपुण्यत्वापादिकाः न तु ततो न्यूनाः, दैवे कर्मणि कालत्वेन चोदिततिथिसम्बन्धिन्य उदये सति वर्त्तमानाः पञ्च नाड्यः पुण्याः तत उपरितननाडीनामपि तिथियोगजन्यपुण्यापादका न तु ततो न्यूना इति तस्यार्थः। तदेतत्। “प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदेत्यादिना “श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषः शुचिः। सर्वान् कामानवाप्नोतीत्यन्तेन श्राद्धकालतया विहितकृष्णपक्षप्रतिपदादितिथिद्वैधविषयं न तु श्राद्धान्तरकालतया विहिततिथिद्वैधविषयं। पित्र्यं श्राद्धं कृष्णपक्षदिनेऽस्तमययोगिनीति प्रस्तुत्य तत्रैव विशेषाभिधानपरत्वादस्य वचनस्य, तेन पूर्वोक्तवशिष्ठवचनेन सह न कश्चिद्विरोधः।

भविष्यत्पुराणेऽपि।

व्रतोपवासनियमे घटिकैका यदा भवेत् ।
सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकी ॥ इति ।

सन्ध्यासमीपस्थापराह्णिकी घटिकैका यदा भवेत् सा तिथिः पित्र्यर्थे सकला ज्ञेयेत्यर्थः । यदा तु पूर्वदिनेऽस्तसमयात् पूर्वस्थे तिथियोगः उत्तरदिने च अस्तसमयादुपरि त्रिमुहूर्त्तयुक्ता तदा उत्तरमहः श्राद्धकालः ।

तथाच सुमन्तुः ।

उदिते दैवतं भानौ पैत्र्यं चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नो वा सा तिथिर्हव्य-कव्ययोः ॥ इति ।

अस्यार्थः उदिते भानौ सत्यह्नःसम्बन्धिनी दैवकर्माङ्गभूता तिथिर्या द्विमुहूर्त्तादन्यूना भवति सा सम्पूर्णतिथिवत् कृत्स्नस्याह्नो हव्यदानकालतामापादयति तेन तस्मिन्नहनि दैवं कर्म कुर्य्यात् । पितृकर्माङ्गभूता तिथिरस्तमिते रवौ सति या त्रिमुहूर्त्तमनुवर्त्तते सा कव्यदानकालतां स्वसम्बन्धस्याह्न आपादयति तेन तत्सम्बद्धेऽह्नि पितृसम्बन्धिसांवत्सरिकादिश्राद्धं कुर्यादिति । अनेनोत्तरदिने अस्तसमयादुपरि त्रिमुहूर्त्तानुवृत्त्यभावेऽस्तगामिनी पूर्वतिथिरेव ग्राह्ये-त्यर्थादुक्तम् ।

एवञ्च यदुक्तं नारदीयपुराणे ।

दर्शञ्च पूर्णमासञ्च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ इति ।

तदुपरिदिनेऽस्तसमयादुपरि मुहूर्त्तत्रयाभावे द्रष्टव्यं । यदा तु पूर्वेद्युरस्तगामिनी तिथिः सम्भवति उत्तरेद्युरस्तमिते रवौ त्रिमुहूर्त-

व्यापिनी न भवति किन्त्वस्तगामिनी भवति तदापि सैव ग्राह्या श्राद्धादावस्तगामिनीति स्मरणात् । यदा तु दिनद्वयेऽप्यस्तगामिनी तिथिर्न भवति तदोत्तरेद्युरेवास्तगामित्वरूपगुणाभावेऽपि गुणलोपन्यायेन सांवत्सरिकश्राद्धं कर्त्तव्यं, तिथियुक्तापराह्णकालव्यतिक्रमेण प्रत्यवायापत्तेश्चेति । तदयुक्तं । असमयसर्म्ममात्रेण सांवत्सरिकश्राद्धे पूर्वविद्धतिथिग्रहणे ।

द्व्यहव्यापिनी[1] चेत्स्यान्मृताहस्य यदा तिथिः ।
पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदि ॥

इति मनुवचनविरोधात् । "व्रतोपवास-नियम इति भविष्यत्पुराणवचनमपराह्णिक्या एव तिथेर्ग्रहणं प्रतिपादयति । वचनान्तरविरोधेन घटिकैकेत्यस्यानुवृत्तौ प्रमाणाभावात् उक्तप्रकारेण गतिसम्भवाच्च परेद्युः श्राद्धासम्भवविषयत्वेनोपपन्नेश्च ।

यदपि च सुमन्तुवचनस्यास्तमयोपरितनत्रिमुहूर्त्तविषयत्वेन व्याख्यातं तदप्ययुक्तं । अहःशब्दपर्यालोचनया त्रिमुहूर्त्तस्य च दिनसम्बन्धित्वावगतेः ।

अन्ये त्वाहुः द्वितीयेऽहन्यपराह्णव्यापित्वे त्रिमुहूर्त्ता चेत् पूर्वविद्धा कर्त्तव्या "त्रिमुहूर्त्ता भवेद्यदीति मनुवचनात् । "अपराह्णः पितृणामिति हारीतवचनं सांवत्सरिकव्यतिरिक्तविषयं । एवञ्च सति "द्विरहर्व्यापिनीति सुमन्तुवचनस्य, "दैवकार्ये तिथिर्ज्ञेयेति वृद्धयाज्ञवल्क्यवचनस्य, "प्रातः प्रातरुपोष्य इति शिवरहस्य-सौरपुराणस्य, "तिथेः प्रान्तमिति नारदीयपुराणवचनस्य, "उदिते दैवतमिति

(१) द्विरहर्व्यापिनीत्ययमेव पाठः समीचीनः ।

बौधायनवचनस्य, "व्रतोपवासस्नानादाविति भविष्यत्पुराणवचनस्य, "अस्तमयवेलायामिति व्यासवचनस्य, "पित्र्येऽस्तमयवेलायामिति वशिष्ठवचनस्य, "दर्शश्च पौर्णमासश्चेति शिवरहस्याद्युतमनुवचनस्येत्येवं वचनद्वयकबाधलाघवं स्यात्, भवत्पक्षे तु बाधगौरवं स्यात् । स्या-देतत् भवत्पक्षेऽपि "कर्मणो यस्य यः कालः इति व्यासवचनस्य, "यस्मिन् काले हि यत्कर्मेति स्कन्दवचनस्य, "आपराह्णिकास्वपि निगमवचनस्य, "अपराह्णः पितॄणामिति हारीतवचनस्य, "व्रतोप-वास-नियम इति भविष्यत्पुराणवचनस्य, "यस्यामस्तं रविर्यातीति लघु-वृद्धमनुवचनयोः, "अपराह्णव्यापिनीति वृद्धगौतमवचनस्य, "वि-हितः कालः इति बौधायन-लघुविष्णुवचनयोः, "मध्याह्नव्यापि-नीति बौधायनवचनस्येत्येवं वचनैकादशकस्य बाधगौरवं भविष्यति । अस्मत्पक्षे तु बाधलाघवमिति चेत् । उच्यते । पक्षद्वये बहुवाक्यबा-धाविशेषेऽप्याचारानुगुण्यात्पूर्वविद्धा पितृकर्त्ता गृह्यते । तदुक्तं । आचारादेवविध्यात् । भवत्पक्षे व्रततिथिषाविभ्यरिकविधायकवाक्य-बाधोऽपि भवेत् । ततश्च बहुवाक्यबाधाभावं पक्षो न्यायात् । किञ्च यथा श्राद्धे पितृकर्त्ततिथिप्रकरणवशात्कर्मकालव्यापित्वबाधो-ऽङ्गीक्रियते तथा ।

यस्यां तिथावस्तमियात्सूर्यस्तु पितृकर्त्तके ।
स्नान-दान-जपादिभ्यस्तामेवोपक्रमेत् तिथिम् ॥

इति वचनात् कर्मान्तरेऽपि पितृकर्त्ततिथिप्रकरणवशात् तद्बाधः प्रसज्येतेति वैषम्याङ्गीकरणमयुक्तं । तथापि चेवमभ्युपगमे दोषः प्रागभिहितः ।

अन्ये त्वाहुः क्षयाहश्राद्धे आचारविप्रतिपत्तेर्वचनविप्रतिपत्तेश्च परम्पराप्राप्ताचाराश्रयणेन तिथेर्ग्रहणमिति। तेषां परम्पराप्राप्ताः पूर्व्वजैरप्यनुष्ठिताः, "तदेव तेन कुर्य्युराचारैर्नेतरैः पुनरिति वचनात्।

तथाच व्यासः।

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नासावृषिर्यस्य मतं न भिन्नम्।
धर्म्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः॥

इति यदत्र युक्तं तत् ग्राह्यं॥

इति क्षयाहद्वैधनिर्णयः।

---

## अथ क्षयाहापरिज्ञाने सांवत्सरिक-श्राद्धकालनिर्णयः॥

भविष्यत्पुराणे।

ब्रह्मोवाच॥

न जानाति दिनं यस्तु मासं वाप्यमराधिप।
मृतयोस्तु महाप्राज्ञः पित्रोर्यस्तु कथं नरः।
श्राद्धं करोतु वै ताभ्यां विधिवत् वत्सरात्मकम्॥

अत्र पित्रोरित्युपलक्षणमन्येषां अपि श्राद्धस्य मास-दिनाज्ञाने तथैवाचरणात्।

आदित्य उवाच॥

मृताहं यो न जानाति मानवो विनतात्मज।

तेन कार्यममावास्यां श्राद्धं सांवत्सरं नृप ॥

यस्य प्रोषितस्याप्रोषितस्य वा मृतस्य तिथिर्न ज्ञायते मासस्तु ज्ञायते तस्य तन्मासामावास्यायां सांवत्सरिकं कार्यमित्यर्थः ।

तदाह बृहस्पतिः ।

न ज्ञायेत मृताहश्चेत्प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शं स्यान्मृताहनि ॥

'तद्दर्शे' तन्मासामावास्यायां, 'मृताहनीत्यत्र यत्कर्त्तव्यं तदिति शेषः, 'प्रोषित इत्यज्ञानकारणोपलक्षणम् ।

तथाच भविष्योत्तरे ।

प्रवासमन्तरेणापि ज्ञातान्तौ विस्मृतौ यदा ।
तदानीमपि तौ ग्राह्यौ पूर्ववत्तु मृताह्निके ॥

अस्मिन्नेव विषये एकादश्यां श्राद्धमाह मरीचिः ।

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः ॥

अत्र 'विशेषत इति कृष्णपक्षस्य प्रशस्ततरत्वाभिधानेन शुक्लपक्षोऽप्यनुज्ञायत इति गम्यते । ततश्च शुक्लकृष्णैकादश्योर्विकल्पे प्राप्ते एवं व्यवस्था मासे पक्षे च विज्ञाते तिथिमात्रापरिज्ञाने तस्य मासस्य तत्पक्षस्थितायामेवैकादश्यां श्राद्धं कार्यं विज्ञायमानपक्षपरित्यागे कारणाभावात् । पक्षस्याप्यपरिज्ञाने कृष्णैकादश्यां तदभावे शुक्लैकादश्यामपीति ।

भविष्यत्पुराणे ।

दिनमेव विजानाति मासं नैव तु यो नरः ।

मार्गशीर्षेऽथ वा भाद्रे माघे वाथ समाचरेत्।
भोजकस्य विशेषेण यो मां पूजयते सदा॥

यस्य तु मृताहः परिज्ञायते न मासः तस्य मार्गशीर्षे भाद्रपदे माघे वा तस्मिन्नहनि श्राद्धं कर्त्तव्यम्।

तदाह वृहस्पतिः।

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत्॥

यदा तु प्रोषितमृतस्य दिन-मासावुभावप्यविज्ञातौ स्यातां तदा तत्प्रस्थानकालिकयोर्दिन-मासयोस्तत्सांवत्सरिकं कार्यं।

तदाह स एव।

दिन-मासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्व्वोक्तया दिशा॥

दिनशब्देन सर्व्वत्र तिथिरवगन्तव्या। पूर्व्वोक्तया दिशेत्यस्यायमर्थः। प्रस्थानतिथ्यज्ञाने तन्मासज्ञाने च तन्मासवर्त्तिन्याममावास्यायां सांवत्सरिकम्। प्रस्थानतिथिज्ञाने मासाज्ञाने च मार्गे माघे वा तस्यामेव तिथौ कुर्यात्। प्रस्थानतिथि-मासयोरुभयोरप्यज्ञाने तु तन्मरणश्रवणकालिकयोस्तिथि-मासयोः कुर्यात्।

तदाह प्रचेताः।

अपरिज्ञानेऽमावास्यायां श्रवणदिवसे वा।
'श्रवणदिवसे' मरणवार्त्ताया आकर्णनतिथौ।

भविष्योत्तरेऽपि।

मृतवार्त्ताश्रुतेर्ग्राह्यौ तौ पूर्व्वोक्तक्रमेण तु।

मरणतिथिविस्मरणे मासस्मरणे च तन्मासवर्त्तिन्याममावास्यायां सांवत्सरिकं। मरणतिथिविस्मरणे मासविस्मरणे च मार्गशीर्षे माघे वा तस्यामेव तिथौ कार्य्यं। मरणतिथि-मासयोरुभयोरपि विस्मरणे माघस्य मार्गशीर्षस्य वामावास्यायां कार्य्यं।

तदुक्तं प्रभासखण्डे।

मृतस्याहर्न जानाति मासं वापि कथञ्चन।
तेन कार्य्यममावास्यां श्राद्धं माघेऽथ मार्गके॥

'कथञ्चन' मरणप्रस्तावश्रवणरूपेण केनाप्युपलक्षणेनेत्यर्थः, यस्य तु प्रोषितस्य मरणवार्त्ता जीवनवार्त्तापि नाकर्ण्यते पञ्चदशवर्ष-पर्य्यन्तमागमनञ्च नास्ति तस्य तदूर्ध्वं पालाशीभिः समिद्भिः कुशैर्वा शरीरप्रतिकृतिं कृत्वा यथाविधि दाहसंस्कारं निर्वर्त्य तद्दानीं तन्मास-पक्ष-तिथिस्पृष्टेऽहनि सांवत्सरिकं कर्त्तव्यम्।

इत्याह जातूकर्ण्यः।

पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः।
ऊर्द्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम्॥
कुर्य्यात्तस्य च संस्कारं यथोक्तविधिना ततः।
तदादीन्येव सर्वाणि प्रेतकर्माणि चाचरेत्॥

इति प्रवासापरिज्ञाने सांवत्सरिककालनिर्णयः।

---

## अथ मघाश्राद्धनिर्णयः।

वायुपुराणे।

मघासु कुर्वन् श्राद्धानि सर्वान् कामानवाप्नुयात्।

प्रत्यक्षमर्चितास्तेन भवन्ति पितरः सदा ॥
मघाश्राद्धञ्च यः कुर्यात् तस्य पुण्यफलं शृणु।
पितरस्तस्य तुष्यन्ति सन्ततिश्चाक्षया भवेत् ॥
एतेनैव तु योगेन वस्त्र-यानमुपानहौ।
यो ददाति मघाश्राद्धे भोजनञ्च विशेषतः।
चयोदशसमास्तस्य तृप्यन्ति पितरो नृप ॥
पिता पितामहश्चैव तथैव प्रपितामहः।
जातं पुत्रं निरीक्षन्ते शकुना इव पिप्पलम् ॥
मधुमांसेन खड्गेन पयसा पायसेन च।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥
मघासु दत्त्वा विधानेन चतुरो लभते वरान्।
धनमन्नं सुतानायुर्ददन्ति पितरोऽर्चिताः ॥

शातातपः।

मघासु पिण्डे च सुते च जाते
ग्रहोपरागे त्वयनद्वये च।
शङ्के च दत्ते च तथैव पद्मे
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥

विभक्ता वाविभक्ता वा कुर्य्युः श्राद्धं सदैव हि।
मघासु च ततोऽन्यच नाधिकारः पृथग्विना ॥ इति।

आह हड्डवशिष्ठः।

दधि गव्यमसंसृष्टं खाखाजानाविधांस्तथा।
इदन्नमनुशोचन्ते वर्षासु च मघासु च ॥ इति।

एतानि वाक्यानि पिण्डदानरहितश्राद्धविषयाणीति । तथाच भविष्यत्पुराणे वचनम् ।

संक्रान्त्यामुपवासेन पारणेन च भारत ।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति ॥

तथाच षट्त्रिंशन्मते ।

मघासु कुर्वतः श्राद्धं ज्येष्ठः पुत्रो विनश्यति ।
संक्रान्त्यावुपवासश्च चन्द्र-सूर्य्यग्रहे तथा ॥

यदाचारचारुकृता पुराणवचनमुदाहृतं "मघायां पिण्डदानेन चतुरो लभते वरानिति, तत्पुत्रवद्गृहस्थव्यतिरिक्तविषयम् ।

अन्ये त्वाहुः । केवलपिण्डदाननिषेध एवायमस्ति, तत्सम्भवति, तथाच षट्त्रिंशन्मते ।

पिण्डमात्रं प्रदातव्यमभावे द्रव्य-विप्रयोः ।
श्राद्धार्चनि तु सम्प्राप्ते भवेन्निरग्निकोऽपि चेत् ॥

नन्वभयत्रापि निषेधः प्रवर्त्ततां, न, अनेकबाधकान्याय्यत्वात् । तस्मात् मघाश्राद्धमपि सपिण्डमाचरणीयमिति । तदयुक्तम् । विनिगमने कारणाभावात् उभयत्रापि निषेधः प्रवर्त्तते ।

अन्ये त्वाहुः । त्रयोदशीश्राद्धतुल्यन्यायतया मघाश्राद्धमपि एक-वर्गसम्बन्धि निषिध्यतइति । तदसत् । "श्राद्धान्नैवैकवर्गस्य त्रयोदश्या-मुपक्रमेदित्यादिवचनबलेन तद्व्यवस्था दर्शिता, इदन्तु वचनाभावान्न युज्यते । न्यायतुल्यत्वादिति चेत्, तन्तुल्यत्वान्मघाश्राद्धं न कुर्य्यादिति निषेधस्य सपिण्डश्राद्धगोचरतयोपपत्तेः, तथाच "पिण्डदानेन पुत्रो नश्यतीति श्रूयते न श्राद्धाचरणेन, तत्कर्त्तव्यताया: प्रदर्शितत्वात् ।

इति मघाश्राद्धनिर्णयः ।

# अथाशौचादिनिमित्तेषु श्राद्धकालनिर्णयः।

तत्राह ऋष्यशृङ्गः।

दैवे तु पितृणां श्राद्धे अशौचं जायते यदा।
अशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते॥

मुख्यकालिकोपक्रमात् प्राग्यदा श्राद्धाधिकारिणामाशौचं जायते तदा मुख्यकालप्रत्यासन्ने आशौचेन वा दूषिते आशौचोपगमानन्तरकाल एव पैतृकं कर्म कार्यमित्यर्थः।

यत्तुचिवचनम्।

तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना।
सूतकानन्तरं कुर्यात् पुनस्तदहरेव च॥ इति।

तत्र श्राद्धे सूतकेन प्रदुष्टे "सूतकानन्तरं कुर्यादिति पचस्ताव-दृष्यशृङ्गवचनाविरुद्ध एव। "पुनस्तदहरेव चेति पचस्त्वादिशब्दोक्त-निमित्तान्तरविघ्नतः मुख्यकालविषय इति पूर्ववचनाविरोधाय कल्प-नीयम्। एतच्च पचान्तरं चयाहक्रियमाणप्रतिमासिकश्राद्धविषयं। तत्र मासस्पृष्टकालाभावेऽपि पच-तिथिमासस्पृष्टस्यापि ग्राह्यत्वात्।

अतएवाह देवलः।

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते।
मासेऽन्यस्मिन् तिथौ तस्मिन् श्राद्धं कुर्य्यात्प्रयत्नतः॥

'अन्यस्मिन्' अनन्तरे मासि, 'तत्तिथौ' मृततिथौ, यस्मिन् शुक्ले कृष्णे वा मृतः तस्मिन्पक्षे श्राद्धं विघ्नवशादतिक्रान्तं कुर्य्यादित्यर्थः। 'यदि विघ्न इत्यत्रापि ऋष्यशृङ्गवचनाविरोधायाशौचव्यतिरिक्तनिमित्तेनेति

शेषो द्रष्टव्यः। आशौचनिमित्तेन विघ्ने जाते मासिकविषयेऽपि सूतकानन्तरमेव श्राद्धानुष्ठानं षट्त्रिंशन्मतवचनोक्तमनुसन्धेयम्।

अतएव देवस्वामिनाप्युक्तम्। एतत्षट्त्रिंशन्मतवचनं सूतकाशौचविषयं निमित्तान्तरतस्तु तदपरविघाते "एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते। इत्यादिस्त्वन्यान्तरवचनमिति।

व्यासः।

श्राद्धविघ्ने समुत्पन्ने अन्तरा मृत-सूतके।
अमावास्यां प्रकुर्वीत श्राद्धं पैके मनीषिणः॥ इति।

'अन्तरा मृत-सूतके' श्राद्धप्रयोगमध्ये पाकोपक्रमात् प्राक् सूतके मृतके वा जाते। अमावास्यायां शुद्धौ शुद्ध्यनन्तरमेतत्सांवत्सरिकश्राद्धविषयमिति केचित्। तदयुक्तं।

मासिकाब्दे तु संप्राप्ते अन्तरा मृत-सूतके।
वदन्ति शुद्धौ तत्कार्यं दर्शे चापि विचक्षणाः॥

इति षट्त्रिंशन्मतवचनेन मासिकस्यापि विधानात्, अमावास्याग्रहणं शुक्लैकादश्याः कृष्णैकादश्याश्चोपलक्षणम्।

अतएव मरीचिः।

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः॥

कृष्णपक्षे या एकादशी तस्यां विशेषत इत्यन्वयः, पितृकार्यं यतः कृष्णपक्षस्यैव प्राशस्त्यात् कृष्णैकादशीतोऽप्यमावास्यायाः पितृकार्ये श्रैष्ठ्यं दृष्टापूपन्यायसिद्धं बोद्धव्यम्। अथ शुद्ध्यनन्तरकालो मुख्यकालप्रत्यासन्नत्वात् श्रेष्ठः। दर्शकालस्ततो जघन्यः शुक्लदर्शका-

अप्रत्यासत्त्यभावादिति मन्तव्यं।

तथाच तत्रापृथ्व्यष्टकः।

अशुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।

सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन॥ इति।

अयमर्थः। अशुचीभूतेन तावद्दातव्यं तेन मुख्यकालेषु अशुद्यवस्थाने शुद्यनन्तरं या तिथिः सा 'प्रतिपद्यते' लभ्यते, तस्य कर्त्तव्यकर्माङ्गता ज्ञेया, न त्वन्या मुख्या तिथिः, आशौचदूषिता कदाचिदनुष्ठेयेति। आशौचादूषिता मुख्या तिथिः सदानुष्ठेयेत्याह स एव।

तिथिच्छेदो न कर्त्तव्यो विनाशौचं यदृच्छया।

पिण्डं श्राद्धस्य दातव्यं विच्छित्तिं नैव कारयेत्॥ इति।

'यदृच्छया' स्वेच्छया। मृत-सूतकाभ्यां मृताद्योपघाते तदतिक्रम्याशौचनिवृत्तौ श्राद्धं कर्त्तव्यं इत्युक्तं तत्पाकोपक्रमाभिमन्त्रणाद्वा पूर्वमेवाशौचविज्ञाने सति नोत्तरकालम्।

तथाच ब्रह्मपुराणे।

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि।

निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥

देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्।

अपि दातृन् प्रदीतृंश्च सूतके मृतके तथा॥

अविज्ञाते न दोषः स्यात् श्राद्धादिषु कदाचन।

विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिका क्रिया॥

भोजनार्द्धे तु सम्भुक्ते विप्रैर्दातुर्विपद्यते।

यदा कश्चित्तदोच्छिष्टे शेषं त्यक्त्वा समाचिताः।

आचम्य परकीयेन जलेन शुचयो द्विजाः ॥
विवाह-यज्ञयोर्मध्ये सूतके सति चान्तरा ।
शेषमन्नं परैर्देयं इत्येतत् समुदाहृतम् ॥

एतत्तु दातृ-भोक्तृगृहव्यतिरिक्तजन्म-मरणविषयम् । "दातृन् भोक्तृंश्च न स्पृशेदित्यत्र दोषविशेषः ।

आह क्रतुः ।

पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति ।

उक्तमिदमाशौचदूषितेऽधिकारिणि मुख्यं कालमतिक्रम्याशौच-निवृत्तौ श्राद्धं कर्त्तव्यमिति ।

गृहमेधिनस्तु भार्य्यया सहैवाधिकारात् तस्यां रजोदर्शननिबन्धनाशुचित्वदूषितायां मुख्यकालमतिक्रम्याशुचित्वनिवृत्तावेव श्राद्धे कर्त्तव्ये प्राप्ते रजस्वलापतिनैवैकाकिना मुख्यकाल एवामश्राद्धं कर्त्तव्यमिति ।

आहोशनाः ।

अपत्नीकः प्रवासी च यस्य भार्य्या रजस्वला ।
सिद्धान्नेन न कुर्वीत आमन्तस्य विधीयते ॥ इति

अस्यामश्राद्धविधेः क्वचिदुपसंहारपूर्व्वकमपवादमाह हारीतः ।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितं ।
अमावास्यादिनियतं मासं संवत्सरादृते ॥ इति ।

यद्भार्य्यारजोदर्शनादिरूपे श्राद्धविघ्ने समुत्पन्ने सत्यामश्राद्धं कर्त्तव्यमिति प्रकीर्त्तितं तदमावास्यादिकालिकमेव न तु मृताहका-लिकं सांवत्सरिकञ्च तदपीत्यर्थः, किन्तु तदपक्रान्तेनैव कर्त्तव्यं । तत्रैकभार्य्येण सहाधिकारिभार्य्यादूषणाद्भार्य्यान्तरस्य चाभावाद्रजो-

दर्शनरूपविघ्नापगमकाल एव कर्त्तव्यं। यथोक्तं प्रभासखण्डे।

संप्राप्ते श्राद्धदिवसे जाता नारी रजस्वला।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति॥

स्मृत्यन्तरे।

मृतेऽहनि तु सम्प्राप्ते यस्य भार्य्या रजस्वला।
श्राद्धं तदा न कर्त्तव्यं पञ्चमेऽहनि कारयेत्॥

अधिकारिभार्य्यान्तरयुक्तेन त्वधिकारापगमाभावात्तत्काल एव कर्त्तव्यं।

आमश्राद्धासमर्थं प्रति हेमश्राद्धमाह।

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं प्रकुर्वीत यस्य भार्य्या रजस्वला॥

द्रव्यमत्र भोज्यं विवक्षितं कर्त्तव्यं, द्विजश्च भोक्ता।

इत्याशौचादिनिमित्तेषु श्राद्धकालनिर्णयः।

---

अथ श्राद्धविशेषेण प्रातःपूर्वाह्ण-मध्याह्न-सायाह्ना विहिताः सायंकालश्च निषिद्धः एवमन्येष्वपि कर्मसु, अतस्तद्विवेकार्थं पूर्वाह्णादिकालप्रकरणमारभ्यते। तत्र तावद्योगसामर्थ्याद्विधा विभक्तस्याह्नः पूर्वो भागः पूर्वाह्णः, अपरोऽपराह्ण इति सहजेनावगम्यते।

तथाच मनुः।

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते।
एवं श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते॥ इति।

नन्वत्र श्राद्धविषये पूर्वाह्णापराह्णस्य वैशिष्ट्यमात्रमुच्यते न पुनरर्द्धधाविभक्तपूर्वभागस्य पूर्वाह्णसंज्ञकत्वम् अपराह्णस्यापराह्णसंज्ञकत्वमिति। अथोच्यते। द्विधा विभक्तस्य मात्रस्य भागौ पूर्वापरौ यथौ भवतः तौ चात्र दृष्टान्तीकृतौ, अथाहृत्यादह्नोऽपि द्विधा विभक्तस्य पूर्वापरयोर्भागयोः पूर्वाह्णापराह्णसंज्ञकत्वं गमयति, तत्र वैशिष्ट्यमात्रेण अथाहृत्यात् दृष्टान्ततोपपत्तेः। सत्यं तथापि भागान्तरानुपादानात्सर्व्वथाहृत्यानुरोधाच्च विवक्षितविभागप्रतीतिर्जायते तद्बाधो मा भूदित्येवमर्थमेवमभ्युपगन्तव्यं। ननु द्व्यं द्व्यमात्रेत्रिधा चतुर्धा दिवसभागवचनैर्यौगिको दृष्टान्तथाहृत्यकल्पनामूलकस्य विभागो बाध्यतां। सत्यं। पारिभाषिकस्य प्रत्यक्षवचनोपदिष्टस्य चानवकाशत्वेन प्रत्यक्षत्वेन च यौगिकात्कारूपनिकाच्च बलीयस्त्वात् भवेदेव बाधः, किन्तु परिभाषया यौगिकस्य बाधो मा भूदित्येतदर्थमेव योगसिद्धोऽप्यर्थः परिभाषितः।

स्कन्दपुराणे।

आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः। इति।

आवर्त्तनं दिनमध्य इति द्विधा विभक्तस्याह्नोद्वितीयोभागोऽपराह्ण इत्येकं मतम्। अथ त्रिधा विभक्तस्याह्नस्तृतीयो भागोऽपराह्ण इत्यपरं मतमुच्यते। तत्र श्रुतिः। "पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददातीति। अथ पञ्चदशमुहूर्त्तात्मकस्य दिवसस्य पञ्चमुहूर्त्तपरिमितान् पूर्वाह्णादिनामकांस्त्रीन् भागान् परिकल्प्य क्रमाद्दैव-मानुष-पैतृकेषु कर्मसु विनियुङ्क्ते श्रुतिरिति प्रतीतिर्जायते। अपराह्णकाले विहितस्य पार्वणश्राद्धस्य वाधर-

तृतीयेऽंशे मानवः कर्त्तव्यतोपदेशः कालनियोगप्रकरणे दर्शयिष्यते सोऽपि त्रिधा विभक्तस्याह्नस्तृतीयो भागोऽपराह्न इत्यन्यार्थदर्शनले-शानुसन्धेयः इति त्रिधा विभक्तस्याह्नः तृतीयो भागोऽपराह्न इति मतम्। अथ विषमैर्भागैश्चतुर्द्धा विभक्तस्य तृतीयो भागोऽपराह्न-इत्यपरम्। तथाच गोभिलः।

पूर्वाह्नः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा।

आ तृतीयादपराह्नः सायाह्नश्च ततः परम्॥ इति।

अत्र सूर्य्योदयात् प्रभृति सार्द्धप्रहरपरिमितं दिनभागं पूर्वाह्नं, तदूर्द्ध्वं प्रहरपरिमितं मध्याह्नं, तदूर्द्ध्वं तृतीयप्रहरसमाप्तिपर्यन्त-मर्द्धप्रहरपरिमितमपराह्नम्, तदूर्द्ध्वं प्रहरमात्रं सायाह्नमाहुरित्यर्थः, इति चतुर्द्धा विभक्तस्य तृतीयो भागोऽपराह्न इति मतम्। अथ समविभागैः पञ्चधा विभक्तस्याह्नस्तुर्थो भागोऽपराह्न इत्यपरमपि मतम्। तत्र शतपथश्रुतिः। "आदित्यस्त्वेव सर्व्वं ऋतवः स यद्-वोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्त इति।

एवं पञ्चदशमुहूर्त्तसम्मितस्य दिवसस्य पञ्चधा विभागे क्रियमाणे त्रिमुहूर्त्तपरिमिताः प्रातराद्यः पञ्च कालाः भवन्ति। अत्र यद्यपि "तस्मान्मध्यन्दिन एवाधीतेत्यनन्तरमेवाम्नायसमाम्नातस्याभिधानसम्बन्धे मध्यन्दिनविधेः शेषभूततया पञ्चधा विभागः श्रूयते, तथापि प्रात-रादिविहितैः कर्मभिराकाङ्क्षितस्वकालपरिमाणज्ञापकतयोपजीव्य-मानः सर्वकर्मसम्बन्धितां लभते। अतएवायं त्रिमुहूर्त्तपरिमाणाव-यवः पञ्चधा विभागः साधारण्येनैव दृश्यते। तथाच प्रभासखण्डे।

मुहूर्त्तचितयं प्रातस्तावानेव च सङ्गवः।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः।
सायाह्नस्त्रिमुहूर्त्तोऽथ सर्वकर्मबहिष्कृतः॥ इति।

अतएव तत्कालविहितकर्म्ममात्रोपयोगितामस्य विभागस्याह पराशरः।

लेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव तु।
प्रातस्तु स स्मृतः कालो भागश्चाह्नः स पञ्चमः॥
सङ्गवस्त्रिमुहूर्त्तोऽथ मध्याह्नस्तत्समः स्मृतः[१]।
ततस्त्रयो मुहूर्त्ताश्च अपराह्णो विधीयते॥
पञ्चमोऽथ दिनांशो यः स सायाह्न इति स्मृतः।
यद्यदेतेषु विहितं तत्तत्कुर्य्याद्विचक्षणः॥ इति।

उदीयमानस्य भास्करमण्डलस्य रेखावत्प्रकाशमानप्रथमोपलम्भनयोग्यो भागः 'लेखा', 'आदित्यात्' आदित्योदयात्। तथाच लेखाप्रभृत्यादित्योदयात् आरभ्य ये त्रयो मुहूर्त्तास्ते प्रातःसंज्ञका भवन्तीत्युक्तं भवति।

उक्तं हि स्कन्दपुराणे।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तास्थिते तु वै।
प्रातस्तात्र स्मृतः कालो भागश्चाह्नः स पञ्चमः॥ इति।

यद्यदेतेषु प्रातरादिकालेषु कर्म विहितं तत्तदेतेषु यथोक्तेषु कुर्य्यादित्यर्थः।

अथ यथोक्तवचनप्रपञ्चप्रमितानां पूर्वाह्ण-मध्याह्नापराह्ण-साया-

(१) तत इति ख०।

ह्नानां कल्पा विविच्यन्ते। प्रातःसङ्गवयोरेकैक एव कल्प इति स्वतो-विविक्तत्वेवातः पूर्वाह्णादिकालकल्पा एवोच्यन्ते। तच द्विधाहर्विभागे आदित्यसमस्ताद्धं हादग्नितिरो चचचणादारभ्याष्टममुहूर्त्तपूर्वार्द्धसमा-प्तिपर्य्यन्तः पूर्वाह्णः, त्रिधा विभागे लेखाप्रकाशाप्रभृति पञ्चममुहू-र्त्तावसानावधिः, चतुर्द्धा विभागे तत एवारभ्य षष्ठमुहूर्त्ततृतीय-पादपूर्वार्द्धसमाप्तिपर्य्यन्तः, पञ्चधा विभागे तूदयादारभ्य षण्मुहूर्त्त-परिमितस्य कालस्य पूर्वाह्णत्वं वक्तव्यं। तदा हि यौगिकीं वृत्तिं परिकल्प्य पूर्वाह्णशब्दस्यार्थो वाच्यः, स च तदितरमध्याह्नादिसंज्ञा-नवरुद्धो बहुमुचितः। यद्यपि द्विनाडस्य षण्मुहूर्त्तस्य प्रातःसङ्गवात्म-कसंज्ञाद्वयाविरोधोऽस्ति, तथाप्यसौ न योगविरोधीति न पूर्वाह्ण-संज्ञानिवेशपरिपन्थितां प्रतिपद्यते।

इति चतुर्विधपूर्वाह्णविवेकः।

---

## अथ मध्याह्नकल्पः।

द्विधा विभागे दिवसस्य मध्यक्षणादुभयतो मध्याह्नविहित-कर्मप्रयोगपर्य्याप्तो मध्याह्नः। अगत्या चाच विरुद्धसंज्ञान्तरनिवेशो-ऽभ्युपेयः। त्रिधा विभागे षण्मुहूर्त्तादारभ्य दशममुहूर्त्तावसानाव-धिर्मध्याह्नः, चतुर्द्धा विभागे षष्ठमुहूर्त्ततृतीयपादोत्तरार्द्धादारभ्य दशममुहूर्त्तद्वितीयपादपूर्वार्द्धसमाप्तिपर्य्यन्तः, पञ्चधा विभागे तु अष्टममुहूर्त्तादारभ्य दशममुहूर्त्तसमाप्तिपर्य्यन्तः।

इति चतुर्विधमध्याह्नविवेकः।

---

## अथापराह्णकल्पाः।

द्विधा विभागेऽष्टममुहूर्त्तोत्तरार्द्धादारभ्य पश्चिमसन्ध्यारम्भपर्य्यन्तोऽपराह्णः, त्रिधा विभागे सैकादशमुहूर्त्तादारभ्य पश्चिमसन्ध्यापर्य्यन्तः, चतुर्द्धा विभागे दशममुहूर्त्तद्वितीयपादोत्तरार्द्धादारभ्य द्वादशमुहूर्त्ताद्यपादावसानपर्य्यन्तः, पञ्चधा विभागे दशममुहूर्त्तादारभ्य द्वादशमुहूर्त्तावसानपर्य्यन्तः।

इति चतुर्विधापराह्णविवेकः।

---

## अथ सायाह्नकल्पाः॥

द्विधा त्रिधा वा विभागे तत्कालविहितकर्मप्रयोगपर्य्याप्तोऽस्तमयावधिः, चतुर्द्धा विभागे दशममुहूर्त्तादारभ्य सूर्य्यास्तमयावधिः, पञ्चधा विभागे त्रयोदशमुहूर्त्तादारभ्य सूर्य्यास्तमयः सायाह्नः।

इति सायाह्नविवेकः।

---

एते च पूर्वाह्णादयो वक्ष्यमाणविनियोगानतिक्रमेण यथालाभं ग्राह्याः, प्रशस्ततारतम्यक्रमेण वा, यो यं कालमपेक्ष्य सूक्ष्मः स तस्मात् प्रशस्तः। महावधिवचनेन हि महतः कालस्य पूर्वाह्णत्वे प्रमिते तदेकदेशस्यापि प्रमितमेव पूर्वाह्णत्वं, यथा हिमवत्कुहरादारभ्य पूर्वसमुद्रगामिनो जलप्रवाहविशेषस्य गङ्गात्वे प्रमिते प्रमितमेव तदन्तर्वर्त्तिनः प्रवाहैकदेशस्यापि गङ्गात्वम्, कथमन्यथा "गङ्गायां स्नानं कुर्य्यादपराह्णे पितृयज्ञमाचरेत्" इति विहितस्य तदेकदेशेऽनुष्ठाने विहितसिद्धिः। दृश्यन्ते च केचित् समुदायैकदेशयोः साधारणाः शब्दाः। यदङ्गमाचार्य्यैः।

विन्दौ च समुदाये च तोयशब्दो यथोच्यते ।
संसर्गिद्रव्यरूपत्वात् सूक्तवाक्तत्पदं तथा ॥ इति ।

अतोऽवान्तरावधिवचनस्य महावधिवचनप्रमितपूर्वार्द्धैकदेशाभि-वर्त्तकत्वेन वा स्वाभिधेयस्यातिप्रशस्तप्रतिपादनपरत्वेन वा अर्थवत्त्वं वक्तव्यं, तथाच पक्षे महावधिवचनानामानर्थक्य-बाधौ स्यातां अतो-ऽवान्तरावधिवचनं प्रशस्ततरत्वार्थमिति निश्चीयते ।

---

## अथ कुतपकालः ॥

स्कन्द-वायुपुराणयोः ।

कुं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षणे ।
स कालः कुतपो ज्ञेयः तत्र दत्तं महाफलम् ॥

'कुः' पृथिवी, तां, 'गोपतिः' सूर्य्यः, 'गोभिः' स्वकीयैः करैः, 'कार्त्स्न्येन' समग्रां, यस्मिन् क्षणे 'तपति' उष्णां करोति, 'स कालः' कुतपसंज्ञको ज्ञेयः, तदनेन कुतपशब्दनिर्वचनं कृतं "निरूपितः कुतपोऽयमसाविति । सर्वच्छायासङ्कोचाद्दिवसमध्य एव हि सूर्य्यः कृत्स्नां पृथ्वीं तपति, अतो दिवसमध्यः कुतपः इत्येवमसौ निर्द्धारितो भवति, स च मुहूर्त्तपरिमितोऽपि स्वल्पत्वमनुसन्धायोपचारवृत्त्या क्षणशब्देनोक्तः। उक्तं हि वायुपुराण एव ।

मुहूर्त्तात्सप्तमादूर्द्ध्वं मुहूर्त्तान्नवमादधः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ इति ।

प्रभासखण्डेऽपि ।

अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा ।

तथाष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः ॥

खड्गपात्रादिकं तु कुतपद्रव्यकं मध्याह्नकालाश्रितत्वात् पृथक्कर्त्तु-मशक्यमिति मध्याह्नप्रसङ्गादिहैव लिख्यते ।

कालिकापुराणे ।

ब्राह्मणाः कम्बलो गावो सूर्य्योऽग्निरतिथयोऽपि च ।

तिला दर्भाश्च मध्याह्नो नवैते कुतपाः स्मृताः ॥

प्रभासखण्डेऽपि ।

मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः ।

रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥

पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।

अष्टावेव यतस्तस्मात् कुतपा इति विश्रुताः ॥

कौषीतकीनां तु "तथान्यः कालकम्बल इति पठितं, इति कुतपः ।

अथैतेषामपराह्णादिकालानां पार्वणादिश्राद्धेषु विनियोगः कथ्यते ।

तत्र शातातप-हारीतौ ।

आमश्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यतः ।

पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

मनुरप्याह ।

पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम् ।

एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

आह मार्कण्डेयः ।

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः ।

कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेत् ॥ इति ।

अथ शुक्लपक्षे पूर्वाह्णान्तर्गतकुतपपूर्वार्द्धे एव पार्वणमेकोद्दिष्टं वा श्राद्धमारम्भणीयं। कृष्णपक्षे च अपराह्णान्तर्गते कुतपोत्तरार्द्धे एव पार्वणमेकोद्दिष्टं श्राद्धमारम्भणीयं। एतच्च वचनं पार्वणे कुतपस्य पूर्वार्द्धमेकोद्दिष्टे तु परार्द्धं प्रापयितुं, वैपरीत्येन हि पूर्वाह्णापराह्णयोः मध्याह्नापराह्णे विध्यन्तरादेव प्राप्तेः। अथ वा शुक्लपक्षेत्यनेन तत्पक्षे विहितं दैविकं श्राद्धमुपलक्ष्य पूर्वाह्णो विधीयते, कृष्णपक्षेत्यनेन पैतृकमुपलक्ष्यापराह्ण इति। एवञ्च विध्यन्तराविरोधेन सत्याश्रुतौ मध्याह्नापराह्णे विधौ बाधितौ न भविष्यतः। तत्रापराह्णस्य ताव-द्विनियोगो विविच्यते।

शातातपः।

दर्शश्राद्धन्तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम्।

अपराह्णे पितृणान्तु तत्र दानं प्रशस्यते॥ इति।

यत्पिण्डपितृयज्ञानुष्ठानरहितानग्निककर्त्तृकं स्त्री-शूद्रादिकर्त्तृकं दर्शश्राद्धं तावत् द्विधा विभक्तस्यापराह्णापरो भागः कुतपोत्तरार्द्धा-दारभ्य यथालाभं ग्राह्यः, अनग्निकर्त्तृके दर्शश्राद्धे कुतपस्याप्तियुक्तत्व-ग्रहणस्यापि अमावास्यादेधनिर्णये दर्शितत्वात्, यत्पुनः साग्निककर्त्तृकं पिण्डपितृयज्ञानुष्ठानयुक्तानग्निककर्त्तृकञ्च दर्शश्राद्धं, तत्र "अमावा-स्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति कल्पसूत्रकारोक्तापराह्णका-लानुष्ठेयपिण्डपितृयज्ञानुष्ठानोत्तरकालत्वविधेस्तदनुसारेणैव त्रिधा विभक्तस्याह्नः तृतीयो भागो यथालाभमासन्ध्यं ग्राह्यः।

तथाचाह मनुः।

पित्र्यमानिधनात्कार्यं श्राद्धं चौर्षे राजनि प्रशस्यते।

वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः॥ इति।

तथा ।

पितृयज्ञन्तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् ॥ इति ।

न चैतद्युक्तम् ।

पितृयज्ञन्तु निर्वर्त्य तर्पणाख्यन्तु योऽग्निमान् ।
पिण्डान्वाहार्य्यकं कुर्य्यात् श्राद्धमिन्दुक्षये सदा ॥

इति मत्स्यपुराणवचनात् पञ्चमहायज्ञान्तर्भूततर्पण-पितृयज्ञानन्तर्य्यमेवान्वाहार्य्यकस्य न पिण्डपितृयज्ञानन्तर्य्यमिति । न तदनुरोधेनापराह्णग्रहणमिति । यत आह लौगाक्षिः ।

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं तु साग्निकः ।
पितृयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकं बुधः ॥ इति ।

अतः पिण्डपितृयज्ञादूर्द्धमनुष्ठेयस्य दर्शश्राद्ध-पितृयज्ञसमाप्त्यनुसारेण नातिसन्ध्यासमीपपर्य्यन्तो वासरतृतीयांशो ग्राह्यः ।

इति पराह्णकालविनियोगः ।

---

## अथ पूर्वाह्णविनियोगः ।

तत्र "पूर्वाह्णे दैविकं श्राद्धमिति दैविकश्राद्धाद्युपभुक्ते पूर्वाह्णे वक्तव्याभावादामश्राद्धाद्युपभुक्तं प्रत्युच्यते । तत्र च "आमश्राद्धन्तु पूर्वाह्णे इति विधिर्द्विजकर्त्तृकामश्राद्धविषय एव न पुनः शूद्रकर्त्तृकामश्राद्धविषयोऽपीति कश्चिन्निश्चिकाय । स हि मन्यते उभयकर्त्तृकामश्राद्धविषयत्वे एकत्रापराह्णव्याप्त्यादिकं बाधं कृत्वान्यत्र तु पाक्षिकं विनिविशमानस्य एकत्र नित्यत्वमन्यत्र पाक्षिकत्वमिति वैषम्यमापद्यते ।

तथाहि द्विजामश्राद्धे तावदातिदेशिकोऽपराह्णः शूद्रामश्राद्धे औप-देशिकः, तत्र द्विजामश्राद्धे पूर्वाह्णोपदेशोभवन्नतिदेशाद्बलीयस्त्वेना-तिदेशिकस्यापराह्णिकस्यात्यन्तबाधं कृत्वा पूर्वाह्णं निवेशयेत्, शूद्राम-श्राद्धे तूपदेशान्तरेण तुल्यबलत्वादौपदेशिकस्यापराह्णस्य पाक्षिकं बाधं कृत्वा निवेशयेत् अतो वैषम्यं। कथं पुनर्द्विजामश्राद्धे अपराह्णस्याति-देशिकः शूद्रामश्राद्धे त्वौपदेशिक इति। उच्यते। मुख्यन्तु पार्वणं ब्राह्मणभोजनात्मकं नित्यन्तद्विजरूपकर्तृविषयमेव न शूद्रकर्तृवि-षयं, तस्य ब्राह्मणभोजनात्मकश्राद्धनिषेधेन नित्यमेवामश्राद्धविधा-नान्निषेधं बाधित्वापि यदि तत्र पक्वान्नविधिरपि निविशेत तदा शूद्रविषये निषेधबाधापेक्षो द्विजविषये निरपेक्ष इति वैषम्यमापद्यते। तदेवं ब्राह्मणभोजनात्मकं यन्मुख्यं पार्वणं तद्विजरूपकर्तृविषयं नित्यं च। अनित्यन्तु द्विजानां पाकासम्भवादिनिमित्तविहितमामश्राद्धञ्च।

तथाच सुमन्तुः।

पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप।
अपत्नीकानां मन्त्रावाप्तौ विदेशगमनादिभिः।
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः॥

उशनाः।

आत्मनो देश-कालानां विप्लवे समुपस्थिते।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि॥

प्रचेताः।

आपद्यनग्नौ तीर्थे च चन्द्र-सूर्यग्रहे तथा।
आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि॥

तीर्थं पाकाद्यसामर्थ्यं यति निमित्तं, चन्द्र-सूर्य्यग्रहे भोक्तुरभावे ।

तथा ।

स्त्री शूद्रः स्वपचश्चैव जातकर्मणि चाप्यथ ।

आमश्राद्धं सदा कुर्य्याद्विधिना पार्वणेन तु ॥

'स्वपचः' स्वयं पचतीत्यपत्नीक इत्यर्थः(१) ।

जमदग्निः ।

यावत्स्याच्चाग्निसंयुक्तः उत्सन्नाग्निरथापि वा ।

आमश्राद्धं तदा कुर्य्याद्धुत्वाऽग्नौकरणं भवेत् ॥

हारीतः ।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितं ।

अमावास्यादिनियतं माघ-संवत्सरादृते ॥

'माघ-संवत्सरादृत इति माघिकं सांवत्सरिकञ्च वर्जयित्वा विधिरित्यर्थः। एवञ्च सत्यपराह्णप्रभृतयः प्रकृतावुपदिश्यमाना धर्मा ब्राह्मणभोजनात्मकस्य नित्यस्यैवोपदेशतो भवितुमर्हन्ति नानित्यस्य द्विजकर्तृकामश्राद्धस्यापि नित्यानित्यसंयोगविरोधात्। यथा प्रकृतावुपदिश्यमाना दीक्षणीयादयो धर्मा नित्यस्यैवाग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य उपदेशतो भवन्ति नानित्यस्यातिरात्रादिसंस्थस्यापि, यथा क्रयादयः सामद्रव्यसाध्यस्य नित्यस्यैव ज्योतिष्टोमस्य नानित्यस्य फलचमससाध्यस्यापि किन्त्वतिदेशत एव भवन्ति। अतस्तस्यानित्ये द्विजकर्तृकामश्राद्धे तस्यातिदेशत एवायमपराह्णः शूद्रामश्राद्धे तन्नैमित्तिकत्वेन नित्यत्वादुपदेशत एवापराह्ण इत्यौपदेशिकः

(१) 'स्वपचः' स्वयं पक्तेति क० ।

पूर्वाह्णत्वेन सह तत्र विकल्प्यते, द्विजामश्राद्धे त्वातिदेशिकत्वात्तं बाधते, अतस्तत्रायं पूर्वाह्णविधिरुभयत्र भवन्नेकत्र नित्योऽन्यत्र पाक्षिक-इत्येवं विधिवैषम्याकुलीकृतः सन्नेकमेव विषयमाश्रयितुमीहते। स चान्याय्यविकल्पदुष्टं शूद्रामश्राद्धं परित्यज्य द्विजामश्राद्धमेव वि-ज्ञापयति, एवञ्च सति।

मध्याह्नात्परतो यत्तु कुतपः समुदाहृतः।
आमपात्रेण तत्रैव पितॄणां दत्तमक्षयम्॥

इति यच्छातातपवचने पूर्वाह्णविरुद्धापराह्णदर्शनं[१] तदपि शूद्रा-मश्राद्धं परित्यज्य द्विजामश्राद्धं प्रति नीयमानं समाहितं भवति, वच-नस्येदमचापराह्णानुवादकं साधारणेनैव वचनेनाचाप्यपराह्णलाभात्। तस्माच्छूद्रामश्राद्धं कुतपोत्तरार्द्धात् प्रभृति प्रवृत्तेऽपराह्णे, द्विजाम-श्राद्धन्तु पूर्वाह्ण इति।

इति पूर्वाह्णविनियोगः।

---

## अथ मध्याह्नविनियोगः।

तत्र च "एकोद्दिष्टं तु मध्याह्ने इत्यत्र यद्यपि मध्याह्नत्वेन षष्ठोपक्रमाः पञ्च मुहूर्त्ता एकोद्दिष्टकालत्वेनोपदिष्टास्तथापि कुतप-स्यातिप्राशस्त्यात्प्रयत्नेन कुतपे श्राद्धारम्भं सम्पादयेत्।

तदुक्तं मत्स्यपुराणे।

मध्याह्ने सर्वदा यस्मात् मन्दीभवति भास्करः।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते॥

---

(१) पूर्वाह्णे शुद्धमपराह्णदर्शनमिति क०।

यथा कुतपे श्राद्धारम्भो विहितस्तथा रौहिणे समाप्तिरपीत्याह गौतमः।

प्रारभ्य कुतपे श्राद्धं कुर्य्यादा रौहिणाद्बुधः।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्॥

'रौहिणः' नवमो मुहूर्त्तः, 'न लङ्घयेदित्येतदपि रौहिणान्तःस-माप्तिप्रशंसार्थं न रौहिणातिक्रमनिषेधार्थं तस्यापि मध्याह्नेनापरा-ह्णेन च श्राद्धाङ्गत्वात्। अतएव मत्स्यपुराणे कुतपात्प्रभृति मुहूर्त्त-पञ्चकस्य श्राद्धाङ्गत्वमुक्तं।

मुहूर्त्तात्कुतपादूर्ध्वं यन्मुहूर्त्तचतुष्टयं।
मुहूर्त्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते॥ इति।

स्वधाभवनमित्यस्याभिप्रायः स्वधाप्रयोगवतः पार्वणैकोद्दिष्टस्य चायं कालो न पुनः स्वाहाप्रयोगवतो दैविकस्य नान्दीश्राद्धस्य चेति तयोर्हि पूर्वाह्ण-प्रातःकालयोरेव विधानात्।

इति मध्याह्नविनियोगः।

---

## अथ प्रातःकालविनियोगः।

तत्र "प्रातर्वृद्धिनिमित्तकमित्ययं प्रातःकालविधिर्न पुत्त्रजन्मनि-मित्तकवृद्धिश्राद्धविषयः। तथाहि पुत्त्रजन्मरूपे निमित्ते सति विधा-नादनन्तरमेवानुष्ठेयत्वे जन्मनस्त्वानियतकालत्वात् तस्यानियतकाल-त्वमेवावसीयते। ननु निमित्तविहितमपि श्राद्धं वैश्वानरीयावत्तत्कालं प्रति किं नोत्कृष्यते, उत्कर्षकारणाभावादिति जानीहि, न तस्या-श्चौचमुत्कर्षकारणं, न हि वैश्वानरीयेष्टिराशौचदोषनिवृत्त्यर्थंस्तुतक-

पेक्षणिता, किन्तु प्रयोजनविरोधात्।

अथोच्यते।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।
प्रेतपिण्डक्रियावर्जमाशौचेऽपि निवर्त्तयेत्॥

इत्यादिनिषेधानुरोधादुत्कर्ष इति। तत्र "पुत्रे जाते श्राद्धं कुर्य्यादिति नैमित्तिकविधेर्विशेषशास्त्रत्वेन(१) निषेधबाधकत्वात्, अनित्यकालत्वेनाशौचमित्येवंपरो वचनप्रपञ्चः।

तत्र तावच्छङ्ख-लिखितौ।

पिता पितामहश्चैव तथैव प्रपितामहः।
भूयस्तत्र प्रजायन्ते तद्धर्वेद्यन्ति च।
तस्मात्स दिवसः पुण्यः पितॄणां पुण्यवर्द्धनः॥

आदित्यपुराणेऽपि।

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनां।
आयान्ति तस्मात्तदहः पुण्यं पूज्यञ्च सर्वदा॥
तत्र दद्यात्सुवर्णन्तु भूमिं गान्तुरगं तथा।
छत्रं वस्त्रञ्च माल्यञ्च शयनञ्चासनं रथं॥

हारीतोऽप्याह।

जाते च कुमारे पितॄणामामोदात्पुण्यं तदहरिति।

पितॄणां 'आमोदात्' अतिशयेन हर्षोत्पत्तेः, 'पुण्यं' पावनं, दानादेः पुण्यकाल इत्यर्थः।

अत्र पुत्रजन्मादिदिवसस्याशौचदूषितत्वाभावात्तत्काल एव जन्म-

(१) विशेषशास्त्रत्वेनेति ग०।

निमित्तं श्राद्धं कर्त्तव्यं नाशौचोत्तरकालं प्रत्युत्कर्षणीयं। अत्र यद्यपि ग्रन्थादिवचने तदहःसमयमपि पुण्यमिति प्रतिभाति, तथापि प्रियनालच्छेदात् पूर्व्वमेवेति वेदितव्यं।

तथाच हारीतः।

प्राङ्नाड़ीच्छेदात् संस्कार-पुण्यार्थान् कुर्व्वन्ति नाड्यान्तु छिन्नाया-माशौचमिति ।

'संस्कारः' जातकर्म, 'पुण्यार्थाः' गुड़-तिल-तैल-गो-भू-हिरण्य-वस्त्र-धान्यादिदानानि ।

मनुरप्याह ।

प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयत इति ।

'वर्द्धनं' छेदः' ।

जैमिनिरपि ।

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते ॥ इति ।

विष्णुधर्मोत्तरे ।

अच्छिन्ननाड्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
आशौचोपरमे कार्य्यमथवा नियतात्मभिः ॥

सत्यव्रतः ।

पुत्रजन्मन्यानाभिकर्त्तनात्पुण्यं तदहस्तत्र जातकर्मामश्राद्धं कुर्यात् पात्राणि सहिरण्यानि दद्यात्तेन तावत्प्रातःकालशुद्धिकालापेक्षा ।

तथाचात्रिः ।

पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकं ।

पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥

प्रजापतिरपि ।

नाभ्यां छिन्नायामाशौचं अतो नालच्छेदात्पूर्वमेव श्राद्धं ।

एतच्च नैमित्तिकत्वाद्रात्रावपि कर्त्तव्यं ।

यथाह व्यासः ।

रात्रौ स्नानं न कुर्वीत तथा दानञ्च रात्रिषु ।

ग्रहणोद्वाह-संक्रान्ति-यात्रार्त्ति-प्रसवेषु च ॥

दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ।

पुत्रजन्मनि यात्रायां शर्व्वर्यां दत्तमक्षयम् ॥ इति ।

एतच्च तत्कालसूतकान्तरनिमित्ताशौचसन्निपातेनापि कर्त्तव्यं ।

तदाह प्रजापतिः ।

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।

कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुद्ध्यति ॥

'कर्त्तुः' जातकर्मकर्त्तुः, कर्मान्तरे तु पूर्वप्रवृत्तजन्माशौचनिवृत्तौ सत्यां कर्त्ता शुद्धो भवतीत्यर्थः। यदि पुनरेतत्काले द्विज-द्रव्य-कर्त्रासम्पत्तिवशाद्वाशौचान्तरनिपाताद्वा न कृतं स्यात् तदा सूतक-निवृत्तौ कस्मिंश्चिद्दिने प्रातःकाल एव कार्यं। ननु स्वकालात्परिभ्रष्ट-मिदं किमिति कालान्तरे कर्त्तव्यं, न ह्युपरागादिनिमित्तनिबन्ध-नानि कर्माणि तत्कालातिक्रमेऽपि क्रियन्ते। सत्यमेवं। इदं तु वच-नान्निश्चयते ।

तथाच विष्णुधर्मोत्तरे ।

अच्छिन्ननाड्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि ।

आशौचोपरमे कार्य्यमथवा नियतात्मभिः ॥ इति ।

जन्माशौचोपरमोऽस्य कालः, स तु नालच्छेदपूर्वकालेऽसम्भव-निबन्धन इत्येतत् कुतः, वैजवापवचनात्मनः ।

जन्मनोऽनन्तरं कार्य्यं जातकर्म यथाविधि ।
दैवादतीतकालं चेदतीते सूतके भवेत् ॥ इति ।

इति प्रातःकालविनियोगः ।

---

## अथ निषिद्धकालः ।

तत्र व्याघ्रपादाह ।

आर्त्तकर्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥

राहुसूतकादन्यस्मिन् सूतके आर्त्तं श्राद्धादि कर्म न कुर्व्वीत, श्रौतं तु दर्श-पूर्णमासाग्निहोत्रादि स्नात्वा सद्य एव कुर्यात् इत्यपरार्कः। स हि जन्माशौचे राहुप्रसवश्लेर्कमोचात्पूर्वकाले च सूतकशब्दप्रयोगोऽस्ति इत्यभिप्रेत्यैवं व्याख्यातवान् ।

अन्ये त्वेवं व्याचक्षते । 'सूतके' जन्माशौचे, सर्वकर्मपरित्यागः कर्त्तव्यः, स च "राहोरन्यत्र दर्शनमिति काम्यकर्माणि विहाये-त्यर्थः । तत्र प्रथमव्याख्याने जन्म-मरणाशौचयोर्द्वितीयव्याख्याने जन्माशौचे श्राद्धं न कर्त्तव्यमिति सिद्धं भवति, कर्मशब्दश्च प्रेत-पिण्डक्रियाव्यतिरिक्तकर्मविषयः।

तथाच पैठीनसिः ।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।

प्रेतपिण्डक्रियावर्जमाशौचं विनिवर्त्तयेत् ॥ इति।

मनु-शातातपौ।

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा।

सन्ध्ययोरुभयोर्वापि सूर्य्ये चैव तिरोहिते ॥ इति।

रक्षांसि यस्यां चरन्ति वा प्रभवन्ति भवन्तीति राक्षसीत्युच्यते, तस्यान्तु रक्षोभिः श्राद्धमवलुप्यते। पूर्वापरयोः सन्ध्ययोरपि न कर्त्तव्यं श्राद्धं।

सन्ध्ययोर्मानन्तु याज्ञवल्क्य आह।

उदयात्प्राक्तनी सन्ध्या मुहूर्त्तद्वयमुच्यते।

सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥ इति।

"सूर्य्ये चैव तिरोहित इति यदुक्तं तत्सन्ध्यासमीपकालस्योपलक्षणं, तेनाखिलमयसन्ध्यासमीपोऽपि कालो लभ्यते। तदनेन प्रातः-कालविहितं पूर्वसन्ध्या-तत्समीपकालयोः प्रसक्तं वृद्धिश्राद्धं निषिध्यते, अपराह्णविहितञ्च पार्व्वणं पश्चिमसन्ध्या-तत्समीपकालयोः प्रसक्तं नि-षिध्यते, मध्यमसन्ध्या-तत्समीपकालयोस्तु कुतप्रनाम कश्चिन्निषेधः।

स्कन्दपुराणे।

उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन।

स कालश्चासुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत् ॥

अनेन सन्ध्यासामीप्यनिषेधेन सायंकालात्पूर्वं श्राद्धारम्भ-समाप्त्यो-रसमर्थं प्रति सन्ध्यासमीपव्यतिरिक्तः सायंकालांशोऽनुज्ञातो भवति।

यत्तु :

सायाह्नस्त्रिमुहूर्त्तस्तु सर्वकर्मबहिष्कृतः।

इति प्रभासखण्डवचनं,

चतुर्थे प्रहरे प्राप्ते श्राद्धं यः कुरुते नरः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् ॥

इति बौधायनवचनम्,

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
आसुरं तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठते ॥

इति हारीतवचनं तत्सायंकालात्पूर्वमेव श्राद्धारम्भ-समाप्तिसमर्थं प्रति ।

एवमाह व्याघ्रपात् ।

विधिज्ञः श्रद्धयोपेतः सम्यक्पाकनियोजकः[१] ।
रात्रेरन्यत्र कुर्वीत श्रेयः प्राप्नोत्यनुत्तमम् ॥ इति ।

रात्रि-सन्ध्या-तत्समीपकालनिषेधस्यापवादमाह विष्णुः ।

सन्ध्या-रात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥ इति ।

'राहुदर्शनं' चन्द्र-सूर्योपरागः ।

इति निषिद्धकालः

---

## अथ पिण्डदाने निषिद्धकालः ।

तत्र पुलस्त्यः ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पि निर्वपणादृते ॥

---

(१) पाकप्रयोजक इति क० ।

एतेषु कालेषु श्राद्धं 'पिण्डनिर्वपणादृते' पिण्डदानेन विना, कर्त्तव्यमिति शेषः।

मत्स्यपुराणे।

अयनद्वितये श्राद्धं विषुवद्वितये तथा।
संक्रान्तिषु च कर्त्तव्यं पिण्डनिर्वपणादृते॥
वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य तु।
श्राद्धं कार्य्यञ्च शुक्लायां संक्रान्तिविधिना नरैः॥

अत्र संक्रान्तिष्वित्यनेनैवायनादीनामपि लाभे पुनस्तदभिधानं तत्कालकृतस्य पिण्डदानस्यातिनिन्दितत्वद्योतनार्थं। संक्रान्तिविधिनेत्यनेन पिण्डदानराहित्यमुक्तं। "वैशाखस्य तृतीयायामित्यादिकं सर्वं युगाद्युपलक्षणं "युगादिषु च सर्वासिति पुलस्त्यवचनात्।

ब्रह्मपुराणे "अयनद्वितये श्राद्धमित्यादिमत्स्यपुराणोक्तश्लोकौ[१] पठित्वोक्तं।

चयोदश्यां भाद्रपदे माघे चन्द्रक्षयेऽहनि।
श्राद्धं कार्य्यं पायसेन दक्षिणायनवच्च तत्॥
यदा च श्रोत्रियोऽभ्येति गेहं वेदविदग्निवित्।
तेनैकेन तु कर्त्तव्यं श्राद्धं विषुवदुक्तमं॥

'विषुवदुक्तममिति विषुवश्राद्धादुक्तमं श्रेष्ठं श्रोत्रियाभ्यागमननिमित्तकमपि श्राद्धं प्रायः पाठादपिण्डमेव भवितुमर्हति।

वृहत्पराशरः।

युगादिषु मघायाञ्च विषुवत्ययने तथा।

(१) श्लोकद्वयमिति ग०।

भरणीषु च कुर्वीत पिण्डनिर्वपणं न हि ॥

मघायुक्तां भाद्रपदापरपक्षत्रयोदशीमधिकृत्य देवीपुराणे ।

तथापि महती पूजा कर्त्तव्या पितृदैवते ।
पक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्जयेत् ॥

'तथापि' भाद्रपदापरपक्षत्रयोदश्यामपि, 'पितृदैवत-पक्षे' मघा-नक्षत्रे जाते सति, 'महती' श्राद्धरूपा पितृपूजा कर्त्तव्या, स तु कर्त्ता ज्येष्ठपुत्रवान् जीवत्प्रथमपुत्रश्चेत् भवेत् तर्हि तत्र श्राद्धं कुर्वन् पिण्डप्रदानं वर्जयेत् पिण्डरहितं श्राद्धं कुर्यादित्यर्थः। 'ज्येष्ठपुत्री'-त्यनेन मघाकालिकस्य त्रयोदशीकालिकस्य तदुभयसमवायकालिकस्य च पिण्डदानस्य ज्येष्ठपुत्रविनाशकत्वलक्षणो दोषः सूचितः ।

तथाच महाभारते ।

संक्रान्त्यामुपवासेन पारणेन च भारत ।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति ॥ इति ।

ज्योतिःपराशरे ।

विवाहे विहिते मासांस्तदूर्द्धं दशैव हि(१) ।
सपिण्डे पिण्डनिर्वापं मौञ्जीबन्धे तथैव हि ॥

अस्यापवादः ।

महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्त्यस्य सपिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ॥ इति ।

(१) तमेवूर्द्धं दशैव हीति क० ।

वृद्धशातातपः(१) ।

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ।
अक्षय्य-दक्षिणा-स्वस्ति-सौमनस्यं यथाविधि ॥

इति पिण्डदाने निषिद्धकालः ।

---

## अथ प्रेतक्रियासु निषिद्धकालः ।

तथाह गार्ग्यः ।

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।
आशौचमध्ये क्रियते पुनः संस्कारकर्म चेत् ।
शोधनीयं दिनं तत्र यथायथमवेव तत् ॥
अशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः ।
संशोध्यैव दिनं पात्रमूर्ध्वं संवत्सराद्यदि ॥
प्रेतकार्याणि कुर्वीत श्रेष्ठं तथोत्तरायणं ।
कृष्णपक्षस्तथापि वर्जयेत्तु दिनत्रयं ॥

इह हि द्विविधः प्रेतसंस्कारः, एकः प्रत्यक्षशरीरस्य, शरीरप्रतिकृतेरपरः। तत्र प्रत्यक्षशरीरसंस्कारे शुभाशुभदिनपरीक्षानवकाशः। प्रतिकृतिसंस्कारस्य तु त्रयः कालाः, आशौचमध्ये, संवत्सरान्तस्, संवत्सरादर्ध्वञ्चेति। तत्राशौचमध्ये प्रतिकृतिसंस्कारः इति पक्षे वक्ष्यमाणतिथि-नक्षत्रादिवर्जिते काले विधेयः। यदा त्वाशौचादूर्ध्वं

---

(१) वृद्धशातातप इति ग० ।

संवत्सरमध्ये प्रतिकृतिसंस्कारस्तदानीं वक्ष्यमाणप्रकारेणारम्भकाल-शोधनमवश्यं कार्य्यं। संवत्सराद्बहिरपि क्रियमाणे तस्मिन्नपि संशोधनीय एव कालः। किन्तु तत्रोत्तरायण-शुक्लपक्षौ सम्पाद्यमानौगुणो-त्तरौ भवतः। दिनक्षयदिनं तु सर्वत्र वर्जनीयं।

मरीचिः।

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे।
तत्र श्राद्धं न कुर्वीत गृही पुत्र-धनक्षयात्॥

प्रतिपत् षष्ठी एकादशी च 'नन्दा'। 'भार्गवदिनं' शुक्रवासरः। कृत्तिका-पुनर्वसूत्तराफाल्गुनी-विशाखोत्तराषाढ़ा-पूर्वाभाद्रपदाख्या-नि नक्षत्राणि 'त्रिपुष्कराणि'। श्राद्धशब्देनात्र प्रेतक्रिया विवक्षिता। नन्दादिष्वेव मध्ये दुष्टतमान्याह स एव।

एकादश्यान्तु नन्दायां सिनीवाल्यां भृगोर्दिने।
नभस्यस्य चतुर्दश्यां कृत्तिकासु त्रिपुष्करे॥

अत्र श्राद्धं न कुर्वीतेत्यनुषङ्गः। सिनीवाल्यां भृगोर्दिन इति सम्बन्धः।

महाभारते।

नक्षत्रेण न कुर्वीत यस्मिन् जातो भवेन्नरः।
न प्रोष्ठपदयोः कार्य्यं तथाग्नेये च भारत।
दारुणेषु च सर्वेषु प्रत्यरौ च विवर्जयेत्॥

जन्मनक्षत्रमत्र श्राद्धकर्त्तुः, 'प्रोष्ठपदयोः' भाद्रपदाख्ययोः, 'आग्नेयं' कृत्तिका, 'दारुणानि' आर्द्रा-ज्येष्ठा-मूलानि, जन्मनक्षत्रात्पञ्चमं चतुर्दशं त्रयोविंशञ्च 'प्रत्यरिः'।

ज्योतिःपराशरः।

साधारण-ध्रुवोग्रे मैत्रे च न शस्यते मनुष्याणां।

प्रेतक्रिया कथञ्चित् त्रिपुष्करे यमलविध्ये च ॥

'साधारणं' कृत्तिका-विशाखे, 'ध्रुवाणि' उत्तरात्रयं रोहिणी च, 'उग्राणि' पूर्वात्रयं भरणी मघा च, 'मैत्राणि' मृग-चित्रानुराधा-रेवत्यः, 'त्रिपुष्कराण्युक्तानि, 'यमलविध्यं' धनिष्ठा, "मृग-चित्र-योर्मैत्रे चेत्युक्तत्वात्।

वाराहपुराणे।

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत्।

प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ॥

करणे विष्टिसंज्ञे च शनैश्चरदिने तथा।

चयोदश्यां विशेषेण जन्मताराचये तथा ॥

उत्पत्तिनक्षत्रं दशममेकोनविंशञ्चेति 'जन्मताराचयं'।

आह काश्यपः।

भरण्यार्द्रा मघाश्लेषा मूलं द्विचरणानि च।

प्रेतकृत्येषु दुष्टानि धनिष्ठाद्यञ्च पञ्चकं ॥

फाल्गुनीद्वितयं रोहिण्यनुराधा-पुनर्वसू।

द्वे आषाढे विशाखा च तानि द्विचरणानि च।

एतानि किञ्चित् दुष्टानि वर्जयेत्तानि यत्नतः ॥

तदेवमेतेषु प्रेतकृत्यमात्रप्रतिषेधे प्राप्ते क्वचिदपवादमाह गोभिलः।

नन्दायां शुक्रवारे च चतुर्दश्यां त्रिजन्मसु।

एकादशाहमध्यति नैकोद्दिष्टं निषिध्यते ॥

'पिण्डदानानि' अन्तरारायणम् ।

वैजवापः ।

प्रेतस्य श्राद्धकर्त्तुश्च प्राप्ते लेकादशेऽहनि ।
नक्षत्र-तिथि-वारादि शोधनीयं न किञ्चन ॥
युग-मन्वादि-संक्रान्ति-दर्शे प्रेतक्रिया यदि ।
दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥

इति प्रेतक्रियासु निषिद्धकालाः ।

---

## अथेदानीमिदं विचार्य्यते ।

किं सपिण्डीकरणोत्तरकालिकानि ज्ञाताज्ञातपरपक्षामावास्याष्टका-व्यतीपात-संक्रान्त्युपराग-मनु-युग-कल्पादि-गजच्छायादिकालयुक्तानि श्राद्धानि प्रतिकालभिद्यन्ते न वेति । तदर्थमिदं चिन्त्यते । किं कालयुक्तानि वाक्यानि कर्मोत्पत्तिविधयः उतोत्पन्ने कर्मणि कालानुगुणविधय इति ।

तत्र सोमदत्त आह ।

यद्यपि गुणविधौ भावार्थे विधिर्वाक्यार्थविधिश्चापद्यते तथापि विशेषणे विधिप्रक्रियाश्रयणात्मावश्यात् गुणविधय एवेति न कर्मभेदमापादयन्ति, तेन कर्मैक्यादयुगपद्भाविष्वपि वैकल्पिकेषु कालेषु क्वचिदेकस्मिन् कालेऽनुष्ठानं न सर्वस्मिन्, कुतस्तु युगपद्भाविषु पृथगनुष्ठानमिति कालसमवाये सकृदेकमेव श्राद्धं कर्त्तव्यम् । न हि कालरूपगुणानुरोधेन प्रधानावृत्तिर्युक्ता, सायंप्रातरादिकालानुरोधेन

होमादृष्टिस्तु तत्कालावच्छिन्नजीवनरूपनिमित्तादृष्टेरिति । तद-युक्तम्। यत्र हि शुद्धोत्पत्तिविधिरस्ति तत्र गुणयुक्तेषु वाक्येषु तत्प्र-त्यभिज्ञानात् गुणमात्रविधिर्भवति । अत्र तु शुद्धोत्पत्त्यभावादुदग-यनादिविशिष्टविधौ गौरवाद्यदोषः। शुद्धोत्पत्तिकल्पनायां तु सर्वत्र विशिष्टविधिलोपेन क्वचिद्गुणाद्भेदः स्यात्। तेन विशिष्टविधित्वात् प्रतिकालं श्राद्धभेदः, निमित्तत्वाच्चोपरागादीनां तद्भेदे स्पष्टो भेदः। अतस्तत्कालागमने तत्तच्छ्राद्धमनुष्ठेयमिति स्थितम् । अथेदानीं कालस्य समवाये निमित्तसमवाये च सन्दिह्यते, किं तदा तत्तत्का-लिकानां तत्तन्निमित्तकानाञ्च श्राद्धानां मध्ये किञ्चिदेकमेवानु-ष्ठेयम्, उत सर्वाणि पृथक्, यद्वा तन्त्रेणैवेति ।

तत्राह शिवद्त्तः ।

नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित् ।

इति हारीतवचनात् किञ्चिदेकमेवेति ।

शूलधरादयस्त्वाहुः नैतद्युक्तम् ।

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा कुर्य्याच्छ्राद्धं पृथक् पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्य्यात्सन्निपातेष्वयं क्रमः ॥

इति भृगुणा समानेऽप्यहनि भिन्ननिमित्तानामनेकेषां श्राद्धानां विधानात् एकादशाहादौ च नानानिमित्तानां प्रेतश्राद्धानां विधा-नात् । उदाहृतनिषेधस्तु अद्ययारभ्यमाणैकनिमित्तश्राद्धावृत्ति-विषयः । ननूदाहृतविशेषवचनविषयव्यतिरिक्तविषयो भवतु । ततश्च

मासिकादिव्यतीपातादिश्राद्धकालसमवाये न श्राद्धानुष्ठानमिति, न, भिन्ननिमित्तकश्राद्धेऽपि निषेधप्रवृत्तौ श्राद्धोत्तरकालं पुत्रजन्मनि वृद्धिश्राद्धाभावप्रसङ्गात्। ततश्चाचारबाधस्तद्व्यतिरिक्तविषय इति चेत्। न। कृतश्राद्धस्य सूर्य्यग्रहे श्राद्धाभावप्रसङ्गात् पूर्व्वाचारबाधः स्यात्। तद्व्यतिरिक्तविषय इति चेत्। न। भिन्ननिमित्तैककालिकश्राद्धविधीनामप्यस्थिरत्वेन बाधप्रसङ्गात्। तानि सामान्यवचनानि आचारस्य दुर्बल इति बाधो भवत्विति चेत्। न। उदाहृतवचनविषयव्यतिरिक्तविषयत्वे बहुवचनाचारबाधौ स्यातां, मूलभूतश्रुत्यन्तरकल्पना च भवेत्। अस्मदुक्तविषयत्वे तु न बाधौ, नापि श्रुतिकल्पना, न्यायमूलत्वात्। श्राद्धद्वयानुष्ठाने विहितकुतपादिकालबाधप्रसङ्गात्। युगपदनुष्ठाने तु "एकस्मिन् क्रियमाणे तु नानाकर्म समाचरेदित्यादीनां कर्ममध्ये कर्मान्तरानुष्ठाननिषेधकवचनानां बाधः स्यात्, प्रयोगविधिना च विलम्बनिषेधः। तेन सर्वाण्यप्यनुष्ठेयानि इति स्थिते पृथगिति विष्णुधर्माभिमतः पक्षो न्याय्यते।

यत्तु देश-काल-कर्त्रैक्यादिविशेषग्रहणाभावेनाग्नेयादियागाङ्गानां प्रयाजादीनां तन्त्रमनुष्ठानमुक्तं, तदेकप्रयोगविधिग्टहीतेष्वङ्गेष्वेवोचितं, न तु स्वतन्त्रेषु प्रधानेष्वेव। यत्तु काम्यापूर्वार्थमनुष्ठितयोर्दर्शपूर्णमासयोः नित्यापूर्वं प्रसङ्ग उक्तः, सोऽपि कर्मैक्ये वक्तुमुचितः। यावेव ह्याग्नेयादिसमुदायौ काम्यापूर्वार्थौ तावेव नित्यापूर्वार्थौ उत्पत्तिवाक्ये तदैक्यावगमात्। यत्तु तत्र भेदव्यवहारः स कामरूपनिमित्तरूपोपाधिसम्बन्धनिबन्धनप्रतीतिकालव्यवस्थाभेदाश्रयो न वस्तुभेदाश्रयः, अपूर्वभेदस्तु वास्तवोऽधिकारभेदात्। अतश्चायमौपाधिको-

ऽप्यपूर्वभेदोऽनुनिष्पादनीय इति भेदलक्षणे विचारितः। ननु तत्तत्प्रत्यर्थरूपोपाधिभेदावगमात्तु ते न, अत्र कर्मैक्यात्। काम्यापूर्वार्थमनुष्ठिताभ्यामेव दर्श-पूर्णमासाभ्यां नित्यानुष्ठानसिद्धौ न पृथगनुष्ठानं क्रियते, भिन्ने तु कर्मण्यन्यापूर्वस्यान्येनासिद्धेस्तदर्थमन्यस्याप्यनुष्ठानमिति। तदयुक्तं। कर्मभेदेऽपि देश-काल-कर्त्रैक्ये सहानुष्ठानेन सर्वकर्मसिद्धेर्युगपदेव सर्वापूर्वनिष्पत्तिर्जायते। न ज्ञायते हि तदा विशेषः, इदं निष्पन्नभेदमिति। यागभेदेऽपि देवतैक्ये तन्त्रानुष्ठानस्य सान्नाय्येऽभ्युपगतत्वाच्च। स्नानदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवमित्यत्र युगपदनेकामेध्यदर्शनरूपनिमित्तसमवाये प्रतिनिमित्तवद्धं "मनोदरिद्रं चक्षुरित्येतन्मन्त्रजपरूपनैमित्तिकावृत्तौ प्राप्तायां विशेषग्रहणाभावात् सकृन्नैमित्तिकानुष्ठानमिति चैकादशे स्थितं। अतः श्राद्धनिमित्तसमवाये कालसमवाये च देशैक्ये कर्त्रैक्ये देवतैक्ये च विशेषग्रहणाभावात्तन्त्रेण कर्त्तव्यमिति सर्वश्राद्धानुष्ठानं, एवञ्च सङ्क्रान्तिनिमित्तकममावास्यानिमित्तकं व्यतीपातनिमित्तकं चेत्येतानि श्राद्धानि तन्त्रेण करिष्य इति सङ्कल्पं कुर्यात्॥

इति कालसमवायनिर्णयः।

---

## अथ वैश्वदेवकालनिर्णयः।

तत्र तदुपयोगितया वैश्वदेवपाकविचारः क्रियते, किं वैश्वदेवार्थः श्राद्धार्थश्चैक एव पाकः, उत भिन्न इति। तत्र तावत्पञ्चमहायज्ञान्तर्गतस्य नित्यश्राद्धस्य वैश्वदेवादेश्चैक एव पाकः, आन्वाहिकस्य

पाकस्यान्वहमनुष्ठीयमानानामग्निव्यापारसर्वकर्म्मार्थत्वात् । अग्नौकरणविशेषे नैकादशाहात् पूर्वं वैश्वदेवादौव नास्तीति तदानीं तेन नवश्राद्धेषु पाकैक्यानैक्याशङ्कैव नास्ति, ऐकादशाहिकेषु श्राद्धेषु वैश्वदेवस्य पाकान्तरेणैवानुष्ठानं, "एकोद्दिष्टेऽग्रपिण्डं तु ब्राह्मणेभ्यः समुत्सृजेत्" इति देवलेन नवश्राद्धसंज्ञकेष्वेकोद्दिष्टेषु सर्वस्याप्यग्रपिण्डस्य ब्राह्मणेभ्यो देयत्वविधानात् । प्रेतश्राद्धेषु चैतत्प्रबलं वक्ष्यते । अमावास्याश्राद्धविकृतिभूतेषु सांवत्सरादिषु प्रकृतिनिर्णयेनैव निर्णय इत्यमावास्याश्राद्धार्थे पाके संशयः । तत्र कर्कोपाध्यायो वैश्वदेवार्थात् पाकाद्भिन्नेन श्राद्धं कर्त्तव्यमिति पूर्वपक्षं कृत्वा वैश्वदेवार्थेनैव पाकेन कार्यमिति सिद्धान्तमुक्तवान् । तत्र तदभिमतपूर्वपक्षोत्तरपक्षहेतुदूषणं श्राद्धकल्पे कृतम् । यत्तु कर्कोपाध्यायेन स्वसिद्धान्तहेतुरुक्तः पृथक्पाकस्यावचनादिति स इदानीमसिद्धत्वेन दुष्यते,

पित्र्यर्थं निर्वपेत् पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्र्यर्थं न दार्शं वैश्वदेविकम् ॥

इति जाबालिवचनेन पृथक्पाकस्याभिधानात् । अत्र यद्यपि पूर्वार्द्धे एकमेव पाकमुभयार्थं निर्वपेदित्यपि प्रतिभाति, तथापि उत्तरार्द्धेन पाकभेदः स्पष्टीक्रियते, "वैश्वदेवं न पित्र्यर्थमिति । वैश्वदेवाख्यनित्यहोमार्थं पक्वमन्नं वैश्वदेवं तत् न पित्र्यर्थं दर्शश्राद्धार्थञ्च न भवति । न तु नित्यश्राद्धार्थमपि न भवति अन्वहमनुष्ठीयमानानां देव-पितृ-भूत-मनुष्योपपदानां यज्ञानामेकपाकसाधनत्वमिति सिद्धत्वात्, दर्शश्राद्धार्थं पक्वमन्नं दार्शं तद्वैश्वदेवार्थं न भवति, दर्शशब्देन च दर्शश्राद्धेतिकर्त्तव्यताकत्वान्नित्य-नैमित्तिक-काम्यान्येकोद्दिष्टान्तानि

श्राद्धानि लक्ष्यन्ते, वैश्वदेवशब्देन भूतयज्ञ-पितृयज्ञ-मनुष्ययज्ञा-अप्युपलक्ष्यन्ते। कथं पुनरन्यार्थस्य सतोऽन्यार्थशङ्का अभिधान-लक्षणयापि विना कारणं विनियुक्तं विनियोगानभ्युपगमात्। सत्यं। न त्वत्रान्यार्थस्य सतोऽन्यार्थत्वमाशङ्कितं निषिद्धं वा, किन्तु निर्वापपा-कयोस्तन्त्रताशङ्का निराकृता, अन्यार्थस्य सतोऽप्यन्यत्र प्रसक्तिा चेति। तत्र प्रसङ्गशङ्का च प्रत्यासन्नकालानां कर्मणामेकसाध्यत्वोपपत्तौ साधनोपादानलाघवादिति। अत्र "न दार्शं वैश्वदेविकमिति यत्तौ-गाक्षिवचनैकदेशेनोक्तं तद्वैश्वदेवस्य श्राद्धात् पूर्वं मध्ये वानुष्ठाने क्रियमाणे सत्येव वेदितव्यं, न तु तदुत्तरकालमपीति, यत आह पैठीनसिः।

पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः।

आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ इति।

ननूद्धृत्येत्यनर्थकं, न ह्यनवदाय शक्यो होमः कर्त्तुं, अवदानञ्च समुदायादेकदेशस्योद्धरणमेव। नैवं। अत्र हि पितृपाकशब्देन सङ्कल्पितपितृदेवत्यत्वावस्थः पाकोऽभिधीयते, तदवस्थाच्चोद्धरणमेक-देशस्य, तद्देवत्यता प्रच्यावनमेव न विभागमात्रं। तद्देवत्यता प्रच्यावनञ्च पूर्वदेवतासम्बन्धापनयने सत्येवोपपद्यते। अतः पितृदेवताभ्योऽपनयन-एवायमुद्धरतिना प्रतिपाद्यते। स चायं निर्वापकालीनं पितृदेवत्य-ममुं पाकं करिष्यामीत्येवं विधानुसन्धानरूपं सङ्कल्पविशेषं बाधित्वा श्राद्धात् पूर्वं तन्मध्ये वा शक्यः, न तूत्तरकालमपि, न हि पि-तृनुद्दिश्य त्यक्तस्य तत आच्छेदः शक्यः, तद्देवत्यत्वस्य निष्पन्नत्वात्। न हि निष्पन्नमनिष्पन्नं शक्यं कर्त्तुं। ननु न ब्रूमो निष्पन्नमनिष्पन्नं

क्रियते इति, किं तर्हि तन्नाश्यत इत्युच्यते। नैवं। नाशकासम्भवात्। अन्यदेवतोद्देशेनोद्धरणं नाशकमिति चेत्। न। तस्योत्तरदेवतासम्बन्धमात्रपरत्वेन पूर्वदेवतासम्बन्धनाशकत्वे प्रमाणाभावात्। ननु पूर्वसम्बन्धनाशमन्तरेणोत्तरसम्बन्धासिद्धेः पूर्वनाशकत्वमनुमीयते सम्बन्धद्वयस्यैकत्र विरोधात्, वचनोपदिष्ट आच्छेदो नाशक इति। नैवम्। तदुद्देशेन त्यज्यमानत्वमेव हि तद्देवत्यत्वं, तच्च त्यागनिष्पत्त्युत्तरकालमेव भूत्वा विनष्टं, अतः किमाच्छेदेन विनाश्यं किञ्चोद्धृत्यवादस्याभिप्रायः। नन्वेवं प्रतिमाद्यधिष्ठातृदेवतोद्देशेन त्यक्तस्यापि द्रव्यस्य त्यागोत्तरकालमेव देवतासम्बन्धो भूत्वा विनष्टः, ततश्च तद्द्रव्यस्य प्रतिग्टहीतत्वेन तदपहारे देवस्वापहारदोषो न स्यात्। नैवम्। यत्तावन्नित्यं प्रतिमाद्युपभोग्यत्वाय द्रव्यं त्यक्तं तत्र तद्देवत्यत्वस्योपभोगफलकत्वाद्यावदुपभोगमविनाशात्। विनाशे हि निमित्तनिवृत्तेर्नैमित्तिकानुवृत्तिर्दुर्घटा स्यात्। यत्तु परिसमाप्तोपभोगं द्रव्यं तत्र देवस्वत्तामुपलक्षणीकृत्य निर्माल्यवद्ग्रहणनिषेधोऽस्तु, अतः श्राद्धोत्तरकालं पाकस्य पितृसम्बन्धो भूत्वा विनष्ट इति क्रमाच्छेदो विनाशयेत्, वस्तुतस्तु श्राद्धशेषे नास्त्येव पितृसम्बन्धः को विनाश्यः उपयुक्तशेषे ह्युपलक्षणीभूत एवासौ। न चायं तदवस्थ...र्त्तनम-र्हति। अथ कस्मात्पितृपाकशेषादुद्धृत्य विभज्येति न व्याख्यायते। न ह्युद्धृत्येत्यानर्थक्यादित्युक्तप्रायमेव। अतोऽपाकारम्भ एव पित्र्ये प्रारब्धापरिसमाप्ते वा, यः पित्रर्थपाकात् समुद्धृत्य वैश्वदेवं करोति तस्य तच्छ्राद्धमासुरम्भवेदिति वचनार्थः। युक्तञ्चैतत्। यदर्थं यदुपकल्प्यते तदर्थस्यैव तस्मै परस्मै दीयमानं यत्किञ्चिल्लौकिकमप्युपहतं मन्य-

मानाः पृथग्जना अपि तस्य कर्मणोयुक्ततां मन्यन्ते, किमुत यत् पित्रर्थं देवतार्थं वोपकल्प्यते तस्मिन् प्रागेव परस्मै दीयमाने। यदा तु तस्मै दत्त्वा अन्यस्मै दीयते न तदा कश्चिदुपहतत्वमयुक्ततां वा मन्यते। उक्तश्च श्राद्धोत्तरकाले श्राद्धार्थस्यापि वैश्वदेवे विनियोगः। तथाच पैठीनसिः।

श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः।

कुर्य्यात् भिक्षां ततोदद्याद्धन्तकारादिकं तथा॥ इति।

अत्राद्यततःशब्देन पूर्वश्लोकार्थोहेतुत्वेनोच्यते। द्वितीयेन[१] श्राद्धावशिष्टाद्रव्यादित्युच्यते। तेनायमर्थः, यतः श्राद्धात्पूर्वं पितृपाकात्समुद्धृतेनान्नेन वैश्वदेवे क्रियमाणे तच्छ्राद्धमासुरं स्यादतः कारणाच्छ्राद्धं निर्वर्त्य ततस्तच्छ्राद्धावशिष्टाद्रव्यात् किञ्चिदादाय वैश्वदेवादिकं कुर्यादित्यर्थः। न चाचाअत्याप्रकृतत्वेन तच्छब्दपरामर्शायोग्यत्वं वाच्यं। पितृपाकात्समुद्धृत्येत्यस्मिन् पूर्वश्लोकेऽन्नप्रक्रमात्। सन्निहितं च सर्वनाम्ना परामृश्यते। न चोपन्यासेन सन्निधिरिति नियमः, बुद्धिसन्निधिस्तु सन्निधिरित्यभ्युपगमात्। अत्रादिशब्देन सर्वमनबाध्यं नैत्यकं कर्म गृह्यते, तेन नित्यश्राद्धमपि श्राद्धोपयुक्तात्पाकशेषात्कर्त्तव्यं। तदेवं यदि ब्राह्मणविसर्ज्जनान्ते वैश्वदेवं कुर्यात् तदा श्राद्धार्थेनैव पाकेन, यदा तु वक्ष्यमाणप्रकारेण ब्राह्मणविसर्जनात् प्राचीनकालत्रयान्यतमकाले वैश्वदेवं कुर्यात् तदा पृथक्पाकेनेति। अथ स्मृतिचन्द्रिकाकारः "पित्रर्थं निर्वपेत्पाकमित्यादि "न द्यार्थं वैश्वदेविकमित्येवं लौगाक्षिवचनं पठित्वा दर्शश्राद्धार्थं

(१) द्वितीयततःशब्देनेत्यर्थः।

निरग्निमतां कृतेऽपि श्राद्धे न वैश्वदेवार्थं भवतीति च व्याख्यायैतदग्नि-
मद्दर्शश्राद्धविषयमिति चाभिधायाच न्यायमुक्तवान्, साग्निकस्य हि
दर्शश्राद्धात्प्रागेव वैश्वदेवविधानेन श्राद्धान्ते श्राद्धशिष्टेन वैश्वदेवा-
योगादिति । स एव न्यायस्तद्विवक्षितार्थविपरीतमेवार्थं साधयति,
उत्तरकालं वैश्वदेवाभावे श्राद्धशेषसाध्यप्रसक्तिविरहान्निषेधानुपपत्तेः ।
पूर्वकाल एवायं निषेध इति साग्निकानग्निकविषय एवायं स्यादिति ।
अथ प्रसक्त्यभावान्निषेधविधित्वानुपपत्तावपि यदि नित्यानुवादः
स्यादित्युच्यते तदा तावदनुवादत्वमानर्थक्यं चेति दोषद्वयं प्रसज्येत ।
वैषम्यञ्च अयं हि साग्निकविषयोभवन् पूर्वकालीनमुत्तरकालीनञ्च
वैश्वदेवमाश्रयते । तत्र पूर्वकालीने निषेधविधिः उत्तरकालीने
निषेधानुवाद इति । अतो ब्राह्मणविसर्जनात्प्राचीनेषु कालेषु वि-
हितस्य वैश्वदेवस्य श्राद्धेन सह पाकैक्यं निषेधवत्त्वेनागाच्चिवचनं साग्नि-
कानग्निकविषयमेवास्तु । यत्तु मन्यते "श्राद्धं निर्वर्त्य विधिवत् वैश्वदेवा-
दिकं ततः" इत्यादीनां श्राद्धशेषेण वैश्वदेवादिकर्त्तव्यताविधायकानां
वचनानां दर्शश्राद्धविकृतिभूतेषु प्रतिसांवत्सरादिकेषु श्राद्धेषु नि-
वेशः, "न दार्शं वैश्वदेविकमित्यादेस्तु दर्शश्राद्ध एव निवेश इति,
स एवं प्रतिबोद्धव्यः, सर्व एवैते सामान्यविधयो दर्शश्राद्धमेवारभ्या-
म्नायन्ते न कश्चिदनारभ्यवादोऽस्ति, अस्तु वा सोऽपि, तथापि "प्रकृतौ
वा द्विरुक्तत्वादिति न्यायेन यस्य पर्णमयी जुहूर्भवतीतिवत्तस्य प्रकृ-
तिगामित्वनियमाद्दर्शश्राद्ध एव निवेशः । अथोच्येतारभ्याधीतविरु-
द्धधर्मावरुद्धायां प्रकृतौ अनारभ्यवादस्य विकृतौ निवेश इति, तन्न,
पूर्वोक्तया विषयव्यवस्थया आरभ्याधीतविरोधस्य परिहृतत्वात् । अतो-

ऽप्ययं दर्शश्राद्धविषयो विधिरयं नेति न वक्तव्यं।

पिण्डदानात्प्राक् पाकभेदे स्मृत्यन्तरं।

आतुरेभ्यः प्रवीणेभ्यो बालेभ्यो यच्च दीयते।
वैश्वदेवं न तत् कुर्य्याच्छ्राद्धार्थं यच्च पच्यते॥

तथा।

गृह्याग्नि-भिक्षु-देवेभ्यो यतये ब्रह्मचारिणे।
पितृपाको न दातव्यो यावत्पिण्डान्न निर्वपेत्॥

प्रचेतसाप्युक्तं।

गृह्यपाकाद्बलिं हुत्वा निर्वर्त्य पितृयज्ञियम्।
ततो निरुप्तमन्नं यत्तेभ्योऽग्रे तन्निवेदयेत्॥

गृह्यकर्म्मार्थः 'गृह्यः,' 'बलिः' अत्र वैश्वदेवः, पितृयज्ञियं' श्राद्धं पिण्डपितृयज्ञं, 'निर्वर्त्य' समाप्य, 'ततः' तदनन्तरं, श्राद्धार्थं निरुप्तं यदन्नं तत्, 'तेभ्यः' श्राद्धोद्देश्येभ्यः, 'अग्रे' पूर्वं, 'निवेदयेत्' दद्यात्, अर्थात्तदुत्तरकालमन्येभ्योऽपि दद्यात्।

इति वैश्वदेवपाकनिर्णयः।

---

## अथ प्रकृतौ वैश्वदेवकालनिर्णयः क्रियते।

तत्र तावदनग्निकेन श्राद्धात्पूर्वं वैश्वदेवः कर्त्तव्यो न वेति संशये पूर्वपक्षः, वैश्वदेवहोमं कुर्यादिति वैश्वदेवविधिनैवानग्निककर्तृकस्य वैश्वदेवस्य कस्मिंश्चित्काले कर्त्तव्यतायां प्राप्तायां श्राद्धात्पूर्वकालेऽपि पाक्षिकी कर्त्तव्यता प्राप्तैव।

यत्तु षट्त्रिंशन्मते पूर्वकालताया: प्रतिषेधः।

प्रतिवासरिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥ इति ।

यस्तु वृद्धगौतमकृतः प्रतिषेधः ।

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥ इति ।

स तु श्राद्धपाकेनैव वैश्वदेवस्य पूर्वकालमनुष्ठाने वेदितव्यः, न तु पाकान्तरेणाप्यनुष्ठाने ।

अतएव वैश्वदेवे कृतेऽनग्नेरपि श्राद्धानर्हतामाह वशिष्ठः ।

वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः ।
लौकिकाग्नौ कृते शेषः पितॄणां नोपतिष्ठते ॥ इति ।

दर्शितश्चास्मिन्नेवार्थे "श्राद्धपाकात्समुद्धृत्येत्यादि पैठीनसिवचनम् । न चैतच्छ्राद्धोत्तरकाले श्राद्धपाकात्समुद्धृत्य वैश्वदेवानुष्ठानस्य निषेधकं, "श्राद्धपाकात्समुद्धृत्येत्यत्रोद्धृतेर्विभागमात्राभिधायकत्वं मन्यमानस्यापि मते "श्राद्धं निर्वर्त्य विधिवदित्यादिवचनप्रतिपादितश्राद्धशेषकर्त्तव्यताविरोधापत्तेः । अतोऽनग्निकस्य पाकान्तरेण श्राद्धात्पूर्वं वैश्वदेवहोमो न केनचित् प्रतिषिद्धोऽतस्तेनापि कर्त्तव्यः ।

उच्यते । यथा श्राद्धोत्तरकाले श्राद्धशेषेणान्नेन वैश्वदेवस्य विहितत्वात् श्राद्धपाकात्समुद्धृतेनैकदेशेन कर्त्तव्यताया निषेधास्तदन्यकालविषया व्याख्यायन्ते, तथा श्राद्धात्पूर्वकाले वैश्वदेवस्य सर्वथा निषिद्धत्वात्तदन्यकालविषया अपि ते व्याख्येयाः । तथाचानग्निकेन श्राद्धोत्तरकालं श्राद्धपाकेनापि वैश्वदेवः कर्त्तव्यः, श्राद्धमध्ये तु न कदाचिच्छ्राद्धपाकेन किन्तु पाकान्तरेणैव, श्राद्धात्पूर्वं तु सर्वथा न

कर्त्तव्य एवेति। ननु सर्व्वेषां कर्त्तव्यतानिषेधानां श्राद्धमध्यकालिक-वैश्वदेविकविषयत्वे तदेकविषयत्वेऽनग्निकैकविषयत्वे च सङ्कोचप्रसङ्ग-मापद्यते। तथाहि क्रियासामान्याच्छिन्नमाख्याताभिधेयसङ्ख्याच्छिन्न-माख्याताभिहितं वा साग्निकानग्निकविशेषद्वयव्यापककर्त्तृसामान्यमन-ग्निककर्त्तृरूप एवैकस्मिन्विशेषे व्यवस्थाप्यते, साग्निककर्त्तृकस्य वैश्वदेवस्य पूर्व्वकालत्वनियमेन मध्यकालत्वाभावादिति कर्त्तृसङ्कोचः। केवलवैश्व-देवशब्दावगतस्य पूर्व्वमध्यकालीनानेकवैश्वदेवक्रियाव्यक्तिव्यापकस्य वैश्व-देवरूपक्रियासामान्यस्य मध्यकालीनवैश्वदेवव्यक्त्येकविषयत्वे क्रियास-ङ्कोचः। अतएव कालसङ्कोच इति सङ्कोचत्रयमापद्यते। किञ्च एवं सति साग्निककर्त्तृकस्य वैश्वदेवस्य श्राद्धपाकसाध्यता न निवर्त्तेत, पूर्व्व-कालतानिषेधवाक्यस्य चानग्निकैकविषयत्वे कर्त्तृसङ्कोचः स्यादिति। अत्राभिधीयते। तचेदं तावद्विचार्य्यते, किं श्राद्धात्पूर्व्वं वैश्वदेवहोमो न कर्त्तव्य इत्येष निषेधः क्रियासामान्याच्छिन्नकर्त्तृसामान्यत्वनिर्वाहार्थं "श्राद्धपाकादुद्धृत्य न कर्त्तव्य इति वाक्यान्तरेण सहैकवाक्यतया श्राद्धपाकेन न कर्त्तव्य इत्येवं साग्निकानग्निकैकविषयत्वेन व्याख्येयः, उत यथाश्रुतत्वानुरोधाय वैश्वदेवस्वरूपमात्रनिषेधतयानग्निकैकविषय-त्वेनेति, तत्र

नैरपेक्ष्यात् श्रुतत्यागाद्विधेयान्तरसंक्रमात्।
आनर्थक्यप्रसङ्गाच्च नान्येनास्यैकवाक्यता॥
न वाक्यः पूर्व्वमेकस्य साग्निकेन सहान्वयः।
पूर्व्वकालोपदेशेन बाधितत्वात् प्रतीयते॥
अन्योन्याश्रयदोषोऽत्र प्रसज्येतान्वये स्फुटः।

अन्यथा त्वेकवाक्यं वै तत्रापि प्रमितेऽन्वये ॥
न च भाव्येकवाक्यत्वप्रतिबन्धागतोऽन्वयः ।
योग्यः कर्त्तुमुपन्यस्तदोषजातं विजानता ॥
न च प्रत्यक्षविधिना कल्प्यस्यानुपपत्तो मतः ।
कल्प्यं हि कर्त्तृसामान्यं निषेधं बाधते श्रुतम् ॥

वैश्वदेवस्वरूपनिषेधेनाप्युपपद्यमानं वाक्यं वाक्यान्तरेण सहैकवाक्यतामपेक्षते, वाक्यान्तरमपि तथा, एकवाक्यत्वे च श्रुतवैश्वदेवस्वरूपनिषेधपरत्वहानेन श्राद्धपाकसाध्यतानिषेधविधिः कल्प्येत। एवञ्च सत्यानर्थक्यमपि एकपाककर्त्तव्यतानिषेधकैरेव कृतार्थत्वादित्याद्यश्लोकार्थः। द्वितीयादयस्तु व्यक्तार्था एव श्लोकाः, अतः श्राद्धात्पूर्वं वैश्वदेवो न कर्त्तव्य इत्येष निषेधस्तावदनग्निकमेवाश्रयते। श्राद्धपाककर्त्तव्यतानिषेधास्तु सर्वे साग्निकमनग्निकञ्चाश्रयन्ते। तत्रानग्निकं प्रति श्राद्धपूर्वकाले सर्वथा वैश्वदेवस्य निषिद्धत्वादनग्निकं मध्यमकाले वैश्वदेवकर्त्तृभूतमाश्रयन्ते, साग्निकन्तु पूर्वकाले कर्त्तृभूतं। अतो न पूर्वोक्ताः संकोचदोषाः। अनग्निकपूर्वकाले तु तेषां संकोचो वचनाद्युक्त एव। अतोऽनग्निकेन सर्वथा श्राद्धात्पूर्वकाले वैश्वदेवो न कर्त्तव्यः, मध्योत्तरकालतानियमविधिभिरप्यनग्निकैकविषयैस्तस्य पूर्वकाले वैश्वदेवो निवर्त्तितः। न चैवं सति निषेधस्यानर्थक्यं वाच्यं। स्मृतिग्रन्थान्तरे श्रुतत्वादस्येति। तदेवं पच कर्त्तृसामान्यान्वयवादिनापि वाक्यान्तरैकवाक्यता न लभ्या, श्रुतस्यानग्निकरूपैकविशेषान्वयवादी तामवाप्स्यति।

श्राद्धमध्ये वैश्वदेवकर्त्तव्यता तु ब्रह्माण्डपुराणे।

वैश्वदेवाहुतीरग्नावर्व्वाक् ब्राह्मणभोजनात्।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु संस्मृतम्॥ इति।

"अर्व्वाक् ब्राह्मणभोजनादित्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुती-र्जुहुयादित्युक्तं। "श्राद्धं कृत्वा भूतयज्ञादि स्मृतमित्यनेन भूतयज्ञस्यैव श्राद्धान्ते कर्त्तव्यतोक्तेति कृत्वार्थाद्वैश्वदेवानन्तरमेव बलिहरणं कार्य-मिति दर्शितमिति स्मृतिचन्द्रिकाकारः। अयमेकोऽनग्निकवैश्वदेवस्य कालः।

द्वितीयोऽपि भविष्यत्पुराणे।

पितृन् समर्च्य विधिवद्बलिं दद्याद्विधानतः।
वैश्वदेवं ततः कुर्य्यात्पश्चाद्ब्राह्मणवाचनम्॥

बलिशब्दोऽपि तत्रैव व्याख्यायते।

अग्निदग्धेतिमन्त्रेण भूमौ यन्निर्वपेद्बुधः[१]।
जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदा॥ इति।

अनेन विकिरसंज्ञिकबलिप्रदानानन्तरं स्वस्तिवाचनात्पूर्वं वैश्व-देवं कुर्यादित्युक्तं भवति। अयं द्वितीयः कालः।

तृतीयोऽपि स्मृतिपुराणादावुक्तः। तत्राह मनुः।

उच्छेषणन्तु तत्तिष्ठेत् यावद्विप्रा विसर्जिताः।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः॥

अस्य मेधातिथिकृता व्याख्योच्यते। भुञ्जानेषु द्विजेषु यदुच्छिष्ट-करचपाचलग्नं भूमौ च पतितमन्नं तत्तस्मादेशान्न तावत् मार्ष्टव्यं यावद्ब्राह्मणा न निष्क्रान्ताः, ततो निष्पन्ने श्राद्धकर्मणि अनन्तरं वैश्व-

(१) यन्निक्षिपेद्बुध इति ग०।

देवहोमाग्न्याहिकातिथ्यादिभोजनञ्च कर्त्तव्यं बलिग्रहणस्य प्रदर्शनार्थत्वात् । अन्ये त्वाहुः भूतयज्ञ एव बलिशब्देन प्रसिद्धतरः, ततश्चाग्नौ होमः श्राद्धात्प्राक् न विरुध्यत इति । न चैतदाद्यं पित्र्यर्थे कर्मणि अनन्तरं वैश्वदेवे आरब्धे कथं तन्मध्ये कर्मान्तरस्य करणं यथैतत्पूर्वेद्युर्निमन्त्रितेषु ब्राह्मणेषु श्राद्धमहन्येव सायं प्रातर्होमकरणं न विरुध्यते। एवमेव सदाग्निकस्य वैश्वदेवहोमस्याप्यन्तराकरणं न विरुध्यत एव । अतो भूतयज्ञे समुत्कृष्यमाणे तदाद्युत्कर्षणयात् भूतयज्ञानन्तरा एव पदार्था उत्कृष्यन्ते नार्वाञ्चोऽपि वैश्वदेवादय इति। अत्रोच्यते, यदि श्राद्धात्प्राग्वैश्वदेवहोमः क्रियते ततः श्राद्धं ततो बलिहरणं तदा देवयज्ञ-भूतयज्ञौ व्यवधीयेतां, तथाच "वैश्वदेवं प्रकुर्वीत भौतिकं बलिमेव चेत्यादिवचनप्रतिपाद्यमानस्तयोरव्यवहितपौर्वापर्यात्मकः क्लृप्तः क्रमो बाध्येत। तदन्तापकर्षणयोऽपि हि क्लृप्तक्रमाबाधायैवाश्रीयते, अतस्तदबाधाय तदन्तोत्कर्षोऽपि क्वचिदाश्रयणीयः। न चैवं सति तदाद्युत्कर्षणनियमविरोधः, यत्र हि पूर्वस्योत्कर्षे तदीययोः क्रम-कालयोर्बाधस्तत्रासौ नियमः। न च कृतेऽपि श्राद्धेऽनुष्ठीयमाने वैश्वदेवे तदीययोः क्रम-कालयोर्बाधः। तस्मात्सर्वमहायज्ञानुष्ठानं श्राद्धोत्तरकालिकमिति, समाप्ता च मेधातिथिकृता व्याख्या।

अयमेवार्थो मत्स्यपुराणे।

उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः।
वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणि॥ इति।

भविष्यत्पुराणे।

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसर्ज्य च।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप॥

स्मृत्यन्तरे।

श्राद्धं यदा पिण्डवत्तु दातुमिच्छति मानवः।
वैश्वदेवं ततः कुर्यान्निवृत्ते श्राद्धकर्मणि॥ इति।

आह पैठीनसिः।

श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं ततः॥ इति।

श्राद्धसमाप्तौ मार्कण्डेयः।

ततो नित्यक्रियां कुर्याद्भोजयेच्च तथातिथीन्।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः॥

'नित्यक्रियां' वैश्वदेवहोम-बलिहरण-नित्यश्राद्धादिरूपां। तदेव-मनग्निकर्तृकस्य वैश्वदेवस्य त्रयस्तु कालाः। एकोऽग्नौकरणानन्तरः, अन्यो विकिरादुपरि, तृतीयो ब्राह्मणविसर्जनात्पश्चादिति।

इत्यनग्निककर्तृकवैश्वदेवकालनिर्णयः।

---

## अथ साग्निककर्तृकस्य वैश्वदेवस्य कालनिर्णयः।

यस्य न श्राद्धमध्ये श्राद्धान्ते वानुष्ठानं किन्त्वकृत एव श्राद्धे, यतः श्राद्धात्पूर्वं पिण्डपितृयज्ञो विहितस्तस्मादपि पूर्वं वैश्वदेवः।

तथाच देवलः।

अकृते वैश्वदेवे तु स्थालीपाकः प्रकीर्त्तितः।
अन्यच्च पिण्डयज्ञात्तु सोऽपराह्णे विधीयते॥

अथ स्थालीपाकसाध्यानि कर्माणि स्थालीपाकशब्देनोच्यन्ते तानि पिण्डपितृयज्ञादन्यानि प्रकृत एव वैश्वदेवे क्रियन्ते, पिण्ड-पितृयज्ञस्तु कृते वैश्वदेवे पश्चादपराह्णे क्रियते।

पितृयज्ञश्च आहिताग्नेरुक्तो मनुना।

पितृयज्ञन्तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।

पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् ॥ इति।

अमुनैवार्थं स्पष्टमाह लौगाक्षिः।

पक्वान्तं कर्म निर्वर्त्य वैश्वदेवञ्च साग्निकः।

पिण्डयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकं बुधः ॥ इति।

'पक्वान्तं' अन्वाधानं, 'अन्वाहार्य्यकं' दर्शश्राद्धं। ननु पक्वान्त-पिण्डपितृयज्ञयोर्मध्ये विधानादेव वैश्वदेवस्य साग्निककर्त्तृकत्वाव-गमात् किमर्थं साग्निकग्रहणं, न, पश्चादिष्टस्थालीपाक-पिण्डपितृयज्ञ-कर्त्तुर्निरग्निकस्य निवृत्त्यर्थं। अतस्तेनाप्यनग्निकान्तर-तत्पूर्वप्रकरणो-क्तेष्वेव कालेषु वैश्वदेवः कर्त्तव्यः। गोभिलेनापि "पिण्डस्य चान्व-यनस्य चान्वाहार्य्यस्य चेत्यत्र सूत्रे सर्वप्रकारस्यापि श्राद्धस्यादावेव वैश्वदेव इत्युक्तं। श्रुतावपि साग्निकस्यादावेव वैश्वदेवः श्रूयते, "नाश्नतस्त्वग्नीघुर्नाश्नन्तं इत्युरिति। साग्निकस्यापि श्राद्धविशेषे पश्चा-देव वैश्वदेवः।

तथाच परिशिष्टे।

क्षयाहे पार्वणश्राद्धे एकोद्दिष्टे तथैव च।

अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि ॥

अत्र पर्वशब्दस्यमनेकदेवत्यश्राद्धोपलक्षणार्थं। ततश्चैकाहश्राद्ध-

व्यतिरिक्तेषु श्राद्धेषु साग्निकस्य पूर्वमेव वैश्वदेवः। एकादशाहिक एव तु पश्चादिति निर्णयः।

तदाह शालङ्कायनः।

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवन्तु साग्निकः।
एकादशाहिकं भुक्त्वा तस्तु श्चान्ते विधीयते॥

इति साग्निककर्तृकवैश्वदेवकालनिर्णयः॥

---

## अथ भूतयज्ञादिकालनिर्णयः।

तत्र कर्कोपाध्यायो मन्यते। यदैव वैश्वदेवस्तदैव तदनन्तरं भूतयज्ञसंज्ञको बलिः। यत्तु "ततो गृहबलिङ्कुर्यादिति मनुना श्राद्धान्ते बलिरुक्तः, स तु वास्तुदेवताश्रयः न भूतयज्ञस्य। अतएव ब्राह्मणविसर्ज्जनमभिधायाह पारस्करः।

विसृज्य बलिदानेन पूजयेद्गृहदेवताः। इति।

भक्तधरोऽपि।

यदैव वैश्वदेवस्तदैव तदनन्तरं भूतयज्ञोऽपि न कदाचिदपि वैश्वदेव-भूतयज्ञयोर्मध्ये कर्मान्तरानुष्ठानेन व्यवधानं कर्त्तव्यं अव्यवधानवचनात्।

तथाहि।

देवयज्ञः स्मृतः पूर्वं भूतयज्ञस्तथा परः। इति।

तथा।

देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतबलिं हरेत्। इति।

यत् पुनः पूर्वकृते वैश्वदेवे श्राद्धान्ते भूतयज्ञस्य वचनं तद्वैश्वदेवा-

नन्तरमेव भूतयज्ञे कृतेऽपि श्राद्धाङ्गतया तावन्मात्रस्य पुनरनुष्ठानं कर्त्तव्यमित्येवं परं। यदपि पूर्वकृते वैश्वदेवे श्राद्धान्ते ग्रहबलेर्वचनं तदपि वैश्वदेवकाल एव कृतस्यापि ग्रहबलेः श्राद्धाङ्गतयैव तावन्मात्रस्य पुनः करणार्थमिति। तदेतदनुपपन्नं भूतयज्ञादेः पुरुषार्थस्य श्राद्धाङ्गत्वविरोधात्। अथ संयोगपृथक्त्ववदेकस्योभयार्थता न विरुध्यत इति मन्यसे, तन्न, श्रुत्यादेः श्राद्धाङ्गतापादकस्यादर्शनात्संयोगपृथक्त्वासिद्धेः। अथ कर्मान्तरमेवेदं प्रकरणापादितश्राद्धाङ्गभावं विधीयत इत्युच्यते, तदपि न, पुरुषार्थस्यैव च भूतयज्ञस्य वैश्वदेववत्प्रत्यभिज्ञानात्। अन्यथा "वैश्वदेवं ततः कुर्यादित्यत्रापि श्राद्धाङ्गतया वैश्वदेवान्तरविधेः प्रसङ्गः। न चैतदुच्यते, गौरवात्। क्रममात्रविधौ हि लाघवं प्रत्यभिज्ञानुग्रहश्चेति गुणः। अतो वचनाद्व्यवधानमपि तथाविधमभ्युपेयं। वचनञ्च स्मृतिचन्द्रिकाकारेण दर्शितम्।

वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात्।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तद्भवेत्॥ इति।

न चाचाहुतिमात्रश्रवणाद्वैश्वदेवाङ्गबलिहरणं पश्चात्कर्त्तव्यमिति मन्तव्यं, उत्तरार्द्धे भूतयज्ञादेरेव श्राद्धानन्तरकाले विधानात्। अत एव "वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव चेति श्राद्धप्रकरण एव मत्स्येनानयोर्नैरन्तर्यमुक्तं।

इति भूतयज्ञादिकालनिर्णयः।

---

## अथ नित्यश्राद्धकालनिर्णयः ।

भूतयज्ञादिप्रकरणनिर्णीतं नित्यमपि श्राद्धं किञ्चिद्विशेषाभिधानाय पुनः प्रख्यते ।

तत्र मार्कण्डेयः ।

ततो नित्यक्रियां कुर्याद्भोजयेच्च तथातिथीन् ।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥

'ततः' तेन श्राद्धशेषाकेन, 'नित्यक्रियां' अन्वष्टक्यां । अतो नित्यश्राद्धमपि तेनैव कर्त्तव्यं । अथ वा नित्यश्राद्धं पृथक्पाकेन कार्य्यं तस्य श्राद्धात्मकत्वेन श्राद्धधर्मभूतस्य पाकस्य पृथकप्रयुक्तिसम्भवात् । अतएव नित्यश्राद्धमधिकृत्य मार्कण्डेयपुराणेऽभिहितं. "पृथक्पाकेन नेत्यन्य इति । अस्यार्थः दर्शादिश्राद्धपाकात्पृथक्पाकेन नित्यश्राद्धं कर्त्तव्यं, अन्ये नेतन्नेत्याहुः, दर्शादिश्राद्धार्थपाकशेषेण नित्यश्राद्धमपि कर्त्तव्यमित्यर्थः । एतच्च श्राद्धान्तरे कृते सत्यनियतं ।

यदुक्तं तत्रैव ।

नित्यक्रियां पितॄणाञ्च केचिदिच्छन्ति मानवाः ।
न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत् ॥

'पितॄणां', 'नित्यक्रियां' नित्यश्राद्धं । अस्य च नित्यश्राद्धविकल्पस्यैवं व्यवस्था, अमावास्यादिसाधारणकालिकेषु श्राद्धेषु तथा मान्वादियुगादितीर्थश्राद्धेषु च नित्यश्राद्धदेवतानामिष्टत्वात्तत्रपुष्टितया नित्यश्राद्धं न कर्त्तव्यं, सांवत्सरिकैकोद्दिष्टादिषु तु वर्जायां नित्यश्राद्धदेवतानामिष्टत्वनियमाभावान्नित्यश्राद्धमवश्यं कर्त्तव्यं । 'शेषं' वैश्वदेवादिकं, 'पूर्ववदाचरेत्' नियमेनैव कुर्यादित्यर्थः ।

तदुक्तं नागरखण्डे ।

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिध्यति ।

श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तत्र हापयेत् ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
श्राद्धकालनिर्णयः ॥

## अथ त्रयोदशोऽध्यायः।

### अथ प्रतिपत्प्रभृतिक्रमेण पुण्यतिथयः।

तत्र तावत् पुण्या प्रतिपत्।

पद्मपुराणे।

चैत्रे मासि महाबाहो पुण्या प्रतिपदा पुरा।
तस्यां यस्तपनं दृष्ट्वा स्नानं कुर्यान्नरोत्तमः॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप।
भवन्ति कुरुशार्दूल तस्यां स्नानं समाचरेत्॥
दिव्यनीराजनं तद्धि सर्वरोगविनाशकम्।
गो-महिष्यादि यत्किञ्चित्तत्सर्वं भूषयेन्नृपः॥
चूर्णवस्त्रादिभिः सर्वैस्तोरणाधस्ततो नयेत्।
ब्राह्मणानां तथा भोज्यं कुर्यात्कुरुकुलोद्वह॥
तिस्र एताः पुरा प्रोक्तास्तिथयः कुरुनन्दन।
कार्त्तिकाश्वयुजे मासि चैत्रे वापि तथा नृप॥

भविष्यत्पुराणे।

तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता।
प्रतिपादिता यदा पूर्वं प्रतिपत्तेन चोच्यते॥
तिस्रो ह्येताः पुरा प्रोक्तास्तिथयः कुरुनन्दन।
कार्त्तिके चाश्विने मासि चैत्रे मासि च भारत।
स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत्॥
अग्निमिष्ट्वा च हुत्वा च प्रतिपद्यपि भारत।

हविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥

वाराहे ।

कार्त्तिके सितपक्षादौ तिथौ तु कुसुमाङ्कुरैः ।
यात्रायां यत्र रात्रौ स्नात्वायां चेष्टसुखाय वा ।
वासोभिरक्षतैः पूज्य गच्छेद्दैवं ब्रह्मणः पदम् ॥

ब्रह्मपुराणे ।

कार्त्तिके शुक्लपक्षे तु विधानं द्वितयं हि तत् ।
नारीनिराजनं प्रातः सायं मङ्गलमालिका ॥
अथ चेत् प्रतिपत् स्वल्पा नारीनिराजनं भवेत् ।
द्वितीयायां तदा कुर्य्यात् सायं मङ्गलमालिका ॥

भविष्यत्पुराणे ।

अभ्येत्य यदि वा प्रातः प्रतिपद्घटिकाद्वयम् ।
तस्यां नीराजनं कार्य्यं सायं मङ्गलमालिका ॥

तथाच देवीपुराणे ।

प्रातर्वा यदि लभ्येत प्रतिपद्घटिका शुभा ।
द्वितीयायां तदा कुर्य्यात् सायं मङ्गलमालिका ॥
आश्विनान्ते यदा दर्शे नारीनीराजनं भवेत् ।
नारीणां तत्र वैधव्यं देशे दुर्भिक्षमेव च ॥
कार्त्तिके शुक्लपक्षादावमावास्याघटीद्वयम् ।
देशभङ्गभयाच्चैव कुर्य्यात् मङ्गलमालिका(१) ॥

---

(१) ब्रह्मपुराण इत्यादिः मङ्गलमालिकेत्यन्तः पाठः ख-चिह्नितपुस्तके नास्ति ।

ब्रह्मपुराणे।

कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवान्।
जितश्च शङ्करस्तत्र जयं लेभे च पार्वती॥
ततोऽयं शङ्करो दुःखी गौरी नित्यसुखोषिता।
तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः॥
तस्मिन्द्यूते जयो यस्य तस्य संवत्सरः शुभः।
पराजयो विरुद्धस्य लाभनाशकरो भवेत्॥
श्रोतव्यं गीत-वाद्यादि स्वनुलिप्तैः स्वलङ्कृतैः।
विशेषतस्तु भोक्तव्यं प्रशस्तैर्बान्धवैः सह॥
तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम्।
गन्धैः पुष्पैस्तथा वस्त्रैर्दिव्यरत्नैरलङ्कृतम्॥
दीपमालापरिक्षिप्तं तथा धूपेन धूपितम्।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा।
नवैर्वस्त्रैश्च संपूज्या द्विज-सम्बन्धि-बान्धवाः॥

पद्मपुराणे।

प्रतिपदि च ब्रह्माणं गुड़मिश्रैः प्रदीपकैः।
वासोभिरहतैः पूज्य गच्छेद्वै ब्रह्मणः पदं॥
गन्धैः पुष्पैर्नवैर्वस्त्रैस्तत्स्थानं भूषयेन्नरः।
तस्यां प्रतिपदायान्तु स गच्छेद्ब्रह्मणः पदम्॥
महापुण्या तिथिरियं बलिराज्यप्रवर्त्तिनी।
ब्रह्मणो हि प्रिया नित्यं वालेयी परिकीर्त्तिता॥
ब्राह्मणान् पूजयेद्योऽत्रामात्यानश्च विशेषतः।

स याति परमं स्थानं विष्णोरमिततेजसः ॥

वामनपुराणे । बलिं प्रति त्रिविक्रम उवाच ।

वीरप्रतिपदा नाम तव भावी महोत्सवः ।

तत्र त्वां नरशार्दूल ततो हृष्टाः स्वलङ्कृताः ॥

पुष्प-धूपप्रदानेन अर्चयिष्यन्ति तत्त्वतः[१] ।

तत्रोत्सवो मुख्यतमो भविष्यति दिवानिशम् ॥

इति पुण्यप्रतिपत् ।

---

## अथ पुण्यद्वितीया ।

तत्र देवीपुराणे ।

उमां शिवं हुताशञ्च द्वितीयायां तु पूजयेत् ।

हविष्यमन्नं नैवेद्यं देयं गन्धार्चनं तथा ॥

अत्र चैत्रादौ दमनकपूजा प्रकान्ता स्कन्दपुराणे ।

आश्विने मासि वै पुण्या द्वितीया शुक्लपक्षजा ।

दानं प्रदद्यात्तस्यामनन्तफलमुच्यते ॥

लिङ्गपुराणे ।

वृश्चिके च द्वितीयायां शुक्लायां प्रतिपूजनम् ।

यो न कुर्याद्विनश्यन्ति भ्रातरः सप्तजन्मगाः ॥

ब्रह्मपुराणे ।

कृष्णस्तौ द्वितीयायां विधिवद्विधिपूजनम् ।

(१) यत्नतः इति ग० ।

कृत्वा नक्तं समश्नीयाल्लभते भूतिमीप्सिताम् ॥

'विधिः' ब्रह्मा। तत्पूजनञ्च गायत्र्या ब्रह्मप्रकरणोक्तेनान्येन मन्त्रेण वा कार्यं।

इति पुष्पद्वितीया।

---

## अथ पुण्यतृतीया।

तृतीयायां यजेद्देवीं शङ्करेण समन्वितां।
सुगन्धपुष्प-धूपैश्च दमनेन सुमालिना ॥

अत्र चैत्रो मासः प्रकृतः।

पद्मपुराणे।

वैशाखमासे यत्पुण्या तृतीया शुक्लपक्षजा।
अनन्तफलदा सा तु स्नान-दानादिकर्मसु ॥

भविष्योत्तरे।

या सेषा कुरुशार्दूल वैशाखे तु महातिथिः।
तृतीया साक्षया लोके गीर्वाणैरभिवन्दिता ॥
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु।
तत् सर्वमक्षयं यस्मात्तेनेयमक्षया स्मृता ॥
श्रवणेन समायुक्ता तृतीया या विशेषतः।
बुध-श्रवणसंयुक्ता तृतीया यदि लभ्यते।
तस्यां स्नानोपवासाद्यमक्षयं परिकीर्त्तितम् ॥

तथा।

वारिदानं प्रशस्तं स्यात्सोदकानां तथैव च।

वैशाखे मासि राजेन्द्र तृतीयायाश्च चन्दनम् ॥

देयमिति शेषः ।

गुडापूपाश्च दातव्या मासि भाद्रपदे तथा ।
पायसं वै तृतीयायां वामदेवस्य प्रीतये ॥
माघे मासि तृतीयायां गुडस्य लवणस्य च ।
दानं श्रेयस्करं राजन् स्त्रीणाञ्च पुरुषस्य च ॥
तेन युता वाच्यमाना तृतीया रोहिणीयुता ।
विशेषाद्बुधवर्षयुक्ता तदा सा सुमहत्फला ॥

इति पुण्यतृतीया ।

---

## अथ पुण्यचतुर्थी ।

वराहपुराणे ।

चतुर्थ्यान्तु गणेशस्य पार्वत्याश्च विशेषतः ।

पूजा कार्य्येत्यनुवर्त्तते ।

देवीपुराणे ।

गणेशे कारयेत्पूजां लड्डुकादिविभावनम् ।
चतुर्थ्यां विघ्ननाशाय सर्वकामप्रसिद्धये ॥

चैत्रशुक्लचतुर्थ्याञ्च दमनकैरियं पूजा ।

भविष्यत्पुराणे ।

शिवा शान्ता सुखा राजन् चतुर्थी त्रिविधा मता ।
मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता ॥

तस्यां स्नानञ्च दानञ्च उपवासो जपस्तथा।
भवेत्सहस्रगुणितं प्रसादाद्दन्तिनो नृप॥
तस्यां तु कुरु शार्दूल पूजयन्ति सदा स्त्रियः।
गुड-लवण-पूपैश्च श्वश्रूं श्वशुरमेव च॥
ताः सर्व्वाः सुभगाः स्युर्वै विघ्नेशस्य तु मोदनात्।
कन्यका तु विशेषेण विधिमानेन पूजयेत्॥
माघे मासि तथा शुक्ला या चतुर्थी महीपते।
शेया सा शान्तिदा नित्यं शान्तिं कुर्य्यात्सदैव तु॥
स्नान-दानादिकं कर्म भवेत्साहस्रिकं स्मृतम्।
विशेषतः स्त्रियो राजन् पूजयन्त्यो गुरुं नृप।
गुड-लवण-घृतैर्वीर सुभगाः स्युः कुरूद्वह॥
यदा शुक्लचतुर्थ्यान्तु वारो भौमस्य वै भवेत्।
तदा सा सुखदा शेया सुखा नामेति कीर्त्तिता।
स्नान-दानादिकं कर्म सर्वमक्षयमुच्यते॥ इति।

यमः।

चतुर्थ्यां भरणीयोगः शनैश्चरदिने यदि।
तदाभ्यर्च्य यमं देवं मुच्यते सर्वकिल्बिषैः॥

इति पुण्यचतुर्थी।

---

## अथ पुण्यपञ्चमी ।

भविष्यत्पुराणे ।

पञ्चमी दयिता राजन् नागानन्दप्रवर्द्धनी ।
पञ्चम्यां स्नापयन्तीह नागान् क्षीरेण ये नराः ।
तेषां कुले प्रयच्छन्ति अभयं प्राणरक्षणम् ॥

ब्रह्मपुराणे ।

शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना ।
श्रीर्विष्णुलोकान्मानुष्यं सम्प्राप्ता केशवाज्ञया ॥
तस्मात्तां पूजयेत्तत्र यत्नं लक्ष्मीर्न मुञ्चति ।
एषा श्रीपञ्चमी कार्य्या विष्णुलोकगतिप्रदा ॥

भविष्यत्पुराणे ।

सुप्ते जनार्दने कृष्णे पञ्चम्यां भवनाङ्गनः ।
पूजयेन्मनसादेवीं स्नुहीविटपसंश्रयां ॥
पिचुमर्द्दपत्राग्राणि स्थापयेद्भवनान्तरे ।
पूजयित्वा नरो देवीं न सर्पभयमाप्नुयात् ॥
श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥
पूजयेद्विधिवद्वीर दधि-दूर्वाङ्कुरैः कुशैः ।
गन्ध-पुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां सर्पतो वीर भयं भवति च क्वचित् ॥
तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।

समालिख्य नरो नागान् शुक्ल-कृष्णादिवर्णकैः।
पूजयेद्गन्ध-पुष्पैश्च सर्पिर्गुग्गुल-पायसैः॥
तस्य तुष्टाः प्रयच्छन्ति पन्नगास्तक्षकादयः।
आ सप्तमात्कुलात्तस्य न भयं सर्पतो भवेत्॥

भविष्यत्पुराणे।

पुण्या भाद्रपदे प्रोक्ता पञ्चमी नागपञ्चमी।

स्कन्दपुराणे।

शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी।
स्नान-दानैर्बहुफला नागलोकप्रदायिनी॥

वाराहपुराणे।

माघशुक्लचतुर्थ्यान्तु वरामाराध्य च श्रियम्।
पञ्चम्यां कुन्दकुसुमैः पूजा कौन्दी सम्हुये॥

इति पुण्यपञ्चमी।

---

## अथ पुण्यषष्ठी।

ब्रह्मपुराणे।

जातः स्कन्दश्च षष्ठ्यान्तु शुक्लायां चैत्रनामनि।
सेनापत्येऽभिषिक्तश्च देवानां ब्रह्मणा स्वयम्।
जितवांस्तारकं दैत्यं क्रौञ्चं शक्त्या बिभेद च॥
तस्मात् सर्वत्र विधिना स्कन्दो माल्यैः सुगन्धिभिः।
दीपालङ्कार-वस्त्राद्य-कुक्कुटैः पूज्य एव हि।
सकुक्कुटक्रीडनकैर्घण्टा-चामर-दर्पणैः॥

सर्वासु शुक्लषष्ठीष्वित्यवधेयमिति ।

भविष्यत्पुराणे ।

येयं भाद्रपदे मासि षष्ठी तु भरतर्षभ ।
स्नान-दानादिकं सर्वमस्यामक्षयमुच्यते ॥
षष्ठ्यां स्नानमनो राजन् विशेषात्कार्त्तिके नृप ।
कृष्णा-शुक्लासु नियतो ब्रह्मचारी समाहितः ॥
षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति ।
इह चामुत्र सोऽत्यर्थं लभते ख्यातिमुत्तमाम् ।
राज्यच्युतो विशेषेण स्वं राज्यं लभतेऽचिरात् ॥

तथा ।

षष्ठी भाद्रपदे भानुप्रीत्यै पुण्याक्षयाय च ।
येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ॥
इयं पुण्या पापहरा शिवा शान्ता शुभा नृप ।
स्नान-दानादिकं किञ्चित् सर्व्वमक्षयमुच्यते ॥
येऽस्यां पश्यन्ति गाङ्गेयं दक्षिणापथवासिनम् ।
ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः ॥
तस्यां तस्यां यदा पश्येत् कार्त्तिकेयं सदैव हि ।
निःकृत्वा दक्षिणामाशां गत्वा यः श्रद्धयान्वितः ।
पूजयेद्देवदेवेशं स गच्छेत्स्वामिमन्दिरम् ॥

निःकृत्वा दक्षिणामाशामित्युक्तेर्विन्ध्योत्तरतो गच्छतामेतत्फलं ।

भविष्यत्पुराणे ।

या षष्ठी शुक्लपक्षस्य मार्गशीर्षे हरिप्रिया ।

महाषष्ठीति सा ख्याता षष्ठी शोके कृताशनः ॥

इति पुण्यषष्ठी ।

---

## अथ पुण्यसप्तमी ।

भविष्यत्पुराणे ।

षष्ठ्यामुपोष्य यः सम्यक् सप्तम्यां कूर्ममर्चयेत् ।
रोगमुक्तो वित्तवांश्च सम्प्राप्नोतीप्सितं फलम् ॥
मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप ।
अपराजितेति विख्याता महापातकनाशिनी ॥
या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी ।
नन्दा सा कथिता वीर सर्वानन्दकरी शुभा ।
स्नान-दानादिकं कर्म(१) तस्यामक्षयमुच्यते ॥

तथा ।

नन्दा मार्गशिरे शुक्ला सप्तम्यानन्ददायिनी ।
जयन्ती नाम सा प्रोक्ता पुण्या पापहरा स्मृता ॥

मत्स्यपुराणे .

यस्यां मन्वन्तरस्यादौ रथारूढो दिवाकरः ।
माघमासस्य सप्तम्यां सा तस्माद्रथसप्तमी ॥
इत्येषा कथिता वीर रथाख्या सप्तमी परा ।
महासप्तमी विख्याता महापातकनाशिनी ॥

विष्णुः ।

---

(१) सर्वमिति खं ।

सूर्य्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥

तथा ।

माघमासस्य सप्तम्यामुदयत्येव भास्करे ।
विधिवत्तत्र च स्नानं महापातकनाशनम् ॥
माघमासचिते पक्षे सप्तमी कोटिभास्करा ।
कुर्य्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः ॥

भविष्यत्पुराणे ।

शुक्लपक्षस्य सप्तम्यां रविवारो भवेद्यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥

भविष्यत्पुराणे ।

शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् ।

रोहिण्यश्लेषा-हस्त-पुष्य-मघाः ।

शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत् ।
आद्ये पादे तु देवेश तदा सा भद्रतां व्रजेत् ।
स्नपनं तत्र देवस्य घृतेन कथितं बुधैः ॥
इत्येषा कथिता वीर भद्रा नामेति सप्तमी ।
तामुपोष्य नरो भीरब्रह्मलोकमवाप्नुयात् ॥

'सवितुर्नक्षत्रं' हस्तः, तस्य प्रथमपादयोग इति ।

तथा ।

शुक्लपक्षे तु सप्तम्यां नक्षत्रं तु करो भवेत् ।
तन्नाम्नास्तु महापुण्या सप्तमी पापनाशिनी ॥

तस्यां सम्पूज्य देवेशं चित्रभानुं दिवाकरम्।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः॥
यश्चोपवासं कुरुते तस्यां नियतमानसः।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते॥
शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः।
महाजया तदा ख्याता सप्तमी भास्करप्रिया॥
स्नानं दानं जपो होमः पितृ-देवादिपूजनम्।
सर्वं कोटिगुणं प्रोक्तं भास्करस्य वचो यथा॥

आदित्यपुराणे।

रेवती रविसंयुक्ता सप्तमी स्यान्महाफला।
रेवती यत्र सप्तम्यामादित्यदिवसे भवेत्॥

इति पुण्यसप्तमी।

---

## अथ पुण्याष्टमी।

तत्र विष्णुः।

पुनर्वसौ बुधोपेता चैत्रमासि सिताष्टमी।
प्रातस्तु विधिवत् स्नात्वा वाजपेयफलं लभेत्॥
अशोकैरर्चयेद्दुर्गां अशोककलिकां पिबेत्।
चैत्रे मासि सिताष्टम्यां ये पिबन्ति पुनर्वसौ।
अशोकस्याष्टकलिकां न ते शोकमवाप्नुयुः॥
त्वामशोक शिवाभीष्टं मधुमाससमुद्भवम्।
पिबामि शोकसन्तप्तो[१] मामशोकं सदा कुरु॥

---

(१) क्वचित् शोकसन्तप्तमिति द्वितीयान्तोऽपि पाठो वर्त्तते।

इति पानमन्त्रः ।

क्वचित् हराभीष्टेति पाठः ।

भविष्यत्पुराणे ।

पौषे बुधाष्टमी शुक्ला महाभद्रा महाफला ।

ब्रह्माण्डपुराणे महादेव उवाच ।

पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।

तदा सा तु महापुण्या महाभद्रेति कीर्त्तिता ॥

तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।

मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥

क्वचित्तस्यां स्नानं तथा दानमिति पाठः ।

तस्मात्तस्यां सदा देवि पूज्योऽहं विधिवन्नरैः ।

गन्ध-पुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥

पौषे मासि यदा देवि अष्टम्यां यमदैवतम् ।

महच्च जायते पुण्यं ।

यमलोकत्वात् 'यमदैवतं' भरणी ।

तदा तु सा महापुण्या जयन्ती चाष्टमी स्मृता ।

तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् ।

सर्वं कोटिगुणं देवि कृतं भवति तत्क्षणः ॥

भविष्योत्तरे ।

सिंहगेऽर्के चि रोहिण्यां यदा कृष्णाष्टमी भवेत् ।

तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥

वाराहपुराणे ।

शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम्।
संवत्सरकृतं पापं तत्क्षणादेव मुञ्चति॥

क्वचित्त्वन्यथा पठ्यते।

माघे मासि सिताष्टम्यां सलिलं भीष्मवर्म्मणे।
श्राद्धं च ये नराः कुर्य्युस्ते स्युः सन्ततिभागिनः॥
वैयाघ्रपद्यगोत्राय साङ्कृत्यप्रवराय च[१]।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे[२]॥

इति जलमन्त्रः।

अत्र केचिदाहुः। प्राङ्मुखः श्राद्धं कुर्य्याद्भीष्मस्य वसुवतारत्वाद्देवत्वस्याप्युपपत्तेः। न च वाच्यं वसुवतारत्वेऽपि तस्य क्षत्रियस्य सतः सकलजनपितृत्वावगमाद्दक्षिणामुखः श्राद्धं कुर्य्यादिति, क्षत्रियत्वपुरस्कारेण प्रकृतौ शिष्टाचारविरोधप्रसङ्गात्।

ब्राह्मणो हीनवर्णस्य यः करोत्यौर्द्धदेहिकम्।
स तादृगतिमवाप्नोति इह लोके परत्र च॥

इत्यादिना मरीच्यादिभिर्ब्राह्मणस्य क्षत्रियौर्द्धदेहिकानुष्ठानप्रतिषेधात् देवत्वपुरस्कारेणानुवृत्तौ न शिष्टाचारविरोधः, दृश्यते च शिष्टाचारः ब्राह्मणा अपि भीष्मस्य श्राद्धं कुर्व्वाणा इति। तदयुक्तं, "भीष्मवर्म्मण इति मन्त्रवर्णपर्य्यालोचनया क्षत्रियत्वपुरस्कारावगमात् "वर्म्मान्तं क्षत्रिये प्रोक्तमिति शास्त्रस्मरणात्।

माघे मासि सिताष्टम्यां सलिलं भीष्मवर्म्मणे।

(१) साङ्कृतिप्रवराय चेति रघुनन्दनभट्टाचार्य्यधृतः पाठः।
(२) अयं भीष्माय वर्म्मिणे इति क०।

इति विधिवाक्यादप्येवमेवावगम्यते । न चाप्राप्त एव देयशब्दे वर्म-शब्दो विधीयते इति वाच्यं। चत्रियशब्दे भ्रातृपात्रादिशब्दानामपि विधाननिषेधस्य तदन्यचत्रियविषयतेति वाच्यम्, चत्रियश्राद्धे ब्राह्मणरूपकर्टविशेषनिषेधाद्भीष्मश्राद्धविषयत्वमिति यदि तर्हि वैप-रीत्यप्रसङ्गः। न चास्य निषेधस्य चैव प्राप्त्यपेचत्वादिकल्पोपपत्तौ भीष्मश्राद्धे ब्राह्मणस्याप्यधिकार इति वाच्यं। विकल्पभयादेव तत्र, "अनुयाजेषु ये यजामहं करोतीतिवत् पर्य्युदासाश्रयणात्। शिष्टा-चारस्य नियतो न विद्यते, विद्यमानत्वेऽपि बाध्यते "श्रुति-स्मृतिवि-हितो धर्मस्तदलाभे शिष्टाचारः प्रमाणमिति वशिष्ठस्मरणात् ।

सङ्गते भास्करे कन्यां कृष्णपचे विशिष्यते ।
अष्टमी चाष्टका नाम शाकेनापि न हापयेत् ॥

ब्रह्माण्डपुराणे ।

आग्रहायण्याः परतस्त्वष्टकास्तिस्रः, कृष्णपचे पूर्वा ऐन्द्री, प्राजा-पत्या द्वितीया, वैश्वदेवी तृतीया, आद्या शाकैः, द्वितीया मांसैः, तृतीया पूपैः ।

शिवरहस्ये ।

मार्गाद्यपरपचेषु पूर्वा मध्यानुशब्दिता ।
स्युः खल्वष्टकास्तिस्रः सपुष्यादिष्वनुक्रमात् ॥

आश्वलायनः ।

हेमन्त-शिशिरयोश्चतुर्णामपरपचाणामष्टमीष्वष्टका इति देवता-इति ।

शतपथे तु ।

द्वादश पौर्णमास्यो द्वादशाष्टकाः द्वादशामावास्या इति।

'अष्टका इति कृष्णाष्टम्य इत्यर्थः।

महाभारते।

अष्टकासु च यद्दत्तं तदनन्तमुदाहृतम्।
अग्निपुत्रसमायुक्ता परिपूर्णा सिताष्टमी।
तस्यां नियमकर्त्तारो न स्युः व्याधितसम्पदः॥

'अग्निपुत्रः' बुधः।

इति पुण्याष्टमी।

---

## अथ पुण्या नवमी।

वाराहपुराणे।

नवम्यां हि सदा पूज्या गौरी देवी समाधिना।
वरदा सर्वलोकस्य भविष्यति न संशयः॥

केचित्तामिनयुक्तनवमी म्टहीतव्येत्याहुः। "हतीया चैव वैशाखे नवम्यामयुजे तथेति भविष्यत्पुराणे प्राशस्त्यश्रुतेरिति। तदयुक्तम्। प्राशस्त्यश्रवणे फलाधिक्यमवगम्यते न तु नवमीविशेषपरत्वं, तल्लोपे प्रमाणाभावात्।

देवीपुराणे।

नवम्यां पूजयेद्देवीं महामहिषमर्दिनीम्।
कुङ्कुमागुरु-कर्पूर-धूपान्न-ध्वज-तर्पणैः(१)।
दमनैर्मरुपत्रैश्च विजयाख्यं पदं लभेत्॥

---

(१) कुङ्कुमागुरु-कर्पूर-महान्न-ध्वज-तर्पणैरिति ग०।

ब्रह्मपुराणे।

चैत्रशुक्लनवम्यां च(१) भद्रकाली महाबला।
योगिनीनान्तु सर्वासामाधिपत्ये निषेविता॥
तस्यान्तां पूजयेत्तत्र सोपवासो जितेन्द्रियः।
विविधैर्बलिभिर्भक्त्या सर्वासु नवमीषु च॥

देवीपुराणे।

आश्विने नवमी शुक्ला तस्यां कोटिगुणं फलम्।

तथा।

आश्विनस्य तु मासस्य नवमी शुक्लपक्षजा।
जायते कोटिगुणितं दानं तस्यां नराधिप॥
शुक्लपक्षे नवम्यां यः कार्त्तिकस्य समाहितः।
स्नायाद्दद्यात्समश्नुर्यादक्षयं लभते फलम्॥

पद्मपुराणे।

कार्त्तिके नवमी शुक्ला पितॄणामुत्सवाय च।
तस्यां स्नानं हुतं दत्तं अनन्तफलदं भवेत्॥

इति पुण्या नवमी।

---

## अथ पुण्या दशमी।

ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्वीत दानञ्चैव विशेषतः॥

ब्राह्मे।

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता

---

(१) चैत्रनवम्यां शुक्लायामिति ग०।

हरते दश पापानि तस्माद्दशहरा स्मृता ।
तस्यां स्नानं प्रकुर्वीत दानञ्चैव विशेषतः ॥

दशपापान्याह मनुः ।

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्यात् चतुर्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥

भविष्ये ।

ज्यैष्ठे शुक्लदशम्यां च भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥

विष्णुधर्म्मोत्तरे ।

दशम्यां शुक्लपक्षे च ज्यैष्ठे मासि कुजे दिने ।
गङ्गावतीर्णा हस्तर्क्षे सर्वपापहरा स्मृता ॥

हस्तान्विता ज्यैष्ठशुक्ला दशमी दशपापहरा सैव गङ्गास्नानान्मङ्गलदिनसंयुक्ता सर्वपापहरेत्यर्थः । "प्रशस्ता तु हस्तर्क्ष इत्यस्यानन्तरमेवं पठ्यते, "सैषा दशहरा स्मृता" ।

गङ्गास्नाने कृतार्थः स्याद्दशमियोगे नरोत्तमः ।
हरेद्दै दशपापानि गङ्गा तत्र न संशयः ॥

लघुपापविषयश्चायं द्रष्टव्यः न तु गुरुपापपरिषयः, तद्विषयगुरुप्रायश्चित्तविधानवैयर्थ्यप्रसङ्गात् ।

तथाच गौतमः।

एतानि गुह्यानि श्रुतानि।

ब्रह्माण्डपुराणे।

कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षजा।

तस्यां व्रतादि कुर्वाणो लभते फलमुत्तमम्॥

इति पुण्यदशमी।

---

## अथ पुण्यैकादशी।

वाराहपुराणे।

एकादश्यान्तु यत्नेन नरः कुर्याद्यथाविधि।

मार्गशीर्षशुक्लपक्षादारभ्याब्दं विचक्षणः॥

तद्व्रतं धनदस्येष्टः कृतं वित्तं प्रयच्छति।

तस्मै ब्रह्मा ददौ प्रीतस्तिथिमेकादशीं प्रभुः॥

तस्यामनग्निपक्वाशी यो भवेन्नियतः शुचिः।

तस्यापि धनदो देवः तुष्टो वित्तं प्रयच्छति॥

देवीपुराणे।

पुष्यर्क्षैकादशी शुक्ला सुपुण्या पापनाशिनी।

विष्णुधर्मोत्तरे।

एकादश्यां शुक्लपक्षे यदर्क्षं वै पुनर्वसु।

नाम्ना सा विजया ख्याता तिथीनामुत्तमा तिथिः॥

यो ददाति तिलप्रस्थं यस्य संवत्सरं तथा।

उपवासपरस्तस्यां तयोस्तुल्यफलं स्मृतम्॥

तस्यां जगत्पतिर्देवः सर्वलोकेश्वरो हरिः।
प्रयात्याशु तमाराध्य तेनानन्तफलं स्मृतम्॥
एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी॥
तस्यामाराध्य गोविन्दं जगतामीश्वरेश्वरम्।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः॥
यश्चोपवासं कुरुते तस्यां स्नातो हि सर्व्वतः(१)।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥
दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्द्दनम्।
होमो वा क्रियते तस्यां अक्षयं कथितं फलम्॥
इति पुष्यैकादशी।

---

## अथ पुष्यद्वादशी।

वाराहपुराणे।

एकादश्यामुपवसन् पक्षयोरुभयोरपि।
द्वादश्यां योऽर्च्चयेद्विष्णुमनन्तफलभाग्भवेत्॥

ब्रह्मपुराणे।

द्वादश्यां शुक्लपक्षस्य चम्पकैरर्च्चयेद्धरिं।

विष्णुधर्म्मोत्तरे।

द्वादशीषु च यद्दत्तं शुक्लासु च विशेषतः।
श्रवणेन तु युक्तासु तथापि द्विजसत्तमाः॥

---

(१) सत्तम इति ख०।

विशेषाद्बुधयुक्तासु शुक्लपक्षासु सर्वथा(१) ।
भाग्यर्क्षसंयुता चैत्रे द्वादशी ज्ञानदायिका ॥

'भाग्यर्क्षं' पूर्वाफाल्गुनी ।

हस्तयुक्ता तु वैशाखे ज्येष्ठे तु स्वातिसंयुता ।
ज्येष्ठया च तथाषाढे मूलोपेता च वैष्णवे ॥

'वैष्णवे' श्रावणे मासि ।

तथा भाद्रपदे मासि श्रवणेन तु संयुता ।
आश्विनैकादशी पुण्या भवत्याजर्क्षसंयुता ॥

'आजर्क्षं' पूर्वाभाद्रपदा ।

कार्त्तिके रेवतीयुक्ता अक्षय्यफलदायिका ।

विष्णुः । मार्गशीर्षे शुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं वासुदेवमर्चयेत् वस्त्र-गन्ध-पुष्प-धूप-दीप-नैवेद्यैर्द्विज-ब्राह्मणतर्पणैः व्रतमेतत्सुसंपूर्णं कृत्वा पापेन पूतो भवति, यावज्जीवं कृत्वा श्वेतद्वीपमवाप्नोति, उभयपक्षे द्वादशीत्येवं संवत्सरेण स्वर्गलोकं प्राप्नोति, यावज्जीवं विष्णुलोकं ।

गारुडपुराणे ।

माघि भाद्रपदे शुक्ला द्वादशी या महाफला ।
फलं दत्त-हुतानाञ्च तस्यां शतगुणं भवेत् ॥

विष्णुधर्मे ।

माघ्यान्तु समतीतायां श्रवणेन तु संयुता ।
द्वादशी या भवेत्कृष्णा प्रोक्ता सा तिलद्वादशी ॥

(१) विशेषाद्बुधसंयुक्ता शुक्लपक्षा प्रशस्यत इति ख० ।

तिलैः स्नानं तिलैर्होमः तर्पणञ्च तिलोदकैः।
दीपञ्च तिलतैलेन तथा देयं तिलोदकम्।
तिलाश्च देया विप्रेभ्यस्त्रिभिरपि पार्थिव॥
मूलर्क्षगे शशधरे माघे माघि प्रजापते।
एकादश्यां कृष्णपक्षे सोपवासो जितेन्द्रियः।
द्वादश्यां षट्तिलाहारं कृत्वा पापैः प्रमुच्यते॥
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी।
तिलभुक् तिलदाता च[१] षट्तिलाः पापनाशनाः॥
असकृत् षट्तिलान् कृत्वा सर्वपापैः प्रमुच्यते।
त्रीणि वर्षसहस्राणि स्वर्गलोके महीयते॥

ज्योतिःशास्त्रे।

पञ्चाननस्थौ गुरु-भूमिपुत्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे।
समाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इति प्रयोगः॥
अस्मिंस्तु गो-भूमि-हिरण्य-वस्त्र-
दानेन सर्वं प्रविहाय पापं।
सुरत्वमिन्द्रत्वमनामयत्वं
मर्त्त्याधिपत्यं लभते मनुष्यः॥

'पञ्चाननः' सिंहः, 'समाभिधाना' पारणाभिधाना, 'तिथिः' द्वादशी, 'करभेण' हस्तनक्षत्रेण।

इति पुण्या द्वादशी।

---

(१) तिलदाता तिलभोक्तेति ख०।

# अथ पुष्पचयोदशी ।

स्कन्दपुराणे ।

चैत्रे चयोदशी पुण्या तस्यां दशगुणं फलम् ।

पद्मपुराणे ।

यस्तु चैत्रे चयोदश्यां स्नानं दानं समाचरेत् ।
फलं दशगुणं तस्य कर्मणो लभते नरः ॥

तथा ।

चैत्रे शुक्लचयोदश्यां मदनं चम्पकात्मकम् ।
कृत्वा संपूज्य यत्नेन वीजयेद्व्यजनेन तु ।
ततः सम्पूजितः कामः पुत्र-पौत्रसमृद्धिदः ॥

देवीपुराणे ।

कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि ।
रतिपत्नीसमायुक्तः अशोकपुष्पभूषितः ॥
कुङ्कुमेन चित्रवस्त्रे वा लेख्या वस्त्र-फलादिभिः ।
खण्ड-शर्करा-नैवेद्यैः सौभाग्यमतुलं लभेत् ॥

कमाच दमनकपूजेत्यवधेयम् ।

ब्रह्मपुराणे ।

चयोदश्यां यथाकामं कामः पुष्पवाया जनैः ।

ज्योतिःशास्त्रे ।

कृष्णपक्षे चयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥

इति पुष्पचयोदशी ।

## अथ पुण्यचतुर्दशी।

वाराहपुराणे।

चैत्रे सितचतुर्दश्यां भवेत् काममहोत्सवः।
कुङ्कुमितोक्तिभिस्तत्र गीत-वाद्यादिभिर्नृणां॥
भगवान् तुष्यते कामः पुत्र-पौत्रसमृद्धिदः॥
चैत्रे सितचतुर्दश्यां यः स्नायाच्छिवसन्निधौ।
गङ्गायाञ्च विशेषेण स न प्रेतोऽभिजायते॥
चैत्रकृष्णचतुर्दश्यां अङ्गारकदिनं यदि।
पिशाचत्वं पुनर्न स्याद्गङ्गायां स्नान-भोजनात्॥

ब्रह्मपुराणे।

आषाढे मासि भूतेऽह्नि शिवं संपूज्य मानवः।
सर्वपापविनिर्मुक्तः सर्वसम्पदमाप्नुयात्॥

मत्स्यपुराणे।

आराधिते महेन्द्रे च ध्वजाकारासु यष्टिषु।
ततः शुक्लचतुर्दश्यां अनन्तं पूजयेद्धरिम्॥
कृत्वा दर्भमयञ्चैव वारिधानीसमन्वितम्।
धूप-दीपादिभिः(१) देवमीप्सितं काममाप्नुयात्॥

विष्णुपुराणे।

इषिते शुक्लपक्षे च या पाषाणचतुर्दशी।
तस्यामाराधयेद्गौरीं नक्तं पाषाणभक्षणैः॥
पाषाणाकारपिष्टकैरित्यर्थः।

---

(१) पुष्प-धूपादिभिरिति ख०।

माघे।

कार्त्तिके भौमवारेण चित्रा कृष्णचतुर्दशी।
तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम्॥

स्कन्दपुराणे।

चैत्रे चतुर्दशी शुक्ला श्रावण-प्रोष्ठपादयोः।
माघस्य वा कृष्णपक्षे स्नाने बहुफला स्मृ ता॥

मत्स्यपुराणे।

यां कांचित्सरितं प्राप्य कृष्णपक्षे चतुर्दशी।
यमुनायां तु विशेषात् तर्पयेत् यमम्॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्वभूतक्षयाय च॥
दध्नाङ्कराय दण्डाय प्रेताधिपाय पाणिने।
औदुम्बराय घोराय चित्रगुप्ताय ते नमः॥
एकैकस्य तिलैर्मिश्रान् दद्यात् त्रींस्त्रीन् जलाञ्जलीन्।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति॥

देवीपुराणे।

तथा कृष्णचतुर्दश्यां भौमाह्ने पितृतर्पणम्।

'भौमाह्न इति प्राशस्त्यातिशयं दर्शयति। सर्वासु च चतुर्दशीषु नदीजले स्नातो धर्मराजं पूजयित्वा पापेभ्यः पूतो भवति।

इति पुण्यचतुर्दशी।

---

## अथ पुण्यपौर्णमासी।

संवर्त्तः।

माघे मासि तु सम्प्राप्ते पौर्णमास्यामुपोषितः।
ब्राह्मणेभ्यस्तिलान् दत्त्वा सर्वपापैः प्रमुच्यते॥

अत्र दानं पौर्णमास्यां विधीयते प्राधान्यात्। ततश्चार्वाक्चतुर्दश्यामुपवासः।

विष्णुधर्मोत्तरे।

पौर्णमासीषु सर्वासु मघर्क्षसहितासु च।
दत्तानामिह दानानां फलं दशगुणं भवेत्॥
महती पौर्णमासी या युक्ता पूर्णेन्दुना गुरौ।
वैशाखी कार्त्तिकी माघी पूर्णिमा तु महाफला॥

स्कन्दपुराणे।

यस्यां पूर्णेन्दुना योगं याति जीवो महायशाः।
पौर्णमासीति सा ज्ञेया महापूर्वा द्विजोत्तम।
स्नानं दानं तथा जप्यमनन्तफलदं स्मृतम्॥

ज्योतिःशास्त्रे।

दृश्येते सहितौ यस्यां दिवि(१) चन्द्र-बृहस्पती।
पौर्णमासी तु महती प्रोक्ता संवत्सरेण सा।
तस्यां दानोपवासाद्यमक्षयं परिकीर्त्तितम्॥
मासाख्यर्क्षे चन्द्र-गुरू तस्मात्सप्तदशे रविः।
पूर्णिमा जीववारे तु महत्याख्या च सा तिथिः॥

---

(१) दिवीति क०।

हरिक्षेत्रे च गङ्गायां समुद्रे नैमिषे तथा ।
महाकार्त्तिकीतिथौ स्नानं दानं श्राद्धमनन्तकम् ॥
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठीति कीर्त्तिता ॥
'ऐन्द्रं' ज्येष्ठा, 'प्राजापत्यं' रोहिणी ।
पद्मपुराणे ।
आग्नेयं हि यदा ऋक्षं कार्त्तिक्यां तु भवेत् क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानादिकर्म्मसु ॥
'आग्नेयऋक्षं' कृत्तिका ।
यदा याम्यं भवेदृक्षं तदा तस्यां तिथौ क्वचित् ।
तिथिः सापि महापुण्या ऋषिभिः परिकीर्त्तिता ॥
'याम्यऋक्षं' भरणी ।
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥
'प्राजापत्यऋक्षं' रोहिणी ।
मन्दे वार्क्के गुरौ वापि वारेष्वेतेषु च त्रिषु ।
चोक्तेतानि च ऋक्षाणि ऋक्षं प्रोक्तानि मन्नुना ॥
अश्वमेधिकं पुण्यं स्नातस्य भवतो नृप ।
दानमक्षयतां याति पितृणां तर्पणं तथा ॥
कृत्तिका-रोहिणी-याम्ययुक्ता या कार्त्तिकी भवेत् ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥
ब्रह्मपुराणे ।

पुष्या महाकार्त्तिकी स्याज्जीवेन्द्वोः कृत्तिकासु च।
महाज्येष्ठी जीवेन्द्वोर्मरणामाथोति कथ्यते ॥

ज्योतिःशास्त्रे।

मेषस्थे यदा सौरिः सिंहे च गुरु-चन्द्रमाः।
भास्करः श्रवणर्क्षे च्यावयामाथोति सा स्मृता ॥
भास्करे महाज्येष्ठा पुंसां महाफला।
मञ्चायां चैव वैशाखी ज्येष्ठी वै पुरुषोत्तमे ॥
आषाढ़ी वै प्रभासे केदारे श्रावणी तथा।
महाभाद्री बदर्याञ्च कुब्जायामेव चाश्विनी ॥
पुष्करे कार्त्तिकी कान्यकुब्जे मार्गशिरी तथा।
अयोध्यायां महापौषी स्नाताः स्युः सुखदायकाः।
महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा ॥

विष्णुपुराणे।

आश्विने पौर्णमास्यां च चरेज्जागरणं निशि।
कौमुदी सा समाख्याता कार्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीं इन्द्रमैरावते स्थितं।
सुगन्धैर्निशि सितैः सर्वैर्जागरणं भवेत् ॥
फाल्गुने पौर्णमासी च सदा बालविकाशिनी।
ज्ञेया फाल्गुनिका सा च ज्ञेया लोकविभूतये ॥

वाराहपुराणे।

फाल्गुने पौर्णमास्यां तु पठबालविकाशिनी।
ज्ञेया सा फाल्गुनी लोके कार्या लोकसमृद्धये ॥

इति मुख्यपूर्णिमा।

## अथ पुण्यामावास्या।

शातातपः।

अमावास्या भवेद्वारे यदा भूमिसुतस्य वै।
जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत्॥

महाभारते।

अमा सोमे तथा भौमे गुरुवारे यदा भवेत्।
तत्तीर्थं पुष्करं नाम सूर्यपर्वशताधिकं॥

विष्णुपुराणे।

अमावास्या यदा मैत्र-विशाखा-स्वातियोगिनी।
श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीं॥

क्वचित्तु 'विशाखा-स्वातियोगिनीति पाठः। 'मैत्रं' अनुराधा।

अमावास्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ।
द्वादशाब्दीं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः॥

'रौद्रर्क्षं' आर्द्रा।

वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छता।
वारुणे चाप्यदैवत्ये देवानामपि दुर्लभा।

'वासवं' धनिष्ठा, 'अजैकपादं' पूर्व्वभाद्रपदा, 'वारुणं' शतभिषक्, 'आप्यं' पूर्वाभाद्रपदा।

मासाचिते पञ्चदशी कदाचि-
दुपैति योगं यदि वारुणेन।
भवेत्स कालः स परः पितॄणां
न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ॥

'बाद्यब्बद्धं' ग्रततारका।

इति पुण्यामावास्या।

---

## अथ नाना पुण्याः।

वाराहपुराणे।

प्रतिपद्यपि पूजा तु षष्ठ्यां प्रोक्ता यथैव तु।

भविष्यत्पुराणे।

शुक्लपक्षे तृतीयायां चतुर्थ्यां चैव भारत।

कृष्णपक्षे च पञ्चम्यां स्नातः किमनुशोचति॥

शाम्बपुराणे।

शुक्ला वा यदि वा कृष्णा षष्ठी वा सप्तमी तथा।

रविवारेण संयुक्ता तिथिः पुण्यतमा स्मृता॥

सौरपुराणे।

सोपवासश्चतुर्दश्यामष्टम्यां च सुरेश्वरं।

यस्तु पूजयते नित्यं तस्य तुष्यति शङ्करः॥

अष्टम्याञ्च चतुर्दश्यां यः शिवं संयतव्रतः।

मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलं॥

वाराहपुराणे।

अष्टम्यां च चतुर्दश्यां राघवादिप्रपूजनं।

नवम्यां मातृयागन्तु पञ्चम्यान्तु जनार्दनं॥

पौष-माघाष्टमी पुण्या चैत्रे माघि चयोदशी।

कार्त्तिकी पौर्णमासी च द्वादशी कौशिकोत्तरा ॥

'उत्तरा' मार्गशीर्षी ।

स्कन्दपुराणे ।

चैत्रस्य शुक्लद्वादशी द्वादशी च तथाविधा ।
चतुर्थी पौर्णमासी च नित्यं पुण्यतमा स्मृता ॥

उपवासादिव ।

पौर्णमास्याममावास्यामष्टम्यामष्टकासु च ।
चतुर्दश्यां व्रतं स्नानमष्टम्यां शिवसन्निधौ ॥

मार्कण्डेयः ।

एकादश्यां सिते पक्षे पुष्यर्क्षं यदि सत्तम ।
द्वादश्यां वा तदाशेषपापक्षयकरं स्मृतं ॥

व्यासः ।

शुक्ले वा यदि वा कृष्णे चतुर्थी वा चतुर्दशी ।
भौमवारेण पुण्यासौ सोमवारे कुहूर्यथा ॥
अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण विषुवत्सदृशं फलं ॥

शङ्खः ।

अमावास्या तु सोमेन सप्तमी भानुना सह ।
चतुर्थी भूमिपुत्रेण बुधवारेण चाष्टमी ॥
चतस्रस्तिथयः पुण्याः तुल्याः सूर्यग्रहादिभिः ।
सर्वसञ्चयसर्वोत्ता स्नान-दान-जपादिकं ॥

शातातपः ।

अमावास्या सोमवारे सूर्यवारे च सप्तमी।
अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी॥
तत्र यः कुरुते कर्म शुभं वा यदि वाऽशुभं।
षष्टिवर्षसहस्राणि कर्त्ता तत्फलमश्नुते॥

ब्रह्माण्डपुराणे।

दुर्गोत्सवस्य नवमी विष्णुशयनद्वादशी।
वह्निस्थापनषष्ठी च मदनो माघसप्तमी[1]॥

विष्णुः।

पञ्चदशी पौर्णमासी पञ्चमी द्वादशीदलं॥
संवत्सरमभुञ्जानः सततं विजितेन्द्रियः।
मुच्यते सर्वपापेभ्य स्वर्गलोकं च गच्छति॥

विष्णुपुराणे।

षड्गुणत्वं चित्ते पक्षे मासे मासार्द्धभे निशि।
द्वादश्यामथ कर्त्तव्यः पौर्णमास्यां महोत्सवः॥

पितामहः।

प्रतिपद्धनदस्योक्ता द्वितीया तु त्रियः स्मृता।
तृतीया तु भवान्यास्तु चतुर्थी तत्सुतस्य च।
नागानां पञ्चमी प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु॥
सप्तमी भास्करे प्रोक्ता दुर्गाया अष्टमी स्मृता।
मातृणां नवमी प्रोक्ता दशमी वासुकेः स्मृता॥
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः।

(१) माघमासस्य सप्तमीति क०।

त्रयोदशी त्वनङ्गस्य शिवयोगा चतुर्दशी ॥
पौर्णमासी तथा धातुर्विधौनाप्युत्तमा स्मृता ।
अमावास्या सर्वदैव पित्र्ये कर्मसुदाहृता ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्ग-चिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिपदादिमुख्यतिथयः ॥

---

## अथ चतुर्दशोऽध्यायः।

### अथ नक्षत्रयुक्ततिथिनिर्णयः।

स्कन्दपुराणे।

प्राजापत्यर्क्षसंयुक्ता कृष्णे नभसि चाष्टमी।

मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला॥

अवयवाद्यामप्येवमेव।

तथाच।

द्वादशी श्रवणस्पृष्टा कृत्स्ना पुण्यतमा स्मृता।

न तु सा तेन संयुक्ता तावत्येव प्रशस्यते॥ इति।

अन्यत्र तु यावता कालेन यत्कर्म समाप्येत तावति काले नक्षत्रादियुक्तापेक्षणीया। यदुक्तं भास्करगीतायां।

कृत्तिकादिभरण्यन्तं तारा वा रविसप्तमं(१)।

नैते संयोगमात्रेण पुनन्ति सकलां तिथिम्॥ इति।

तथाच ब्रह्मवैवर्त्ते।

पूर्व्वभागस्थितैर्ऋक्षैः स्यादृक्षयोगान्वितो भवेत्।

सा तिथिः सकला ज्ञेया नान्ये ऋक्षेण संयुता॥

यावत्ता तिष्ठते ऋक्षांशास्तावत्कालः प्रशस्यते।

दान-पूजादिकं सर्व्वं नराणां तत्फलदं भवेत्॥

इति नक्षत्रयुक्ततिथिनिर्णयः।

---

(१) रविसप्तकमिति ख० ग०।

## अथ युगादिनिर्णयः ।

स्कन्दपुराण-भविष्यत्पुराणयोः ।

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात्कृतं ।
राधे सिततृतीयायां त्रेता वै समपद्यत ॥
दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगं ।
कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ।
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः ॥

नागरखण्डे ।

अधुना शृणु राजेन्द्र युगाद्याः पितृवल्लभाः ।
यासां संकीर्त्तनेनापि क्षीयते पापसञ्चयः ॥
नवमी कार्त्तिके शुक्ला तृतीया माधवे सिता ।
अमावास्या तपस्ये च नभस्ये च त्रयोदशी ॥
त्रेता-कृत-कलीनान्तु द्वापरस्योदयः क्रमात् ।
स्नाने दाने जपे होमे विशेषात् पितृतर्पणे ।
कृतस्याक्षयकारिण्यः सुकृतस्य महाफलाः ॥

‘माधवे’ वैशाखे, ‘सिता’ शुक्ला, ‘तपस्ये’ माघे ।

मत्स्यपुराणे ।

वैशाखस्य तृतीया या नवमी कार्त्तिकस्य तु ।
पञ्चदश्यपि माघस्य नभस्ये च त्रयोदशी ।
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः ॥

देवलः ।

तृतीया रोहिणीयुक्ता वैशाखस्य सिता तु या ।

नभाभिः चरिता कृष्णा नभस्ये तु चयोदशी ।
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः ॥

विष्णुपुराण-भविष्यत्पुराणयोः ।

वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तु कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे॥
एता युगाद्याः कथिताः पुराणे
अनन्तपुण्यास्तिथयश्चतस्रः ।

'पञ्चदशी च माघे' इत्यत्र कृष्णपक्षपदमनुषज्यते ।

अत एव नारदीयपुराणे ।

द्वे शुक्ले द्वे च कृष्णे तु युगाद्याः कवयो विदुः ।
शुक्ले पूर्व्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥

ब्रह्मपुराणे ।

माघस्य पौर्णमासी युगादिरित्युक्तं ।

वैशाखे शुक्लपक्षस्य तृतीयायां कृतं युगं ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरं ।
माघे तु पौर्णमास्याञ्च घोरं कलियुगं तथा ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ।
अत्र दत्त-कृतानाञ्च अनन्तं परिकीर्त्तितं ॥

तथा ।

एतास्तस्तिथयो युगाद्या-
दत्तं हुतञ्चाक्षयमाशु विन्द्यात् ।
युगे युगे वर्षशतेन यत्
युगादिकाले दिवसेन तत्स्यात्[१] ॥

भविष्यत्पुराणे ।

वैशाखस्य तृतीया या समा कृतयुगेन तु ।
नवमी कार्त्तिके या तु त्रेतायुगसमा तु सा ॥
नभोदशी नभस्ये तु द्वापरेण समा तु सा ।
माघे पञ्चदशी राजन् कलिकालसमा तु सा ॥

क्वचित्तु कलिकालादिरुच्यत इति पाठः ।

एतास्तस्तो राजेन्द्र युगानां प्रभवाः शुभाः ।
युगादयस्तु कथ्यन्ते तेनैताः पूर्वसूरिभिः ॥
उपवासस्तपोदानं श्राद्धं होमो जपस्तदा ।
यद्वा तु क्रियते किञ्चित् सर्वं कोटिगुणं भवेत् ॥

'कृतयुगेन समेति समयेऽपि कृतयुगे प्रत्यहं क्रियमाणेन कर्मणा यावत्पुण्यं भवति तावदस्यामेकस्यामेव तिथाविन्यर्थः ।

प्रभासखण्डे ।

यदा चन्द्रश्च सूर्यश्च यदा तिष्य-बृहस्पती ।
एकराशौ[२] समेष्यन्ति प्रवेक्ष्यति तदा कृतं ॥

अथ केचिदाहुः ।

---

(१) तद्भवेदिति ग० ।
(२) एकराश इति क० ।

न गवादिशब्दवद्वैशाखादिशब्दा लुप्तावयवार्थाः, किन्तु सौरचान्द्रमासवचना इति प्रागुक्तं, तथा सति वैशाखस्य द्वित्वात् उभयत्रापि तिथिद्वैधात् तत्र युगादिद्वयप्रसक्तिः, तथा सति चतस्र इति परिसङ्ख्यानमनुपपन्नं, एकत्वे सति सौरचान्द्रमासविनिगमनार्थं[१] इह केचिदाहुः । चान्द्रमाससमाश्रया[२] युगादिरनुष्ठानानां पितृकार्यप्रधानत्वात् युगादीनां पितृकार्येऽपि चान्द्रमासप्रारब्धात् ।

यदुक्तं ।

आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः इति ।

सितासितपक्षव्यपदेशे पक्षद्वयात्मकत्वात् चान्द्रमासाश्रयतैव युज्यते । किञ्च ।

माघासिते पञ्चदशी कदाचि-
दुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां
न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥

इति स्मृतेः "यासौ वैशाखस्यामावास्या रोहिण्यां सम्पद्यत" इति श्रुतेः चान्द्रमासगता एव युगादयः समवगम्यन्ते[३] न हि मकरादित्ये माघे शतभिषायोगोऽमावास्यायां सम्भवति, तथात्वे हि रविमण्डलान्तर्निवेशाच्चन्द्रस्य रविसंयुक्तत्वात् शशिनोऽपि मकरगामिता स्यात्, तथा सति शतभिषायोगो न स्यात् कुम्भसम्बन्धित्वात्

(१) सौरचान्द्रमासविभागार्थमिति क० ।

(२) चान्द्रमानमासाख्येति क० ।

(३) चान्द्रमासगताया एव तिथेर्युगादित्वमवगम्यत इति ख० ।

तथाः, कुम्भादित्ये रवि-चन्द्रमसोरेकराशिवर्त्तित्वे वारुणयोगोऽनु-सन्धेयः, तथा प्रौष्ठपदपूर्वं हस्तायामद्रमौति विशिष्टयुगादौ चान्द्र-मासं दर्शयति, नैवं सति युगादिषूत्कर्षप्रसक्तिः, पितृकार्य्यपरतया सौरमासागोचरायास्तिथेरयुगादित्वेनोत्कर्षप्रसक्तेः।

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणां।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु॥

इति निषेधात्। अथवा सत्यपि युगादित्वे चैव पितृका-र्य्योक्तत्वात् तिथेः सौरमानता "तिथिर्दैवकार्य्योभिवस्तोके चान्द्रमसौया पितृकार्य्याभिमता ऊर्ध्वमनुयानेश्वरन्नौत्यपरः कालः पितृणामिति वचनात् तत्पूर्वकालसम्बन्धिपितृकार्य्योत्कर्षो नानुपपन्नः, तेन कुम्भा-दिराशिगतरविमासेऽपि माघादित्वाभावमावास्यादितिथीनां युगा-दित्वं सौरमासगतानामन्तु देवकार्य्ये चतस्रो युगाद्या इति मातृका-लाभिधानपरं भवति।

विष्णुः।

एतानि मातृकालानि नित्यान्याह प्रजापतिः। इति।

तत्र युगादिचतुष्टयं तथाच चटदचमासचित इत्यादि तत्चान्द्र-मासगतयुगादिप्रतिपादनपरं व्याख्यातं, तथोक्तं "स एव कालः चन्द्र-सचचलात् पुण्यो युगादित्वात्पुण्यतरो नक्षत्रयोगात्पुण्यतम इति।

यम।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।
उपाकर्म-महापक्षोर्मतादिष्टं कृषादितः॥

इति पठन्ति, तदसमूलत्वादुपलक्षणत्वादुपेक्षणीयमिति। अत्र

पश्चितपरितोषकृता दूषणमभिहितमनुपपन्नमेतत्, चान्द्रमास एव मासे वैशाखादिव्यपदेशभागिता तत्र च गौणी शब्दप्रवृत्तिरिति, तावत्पूर्व्वमेव निराकृतं।

यत्तु पितृकार्य्यप्रधानत्वाद्युगादीनां पितृकार्य्येऽपि चान्द्रमासः ख्यतस्तद्गतयुगादिग्रहणमिति, तन्न, सौरे चान्द्रे पितृकार्य्ये विधि-रित्युक्ता प्रोक्तं। न च पितृकार्य्ये प्राधान्यं युगादिषु देव-पितृकार्य्य-सम्बन्धित्वात्। तथाचोक्तं। "अनन्तपुण्यास्तिथयस्ततस्त्विति। तथा व्यासः। "स्नान-दानादिकं सर्व्वं युगादावक्षयं भवेत्" इति। न च सिताचितपक्षमेव तावच्चान्द्रस्य, सौरेऽपि तत्सम्भवात्।

यत्तु "माघासिते पञ्चदशीत्युदाहृतं न तेन चान्द्रमासादिगता-मावास्यादिका तिथिर्युगादिरित्युच्यते, किन्तु चान्द्रे मासे मघच-युक्ता सिनीवाली पितृक्षये भवतीति न तु योऽयं कालः[१] पितृ-वल्लभः स युगादिर्मघापरपक्षादिष्वंभावात्। माघे अमावास्या युगा-दिश्चान्द्रेऽपि सा तिथिर्युगादिरिति चेत्। नैवं। सौर-चान्द्रमासवि-निगमहेतोरभावात्। न चोभयत्रापि युगादित्वं, चतस्र इति परिस-ङ्ख्यानानुपपत्तेः। न च आद्यकालाभिप्रायेणैतद्वचनं, "चतस्रो युगादय इति वाष्टका व्रीहि-यवपाकादिति वचनाद्युगादयस्ततस्तिथय इति गम्यते, तथापि का युगादिरित्युच्यते सौरमासगतेति, अन्यथो-त्कर्षः स्यात्[२]। न च पितृकार्य्योत्कर्षो वचनादिति मन्तव्यं, वचना-

(१) यतः योयः काल इति ख०।

(२) चन्द्राद्युत्कर्षः स्यादिति ख०।

भावान्मूलकर्षो युगादिष्विति तिथयश्च सर्वथोत्कर्षं प्रतिषेधन्ति, तथा-दिराशिगतरविभागे दशहरादितिथिपूर्व्वत्वापदेशात्[१] ।

अथर्ष्यशृङ्गेण ।

दशहरासु नोत्कर्षः चतुर्ष्वपि युगादिषु ।
उपाकर्म-महापक्ष्योर्वैतदुक्तं तथादितः ॥

इति उत्कर्षनिषेधाच्च । "परः कालः पितॄणामिति परशब्दः श्रेष्ठतावचनः न तु पूर्व्वकालगतकार्योत्कर्षप्रतिपादकः । न च वा दशहरास्विति वचनममूलं, वचनात् समस्तशास्त्रवित्परिग्रहान्मूलोप-न्यासाच्च । यत्तु शाङ्गधरं व्याख्यानं नैतद्वैदिकं वचनं येनाविचारितमु-पाददीमहे, तस्मात् सकलजनप्रसिद्धानुगुणादनुष्ठानादराच्च सौरमा-सगतैव युगादिरूपा देया, न चान्द्रमासगता, न हि मिथुनादित्ये शुक्लदशमी दशहरा कुम्भादित्ये चासितपञ्चदशी अमावास्या इति विधानेऽपि श्रद्दधते, तस्मात् सौरमासगता युगादिरिति सिद्धान्तः। वयन्तु ब्रूमः यद्यपि वैशाखादिशब्दाश्चान्द्रमासवचना एवेति मास-प्रस्तावे निरूपितं, तदापि प्रागुदाहृतयुगोत्कर्षनिषेधकवचनपर्य्यालो-चनप्रसिद्धानुगुणानुष्ठानादरार्थं सौरमासगतैव युगादिर्ग्राह्येति ।

इति युगादिनिर्णयः ।

---

(१) दशहरादितिथिपूर्व्वत्वोपदेशादिति ख० ।

## अथ युगान्ताः।

ब्रह्मपुराणे।

सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य तु॥
श्रेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संज्ञया[१]।
तथा तु कुम्भसंक्रान्त्यामन्तः कलियुगस्य तु॥

आदित्यपुराणे।

दिनर्चं रेवती यत्र गमनञ्चैव राशिषु।
युगान्तदिवसं विद्धि तत्र दानमनन्तकं॥
अयने विषुवे चैव सौम्ये वा मिहिरो यदि।
सप्तमी शुक्ल-कृष्णा वा युगान्तदिवसं विदुः॥

'सौम्ये वेत्युदगयनं।

ब्रह्मपुराणे।

युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते।

पद्मपुराणे।

युगादिषु युगान्तेषु स्नान-दान-जपादिकं।
यत्किञ्चित् क्रियते तस्य युगाद्याः फलसाक्षिणः॥

मनुः।

सहस्रगुणितं दानं भवेद्दत्तं युगादिषु।
कर्म श्राद्धादिकञ्चैव तथा मन्वन्तरादिषु॥

इति युगान्ताः।

---

(१) सञ्ज्ञया इति ख०।

## अथ नानायुगधर्म्माः ।

तत्रोपकात्यायनः ।

श्रुतिश्च शौचमाचारः प्रतिकालं विभिद्यते ।
नानाधर्म्माः प्रवर्त्तन्ते मानवानां युगे युगे ॥

मनुः ।

अन्ये कृतयुगे धर्म्माः त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमं ।
द्वापरे यज्ञमेवाहुर्द्दानमेव कलौ युगे ॥

'तपः' कृच्छ्रचान्द्रायणादि, 'ज्ञानं' ध्यानं ।

महाभारते ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमं ।
द्वापरे यज्ञमेवाहुर्द्दानमेव कलौ युगे ॥

तथा ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुः कलौ दानं दया दमः ॥

बृहस्पतिः ।

तपोधर्म्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतं ।
द्वापरे चाध्वरः प्रोक्तः तिष्ये दानं दया दमः ॥

'तिष्यः' कलिः ।

लिङ्गपुराणे ।

ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यत ।

प्रवृत्तं द्वापरे युद्धं दानमेव कलौ युगे ॥

शिवपुराणे ।

ध्यानं परं कृतयुगे त्रेतायां हवनक्रिया ।

अहिंसा द्वापरे चैव(१) कलौ शर्वोत्सवः स्मृतः ॥ इति ॥

तथा ।

ध्यानं परं कृतयुगे त्रेतायां लिङ्गपूजनं ।

द्वापरेऽध्ययनं तिष्ये महादेवस्य कीर्त्तनं ॥

तथा ।

ध्यानं परं कृतयुगे त्रेतायां यजनं तथा ।

द्वापरे लिङ्गपूजा च कलौ शङ्करकीर्त्तनं ॥

विष्णुधर्म्मोत्तरे ।

ज्ञानं परं कृतयुगे त्रेतायाञ्च तपः परं ।

द्वापरे च तथा यज्ञः प्रतिष्ठा च कलौ युगे ॥

मनु-बृहस्पती ।

कृते यदब्दाद्धर्मः स्यात् तत्त्रेतायामृतुत्रयात् ।

द्वापरे तु त्रिपक्षेण कलावह्ना तु तद्भवेत् ॥

ब्रह्माण्डपुराणे ।

त्रेतायामाब्दिकोधर्म्मो द्वापरे मासिकः स्मृतः ।

यथाशक्ति चरन् प्राज्ञस्तदह्ना प्राप्नुयात्कलौ ॥

विष्णुपुराण-ब्रह्माण्डपुराणयोः ।

यत्कृते दशभिर्वर्षैः त्रेतायां हायनेन तु ।

---

(१) धर्म्म इति ग० ।

द्वापरे तन्तु मार्येन चाह्वोरात्रेण तत्कली ॥

स्कन्दपुराणे ।

ब्रह्मा कृतयुगे देवः त्रेतायां भगवान् रविः ।
द्वापरे भगवान् विष्णुः कली देवोमहेश्वरः ॥

वराहपुराणे ।

कृते नारायणः शुद्धः सूक्ष्ममूर्त्तिरुपास्यते ।
त्रेतायां यज्ञरूपेण पाञ्चरात्रेण द्वापरे ॥

श्रीभागवते ।

कृतं त्रेता द्वापरञ्च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानेव विधिनेज्यते ॥
कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताचान्बिभ्रद्दण्ड-कमण्डलून् ॥
मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ।
यजन्ते तपसा देवं शमेन च दमेन च ॥
हंसानुवर्णी वैकुण्ठो वर्णीयोगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥
तं तदा मनुजा देवं सर्वदेवमयं हरिं ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्य्यते ॥

द्वापरे भगवान् रामः पीतवासा निजायुधैः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥
तं तथा पुरुषं मर्त्या महाराजोपलक्षणं ।
यजन्ति वेद-तन्त्राभ्यां परं जिज्ञासवो नृप ॥
नमस्ते वासुदेवाय नमः संकर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥
नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥
इति द्वापर उर्व्वीश स्तुवन्ति जगदीश्वरं ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥
कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥
एवं युगानुरूपेण भगवान्युगवर्त्तिभिः ।
मनुजैरिज्यते राजंश्रेयसामीश्वरो हरिः ॥

अपराजितपृच्छायाम् ।

सोमं वामेन हस्तेन दक्षिणेन रविं न्यसेत् ।
वह्निं हृदयमध्ये यो वासुदेवं प्रकीर्त्तयेत् ॥
आदिमूर्त्तिर्द्विजैः पूज्यः श्वेतवर्णः कृते युगे ।
संकर्षणो वहत्येवं लाङ्गलं मुषलं तथा ॥
रक्तवर्णः प्रपूज्येत त्रेतायां क्षत्रजातिभिः ।
प्रद्युम्नो द्वापरे पूज्यो वैश्यैः शरधनुर्धरः ॥
पीतवर्णः पीतवासाः शिवज्ञानप्रदायकः ।

कलौ युगे निरङ्गाख्यः पूज्यते शूद्रजातिभिः ॥
कृष्णवर्णो वदत्येव धर्मं शूद्रं करद्वये ।
चापयष्टिकयोर्विप्रं पापरुद्धं विनाशयेत् ॥

अपराजितपृच्छायाम् ।

ऋग्वेदादिविभेदेन कृतादियुगभेदतः ।
विप्रादिवर्णभेदेन चतुर्वक्त्रश्चतुर्भुजः ॥
ब्रह्मा पितामहश्चैव विरिञ्चिः कमलासनः ।
धाता च इति संप्रोक्ता मूर्त्तयः परमेष्ठिनः ॥
पुस्तकं चाक्षसूत्रञ्च स्रुवा चैव कमण्डलुः ।
ब्रह्मणश्च भवेन्मूर्त्तिः कृते तु सुखदायिनी ॥
सुवक्त्रश्च सुबाहुश्च कर्णकुण्डलमण्डितः ।
मालायुक्तः सुशोभाढ्यो मांसलाङ्गः सुकेशकः ॥
तप्तकाञ्चनवर्णाभो रत्नहारोज्ज्वलद्युतिः ।
केयूरकटकप्रायः सर्वाभरणभूषितः ॥
अधश्चाश्रिताः कार्या देवतानाञ्च पार्श्वतः ।
चतुर्वेदसमायुक्तो ब्रह्मा स्यात् सर्वशान्तिदः ॥

दक्षिणाधःकरक्रमादायुधानि वेदितव्यानि ।

सिद्धार्थपृच्छायाम् ।

पुस्तकाक्ष-स्रुवी-कुण्डी कृते ब्रह्मा चतुर्मुखः(१) ।

(१) पुस्तकाक्षौ स्रुवं कुण्डी कृते ब्रह्मा चतुर्मुखः इति ख० । पुस्तकाक्षकुण्डी कृते ब्रह्मा चतुर्वाङ्गचतुर्मुख इति ग० । पाठद्वयमपि न समीचीनं विभाति ।

ब्रह्मनामा च ऋग्वेदप्रधानः पूज्यते द्विजैः ॥
कमलाचौ स्रुवश्चैव पुस्तकञ्च पितामहः।
त्रेतायाञ्च चतुर्व्वेदप्रधानः सर्वपूजितः ॥

अपराजितपृच्छायाम्।

कमण्डलुं चाचसूत्रं स्रुवञ्च पुस्तकं तथा।
पितामहो भवेन्मूर्त्तिस्त्रेतायां सुखदायिनी ॥

सिद्धार्थपृच्छायाम्।

संपूज्यो द्वापरे वैश्यैर्विरिञ्चिः शुक्लसामभृत्[१]।
अक्षसूत्रं पुस्तकञ्च स्रुवं कुण्डञ्च धारयन् ॥
अक्ष-स्रुवौ पुस्तकञ्च कुण्डी च कमलासनः।
कलावथर्व्वमुख्योऽसौ सर्व्ववर्णैः प्रपूज्यते ॥

अपराजितपृच्छायां।

अक्षसूत्रं करे दक्षे स्रुक् तस्योपरि संस्थिता।
वामे तु पुस्तकं हस्ते तस्याधश्च कमण्डलुः।
कमलासनं करे तु स्यात् सर्व्ववर्णसुखप्रदः ॥

विष्णुधर्म्मोत्तरे।

पुष्करन्तु कृते सेव्यं त्रेतायां नैमिषं तथा।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥

पराशरः ॥

कृते तु मानवो धर्म्मः त्रेतायां गौतमस्य च।
द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः[२] ॥

---

(१) शुक्लसामभृदिति ख०। (२) पाराशरी स्मृतिरिति ख०।

कालोत्तरपविचारोक्तप्रकरणे युगभेदेन पवित्रद्रव्याण्यभिहितानि ।

कृते मणिमयं कार्यं त्रेतायां हेमसम्भवं ।
पद्मजं द्वापरे सूत्रं कार्पासन्तु कलौ स्थितम् ।
यतिभिर्मानसं कार्यं दानवं वाल्कलं स्थितम् ॥

इति नानायुगधर्माः ।

---

## अथ युगभेदेन वर्ज्यानि ।

तत्र शातातपः ।

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौ युगे ॥
कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु ।
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥

क्वचित्त्वन्यथा पाठः द्वापरे त्वन्नमुच्यते ।

इति युगभेदेन वर्ज्यानि ।

---

## अथ कलियुगधर्म्माः ।

महाभारते ।

यश्चों नमः शिवायेति मन्त्रेणानेन शङ्करम् ।
सकृत्कायं समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥

सर्व्वावस्थां गतो वापि युक्तो वा सर्व्वपातकैः।
यस्त्वों नमः शिवायेति मुच्यते स कलौ नरः॥
शायेनापि नमस्कारः प्रयुक्तः शूलपाणये।
संसारदोषसम्भ्रान्तमुद्दिष्टो न करः कलौ॥

तथा।

सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव।
लिङ्गे वा स्थण्डिले वापि कौतुके विधिपूर्व्वकम्
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते॥

लिङ्गपुराणे।

कलौ रुद्रो महादेवः शङ्करो नीललोहितः।
प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः॥
ये तं विप्रास्तु सेवन्ते येन केनापि शङ्करम्।
कलिदोषं विनिर्जित्य प्रयान्ति परमं पदम्॥

व्यासः।

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्॥

भागवते।

कलौ सभाजयन्त्यार्य्या गुणज्ञाः सारभागिनः।
यत्र सङ्कीर्त्तनेनैव सर्व्वस्वार्थोऽभिलभ्यते॥

'सङ्कीर्त्तनेन' हरिसङ्कीर्त्तनेनेत्यर्थः।

न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः॥

अग्निपुराणे ।

नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने ।
युगेऽस्मिन् तामसे घोरे यज्ञ-वेदविवर्जिते ॥
कुर्व्वीताराधनं राजन् वासुदेवे कलौ युगे ।
यद्भ्यर्च्च हरिं भक्त्या कृते वर्षशतं नृप ।
विधानेन फलं लेभे अहोरात्रात् कलाविति ॥

तथा ।

कलौ कलिमलध्वंसं सर्व्वपापहरं हरिम् ।
येऽर्च्चयन्ति नरा नित्यन्तेऽपि वन्द्या यथा हरिः ॥
धर्म्मोत्कर्षमतीत्या(१) तु प्राप्नोति पुरुषः कलौ ।
स्वल्पायासेन धर्म्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ ।
धन्ये कलौ भवेद्विप्रा अल्पक्लेशैर्महत्फलम् ॥

विष्णुधर्म्मोत्तरे ।

देवतावेश्मपूर्व्वाणि नगराणि कलौ युगे ।
कर्त्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः ॥

इति कलियुगधर्म्माः ।

---

(१) अतीत्येति प्रयोग आर्षः ।

## अथ कलियुगवर्ज्यानि।

आदित्यपुराणे।

यस्तु कार्त्तयुगो धर्मो न कर्त्तव्यः कलौ युगे।

'कार्त्तः' कृतयुगसम्बन्धी।

तथा नियोगं प्रकृत्योक्तम्।

अयं कार्तयुगो धर्मो न कर्तव्यः कलौ युगे।

दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः॥

गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा।

नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः॥

तथा।

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधन्तथा।

कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥

स्मृत्यन्तरे।

देवराच्च सुतोत्पत्तिं गोवधञ्च कमण्डलुम्।

अक्षतां पौरुषं मेधं कलौ पञ्च विवर्जयेत्॥

तथा।

यथानियोगं धर्म्माणां नहि धेन्वा वधोऽपि च।

तथोद्धारविभागोऽपि नैवं सम्प्रति वर्त्तते॥

आदित्यपुराणे।

अपपाः प्रकुनाः खप्राः सामुद्रिकसुपप्रभृतिः।

उपयाचितमादेशाः सम्भवन्ति कलौ क्वचित्॥

तथा नन्याथलाभेन कार्य्यं पद्य न कारयेत्।
तथा धर्मसमावेशादन्यान्यपि कलौ युगे॥

वर्ज्यानि।

विहितान्यपि कर्म्माणि धर्म्मलोपभयाद्बुधैः[१]।
समयेन निवृत्तानि साध्वभावात् कलौ युगे॥
विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम्।
बालिकाक्षतयोन्यास्तु वरेणान्येन संस्कृतिः॥
कन्यानामसवर्णानां विवाहस्य द्विजन्मभिः।
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम्॥
द्विजस्याब्धौ तु नौयातुः शोधितस्यापि सङ्ग्रहः।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम्॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे।
सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः॥
व्रतस्वाध्यायसापेक्षमघसङ्कोचनं तथा।
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम्॥
संसर्गदोषस्तेयाद्य महापातकनिष्कृतिः।
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया॥
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः।
सवर्णान्याङ्गनादुष्टः संसर्गः शोधितैरपि।

(१) धर्मलोपभयाद्बुधैरिति ग०।

अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियः ॥
परोद्देशात्मसन्त्याग उच्छिष्टस्यापि वर्जनम् ।
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ॥
अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ।
षड्भक्तानशनेनान्नहरणं हीनकर्मणः ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः ।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥

आपस्तम्बोऽपि ।

धर्मज्ञसमयः प्रमाणं वेदाश्चेति ।

ननु कलियुगे यद्वर्ज्यं तद्वाक्याध्याहारार्थं दृष्टार्थं वा । न च तावददृष्टार्थं, अनुष्ठानानुपयोगितया तदर्थावबोधस्य प्रयोजनत्वानुपपत्तेः । नाप्यन्यथा, वैरूप्यापत्तेः । उच्यते । तद्वाक्यार्थानुष्ठानेऽपि भेदप्रकृतिज्ञानाद्युपयोगितया दृष्टार्थत्वाददोषः । अन्यथा ब्राह्मणस्य राजसूयादिवाक्याध्ययनमपि न स्यात् । यथा राजसूयादौ या गतिः सैवेहापि । किञ्चैवं वदता कलियुगवर्जनस्यत्यन्तराप्रामाण्यमुच्यते । अध्ययनविधिदृष्टार्थत्वाभावाच्च तावदप्रामाण्यं स्मृत्यन्तरवच्चापि शिष्टत्रैवर्णिकदृढपरिग्रहस्याविशेषात् । अध्ययनविधिदृष्टार्थत्वाभावश्चेत्प्रकृते किमायातमिति ।

इति कलियुगवर्ज्यानि ।

## अथ मन्वन्तरादयः ।

मत्स्यपुराणात् ।

अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकस्य तु ।
चैत्रस्य तु तृतीया या तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ।
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ॥
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा[१] ।
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणं ।
सर्व्वमेवाक्षयं विद्यात् कृतं मन्वन्तरादिषु ॥

अमामावास्याव्यतिरेकेण सर्व्वाः शुक्ला एव । पुराणान्तरे श्रावणामावास्या भाद्रपदकृष्णाष्टमी युगादिरिति प्रतिपादितं ।

तन्नापि ।

आश्विने दशमी शुक्ला श्रावणे कार्त्तिकी तथा ।
मन्वन्तरादयो ह्येता दत्तस्याक्षयकारिकाः ॥

मनुः ।

शतसहस्रगुणितं दानं भवेद्दत्तं युगादिषु ।
कर्म्म श्राद्धादिकञ्चैव तथा मन्वन्तरादिषु ॥

इति मन्वन्तरादयः ।

---

(१) तथैवेति क० ।

45-3

## अथ कल्पादयः ।

तत्र नागरखण्डे ।

अथ कल्पादयो राजन् कथ्यन्ते तिथयः शुभाः ।
यासु श्राद्धे कृते तृप्तिः पितृणामक्षया भवेत् ॥
चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराभवत् ।
तस्यां शुक्लचयोदश्यामुदानः समजायत ॥
कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत् ।
अथ कृष्णचयोदश्यां गौरीकल्पोऽप्यकल्प्यत ॥
वैशाखस्य तृतीयायां शुक्लायां नीलकोहितः ।
चतुर्दश्यां ; शुक्लायां प्रवृत्तो गारुडाभिधः ॥
समानस्तु तृतीयायां कृष्णायामुदपद्यत ।
माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत् ॥
ज्यैष्ठशुक्लतृतीयायां महादेवस्य सम्भवः ।
पौर्णमास्यान्तु तस्यैव कौर्मः प्रववृते नृप ॥
कृष्णपक्षे तृतीयायामाग्नेयः समगच्छत ।
तस्यां तस्यैव कृष्णायां सोमकल्पः समापतत् ॥
श्रावणे शुक्लपञ्चम्यां रौरवः समवर्त्तत ।
तस्यैव कृष्णपञ्चम्यां मानवः प्रत्यपद्यत ॥
षष्ठीं प्रौष्ठपदे शुक्ले प्राप्य प्राणाधिपोऽभवत् ।
सितेतरायां षष्ठ्यान्तु तस्य तत्पुरुषाभिधः(१) ॥
दृश्यत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य तु ।

---

(१) तत्पुरुषाह्वयः इति ख० ।

कृष्णायामपि वैकुण्ठः प्रविवेश विशाम्पते ॥
कार्त्तिकस्य सिते षष्ठ्यां कल्पः कन्दर्पसञ्ज्ञकः ।
असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना ॥
मार्गे शुक्लनवम्यान्तु कल्पः सद्योऽभ्यपद्यत ।
असितायाञ्च सावित्रीकल्पः प्रारम्भमभ्यगात् ॥
पौषे दशम्यां शुक्लायामीशानः प्रादुरास ह ।
असितायामघोरस्य कल्पस्योपक्रमोऽभवत् ॥
एकादश्यान्तु शुक्लायां माघे ध्यानः प्रजज्ञिवान् ।
तस्यामेव तमिस्रायां वाराहः प्राप भूतये ॥
सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य तु ।
कृष्णायामपि वैराजो विरराज महात्मनः ॥
इति त्रिंशद्दमी कल्पास्तिथयः परमेष्ठिनः ।
आरम्भे तिथयस्त्विष्टाः शुक्लाः पुण्यतमा मताः ।
तासु श्राद्धे कृते पुण्यमाकल्पस्य विकल्पने ॥

मत्स्यपुराणे ।

ब्रह्मणो यद्दिनादर्वाक् कल्पस्यादिः प्रकीर्त्तिता ।
वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च ॥
पञ्चमी चैत्रमासस्य तस्यैवान्त्या तथापरा ।
शुक्लत्रयोदशी माघे कार्त्तिकस्य तु सप्तमी ॥
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहं(१) ।
कल्पानामादयो ह्येता दत्तस्याक्षयकारिकाः ॥

---

(१) सप्त वाराः स्मराम्यहमिति ग० ।

अत्र 'कल्पा' अमावास्या, वैशाखे तृतीया, फाल्गुने तृतीया, चैत्रेपञ्चमी, चैत्रामावास्येति कल्पाः। माघत्रयोदशी, कार्त्तिके सप्तमी, मार्गशीर्षे नवमी एताः शुक्लाः।

इति कल्पादयः।

---

## अथ व्यतीपातः।

तत्र याज्ञवल्क्यः।

शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये।
विषुवे दशसाहस्रं व्यतीपाते त्वनन्तकं॥

वाराहपुराणे।

दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये।
शतघ्नं तच्च संक्रान्तौ शतघ्नं विषुवे तथा॥
युगादौ तच्छतगुणं अयने तच्छतावृतं।
सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे।
असङ्ख्येयं व्यतीपाते दानं वेदविदो विदुः॥

'शतघ्नं' शतगुणं, व्यतीपातोऽत्र विष्कुम्भादियोगेषु सप्तदशो योगः।

अस्योत्पत्तिमाह गालवः।

चन्द्रार्कयोर्नयनवीक्षणजातमूर्त्तिः
कालानलद्युतिनिभः पुरुषोऽतिरौद्रः।
अस्योद्गतो भुवि पतंश्च निरीक्ष्यमाणः
व्यापातयेऽखिलमिति च व्यतिपातयोगः॥

अस्य चोत्पत्ति-भ्रमण-पतनक्षणेषु पतनानन्तरं च क्रियमाणं स्नान-दान-श्राद्धादिकं महाफलं भवति।

तदाह याज्ञवल्क्यः।

उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायाम्।

अर्बुदगुणितं पतने अप-द्रागायवयं पतिते॥

नृसिंहपुराणे।

फलं लक्षमुत्पत्तौ भ्रमणे कोटिरुच्यते।

पतने दशकोव्यस्तु पतिते दशमबुदं॥

उत्पत्त्यादिमानञ्च ज्योतिःशास्त्रे।

विंशति द्विघुतोत्पत्तौ भ्रमणे चैकविंशति।

पतने दशनाद्यस्तु पतिते सप्तनाडिकाः॥

दृष्टमनुना प्रकारान्तरेण व्यतीपातो दर्शितः।

श्रवणाश्वि-धनिष्ठार्द्रा नागदैवतमस्तके।

यद्यमा रविवारेण व्यतीपातः स उच्यते॥

'नागदैवतं' अश्लेषा। 'मस्तकं' प्रथमचरणः। मस्तक इति श्रवणादिभिः प्रत्येकं सम्बध्यते। केचित्तु मस्तकं मृगशिर इति व्याचक्षते। 'अमा' अमावास्या, यद्येतेषु नक्षत्रेष्वादित्यवारयुक्ता भवति तदा स एव योगो व्यतीपातसंज्ञो भवति।

शास्त्रान्तरे।

पञ्चाननस्थौ गुरु-भूमिपुत्त्रौ

मेषे रविः स्याद्यदि शुक्लपक्षे।

पाशाभिधाना करभेण युक्ता

तिथिर्व्यतीपात इतीह योगः॥

अस्मिन् हि गो-भूमि-हिरण्य-वस्त्र-

दानेन सर्वं प्रविहाय पापम्।
सुरत्वमिन्द्रत्वमनामयत्वम्
मर्त्याधिपत्यं लभते मनुष्यः॥

'पञ्चाननः' सिंहः। 'गुरु-भूमिपुत्रौ' वृहस्पत्यङ्गारकौ। 'पाशाभिधाना' द्वादशी। 'करभं' हस्तनक्षत्रं।

इति व्यतीपातः।

---

## अथ वैधृति-व्यतीपातौ।

तत्र भृगुः।

क्रान्तिसाम्यसमयः समीरितः
सूर्य्यपर्वसदृशो मुनीश्वरैः।
तत्र दत्त-हुत-जप्त-पूजनम्
कोटिकोटिगुणमाह भार्गवः॥

अस्यार्थः सूर्य्याचन्द्रमसोः क्रान्तिसाम्ये कुतपकाले इयं सम्भवति। व्यतीपाते वैधृतिः वा तत्र सक्रान्तिसाम्यलक्षणव्यतीपातस्य गण्डोत्तराद्धादारभ्य क्रमात्, सार्द्धेषु भयोगेषु सम्भवोऽस्ति, वैधृतस्य तु शुक्लयोगादारभ्य क्रमात् सार्द्धेषु पञ्चयोगेषु सम्भवः।

अथ व्यतीपाते श्राद्धं कर्त्तव्यमित्याह पितामहः।

अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः इति॥

अत्र प्रायश्चित्तीयत इति वचनं श्राद्धस्यावश्यकतां गमयति। तत्पर्वकालश्चापि च द्वादशघटिकाभ्यः समारभ्य एकषष्ठ्यधिकशतपर्य्यन्तं सम्भाव्यते।

तथाच वेदाङ्गे ज्योतिषि ।

गण्डोत्तराद्धं व्यतिपातसम्भवः
शुक्लादिको वैदिकसम्भवो भवेत् ।
सार्द्धेषु पञ्चसपरेषु चेष्यते
एवं द्वयं तत्सुकृतैकसाधकम् ॥

विष्णुः ।

वैधृते च व्यतीपाते दत्तमक्षयकं भवेत् ।

भारद्वाजः ।

व्यतीपाते वैधृते च दत्तस्यान्तो न विद्यते ।
व्यतीपाते विशेषेण स हि सूक्ष्मः प्रकीर्त्तितः ॥

सूक्ष्मप्रकारेण प्रसिद्धस्तु सप्तविंशतितमो योगो वैधृत इति ।

इति वैधृति-व्यतीपातौ ।

---

## अथ प्रकीर्णपुण्यकालः ।

तत्र विष्णुः ।

अमावास्या-व्यतीपातौ ग्रहणं चन्द्र-सूर्य्ययोः ।
मन्वादयो युगादिश्च संक्रान्तिर्वैधृतिस्तथा ॥
दिनक्षयं दिनच्छिद्रमवमञ्च तथापरम् ।
द्वेऽयने विषुवद्युग्मं षडशीतिमुखं तथा ॥
चतस्रो विष्णुपद्यश्च पुत्रजन्मादि चापरम् ।
आदित्यादिग्रहाणाञ्च नक्षत्रैः सह सङ्गमः ॥
विशेषः पुण्यकालोऽयं ज्योतिर्विद्भिर्विचारिभिः ।

तत्र दानादिकं कुर्यादात्मनः पुण्यहृद्धये ॥

दिनक्षयलक्षणमुक्तं पद्मपुराणे ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।

वशिष्ठः ।

एकस्मिन् सावने त्वह्नि तिथीनां चितयं यदा ।

तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥

दिनच्छिद्रलक्षणमाह भृगुः ।

तिथ्यर्द्ध-तिथि-योगर्क्षवेदादौ शशिपर्व्वणः ।

सदृशौ दिवसच्छिद्रसमाख्यौ प्राह भार्गवः ॥

अस्यार्थः, 'तिथ्यर्द्धं' करणं, करण-तिथि-योग-नक्षत्राणामन्ते आदौ पर्व्वकाल-सोमग्रहणतुल्ये, स च दिनच्छिद्रसंज्ञ इति ।

कालमानमपि स एवाह ।

छेदादिकालः कथितस्तिथि-क्षत्योर्घटौद्वयम् ।

नाग-वह्निपलोपेतं तद्भे-तत्त्वपलैर्युतं ॥

पलैः षोड़शभिर्युक्तं नाड़िकाद्वितयं युतौ ।

छेदादिसमयः प्रोक्तो दानेऽनन्तफलप्रदः ॥

'क्षतिः' करणं। 'नागाः' अष्टौ। 'वह्नयः' त्रयः। 'भं' नक्षत्रं। 'तत्त्वानि' पञ्चविंशतिः। 'युतिः' योगः। तेनायमर्थः तिथि-करणयोराद्यन्ते घटिकाद्वयं अष्टत्रिंशत्पलानि पुण्यकालः। नक्षत्रस्य तु पञ्चविंशतिपलैर्युक्तं घटिकाद्वयं। योगस्यापि षोड़शभिः पलैर्युक्तं घटिकाद्वयमिति ।

अवमलक्षणमुक्तं विष्णुना ।

तिथित्रयं स्पृशत्येको वारः स्यादवमं हि तत् ।
त्रिवारस्पृक्तिथिर्यच त्रिदिनस्पृक्तदुच्यते ॥

अथ दिनक्षयावमयोरियान् भेदः । यत्र तिथिद्वयावसाने वारावसानं स दिनक्षयः । यत्र तिथिद्वयेऽपि वारानुवृत्तिः सोऽवम-इति । विषुवादीनि संक्रान्तिनिर्णयेऽपि दर्शितानि ।

पद्मपुराणे ।

मन्दे वार्के गुरौ वापि वारेष्वेतेषु च त्रिषु ।
त्रीण्येतानि च ऋक्षाणि ऋक्षं प्रोक्तानि ब्रह्मणा ॥
अश्वमेधाधिकं पुण्यं स्नानस्य तु भवेन्नृप ।
दानमक्षयतां याति पितृणां तर्पणं तथा ॥

'त्रीणि ऋक्षाणि' आग्नेय-याम्य-प्राजापत्यानि ।

मात्स्ये ।

यदा मृगशिरे ऋक्षे शशी सूर्यो बृहस्पतिः ।
तिष्ठन्ति सा तिथिः पुण्या अक्षया परिगीयते ॥

ब्रह्मप्रोक्ते ।

एकादश्यमावास्या पूर्णिमा पुत्रजन्म च ।
वैधृतिश्च व्यतीपातो भद्रा चावमवासरः ॥
युग-मन्वादयस्ते सुरिन्दुपर्वसमानकाः ।
क्रान्तिसाम्यं दिनच्छिद्रं यहस्यागमस्तथा ॥

'भगमः' राशिमचत्रगमनम् ।

देवीपुराणे ।

व्यतीपातो विष्णुदिनं षडशीतिमुखं तथा ।

क्रान्तिसाम्यममावास्या ग्रहणं वैधृतिस्तथा ॥
संक्रान्तिश्च दिनच्छिद्रं तिथिवृद्धिर्दिनक्षयः ।
इत्यादिपुण्यकालस्तु होम-दानादिकर्मणः ॥

स्कन्दपुराणे ।

ग्रहणं चन्द्र-सूर्याभ्यां उत्तरायणमुत्तमम् ।
विषुवञ्च व्यतीपातः षड़शीतिमुखं तथा ॥
दिनच्छिद्राणि संक्रान्तिर्भीष्मं विष्णुपदं पुनः ।
इति कालः समाख्यातः पुंसां पुण्यविवर्द्धनः ॥
अस्मिन्दानानि दत्तानि स्नान-होम-तपांसि च ।
अनन्तफलदानि स्युः स्वर्ग-मोक्षप्रदान्यपि ॥

च्यवनः ।

अमावास्या-संक्रान्ति-व्यतीपात-विषुवायन-षड़शीतिमुख-विषुवादि वैधृतिग्रहणान्तं स एव पुण्यकालः ।

आदित्यपुराणे[१] ।

ग्रहणे षड़शीतौ च चन्द्र-सूर्यग्रहे तथा ।
युगादौ वैधृते चैव दत्तं भवति चाक्षयम् ॥

तथा ।

तिथयश्च प्रवक्ष्यामि[२] यासु दत्तं महाफलम् ।
ग्रहोपरागे संक्रान्तौ गमने चैव राशिषु ॥
शिशिरे वै चतुर्दश्यां द्वादश्यां सप्तमीषु च ।

(१) आदिपुराण इति ग० ।
(२) प्रवक्ष्यन्त इत्ययं पाठः समीचीनो भवितुमर्हति ।

षडशीतिमुखे पर्वण्ययने दक्षिणोत्तरे ।
दशामि नित्यं भक्तानां विशेषात्तु प्रकीर्त्तिताः ॥
तिथिषु दशगुणं वदन्ति दानम्
शतगुणितं त्वयनावसाने ।
दशगुणितं ग्रहोपरागे
विषुवति चाक्षयं युगान्ते ॥

शातातपः ।

अयनेषु तु यद्दत्तं षडशीतिमुखेषु च ।
चन्द्र-सूर्योपरागे च दत्तं भवति चाक्षयम् ॥

शिवरहस्ये ।

मन्वन्तरप्रमुख्या या या च सोपपदा तिथिः ।
अमावास्यासमा ज्ञेया दानाध्ययनकर्मसु ॥

शङ्खः ।

यदा विष्टिर्व्यतीपातो भानुवारेण संयुतः ।
पद्मकं नाम तत्प्रोक्तं अयनाच्च चतुर्गुणम् ॥
यदा षष्ठ्यां व्यतीपातो भानुवारस्तथैव च ।
पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणं ॥
विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वपि दुर्लभः ॥

इति प्रकीर्णपुण्यकालः ।

---

## अथ निमित्तानुरोधेन सदा पुण्यकालः।

विष्णुधर्मोत्तरे।

कालः सर्वोऽपि निर्दिष्टः पात्रं सर्वमुदाहृतम्।
अन्नाद्यस्य प्रदाने तु नात्र कार्य्या विचारणा।
तदैव दानकालस्तु यदोभयमुपस्थितम्॥

तथा।

न कालनियमो दिष्टो दीयमाने प्रतिश्रये।
तदैव दानमस्योक्तं यदा पात्रसमागमः॥
न हि कालं प्रतीक्षेत जलन्दातुं तृषान्विते।
अन्नोदकं सदा देयमित्याह भगवान् मनुः॥

स्कान्दे।

अर्द्धप्रसूतां गां दद्यात् कालादि न विचारयेत्।
कालः स एव ग्रहणे यदा वै विमुखी तु गौः॥

व्यासः।

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्।
तदभावे च गौरेव नरकोद्धारणाय वै॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गां।
शक्तोऽन्योऽपि तदा दत्त्वा श्रेयो दद्यात् मृतस्य च॥

वाराहपुराणे।

व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः।
पुण्यकालास्तथा सर्वे यदा मृत्युरुपस्थितः।
तदा गो-भू-हिरण्यादि दत्तमक्षयतामियात्॥

अदृष्टमनृतं दानं भुक्त्वा चैव न दूष्यते ।

इति व्यासस्मृतिवचनविशेषः(१) शास्त्रावरुद्धे विषये प्रवर्त्तते, सूर्योपरागेण तमाङ्गः समयं समं ।

विष्णुधर्मोत्तरे ।

अच्छिन्ननाड्यां यद्दत्तं पुत्त्रे जाते द्विजोत्तमाः ।
संस्कारेषु च पुत्त्रस्य तदक्षय्यं प्रकीर्त्तितम् ॥

विष्णुपुराणे ।

यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितं ।
तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितं ॥

इति निमित्तानुरोधेन सदा पुण्यकालः ।

---

## अथ तिथिविशेषेण वर्ज्यानि ।

अथ चतुर्थीवर्ज्यं ।

तत्र मार्कण्डेयः ।

सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याभिदूषणं कुर्यात् तस्मात्पश्येन्न तं तदा ॥

इति चतुर्थीवर्ज्यं ।

---

## अथ सप्तमीवर्ज्यानि ।

भविष्यत्पुराणे ।

(१) इति व्यासस्मृतिवचनादिशेष इति ग० ।

सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत्।
न चाप्यामलकैः स्नानं न कुर्यात् कलहं नरः।
सप्तम्यां नैव कुर्वीत ताम्रपात्रे च भोजनम्॥

बुधः।

निम्बस्य भक्षणं तैलं तिलैस्सर्षपमज्जनम्।
सप्तम्यां नैव कुर्व्वीत ताम्रपात्रे च भोजनम्॥

इति सप्तमीवर्ज्यानि।

---

## अथ पर्व्वानुष्ठेयम्।

तत्र मनुः।

सावित्रान् शान्तिहोमांश्च कुर्य्यात्पर्व्वसु नित्यशः।

'सावित्राः' सवितृदेवताकाः।

अस्मिंश्च होमे गायत्री मन्त्रः, अक्षतश्च द्रव्यं।

यदाह शङ्खः।

शान्तिकामस्तु जुहुयाद्गायत्र्या चाक्षतैः शुचिः।

'शान्तिश्च धर्म्मैर्नैहिकानिष्टनिवृत्तिः।

वर्ज्ज्यानि तु विष्णुपुराणे दर्शितानि।

चतुर्द्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च।
तैल-स्त्री-मांससम्भोगी पर्व्वस्वेतेषु वै पुमान्॥ इति।

'नित्यशः इति वचनात् पर्व्वस्ववश्यं कर्त्तव्योऽयं होमः, अस्य च सावित्रहोमस्य शान्तिः फलं।

विष्णुः ।

पर्वसवणं तिलहोमान् कुर्यादनकृतशिष्टदेवमाचारसेवी स्यात् ।

कात्यायनः ।

पौर्णमासीममावास्यां अधः स्नापो विधीयते ।

अनाहिताग्नेरप्येव पश्चादग्नेर्विधीयते ॥

'अनाहिताग्निः' स्मार्ताग्निमान् ।

आपस्तम्बः ।

दिवादित्यस्य सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्या-निशायां स्वाधीयसीमात्मनोगुप्तिमिच्छेत् । प्रायत्यब्रह्मचर्य्यकालेन च जायया सहैतां रात्रिं सूर्य्याचन्द्रमसौ वसतः ।

'स्वाधीयसी' श्रेष्ठं । 'गुप्तिः' रक्षा ।

षट्त्रिंशन्मते कात्यायनस्मृतौ च ।

मासे नभस्यमावास्या दर्भाग्राह्यो नवः स्मृतः ।

अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः इति ॥

तथाच कात्यायनेनामावास्यायां दर्भच्छेदं विधायोक्तम् ।

पितृ-देवजपार्थं च वाचमादद्यादिति ।

तथा ।

ते द्विजेन नियोक्तव्या दैवे पित्र्ये च कर्मणि । इति ।

तस्मात्पित्रादिकार्य्यार्थं कुशा ग्राह्या एव ।

मरीचिना तु श्रावणामावास्यायां दर्भोपादानमुक्तम् ।

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।

अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥

यत्त्वमावास्यायां क्षुरच्छेदनिषेधः स तूक्तव्यतिरिक्तविषयः।

इति पर्व्वानुष्ठेयम्।

---

## अथ पर्व्ववर्ज्यानि।

तत्र बौधायनः।

पर्व्वसु च नाधीयीत, न मांसमश्नीयात्, न च स्त्रियमुपेयात्, पर्व्वसु हि रक्षः-पिशाचव्यभिचारिविहितमिनीति।

विष्णुः।

पर्व्वसु न तृणमपि छिन्द्यात्।

पैठीनसिः।

न पर्व्वसु तैलं क्षुरं मैथुनं मांसमित्युपेयात्।

'उपेयात्' उपयुञ्जीत।

विष्णुपुराणे चतुर्दश्यादिपञ्चपर्व्वाण्यभिधायोक्तम्।

तैलस्त्रीमांसभोगी यः पर्व्वस्वेतेषु वै पुमान्।

विण्मूत्रभोजनं नाम प्रयाति नरकं नृप॥

मनुः।

चतुर्दश्यष्टमी दर्शः पौर्णमास्यर्कसंक्रमः।

एषु स्त्री-तैल-मांसानि दन्तकाष्ठानि वर्जयेत्॥

पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारदः।

तैलं मांसं व्यवायञ्च(१) क्षुरञ्चैव विवर्जयेत्॥

हारीतः।

---

(१) 'व्यवायं' स्त्रीसंसर्गमित्यर्थः।

तैलं मांसं भगं क्षौरं पर्वकालेषु वर्जयेत्।
एतेष्वसक्षौर्वर्षति पुण्यकालेषु नित्यशः॥
क्षेमातवे तथाक्षौर्नित्यमेव कलालया।
भगे मांसे क्षुरे तैले नित्यं पर्वसु तिष्ठति॥

वृद्धशातातपः।

दन्तकाष्ठममावास्यां मैथुनं च चतुर्दशीम्।
हन्ति सप्तकुलं तस्य तैलपथमष्टमीं॥

यमः।

आसप्तमं कुलं हन्ति शिरोऽभ्यङ्गाच्चतुर्दशी।
मांसाशने पञ्चदशी कामधर्मे तथाष्टमी॥

मत्स्यपुराणे।

छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे।
पत्रं वा पातयत्येषां ब्रह्महत्यां स विन्दति॥

'वीरुत्संस्थे' वनस्पतिगते।

पैठीनसिः।

अमावस्यायां न छिन्द्यात्(1) कुशांश्च समिधस्तथा।
सर्वेषावस्थिते सोमे हिंसायां ब्रह्महा भवेत्॥

क्वचिदमावास्यायां न छिंद्यादिति पाठः। पित्रादिकार्य्यार्थं कुशा ग्राह्या एवेति पर्वानुष्ठेयप्रकरणे दर्शितम्।

तथा।

---

(1) नामावास्यायां हरितानि छिन्द्यादिति ख॰-ग॰-चिह्नितपुस्तक-पाठः, परमयं न समीचीनः।

षष्ठ्यं सन्ध्यां पराह्नञ्च तिलपिष्टं तथैव च।
अमावास्यां न सेवेत रात्रौ मैथुन-भोजने॥

स्मृतिसमुच्चयात्।

षष्ठं सन्ध्यां पराह्नञ्च परभोजन-मैथुने।
तैलं मांसं शिलापिष्टममावास्यां विवर्जयेत्॥
सूर्य्यचन्द्रगते योगे परान्नं यो हि भक्षयेत्।
तस्य मासगतं पुण्यं यस्यान्नं तस्य तद्भवेत्।
अमावास्यासु सर्व्वासु नववस्त्रं न धारयेत्॥

इति पर्ववर्ज्यानि।

---

## अथ कालविशेषेण नानावर्ज्यानि।

स्कन्दपुराणे।

शिरः-कपालमान्त्राणि नख-चर्म-तिलांस्तथा।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत्॥

'शिरः' नारिकेलं। 'कपालम्' अलाबु। 'आन्त्रं' पटोलीफलं। 'नखं' निष्पावाः। 'चर्म' मसूर्य्यः। 'तिलाः' वार्त्ताकं, इति वृद्धा-व्याकुर्वते।

चतुर्विंशतिमते तूत्तरार्द्धमेवं पठ्यते।
षष्ठ्यादिकूष्माण्डगमनमष्टम्यादिषु वर्जयेत्।

व्यासः।

अष्टमी त्वमावास्या पञ्चदशचतुर्दशी।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे॥

अथ तैलविचारः। षष्ठ्यादिषु अमावास्यादीनां निषेधः।

षष्ठ्यां तैलमथाष्टम्यां पिशितं तथा।
क्षौमभोगश्चतुर्दश्याममावास्यां क्षुरक्रिया ॥

इति स्मरणात्। ततश्चान्यत्र तैलादौ दोषाभाव इति।
तदयुक्तं। अन्यत्रापि तैलादिनिषेधात्।

तत्र मनुः।

मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्दशी।
अष्टमी ग्राम्यधर्मेषु अशक्तमपि पातयेत् ॥

'ग्राम्यधर्मः' मैथुनम्।

क्षुरकर्म चतुर्दश्यां अमावास्यां च मैथुनम्। इति।
स्मर्य्यते।

अष्टम्यां पञ्चदश्यां च द्वादश्यां भानुवासरे।
वस्त्रं संपीड्यचैव न क्षुरेणापि छिंद्यते ॥

तिलतैलनिषेधश्च तिथ्यन्तरप्रस्तावे दर्शितः।
व्यासोऽपि।

तैलञ्च न स्पृशेद्धाम-कुशादीन् छेदयेन्न च।
षष्ठ्यादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ ॥
चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।
वर्ज्यान्येतानि पर्वाणि रविसंक्रान्तिरेव च ॥
तैल-स्त्री-मांससम्भोगी पर्वस्वेतेषु यो भवेत्।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप ॥

बृहस्पतिः।

अमावास्येन्दुसङ्क्रान्ति-चतुर्दश्यष्टमीषु च।

नरश्चण्डालयोनौ स्यात्तैल-स्त्री-मांससेवनात्॥

पुराणात्।

कुहू-पूर्णेन्दु-सङ्क्रान्ति-चतुर्दश्यष्टमीषु च।

अत्रोत्तरार्द्धं पूर्वश्लोकस्य तस्मादत्रापि तैलादिनिषेधे सिद्धे तिथि-विशेषसम्बन्धेन तैलादिविशेषनिषेधो दोषविशेषार्थः। अत्र च याव-च्छ्राद्धादितिथिकालं तैलादिनिषेधः, न तु षष्ठ्यादिसम्बन्धादहो-रात्रादिलक्षणं प्रमाणाभावात्।

वामनपुराणे।

नन्दासु नाभ्यङ्गमुपाचरेत

क्षौरञ्च रिक्तासु जयासु मांसम्।

पूर्णासु योषित्परिवर्जनीया

भद्रासु सर्वाणि समारभेत॥

नाभ्यङ्गमर्के न च भूमिपुत्रे

क्षौरञ्च शुक्रे च कुजे च मांसं।

बुधेषु योषां न समाचरेत

शेषेषु सर्वाणि सदैव कुर्यात्॥

चित्रासु हस्ते श्रवणे च तैलम्

क्षौरं विशाखा-प्रतिपत्सु वर्ज्यं।

मूले मघे भाद्रपदासु मांसम्

योषिन्मघा-कृत्तिकयोत्तरासु॥

चतुर्दश्यष्टमी-दर्श-पौर्णमास्यर्कसङ्क्रमाः।

एषु स्त्री-तैल-मांसानि दन्तकाष्ठं विवर्जयेत् ॥

देवलः ।

पञ्चदश्यां चतुर्दश्यां अष्टम्याञ्च विशारद ।

तैलं मांसं व्यवायञ्च क्षुरञ्च परिवर्जयेत् ॥

यमः ।

यथा सिताखष्टमीषु भूताहेन्दुक्षये तथा ।

तैलाभ्यङ्गं चौरकर्म स्त्रीसङ्गञ्च विवर्जयेत् ॥

वाराहपुराणे ।

चतुर्दश्यां तथाष्टम्यां पञ्चदश्यां च पर्वसु ।

तैलाभ्यङ्गस्तथा भोगं योषितश्च विवर्जयेत् ॥

न मृच्च नोदकञ्चापि न निशायां तु गोमयम् ।

गोमूत्रञ्च प्रदोषे च गृह्णीयाद् बुद्धिमान्नरः ॥

निशायामपि मृदुदकाभ्यामिति सम्बध्यते । अयं चादृष्टकर्मार्थत्वेन निशायां ग्रहणनिषेधः ।

स्कान्दे ।

स्नानञ्चैव महादानं स्वाध्यायं पितृतर्पणम् ।

प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥

माण्डव्यः ।

श्रुतिवेध-जातकाशप्राशन-यात्रा-प्रतिमार्चाः ।

रविभवनस्थे कार्य्या जीवे न कार्यो विवाहस्तु ॥

भविष्यत्पुराणे ।

सुप्ते विष्णौ निवर्त्तन्ते क्रियाः सर्वाः शुभादिकाः ।

विवाह-व्रतबन्धादि-चूड़ा-संस्कारदीक्षणम् ॥
यज्ञो गृहप्रवेशश्च प्रतिष्ठा देव-भूभृताम्।
पुण्यानि यानि कर्म्माणि न स्युः सुप्ते जगत्पतौ ॥
इति कालविशेषेण नानावर्ज्ज्यानि।

## अथ क्षौरकर्म्मनिषिद्धकालः।

तत्र व्यासः।

क्षौरे शनैश्चरादित्य-भौमाद्धोरात्रमेव च।
तथा प्रतिपदं रिक्तां तिथिञ्च परिवर्ज्जयेत् ॥

ज्योतिःशास्त्रे।

नाभ्यक्तभुक्तरणकालनिशाशनानाम्
न स्नातसुप्तगमनांशुकभूषितानाम्।
सन्ध्या-निशार्क-कुज-शौरदिनेश्वराणाम्
क्षौरं हितं भवति चाह्नि न चापि विष्ट्यां ॥ इति ॥

मार्कण्डेयः।

अष्टमी च तथा षष्ठी नवमी च चतुर्द्दशी।
क्षुरकर्म्मणि वर्ज्ज्याः च पर्वसन्धिस्तथैव च ॥
इति क्षौरकर्म्मणि निषिद्धकालः।

## अथ श्मश्रुकर्म्मणि निषिद्धकालः।

मरीचिः।

निशाशनस्य सुप्तस्य तिष्ठतश्च तथैव च।
चार्थं भुक्तवतश्चैव स्नातस्य रुचितस्य च।

याचायुह्रीयतश्चापि मम्बुकर्माणि वर्जयेत्॥

इति मम्बुकर्मनिषिद्धकालः।

---

अथ मांसवर्जनकालः।

नन्दिपुराणे ईश्वरवचनं।

यदि नाम चतुर्दश्यां सदा मांसं विवर्जयेत्।
वर्जयेदयने सुख्ये क्रतुवर्गमतिर्नरः॥
चतुर्थीं चाष्टमी चैव द्वादशी च चतुर्दशी।
तथा पञ्चदशी चार्थाः यज्ञषीतिमुखानि च॥
संक्रमं चापि सूर्य्यस्य विषुवे चापि वार्षिके।
मांसान्तु विरतो मर्त्यो याति स्वर्गं दिनचयं॥
अथवाश्वयुजं मासं वर्जयेन्मांसभक्षणं।
बहुमासकृतं पुण्यं लभेताश्वयुजाकरः॥
मांसभोजनसन्त्यागात् पुरुषः शुद्धमानसः।
यो नरः कार्त्तिके मासे मांसन्तु परिवर्जयेत्।
संवत्सरस्य लभते पुण्यं मांसविवर्जनात्॥

इति मांसविवर्जनकालः।

---

अथ शयने विहित-निषिद्धकालः।

तत्र दक्षः।

प्रदोषपश्चिमौ यामौ वेदाभ्यासरतो नयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते॥

शंख-लिखितौ।

चयाणां वर्णानां पूर्वरात्रे जागरणम्।

प्रचेताः।

न सन्ध्यायां न शयने।

अङ्गिराः।

नोच्छिष्टो न दिवा सुप्यात् सन्ध्ययोर्न च भस्मनि।

व्यासः।

न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः।

मनुः।

न निशान्ते परिश्रान्तो ब्रह्माधीत्य॰पुनः स्वपे[त्]।

परिश्रान्तः पुनर्न स्वपेदित्यर्थः।

गौतमः।

अपररात्रमधीत्य पुनर्न संविशेत्।

हारीतः।

ब्राह्मे मुहूर्त्ते प्रतिबुध्य स्वाध्यायमावर्त्त्य न प्रतिसंविशेदिति।

आपस्तम्बः।

मिथुनीभूय न च तया सह सर्व्वां रात्रिं शयीत।

इति शयने निषिद्धकालः।

---

## अथ दन्तधावनकालनिर्णयः।

तत्र कात्यायनः।

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।

परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्॥

आयुर्बलं यशो वर्चः प्रजाः पशु-वसूनि च ।
ब्रह्म प्रज्ञां च मेधाञ्च त्वन्नो धेहि वनस्पते ॥

इति मन्त्रः ।

व्यासः ।

शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् ।
श्राद्धे यज्ञे च नियमात्त्याज्यात् प्रोषितभर्तृका ॥

व्यासः ।

श्राद्धे जन्मदिने चैव विवाहे मुखदूषिते ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनं ॥

संवर्त्तः ।

आद्यतिथौ नवम्याञ्च क्षये चन्द्रमसस्तथा ।
आदित्यवार-आशौचे वर्जयेद्दन्तधावनम् ॥

कात्यायनः ।

प्रतिपद्दर्श षष्ठीषु नवम्याञ्च विशेषतः ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

व्यासः ।

प्रतिपद्दर्श-षष्ठीषु नवम्यां दन्तधावनम् ।
पर्णैश्च पत्रकाष्ठैस्तु जिह्वोल्लेखं सदैव तु ॥

व्यतीपात-संक्रान्ति-नन्दा-पर्वसु दन्तकाष्ठनिषेधः कालविशेषेण नानावर्ज्यप्रस्तावे दर्शितः ।

अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥

कश्चिदुत्तरार्द्धमेवं पठन्ति ।

अपां द्वादशगण्डूषैः पर्णैर्वा शोधयेन्मुखं ।

तथा ।

यो मोहात् स्नानवेलायां भक्षयेद्दन्तधावनं ।

निराशास्तस्य गच्छन्ति देवताः पितरस्तथा ॥

पालाशमासनं स्नानं दन्तकाष्ठञ्च पादुके ।

वर्जयेत्तु प्रयत्नेन सर्वमाश्वत्थमेव च ॥

मध्याह्नस्नानविषयमेतत् प्रातःस्नाने विधानात् ।

यदाह पराशरः ।

दन्तान् पूर्वमधो घर्षेत् प्रातः शिवेन लोचनं ।

तोयपूर्णमुखो ग्रीष्मे शीते न शरदि स्मृतः ।

प्रक्षाल्य भक्षयेत् पूर्वं प्रक्षाल्यैव तु तत्त्यजेत् ।

इति दन्तधावनकालनिर्णयः ।

---

## अथ सन्ध्याकालनिर्णयः ।

तत्र गौतमः ।

तिष्ठेत्पूर्वमासीतोत्तरां सज्ज्योतिषो दर्शनाद्वाग्यतः ।

सज्ज्योतिषः काले प्रारम्भः ज्योतिरन्तरदर्शनान्निवृत्तिरित्यर्थः ।

संवर्तः ।

प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि ।

अथ ब्राह्मणपरस्य कर्माभिधायोक्तं ।

शातातपः ।

अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमां ।

नोपासीत द्विजः सन्ध्यां स भ्रष्टो ब्राह्मणः स्मृतः ॥

योगियाज्ञवल्क्यः ।

सायं सन्ध्यामुपासीत नाक्षत्रे नोद्गते रवौ ।

व्यासः ।

सूर्य्ये तमपि संप्राप्ते पादशौचक्रियान्वितः ।

बहिः सन्ध्यामुपासीत कुशपाणिः समाहितः ॥

क्वचित्तु सूर्य्येऽस्ताचलसंप्राप्ते इति पाठः ।

मनुः ।

पूर्वसन्ध्यां जपन् तिष्ठेत्सावित्रीमार्कदर्शनात् ।

पश्चिमां तु समासीनः सम्यगर्क्षविभावनात् ॥

याज्ञवल्क्यः ।

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।

सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥

अहोरात्रस्य यः सन्धिः सूर्य-नक्षत्रवर्जितः ।

सा तु सन्ध्या समाख्याता ऋषिभिस्तत्त्वदर्शिभिः ॥

इति उक्त्वा "तत्र सन्ध्यामुपासीतेत्युक्तं, तत्पूर्वदर्शितवचननिचय-पर्य्यालोचनयैवं व्याख्येयं, पूर्वसन्ध्योपास्तिः सूर्यदर्शनावधिका पश्चिम-सन्ध्योपास्तिर्नक्षत्रदर्शनावधिकेति ।

श्रुतिः :

एवं विद्वान् सायं प्रातश्च सन्ध्यामुपास्त इति ।

अत्र सायंशब्देन पूर्वोक्त एव सन्ध्याकालो गृह्यते ।

यदा तु ।

नक्षत्रदर्शनात् सन्ध्या सायं तत्परतः स्थितः।
तत्परा रजनी ज्ञेया तत्र धर्मान्विवर्जयेत्॥

इति वचनात् नक्षत्रदर्शनोर्ध्वकालस्य सायंशब्देनोपादानं तदा पूर्व-वचनपर्यालोचनया कथञ्चित्पूर्वकालातिक्रम एव वेदितव्यः।

योगियाज्ञवल्क्यः।

ह्रास-वृद्धी तु सततं दिवसानां यथाक्रमं।
सन्ध्या मुहूर्त्तमात्रन्तु ह्रासे वृद्धौ समा स्मृता॥

विष्णुपुराणात्।

सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः॥

पुलस्त्यः।

सन्ध्यामिष्टिं चरु होमं यावज्जीवं समाचरेत्।
न त्यजेत्सूतके वापि त्यजन् गच्छेदधोगतिं॥

एवंविधे सति व्यवस्थामाह।

सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत्।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः॥

एवञ्च यानि सूतकादौ सन्ध्यानिषेधपराणि वचनानि तानि मन्त्रप्रयोगनिवृत्तिपराणीति मन्तव्यं, अञ्जलिप्रक्षेपस्तु उच्चार्यमाणयैव सावित्र्या कार्यः।

तथाच पैठीनसिः।

सूतके तु सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्वीत।

इति सन्ध्याकालनिर्णयः।

## अथ सन्ध्याकालवर्ज्यानि ।

तथाह मनुः ।

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।
आहाराज्जायते व्याधिः गर्भो रौद्रश्च मैथुनात् ।
निद्रातो जायतेऽलक्ष्मीः स्वाध्यायादायुषः क्षयः ॥

वृद्धमनुः ।

आहारं मैथुनं निद्रां सन्ध्याकाले विवर्जयेत् ।
वर्ज्यं चाध्ययनं वापि तथा दान-प्रतिग्रहौ ॥
आहाराज्जायते व्याधिः गर्भो रौद्रश्च मैथुनात् ।
स्वपनात्स्यादलक्ष्मीकः कर्म चैवाच निष्फलं ॥
अध्येता नरकं याति दाता नाप्नोति तत्फलं ।
प्रतिग्राही भवेत्पापी तस्मात् सन्ध्यां विवर्जयेत् ।
दाता वै नरकं याति ग्रहीताधो निमज्जति ॥

इति सन्ध्याकालवर्ज्यानि ।

---

## अथ रात्रिकरणीयवर्ज्यानि ।

रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ॥
हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम् ॥
विशेषतो निशीथे तु न शुभं कर्म शर्मदं ।
अतोऽपि वर्जयेत्प्राज्ञो दानादिषु महानिशाम् ॥

देवलः ।

राहुदर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु ।

अन्नदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥

वसिष्ठः।

ग्रहणोद्वाह-संक्रान्ति-प्राणार्त्ति-प्रसवेषु च।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

यात्रादाविति पाठः।

यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने।
दानान्येतानि शस्तानि रात्रौ देवालये तथा ॥

महाभारते।

रात्रौ दानं न शंसन्ति विना त्वभयदक्षिणां।
विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥

विष्णुधर्मोत्तरे।

पूजनञ्चातिथीनाञ्च पान्थानामपि पूजनं।
तच्च रात्रौ तथा ज्ञेयं नवान्नस्य च पूजनं ॥

मार्कण्डेयपुराणे।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयं।
स्नानं तत्र न कुर्वीत काम्य-नैमित्तिकादृते ॥

विश्वामित्रः।

महानिशात्वं विज्ञेयं रात्रौ मध्यमयामयोः।
नैमित्तिकं तदा कुर्यान्नित्यन्तु न मनागपि ॥

क्वचित् ‘न तु काम्यं मनागपीति पाठः।

भविष्यत्पुराणे।

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।

नैमित्तिकं तु कुर्व्वीत स्नानं दानञ्च रात्रिषु ॥
ग्रहणोद्वाह-संक्रान्ति-यात्रार्त्ति-प्रसवेषु च ।
श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥ इति ।
विवाह-व्रत-संक्रान्ति-प्रतिष्ठा-ऋतु-जन्मसु ।
तथोपराग-पातादौ स्नाने दाने निशा शुभा ॥
'ऋतुः' गर्भाधानं, 'पातः' व्यतीपातः ।
पुत्त्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥
तथा ।
पुत्त्रजन्मनि यात्रायां शर्व्वर्य्यां दत्तमक्षयम् ।
इति रात्रिकर्त्तव्यवर्ज्यानि ।

---

## अथ चतुष्पथासेवनकालः ।

तत्र व्यासः ।
मध्यन्दिने उषःकाले अर्द्धरात्रे च सर्व्वदा ।
चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च ॥
मनुः ।
मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा तु सामिषं ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथं ॥
अथ कालविशेषावलोकनीयानवलोकनीयानि ।
कात्यायनः ।
श्रोत्रियं सुभगं गाञ्च अग्निमग्निचितं तथा ।

प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥

वैयाघ्रपादः।

गोविषं सुभगं गावः अग्निमग्निचितं तथा।

यः पश्येदायतप्राज्ञ आपद्भ्यः स प्रमुच्यते ॥

कात्यायनः।

रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिं।

गुरुमग्निं तथा सूर्यं प्रातः पश्येत्समाहितः ॥

लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।

हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः।

एतानि सततं पश्येन्नमस्येच्च समाहितः ॥

यज्ञमिष्टापवं च प्रतापुर्धार्मिकान् शुचिः।

ज्ञानसिद्धांस्तपःसिद्धान् दृष्ट्वा पापात् प्रमुच्यते ॥

अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः।

दृष्टमात्राः पुनन्त्येव तस्मात् पश्येत नित्यशः॥

पापिष्ठं दुर्भगं मत्तं नग्नमुत्कृत्तनासिकं।

प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणं ॥

इति कालविशेषेणावलोकनीयानवलोकनीयानि।

---

## अथ नदीनां रजःकालनिर्णयः।

तत्र मार्कण्डेयः।

द्विमासं सरितः सर्वा भवन्ति हि रजस्वलाः।

अप्रशस्तं ततः स्नानं वर्षादौ प्रववारिषा ॥

कात्यायनः।

श्रावणे भाद्रयोर्मध्ये सर्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः॥

तथा।

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्वीत देवर्षि-पितृतर्पणं॥
धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः॥
सिंह-कर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः।
न स्नानादीनि कर्माणि तासु कुर्वीत मानवः॥

योगियाज्ञवल्क्यः।

अयाचितास्वागता ह्यापो नद्यः प्रथमवेगिकाः।
अर्थोभिताश्च केनापि याश्च तीर्थादिभिःस्रुताः॥

क्वचित्त्वयिमा इति पाठः। 'तीर्थः' जलावतारणमार्गः।

तथाच स्मृत्यन्तरे।

अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः।
दशरात्रेण शुध्यन्ति भूमिष्ठञ्च नवोदकम्॥

याज्ञवल्क्यः।

यावन्नोदेति भगवान् दक्षिणाशाविभूषणः।
तावद्रजोवहा नद्यो वर्जयित्वा तु जाह्नवीम्॥
प्रथमे कर्कटे देवि त्र्यहं गङ्गा रजस्वला।
सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनीः[१]॥

---

(१) करतोयाम्बुवाहिनीति ख०।

कात्यायनः।

प्रावृट्काले महानद्यः सन्ति नित्यं रजस्वलाः।
चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी॥
आदित्यदुहिता गङ्गा प्लक्षजा च सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः॥
आदित्यदुहिता गङ्गा प्लक्षजा च सरस्वती।
अपर्युषितपापास्ते नदीस्त्रियः पिबन्ति ये॥
गङ्गा च यमुनाचैव प्लक्षजा च सरस्वती।
रजसा नाभिभूयन्ते शोणश्चापि महाह्रदः॥
कालिन्दी गोमती गङ्गा पविचा देवनिर्मिता।
सामान्याद्गुणयोगाच्च रजो नाभिभवत्यतः॥
गङ्गा धर्मद्रवी पुण्या यमुना च सरस्वती।
अन्तर्गतरजोयोगाः सर्वास्वप्यपि चामलाः॥

निगमः।

प्रतिस्रोतोरजोयोगो रथ्याजलनिवेशनं।
गङ्गायां नैव दुष्यन्ति यदि धर्मद्रवः स्वयं॥
याः स्रोतस्युपगच्छन्ति पौषे कुसरितो भुवि।
तासु स्नानं न कुर्वीत प्राक्ववेशान्नदर्शनात्॥

कात्यायनः।

याः स्रोतस्युपगच्छन्ति पौषे कुसरितो भुवि।
तासु मासेऽपि न स्नायादपूर्वे दशवासरे॥
कर्कटादौ रजोदुष्टा गौतमी वासरत्रयं।

चन्द्रभागा सती सिन्धुः शरयूर्नर्मदा तथा ॥
उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः ।
पिपासवस्तु गच्छन्ति संहृष्टाश्च शरीरिणः ॥
विच्छन्दांसि च सर्वाणि ब्रह्माद्याश्च दिवौकसः ।
जलार्थिनोऽथ पितरो मरीच्याद्यास्तथर्षयः ॥
समागमस्तु यत्रैषां तत्रास्ते हृदयोऽमलः ।
नूनं सर्वं क्षयं याति किमुतैकं नदीरजः ॥
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्र-सूर्यग्रहे चैव रजोदोषो न विद्यते ॥
स्वर्धुन्यम्भःसमानि स्युः सर्वाम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥

'स्वर्धुनी' गङ्गा ।

नवाम्बु शुचि भूमिष्ठं ब्रह्मादूर्ध्वमिति स्थितं ।
प्रवाहवेगेन समं पुराणं सततं शुचि ॥

इति नदीनां रजःकालनिर्णयः ।

---

## अथाश्वत्थ-सागरस्पर्शास्पर्शकालः ।

अश्वत्थ-सागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
कालवारे स्पृशेत् पूर्वं उत्तरं पर्वणि स्पृशेत् ॥

क्वचित्तु मन्दवारे इति पाठः ।

इत्यश्वत्थ-सागरस्पर्शास्पर्शकालः ।

---

## अथ स्नानकालनिर्णयः।

तत्र कात्यायनः।

यथाहनि तथा प्रातर्नित्यं स्नायादतन्द्रितः।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः॥
स्रवत्येव दिवारात्रौ प्रातः स्नानं विशोधनम्।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्॥

वैयाघ्रपादः।

प्रातः सङ्क्षेपतः स्नानं शौचार्थन्तु तदिष्यते।
मन्त्रैस्तु विधिनिष्पाद्यं मध्याह्ने तु सविस्तरम्॥
प्रातःस्नायी भवेन्नित्यं मध्यस्नायी भवेत्सदा।
सप्तजन्मकृतं पापं त्रिवर्षेण व्यपोहति॥
उषस्युषसि यत्स्नानं चन्द्र-सूर्यग्रहे तथा।
प्राजापत्येन तत्तुल्यं नृणामनुदिते रवौ॥

चतुर्विंशतिमते।

उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥
प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः॥

योगियाज्ञवल्क्यः।

उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः।
तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विना॥

व्यासः।

षष्ठ्यां कृष्णपक्षे तु न स्नातव्यं कदाचन ।
शुभवन्नानमिच्छद्भिर्धन-धान्यपरैरपि ॥
दशमी पुत्रनाशाय धननाशाय त्रयोदशी ।
द्वितीयोभयनाशाय स्नाने चैतानि वर्जयेत् ॥

क्वचित्तृतीयपादोऽन्यथा पठ्यते "तृतीया भर्तृनाशायेति ।

वशिष्ठः ।

प्रतिपद्यनपत्यः स्यात्तृतीयायां त्वपत्यकः ।
दशम्यामधनः(१) स्नाने सर्वं हन्ति त्रयोदशी ॥

स एव ।

दशमी नवमी चैव तृतीया च त्रयोदशी ।
प्रतिपच्च विशेषेण स्नाने तास्तु विवर्जयेत् ॥

षट्त्रिंशन्मते ।

दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः ।
नवम्यान्तु न चेत्तच्च(२) निमित्तान्तरसम्भवः ॥

यमः ।

दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः ।
पुत्रः कुर्वन्निराचष्टे मातापित्रोस्तु जीवितं ।
कुर्याद्व्यतीतेऽतीते राहुग्रस्ते दिवाकरे ॥

गर्ग-आचार्यौ ।

त्रयोदश्यां तृतीयायां दशम्यां चैव सर्वशः ।

---

(१) दशम्यामधन इति ख० ।

(२) न वा तथेति ख० ।

शूद्र-विट्क्षत्रियाः स्नानं नाचरेयुः कदाचन ॥

स्मृत्यन्तरात्।

भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः।

तन्निषिद्धं दशम्यादौ नित्ये नैमित्तिके न तु ॥

गर्ग-आचार्य्यौ।

क्रियते वा न वा यच्च स्नानमभ्यञ्जनं विना।

मलापकर्षणं स्नानं यादृच्छिकन्तु यत् ॥

तत् न कुर्य्यात् तृतीयायां चतुर्दश्यां तथा तिथौ।

शाश्वतीं श्रुतिमन्विच्छन् दशम्यामपि पण्डितः ॥

तथा।

नित्यं न स्नापयेत् स्नानं काम्यं नैमित्तिकञ्च यत्।

दशम्यामपि कर्त्तव्यं न तु यादृच्छिकं क्वचित् ॥

बौधायनः।

विना तु सततस्नानं न स्नायाद्दशमीषु च।

वशिष्ठ-पैठीनसी।

पुत्रजन्मनि सङ्क्रान्त्यां श्राद्धे जन्मदिने तथा।

नित्यं स्नानञ्च कर्त्तव्यं तिथिदोषो न विद्यते ॥

वर्जयेदित्यनुवृत्तावापस्तम्बः।

अस्तमिते च स्नानं।

पराशरः।

दिवाकरकरैः पूतं दिवा स्नानं प्रशस्यते।

अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं पूतं विधीयते ॥
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ।
पराशरेण तथैवान्यैर्मार्म्मिरुक्तं कथञ्चन ॥

वशिष्ठः । ·

पुत्त्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥

व्यासः ।

स्नानं दानं जपः श्राद्धं अनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

तथा ।

रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः ।
नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु ॥

पराशरः ।

उपरागे परं स्नानं स्नाते दिन उदाहृतं ।
महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम् ॥
प्रदोष-पश्चिमौ यामौ दिनवत् कर्म चाचरेत् ।
दिवा उदाहृतं तोयं कृत्वा सर्व्वपुतन्तु तत् ॥
रात्रिस्नाने तु संप्राप्ते चाथाराऽनलसन्निधौ ।
उच्छिष्टाद्युपघातादौ स्नानं नैमित्तिकं स्मृतम् ।
चन्द्र-सूर्य्योपरागे च तथैव प्रसूतके ॥

मनुः ।

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

'भुक्त्वेति न नित्यस्नानस्य निषेधः तस्य भोजनानन्तरप्राप्त्यभावात्। नापि चाण्डालस्पर्शनिमित्तस्य "नाशुचिः क्षणमपि तिष्ठेदिति वचनविरोधप्रसङ्गात् विधिप्राप्तनिषेधासम्भवस्य तैलाभ्यङ्गकालनिर्णये दर्शितत्वाच्च। तस्माद्यादृच्छिकस्नाननिषेधोऽयं, आतुरस्य तु सर्वदा वारुणस्नाननिषेधः। 'अजस्रं' अनवरतं।

न स्नायादुत्सवेऽतीते माङ्गल्यानि निवर्त्त्य च।
अनुव्रज्य सुहृद्बन्धून् पूजयित्वेष्टदेवतां ॥

मार्कण्डेयः।

महानिशात्वं विज्ञेयं रात्रौ मध्यमयामयोः।
नैमित्तिकं तदा कुर्यात् काम्यं न च मनागपि ॥

क्वचिन्नित्यन्तु न मनागपीति पाठः।

अस्माच्च वचनान्नित्यं स्नानं कथञ्चिदतिक्रान्तस्वकालं महानिशावर्ज्जं रात्रावपि कर्त्तव्यं, न तु कर्मणो लोप इति गम्यते।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयं।
स्नानं तत्र न कुर्वीत काम्य-नैमित्तिकादृते ॥

अत्र काम्यशब्देन यथार्थं स्नानमुच्यते, पूर्ववाक्ये तु यादृच्छिकमित्यविरोधः।

विश्वामित्रः।

महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः।
तस्यां स्नानं न कुर्वीत काम्यमाचमनक्रियाम् ॥

अथ काम्यं चाद्रष्टिकमभिमतं ।
आचमनस्यापि च नैमित्तिकस्य प्रतिषेधः ।
तथ चाह ।

मूत्रोत्सारे महाराची कुर्यादाचमनं बुधः ।
प्रायश्चित्तीयते विप्रः प्रायश्चित्तार्हमर्हति ॥

पुलस्त्यः ।

रव्यङ्गारग्रनेर्वारे स्नानं कुर्वन्ति ये नराः ।
व्याधिभिस्ते न पीड्यन्ते मृगैः केसरिणो यथा ॥

अपरस्य भूयते ।

समुद्रमवगाहयेत नान्यथावगाह्यते ।

पुलस्त्यः ।

पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमावास्यां नदीस्नानं पुनात्यासप्तमं कुलम् ॥
अष्टमी रेवतीयोगे तथा चैरावतेऽपि च ।
आवर्त्तं समनुप्राप्य यत्र क्वचन मज्जने ॥
कर्ष्णा चतुर्दशी पुण्या देविकायास्तथाऽपि च ।
चैत्रशुक्लचतुर्दश्यां यः स्नायाच्छिवसन्निधौ ।
न प्रेतत्वमवाप्नोति गङ्गायान्तु विशेषतः ॥

यमः ।

प्राजापत्ये यथा षष्ठी प्रहरे च चतुर्दशी ।
शुक्लदशम्यां स्नानन्तु पुष्करीके तथैव च ॥
कपिलस्यामावास्यां प्रभासे च तथा पुनः ।

अब्दमेव नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः॥

पुलस्त्यः।

ज्येष्ठमासे तु सम्प्राप्ते दशम्यां हस्तसंयुते।
दशजन्मार्ज्जितं गङ्गा तेन पापहरा स्मृता।
आषाढ्यां सरयूयोगे माघ्यां सततं तथा॥

यमः।

प्रौष्ठपदस्य माघस्य शुक्ला या च त्रयोदशी।
तस्यां स्नात्वा वितस्तायां सर्व्वैः पापैः प्रमुच्यते॥
यदीच्छेद्विपुलान् भोगान् चन्द्र-सूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं मासौ द्वौ माघ-फाल्गुनौ॥
प्रातःस्नायी तु सततं मासौ द्वौ तु च फाल्गुनौ।
देवान् पितॄन् समभ्यर्च्य मुच्यते सर्व्वकिल्बिषैः॥
बालवृद्धयुवानो वृद्धो नर-नारी-नपुंसकाः।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम्॥
माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे॥
प्रासादा यत्र सौवर्णास्त्रियश्चाप्सरसोपमाः।
तत्र ते यान्ति मज्जन्ति ये माघे भास्करोदये॥
संयतः पथि गच्छेत मौनी पैशून्यवर्जितः।
यदीच्छेद्विपुलान् भोगान् चन्द्र-सूर्य्योपमान् शुभान्॥
माघ-फाल्गुनयोर्मध्ये प्रातःस्नायी सदा भवेत्
अप्रावृतशरीरस्तु यः कुर्य्यात् स्नानमाचरेत्।

पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥
पित्रा पितामहैः सार्द्धं वृद्धमातामहैस्तथा ।
एकविंशकुलैः सार्द्धं भोगान् भुक्त्वा यथेप्सितान् ।
माघमासाभ्यपि स्नात्वा विष्णुलोकं स गच्छति ॥

नारदीयपुराणात् ।

सम्प्राप्ते माघमासे तु तपस्विजनवल्लभे ।
क्रोशन्ति सर्ववारीणि समुद्गतदिवाकरे ॥
पुनीमः सर्वपापानि त्रिविधानि न संशयः ।
ब्रह्मघ्नेऽपि हि यानि सुरापानकर्मजातानि च ॥
दुर्लभो माघमासस्तु बहुपुण्यः प्रकीर्त्तितः ।
देवैर्लोकैः परिक्षिप्तं माघमासे जलेषु वै ॥
अतः पवित्रं हि जलं सर्वपापौघनाशनम् ।
गर्त्तजलेषु तु न स्नायात् कौपेऽल्पोदकभिते तथा ।
न सुखाल्लभ्यते पुण्यं पुण्यं कष्टेण लभ्यते ॥

तथाच कात्यायनः ।

यच्च स्नात्वाऽभ्युदयकं श्रेयसोऽपि मनीषिणः ।
अभ्युदयं ब्रुवते तच्च कष्टात् श्रेयो ह्यवाप्यते ॥

तस्मात् ।

स्नातो वह्निं न सेवेत अस्नातो वा कथञ्चन ।
सेवेतापि हि होमार्थं न शीतार्थं कथञ्चन ॥
सरित्तोयं महावेगं नवकुम्भस्थितं तथा ।
वायुना ताडितं रात्रौ गङ्गास्नानफलं स्मृतम् ॥

माघमासे वरारोहे स्नानं वै नित्यमाचरम्।
माघस्नायी नरोऽयः स्याद्दुर्गतिं नैव पश्यति॥
तथापि मानुषे लोके किञ्चिदं नैव शोधयेत्।
अग्निप्रवेशादधिकं माघस्नानं वरानने॥

विष्णुः।

दर्शं वै पूर्णमासं वा प्रारभ्य स्नानमाचरेत्।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे॥

इति स्नानकालनिर्णयः।

---

## अथ उष्णोदकस्नानकालनिर्णयः।

तत्र मनुः।

स्नानस्य वह्नितप्तेन तथैव परवारिणा।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्॥

योगियाज्ञवल्क्यः।

स्वभावदूषिताश्चैव उद्धृताभिश्च मानवः।
उष्णाभिराचरन् स्नानं न विशुद्ध्यति मानवः।
वृथा तूष्णोदकस्नानं वृथा जप्यमवैदिकम्॥

षट्त्रिंशन्मतात्।

आपः स्वभावतो मेध्या विशेषादग्नितापिताः।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा॥

यमः।

आप एव सदा पूताः स्नाता वह्निर्विशोधकः।

तस्मात् सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम् ॥

उष्णोदकनिषेधः काम्य-नित्य-नैमित्तिकविषयः, विधिस्तु तद्व्यतिरिक्तविषयः।

तथाच गार्ग्यः।

कुर्य्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च।
नित्यं याहच्छिकञ्चैव यथारुचि समाचरेत् ॥

क्रियास्नानमप्युष्णोदकेन न कार्य्यम्।

तथाच व्यासः।

क्रियास्नानं विना कुर्य्यादुष्णोदक-परोदकैः।
तथा स्नातस्य नास्तीह फलं किञ्चिद्विजन्मनः ॥

अत्र विशेषमाह यमः।

नित्यं नैमित्तिकञ्चैव क्रियामङ्गलकर्षणम्।
तीर्थाभावे तु कर्त्तव्यमुष्णोदक-परोदकैः ॥

आतुरस्य तु सर्वदोष्णोदकस्नानमेव।

तदाह स एव।

आदित्यकिरणैः पूतं पुनः पूतन्तु वह्निना।
आयातमातुरस्नाने प्रशस्तन्तु शृतोदकम् ॥
शीताद्भिस्त्वभिषिच्योष्णं मन्त्रसंस्कारयोगतः।
गृहेऽपि शस्यते स्नानं तद्विना न फलं लभेत् ॥
मृते जन्मनि सङ्क्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

वृद्धमनुः।

षष्ठ्यां भानुवारे च सप्तम्यां राहुदर्शने।
आरोग्य-पुत्र-मित्रार्थी न स्नायादुष्णवारिणा॥
पौर्णमास्यां तथा दर्शे यः स्नायादुष्णवारिणा।
स गोहत्याकृतं पापं प्राप्नोतीह न संशयः॥

इत्युष्णोदकस्नानकालनिर्णयः।

---

## अथामलकस्नानकालनिर्णयः।

तत्र बृहस्पतिः।

तुलस्यामलकैर्विष्णुरेकादश्यां विशेषतः।

व्यासः।

श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः।
सप्तमीं नवमीञ्चैव पर्वकालं विवर्जयेत्॥

अत्र केचिदाहुः पर्वाणामावास्येति।

यदाह व्यासः।

अमावास्या नवम्योश्च सप्तम्यां च विशेषतः।
धात्रीफलानि यत्नेन दूरतः परिवर्जयेत्॥

'धात्री' आमलकी।

कीर्त्तिहानिं प्रजाहानिं धनहानिं तथैव च।
करोति चितयं यस्मात्तस्माद्धात्रीं विवर्जयेत्॥

तदयुक्तम्। श्रीकामवाक्येन सप्तमी-नवमी-पर्वकालव्यतिरिक्ते काले स्नानार्थं विहितं, अमावास्यादिवाक्यानाममावास्यादिषु-

निष्टपरिहारार्थं प्रतिषिद्धं, अतो नित्यविषयत्वाभोपसंहारः।

योगियाज्ञवल्क्यः।

धात्रीफलेन न स्नायात् सप्तमी-नवमीषु च।
यः स्नायात्तत्र हीयन्ते तेन आयुर्धनं सुताः॥

षट्त्रिंशन्मते।

सप्तम्याञ्च नवम्याञ्च सङ्क्रान्तौ रविवासरे।
चन्द्र-सूर्य्योपरागे च स्नानमामलकैस्त्यजेत्॥

क्रतुः।

षष्ठीञ्च नवमीञ्चैव सप्तमीञ्च चयोदशीम्।
सङ्क्रान्तौ रविवारे च स्नानमामलकैस्त्यजेत्॥

यदा त्वेकादश्यां आदित्यवारस्तदा विष्णुतुष्ट्यर्थमामलकैः स्नायादेव।

आमलकस्नानं प्रशस्तोक्तम् षट्त्रिंशन्मते।
तुष्ट्यामलकैर्विष्णुरेकादश्यां विशेषतः। इति॥

न चादित्यवारे आमलकस्नाननिषेधादेकादश्यामामलकस्नान-विधेर्वारान्तरविषयता, एकादश्यामामलकस्नानविधेरादित्यवारा-मलकस्नाननिषेधस्य तिथ्यन्तरविषयताया अप्युपपत्तेः। कथन्तर्हि निर्णयः उच्यते। निषेधो रागप्राप्तस्नानविषयः विधिप्राप्तविषयत्वे विकल्पापत्तेः तस्य चान्याय्यत्वात्। तस्मादादित्यवारस्यैकादश्यां आमलकस्नानं कार्यमिति सिद्धम्।

इत्यामलकस्नानकालनिर्णयः।

## अथ तिलस्नानविहित-निषिद्धकालौ ।

तत्र बृहस्पतिः ।

सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः ।

षट्त्रिंशन्मते ।

तथा सप्तम्यमावास्या-सङ्क्रान्ति-ग्रहणादिषु ।
धन-पुत्र-कलत्रार्थी तिलपिष्टं न संस्पृशेत् ॥

इति तिलस्नानविहित-निषेधकालौ ।

---

## अथाभ्यङ्गविहित-निषिद्धकालौ ।

तत्र मार्कण्डेयः ।

अपुष्टिः कान्तिरल्पायुर्धनी सौभाग्यवर्जितः ।
निर्धनोऽसपतिश्चैव वारेष्वभ्यङ्गकारकः ॥

आदित्यादिषु वारेषु यथाक्रमेणाभ्यङ्गे फलविशेषो ज्ञेयः ।

ज्योतिःपराशरः ।

सन्तापः कान्तिरल्पायुर्धनं निर्धनता तथा ।
अनारोग्यं सर्वकामा अभ्यङ्गाद्भास्करादिषु ॥
यः सदा कुरुतेऽभ्यङ्गं मोहान्मुक्त्वा तु वासरान् ।
न तावदपमृत्युः स्याद्यावदन्योऽर्कनन्दनः ॥

बौधायनः ।

अष्टम्यां च चतुर्दश्यां नवम्याञ्च विशेषतः ।
शिरोऽभ्यङ्गं वर्जयेत्तु पर्वस्वपि तथैव च ॥

इत्यभ्यङ्गविहित-निषिद्धकालौ ।

---

# अथ तैलाभ्यङ्गादिकालनिर्णयः ।

तत्र कात्यायनः ।

पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ ।
तैलेनाभ्यज्यमानस्तु चतुर्भिः परिहीयते ॥

अत्र तिलोद्भवं तैलं न तु कुसुम्भादिप्रभवमिति तस्य विकार इति पाणिनिस्मृतेः, ततश्च पाणिनिकृते नियमे तैलशब्दो नान्यदभिधातुं शक्नोति । केचिदाहुः सर्षपाद्युद्भवस्नेहान्तरवाचकतैलशब्दस्यापि प्रयोगादिति । तदयुक्तम् । केवलस्य तैलशब्दस्य तिलविकारान्यवाचकत्वाभावात् । यत्तु वार्त्तिककृता स्नेहे तैलमिति तैलप्रत्ययो विहितः, स स्नेहमात्रवाचकः अतसीतैलमेरण्डतैलमित्यादि । तथाचायुर्वेदप्रणेतारश्चरक-हारीत-सुश्रुत-पाराशराग्निवेश-आढक-र्ष्यादयो न स्नेहमात्रं केवलेन तैलशब्देनाभिदधति तिलविकार एव तु प्रयुञ्जत इति । न च तिलविकारवचनत्वे पिण्याकादिष्वपि तैलशब्दप्रवृत्तेस्तैलनिषेधे तन्निषेधोऽपि प्रसज्यत इति वाच्यम् । तैलशब्दस्य स्नेहे निरूढत्वात् यथा पङ्कजशब्दः पद्म एव निरूढत्वाद्वर्त्तते न तु मण्डूकादौ । यस्तु क्वचित्केवलतैलशब्दस्य स्नेहान्तरेऽपि प्रयोगः स सादृश्यादुपपन्नः ।

अतएवाहुः शब्दविदः ।

निष्पन्नस्तद्गुणस्तोऽन्य तैलमितरेष्वपि ।

याति तस्मात् तिलविकार एव स्नेहस्तैलं न तु स्नेहमात्रमिति ।

षष्ठ्यां तैलमनायुष्यं चतुर्ष्वपि च पर्वसु ।
सप्तम्यां न स्पृशेत्तैलं नवम्यां प्रतिपद्यपि ॥

षष्ठ्याञ्च चतुर्द्दश्याममावास्यां विशेषतः ।
रजोऽभ्युपगते काले भजन् वध्या प्रचीयते ॥

तथा ।

उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः ।
तावच्छ्रीस्तिष्ठते प्रीता यावत्तैलं न संस्पृशेत् ॥
नखच्छेदे कृते श्मश्रु-शिरोरुहनिकर्त्तने ।
न स्नायीत नरः शेषे तैलस्नानं विधीयते ॥

भविष्यपुराणे ।

षष्ठ्यां संस्पृशेत्तैलं स्निग्धा भार्या विनश्यति ।

सुमन्तुः ।

तैलाभ्यङ्गो नार्कवारे न भौमे
नो संक्रान्तौ वैधृतौ विष्टि-षष्ठ्योः ।
पर्व्वस्वष्टम्याञ्च नेष्टः स दृष्टः
भौमाप्युक्ता वासरे सूर्यसूनोः ॥

गर्गः ।

पञ्चमी दशमी चैव तृतीया च त्रयोदशी ।
एकादशी द्वितीया च पक्षयोरुभयोरपि ॥
अभ्यञ्जन-स्पर्शनाद्यैर्योऽत्र तैलं निषेवते ।
चतुर्णां तस्य वृद्धिः स्याज्ज्ञानापत्य-धनायुषाम् ॥

याज्ञवल्क्यः ।

पञ्चमी दशमी चैव पूर्णिमा च त्रयोदशी ।
तृतीया चैव यस्तैलं नरः समुपसेवते ॥

अभ्यङ्गात् अर्कवारेऽपि भवत्याख तथैव च ।
चतुर्थी तस्य द्धिः स्यादृणापत्य-कलायुषाम् ॥

योगियाज्ञवल्क्यः ।

दशम्यां तैलमस्पृष्टा यः स्नायादविचक्षणः ।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो धनम् ॥
ओदनप्रतिपदं षष्ठीं कुहूं रिक्तां तिथिं तथा ।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः स हीयते ॥
पञ्चदश्यां चतुर्दश्यां सप्तम्यां रविसङ्क्रमे ।
द्वादश्यां सप्तमीं षष्ठीं तैलस्पर्शं विवर्जयेत् ॥
त्रयोदश्यां तृतीयायां प्रतिपन्नवमीद्वये ।
तैलाभ्यङ्गं न कुर्वीत कुर्युर्वा नवमीं विना ॥

अथ कासु तिथिषु तैलाभ्यङ्गो विहितः प्रतिषिद्धश्च, तत्र केचि-
दाहुर्विधिः पक्वतैलविषयः निषेधश्चापक्वतैलविषयः ।

तदुक्तं षट्त्रिंशन्मते ।

सूर्य-शुक्रादिवारेषु निषिद्धासु तिथिष्वपि ।
स्नाने वा यदि वास्नाने पक्वतैलं न दुष्यति ॥

नवम्यां तूभयोरपि निषेधः "कुर्युर्वा नवमीं विनेति वचनादिति ।
तदयुक्तं, निषेधस्य रागप्राप्ततैलाभ्यङ्गविषयत्वात् विहिततैलाभ्यङ्ग-
विषयत्वे विकल्पप्रसङ्गात् । न च विधिप्राप्तात्तैलमात्रप्राप्तादपक्व-
तैलरूपविशेषनिषेधाच्च विकल्प इति वाच्यम् । "ये चत्वारः कल्प-
स्थायेव वै सप्तदशः प्रजापतिर्यज्ञे च यज्ञे न्यायत इति वाक्यात् सर्वय-
ज्ञेषु प्राप्तावनुयाजादेरपि विशेषनिषेधाविशेषत्वे विकल्पाभावप्रस-

प्राप्तं तत्र च यः परिहारः सोऽत्रापीत्यदोषः। रागप्राप्तविधिप्राप्तो-भयविषयत्वे च निषेधस्यैकत्र शास्त्रान्तरबाधनापेक्षो निषेधः अन्यत्र निरपेक्ष इति विधिवैषम्यं प्रसज्यते। न च विधिवैषम्यपरिहारार्थी विधिप्राप्तस्यैव प्रतिषेध इति वाच्यम्। शास्त्रान्तरबाधं विना निषेधस्य प्रवृत्ते तद्बाधकत्वानुपपत्तेः। तस्मान्निषेधो रागप्राप्ततैलविषयस्तत्र च सर्वतैलनिषेधप्राप्तौ "सूर्य-शुक्रादिवारेष्विति वाक्येन निषेधो न पक्षेत्र इति क्रियते। तस्मादपक्वं तैलं विहिततैलाभ्यङ्गे उपादेय-मिति सिद्धम्।

बृहस्पतिः।

षष्ठ्यां रविवारे च षष्ठ्यां भौमदिने तथा।
द्रव्यान्तरगतं तैलं न दुष्यति कदाचन॥

अत्र केचिदाहुः 'कदाचनेत्यनान्यस्मिन्नपि निषिद्धकाले द्रव्या-न्तरगतस्य तैलस्यादुष्टत्वमुच्यते अन्यथास्य वैयर्थ्यापत्तेरिति। तदयुक्तं। यदि सर्वस्मिन्नपि निषिद्धकाले द्रव्यान्तरगतस्य तैलस्यादुष्टत्वं विव-क्षितं स्यात्तदा उत्तरार्द्धेनैव तत्सिद्धेः पूर्वार्द्धवैयर्थ्यं प्रसज्यते, पूर्वा-नुवादपक्षाच 'कदाचनेत्येतावन्मात्रानुवादत्वमुक्तम्। तस्मात् षष्ठ्या-न्यादिषु द्रव्यान्तरगतं तैलं कदाचिदपि न दुष्यतीत्यस्यार्थः। अतः षष्ठ्यान्यादिचतुष्टय एव द्रव्यान्तरगतस्य तैलस्यादुष्टत्वं नान्यत्रेति सिद्धमित्यन्ये। तदयुक्तं। सर्वस्मिन्काले द्रव्यान्तरगतस्य तैलस्य वचनान्तरेणादुष्टत्वाभिधानात्। षष्ठ्यान्यादिग्रहणस्य वा निःशेषप्रद-र्शनार्थत्वात् षष्ठ्यान्यादावपि न दुष्यति किमुतान्यत्रेति।

तदाह प्रचेताः।

सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

यमः ।

घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यङ्गेषु नित्यशः ॥

कात्यायनः ।

माङ्गल्यं विद्यते स्नानं वृद्धि-पर्वोत्सवेषु च ।
स्नेहमाचमनायुक्तं यथाम्नातं प्रविधिष्यते ॥

इति तैलाभ्यङ्गादिकालनिर्णयः ।

---

## अथ तिलतर्पणनिषिद्धकालः ।

सप्तम्यां रविवारे च ग्रहे जन्मदिने तथा ।
भृत्य-पुत्र-कलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

क्वचित्तु ग्रहेति पाठः ।

पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः ।
विद्या-पुत्र-कलत्रार्थी तिलान् पञ्चसु वर्जयेत् ॥

इति तिलतर्पणनिषिद्धकालः ।

---

## अथ मैथुनकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥

एवं गच्छन्स्त्रियं क्षामां मघां मूलञ्च वर्जयेत्।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्।
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्॥

रजोदर्शनप्रभृति 'षोड़श निशाः', 'स्त्रीणां', 'ऋतुः' गर्भग्रहण-काल:, तस्मिन् 'युग्मासु' समासु रात्रिषु, 'संविशेत्' गच्छेत् यदि पुत्रार्थी। कन्यार्थी त्वयुग्मासु।

यदाह मनुः।

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियं॥

शङ्खः।

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतं।

युग्मास्वपि उत्तरोत्तरैव प्रशस्ता।

यदाहापस्तम्बः।

चतुर्थीप्रभृत्याषोड़शमुत्तरामुत्तरां युग्मां।

प्रजापतिः।

अपि प्रत्यृतुगमनं इत्युपदिशति।

व्यासः।

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान्।
नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः॥

एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां शठा पापा सर्वसङ्करकारिणी ।
जायते सर्वदुष्टा स्त्री दुःख-शोक-भयप्रदा ॥
धर्मध्वजः कृतघ्नः स्यादात्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां गुणाढ्यैर्जगतः पतिः ॥
राजपुत्री महाभागा या राजवल्लभाय वा ।
जायते पञ्चदश्यान्तु बहुपुत्रा पतिव्रता ॥
विद्या-लक्षणसम्पूर्णः सत्यवादी जितेन्द्रियः ।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥

निशाप्रशस्तदिवसनिषेधः ।

अत आहतुः शङ्ख-लिखितौ ।

न दिवा मैथुनं गच्छेत् क्लीवा अल्पवीर्याश्च दिवा प्रसूयन्ते अल्पायुषश्च तस्मात्परिवर्जयेत् ।

ज्योतिःशास्त्रे ।

अल्पायुरल्पवीर्यो वा क्लीबो वाप्यथ जायते ।
एवं प्रसूयते गर्भो दिवामैथुनसम्भवः ॥

अनृतावप्येतत् ।

पर्वाद्यपवादः ।

ऋतवेधिना ऋतमहन्यपर्वेष्वृतौ ब्रह्मचार्येव पर्वणीति ।

अष्टमी चतुर्दशी पूर्णिमा अमावास्या रविसंक्रान्तिश्चेति पञ्च पर्वाणि विष्णुपुराणे दर्शितानि । तत्र ब्रह्मचार्येव स्त्रियं नोपेयादित्यर्थः ।

पैठीनसिः ।

ऋतुमुपासीत तस्मिन्नपि पर्वाणि वर्जयेत् पुमांसमुपपादयेत् ।

मनुः ।

ऋतुकालाभिगामी स्यात् स्वदारनिरतः शुचिः ।
पर्ववर्ज्जं व्रजेच्चैनां न स्वतौ रतिकाम्यया ॥

वशिष्ठोऽपि ।

ऋतुकालाभिगामी स्यात् पर्ववर्ज्जं ।

पर्वग्रहणञ्च कालान्तरोपलक्षणार्थं ।

मनुः ।

अमावास्यामष्टमीञ्च पौर्णमासीं चतुर्दशीं ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातकोद्विजः ॥

अथामावास्यायाः पर्यायेऽष्टमी-चतुर्दश्योः पक्षयोर्न्याय्यृतौ ।

विष्णुः ।

नाष्टमी-चतुर्दशी-पञ्चदशीषु स्त्रियमुपेयात् न श्राद्धं भुक्त्वा न दत्त्वा ऋतुमत्ययोः ।

शिवरहस्ये ।

दिवा जन्मदिने चैव न कुर्य्यान्मैथुनं व्रती ।
श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोऽर्थी न च पर्वसु ॥

कौर्म्मपुराणे ।

पञ्चदशी पञ्चदशी अमावास्या चतुर्दशी ।
ब्रह्मचारी भवेन्नित्यं जन्मर्क्षे च विशेषतः ॥

वाराहपुराणे वैष्णवं प्रक्रम्य वराह उवाच ।

षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्दशीं ।
मैथुनं नैव सेवेत द्वादशीञ्च मम प्रियां ॥

तथा ।

अष्टम्याञ्च चतुर्दश्यां षष्ठ्याञ्च द्वादशीं नृप ।
अमावास्यां पञ्चदशीं मैथुनं यो न गच्छति ।
तिर्य्यग्योनिं न गच्छेत्स मम लोकं हि गच्छति ॥

'आद्याश्चतस्र' इति रजोदर्शनादारभ्य चतस्रोरात्रीर्वर्जयेत् ।

तथाच पैठीनसिः ।

प्रथमे न द्वितीये न तृतीये न चतुर्थे आह्वयेत ।

अन्ये त्वाहुः ।

स्नानादारभ्य चतस्रो वर्जयेत्, पूर्वं तस्याः स्पर्शननिषेधेनैव गमनस्यापि निषिद्धत्वादिति । तदयुक्तं । स्पर्शनिषेधाद्धि स्पर्शात्प्रत्यवायः गमननिषेधे तु तस्मादपीति फलभेदात् । अतएव रजस्वलास्पर्शे गमने च भिन्नं प्रायश्चित्तमाम्नातं ।

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः ।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥

इति मनुवचनविरोधाच्च स्नानादूर्ध्वं गर्हितराश्यवचनात् ।

तथाच कात्यायनः ।

रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात् ।

"अर्वाक् पुनर्गर्हिता रात्रयः यस्यामपि प्रेषा मलवत्या स्त्रीयां जनिष्यापि रजोदर्शनं यस्यां च जायते सोऽभिशस्तः" इत्यादिभिर्वाक्यैर्गर्हितवचनात् । तस्माद्रजोदर्शनादारभ्य चतस्रोवर्ज्याः ।

देवलेन तु तिस्रोराचयोवर्ज्या इत्युक्तं।

अशुद्धदिवसेष्वेतां मैथुनार्थं यदि व्रजेत्।
आयुः प्रजा च धर्मश्च तस्य पुंसः प्रहीयते।
तस्मात्त्रिरात्रं दारान्वै पुष्पितान्परिवर्जयेत्॥

ऊर्ध्वं त्रिरात्रात् सम्भव इत्येके।

हारीतेनापि चतुर्थ्यां रात्रौ गर्भाधानमुक्तं।

चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानवदुपेतं ब्रह्म गर्भं सन्दधाति।

ततश्च विकल्पः स च व्यवस्थितः चतुर्थेऽहनि रजोनिवृत्तौ विधिर्वैपरीत्ये तु निषेधः।

अतएव गोभिलः।

यदर्तुमती भवति उपरतशोणिता तदा सम्भवकालः।

तथाच मनुः।

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला।

'साध्वी' गर्भाधानादिकर्मयोग्या।

मनुः।

नोपगच्छेत्प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने।
रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः।
प्रज्ञा तेजोबलञ्चक्षुरायुश्चैव प्रहीयते॥
तां विवर्जयतस्तस्य रजसा समभिप्लुतां।
प्रज्ञा तेजोबलञ्चक्षुरायुश्च परिवर्द्धते॥

देवलः।

चतुर्दशीं दिवसेष्वेतां मैथुनार्थं यदि व्रजेत्।
आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते।
तस्मात् चिरायं चाष्टमीं पुष्पितां परिवर्जयेत्॥

'आद्याश्चतस्र इत्युपलक्षणं एकादशीं त्रयोदशीमपि निषिद्धत्वात्।
तथाच मनुः।

आद्यामाद्याश्चतस्रस्तु निन्दितैकादशी तथा।
त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः॥

अत्रैकादशी-त्रयोदश्यादृतौर्न पत्नस्य।
तथा।

निन्द्यास्वष्टासु चान्यासु स्त्रियोरात्रिषु वर्जयेत्।
ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसेत्॥

'निन्द्यास्वष्टासु' आद्याश्चतस्र एकादशी त्रयोदशी च एतासु षट्सु अन्यासु अनिन्दितास्वपि यासु कासुचिद्रात्रिषु स्त्रियोवर्जयेत्, रात्रिद्वय एव स्त्रियोऽभिगच्छेदित्यर्थः।

देवलः।

ब्राह्मणा द्वादशाहं स्यादेषोक्ता ऋतुधारणा।
दशाष्टौ षट् च शेषाणां विधीयन्तेऽनुपूर्वशः॥
एतेष्वपि त्र्यहं पूर्वं वर्जयित्वा रजस्वलां।
शुद्धां स्नातां ततो भार्यां व्रजेयुः पुत्रकारणात्॥

इदञ्च ब्राह्मणादीनां द्वादशादिकऋतुधारणवचनं मध्यमाभिप्रायं, न ऋतुकालाभिप्रायं, "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनुवचनविरोधात्। "चतुर्दशीं कालतः सुच इच्छा-

यिति चन्द्रयते सति मघा-मूले विहाय गच्छन् सत्सुतं पुत्रं सम्पादयेदित्यर्थः।

ज्योतिःशास्त्रे।

पित्र्यं पौष्णं नैर्ऋतञ्चापि धिष्ण्यं
त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नां।
शुद्धां क्षामां पुत्रकामोऽपि गच्छन्
सत्सत्त्वं पुत्रमाप्नोति सम्यक्॥

स्त्रियां तु ऋतुतः पित्र्ये पौष्णे वा नैर्ऋतेऽथ वा।
यः समुत्पद्यते गर्भो न सधर्मो गुणैर्युतः॥
पुमांश्चिम्प्रतिवर्षश्चेत्पूर्वयोऽप्रवर्षया।
स्त्रिया सङ्गच्छते गर्भाशये शुद्धे रजस्यपि॥
वीर्यञ्च स्याद्यमापत्यं तयोर्न्यूनाब्दयोः पुनः।
रोगस्त्राणुरधन्यो वा गर्भो भवति नैव वा॥

ऋतुयौगपद्ये तु गमने क्रममाह देवलः।

यौगपद्ये तु तीर्थानां विप्रादि क्रमशो व्रजेत्।
रक्षार्थमपुर्वां वा यदृच्छक्रमशोऽपि वा॥

'तीर्थं' ऋतुः, तद्यौगपद्ये, वर्णक्रमेण विवाहक्रमेण वा गच्छेद्-पुर्वां वा पूर्वमित्यर्थः।

कश्यपः।

यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत्।
रक्षार्थमपुर्वां वा यदृच्छक्रमशोऽपि वा॥ इति॥

अत्र 'यदृच्छक्रमः' ऋतुयदृच्छक्रमः, एतच्च ऋतुगमनमात्रपरं।

तथाच यमः ।

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

पराशरः ।

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
स गच्छेन्नरकं घोरं ब्रह्मघ्नेति तथोच्यते ॥

बौधायनः ।

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥

तथा ।

त्रीणि वर्षाण्यृतुमतीं यो भार्यां नानुगच्छति ।
स तुल्यं ब्रह्महत्याया दोषमृच्छत्यसंशयं ॥

देवलः ।

यः स्वदारानृतुस्नातान् सन्निधौ नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भप्राप्तिविनाशनो ॥

सन्निधानेऽप्यशक्तस्य न दोषः ।

तथाच स्मृत्यन्तरे ।

यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजां प्राप्तां विनाश्य सः ॥

अत्र केचिदाहुः ।

एतदजातपुत्रविषयं "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः स एष वा-

अनृणो यः पुत्री वन्ध्या ब्रह्मचारी वा" इत्यस्याः श्रुतेरेकपुत्रोत्पादनेनैव चरितार्थत्वात्।

तथाच कूर्मपुराणे।

ऋतुकालाभिगामी स्यात् यावत्पुत्रोऽभिजायते।

ननु पुत्रान्तरोत्पत्तिविधायिकाप्यस्ति श्रुतिः "दशास्यां पुत्रानाधेहीति, सत्यं, यदीयं विधायिका स्यात् किन्तु बह्वपत्यप्रशंसार्था। अन्ये त्वाहुः नैतद्जातपुत्रविषयम्।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

इत्यादिभिर्वचनैर्बहुपुत्राश्रयणात् कूर्मपुराणवचनस्य त्वयमर्थः। ऋतुकाल एव यावद्गर्भसम्भवो भवति तावद्गन्तव्यं गर्भसम्भवे न गन्तव्यमिति।

गर्भसम्भवचिह्नानि सुश्रुते दर्शितानि।

सद्योगृहीतगर्भायाः श्रमोग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरनुबन्धः स्फुरणञ्च योनेरिति।

ऋतुकालगमनञ्च स्त्रीणामप्यावश्यकं।

ऋतुस्नाता च या नारी भर्त्तारं नोपगच्छति।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीन्तु विवासयेत्॥

तथा "यथा कामीत्यनेन अनृतावपि स्त्रीणामिच्छानतिक्रमेण गच्छेदिति विधीयते।

गौतमः।

ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जं।

देवलः।

ऋतुकालेऽभिगमनं पुंसा कार्यं प्रयत्नतः।
सदैव पर्ववर्जञ्च स्त्रीणामभिमतं हि तत्॥

यत्तु बौधायनवचनं।

ऋतौ नोपैति यो भार्यामनृतौ योपगच्छति।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति॥

तत्स्त्रीणामिच्छाभावे वेदितव्यं।

अत्र केचिदाहुः।

वा शब्दो ऋतुगमने वैकल्पिकमाह ततश्च गच्छतोऽपि स्त्रीरक्षणसामर्थ्यं यस्यास्त्यृतावेव गच्छेदिति, तथाच हेतुरुक्तः "स्त्रियोरक्षायतः स्मृता इति, तदयुक्तं, यदि स्त्रीणामिच्छायां सत्यामपि न गमनं तदा "यथा कामी भवेदिति विरुध्यते, वा शब्दः पूर्वोक्तानृतुगमनापेक्षया, द्वैधे चार्थेन हेतुवशात् व्यवस्था, "स्त्रीणां वरमनुस्मरन्नित्येतत्पर्यालोचनयाप्येवमेवावगम्यते।

तथाच तैत्तिरीयके इन्द्रस्त्रियश्च प्रश्नयोक्तं।

ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजां विन्दामहे काममाविजनितोः सम्भवामेति तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममाविजनितोः सम्भवन्ति वरो ह्यासां वृतासामिति।

तथाच वशिष्ठः।

अपि च काठकेर्वचनैर्विज्ञायते, अपि नः श्वोविजनिष्यमाणाम् पतिभिः संवत इति स्त्रीणामिन्द्रदत्तो वरः।

ऋतुविशेषेण गमने कालविशेष उक्तः आयुर्वेदे।

ग्रीष्मवसन्ते तथान्ते ततः पञ्चाहुनोदये ।
सेवेत कामतः कामं हेमन्ते शिशिरेऽपि च ॥

ग्रन्थान्तरे पूर्वाह्णमन्यथा पचते "पर्वंवज्यं शरद्ग्रीष्मयो यौव-नदाम्पत्योरिति ।

स्त्रियाश्च प्रत्यपेक्षया व्यवस्थेति ।

आपस्तम्बः ।

प्रवचनयुक्तोवर्षा-शरदौ मैथुनं वर्जयेत् ।

एतच्च समावृत्तविषयं ।

अतएव शौनकः ।

अधीयीत समावृत्तो ब्रह्मचारिकल्पेन यथा न्यायमितरे जायोपेयीत्येकेऽपत्यं प्राजापत्यं तदिति ।

'तत्' जायोपयोगमात्रं प्राजापत्यमित्यर्थः ।

इति मैथुनकालनिर्णयः ।

---

## अथ पुंसवनकालः ।

तत्र याज्ञवल्क्यः ।

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।

प्राग्गर्भचलनात्पुंसवनाख्यं कर्म कार्य्यमित्यर्थः ।

यमः ।

गृहीतगर्भायां प्रथमे मासि द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यादिति ।

पुंनक्षत्राणि च रत्नकोषे दर्शितानि ।

हस्तोमूलं श्रवणः पुनर्वसुर्मृगशिरास्तथा पुष्यः ।
पुंसंज्ञितेषु कार्यमेतानि शुभानि धिष्ण्यानि ॥

'धिष्ण्यानि' नक्षत्राणि ।

बृहस्पतिः ।

पुंसवनं स्पन्दति शिशाविति ।

इति पुंसवनकालः ।

---

## अथानवलोभनकालः ।

मनुः ।

गर्भस्य स्फुटताज्ञानेऽभिषेकः परिकीर्त्तितः ।

विष्णुः ।

गर्भस्य स्फुटताज्ञानेऽभिषेकः कर्म ।

सोमः ।

चतुर्थे गर्भलक्षणं ।

आश्वलायनगृह्यपरिशिष्टे ।

चतुर्थेऽनवलोभनं ।

बैजवापगृह्यं ।

अथ पुंसवनानवलोभने करोति मासि द्वितीये तृतीये वा पुरा स्पन्दत इति पूर्व्वमासपक्षे यथा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ।

इत्यनवलोभनकालः ।

---

## अथ सीमन्तोन्नयनकालः ।

तत्र लौगाक्षिः ।

तृतीये गर्भमासे सीमन्तं कारयेत् शुक्लपक्षे पुण्याहे पर्वणि वा।

आपस्तम्बः ।

सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासि ।

बैजवापः ।

अथ सीमन्तोन्नयनं मासि चतुर्थे पञ्चमे षष्ठे वा ।

सोमः ।

षष्ठे सीमन्तोन्नयनं ।

शाङ्खायनसूत्रे ।

सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनं।

बृहस्पतिः।

सीमा षष्ठेऽष्टमे मासि ।

विष्णुः ।

षष्ठेऽष्टमे मासि सीमन्तोन्नयनं ।

शङ्ख-याज्ञवल्क्यौ ।

षष्ठेऽष्टमे वा सीमन्तः ।

शौनकः।

चतुर्थे गर्भमासे सीमन्तोन्नयनं षष्ठाष्टमयोर्वा पूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ।

पुंनक्षत्राणि पुंसवनकालप्रस्तावे दर्शितानि ।

गोभिलः ।

अथ सीमन्तकरणं प्रथमे गर्भे चतुर्थे मासि षष्ठेऽष्टमे वा ।
मनुः ।
गर्भस्यस्फुटले सीमन्तोन्नयनं यावद्वा न प्रसवः ।
ज्योतिःशास्त्रे ।

सीमन्तोन्नयनं कुर्यान्मासे षष्ठेऽष्टमेऽपि वा ।
पुन्नामर्क्षगते चन्द्रे बलिभिश्चावलोकिते ॥

मासे षष्ठेऽष्टमे वा बलिनि तदधिपे शीतगौ चेष्टदृष्टे
पुन्नामर्क्षोपयाते नरभवननवांशोदये कामिनीनां ।
कार्य्यं सीमन्तकर्म्म त्रिदशपतिगुरौ केन्द्रगे कोणगे वा
क्रूरैः केन्द्र-त्रिकोण-व्यय-निधनवहिर्गर्भपुष्टिं करोति ॥

गर्भपुष्टादिप्रश्नार्थाः प्रश्नादावारम्भकाले दर्शिताः ।
एतच्च सीमन्तोन्नयनं क्षेत्रसंस्कारपक्षे सकृदेव कार्य्यं, यदाह हारीतः।

सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत् ॥

गर्भसंस्कारपक्षे तु प्रतिगर्भमावर्त्तनीयं।
तथाच विष्णुः ।
सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते ।
केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुज्यते ॥
अकृतसीमन्तायाः प्रसवे तु सत्यव्रत आह ।

स्त्री यदाऽकृतसीमन्ता प्रसूयेत कथञ्चन ।
गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ॥

इति सीमन्तोन्नयनकालः ।

## अथ जातकर्मकालः।

तत्र च मनुः।

जाते जातकर्म।

विष्णुः।

जाते वै दारके तु जातकर्म।

विष्णुः।

अजाते जातकर्म च।

लोकविष्णुः।

जातकर्म ततः कुर्यात् पुत्रे जाते यथोदितं।

'यथोदितं' स्वगृह्योक्तं, 'ततः' स्नानानन्तरं।

तथाच संवर्त्तः।

जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।

मनुः।

प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयत इति।

'नाभिवर्द्धनं' नाभिच्छेदनं।

हारीतः।

प्राक् नाभिच्छेदात् संस्कार-मुख्यार्थान् कुर्वन्ति हिरण्यामा-न्नौषमिति।

'संस्कारः' जातकर्म, 'मुख्यार्थाः' दानानि।

बैजवापः।

अनन्तरोऽनन्तरं कार्यं जातकर्म यथाविधि।

दैवादतीतकालश्चेदतीते सूतके भवेत्—इति ॥

एतच्चाशौचमध्येऽपि कार्य्यं ।

यदाह प्रजापतिः ।

आशौचे तु समुत्पन्ने पुत्त्रजन्म यदा भवेत् ।

कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुध्यति ॥

ज्योतिःशास्त्रे ।

मृदु-ध्रुव-चर-क्षिप्रभेषु वारचये शुभे[१] ।

गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च ॥

'मृदूनि' चित्रानुराधा मृगशिर उत्तरात्रयं रोहिणी च । 'चराणि' पुनर्वसु-स्वाति-श्रवण-धनिष्ठा-शतभिषाः । 'क्षिप्राणि' हस्ताश्विनी-पुष्याः । 'भानि' नक्षत्राणि । केन्द्रञ्च शास्त्रान्तरप्रकाशे दर्शितः ।

इति जातककर्मकालः ।

---

## अथ नामकरणकालः ।

तत्र पाराशरः ।

दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति ।

विष्णुपुराणे ।

ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि ।

सोमः ।

द्वादश्यां प्रकाशनामकरणं ।

विष्णुः ।

---

(१) वारचयेऽपि चेति ख० ।

आशौचव्यपगमने नामधेयं ।

शङ्खः ।

आशौचे तु व्यतिक्रान्ते नामकर्म विधीयते ।

याज्ञवल्क्य-बृहस्पती ।

अहन्येकादशे नाम ।

यमः ।

नामधेयं दशम्यान्तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥ इति ।

अत्र च पितुः कथञ्चिन्नामकरणायोग्यत्वे कारयेदिति विधीयते।

अत एव शङ्खः ।

कुलदेवता-नक्षत्राभिसम्बद्धं पिता कुर्यादन्यो वा कुलवृद्ध इति।
पितुः कथञ्चिदयोग्यत्वे अभावे वा कुलवृद्धः कुर्यात्, न तु योग्यस्य सद्भावे शास्त्रदर्शितविष्णुवचनविरोधप्रसङ्गात् । अत्र केचित् 'कारयेत्' कुर्यादिति व्याचक्षते, तदयुक्तं, व्याख्यायां कारणाभावात् । "पितैव कुर्यादिति वचनविरोधस्यापि परिपूरितत्वात्, व्याख्यातस्य संकोचस्य युक्तत्वात् ।

भविष्यत्पुराणे ।

नामधेयं दशम्यान्तु केचिदिच्छन्ति पार्थिव ।
द्वादश्यां पररात्रौ वा मासे पूर्णे तथापरे ।
अष्टादशाहनि तथा वदन्त्येके मनीषिणः ॥

गृह्यपरिशिष्टे ।

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणं ।

अत्र च सम्प्रदायानुसारेण व्यवस्था, येषां तु तत्र कालविशेषो नोक्तः तेषां विकल्प एव । तत्र तत्र पूर्वकालासम्भवेऽप्युत्तरोत्तरो ग्राह्यः ।

ज्योतिःशास्त्रे ।

मृदु-ध्रुव-चर-क्षिप्र-भेष्वेषामुदयेऽपि वा ।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च ॥

मृद्वादीनि नक्षत्राणि जातकर्मकाले प्रदर्शितानि । केन्द्रशब्दार्थः प्राशाद्याधारणकाले दर्शितः ।

इति नामकरणकालः ।

---

## अथ निष्क्रमणकालः ।

तत्र वाराहपुराणे ।

द्वादशेऽहनि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।

शङ्ख-लिखितौ ।

अत ऊर्द्धं तृतीये मासि निष्क्रमणिका ।

याज्ञवल्क्य-बृहस्पती ।

मासे चतुर्थे कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।

तत्र किं कार्य्यमित्याकाङ्क्षायामाह लौगाक्षिः ।

तृतीये चन्द्रमासे दर्शनमादित्यस्य ।

यमः ।

ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनं ।

विष्णुः ।

चतुर्थे मासादित्यस्य दर्शनं।

शङ्खः।

चतुर्थे मासि कर्त्तव्यं बालस्यादित्यदर्शनं।

यमः।

चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम्।

अत्रापि स्वगृह्यानुसारेण व्यवस्था। येषान्तु गृह्ये कालविशेषो न श्रूयते तैः सर्वे एते काला विकल्पेनोपादेयाः। तत्रापि पूर्वकालासम्भवे सत्युत्तरकालग्रहणम्।

इति निष्क्रमणकालः॥

---

## अथान्नप्राशनकालः।

तत्र विष्णु-सोम-शङ्ख-वृहस्पति-याज्ञवल्क्याः।

षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले।

यमः।

ततोऽन्नप्राशनं मासि षष्ठे कार्य्यं यथाविधि।

अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले॥

लौगाक्षिः।

षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा पूर्णे वा संवत्सरे प्राशनमर्द्धसंवत्सर इत्येके।

अत्रापि नामकरणवत्स्वगृह्यानुसारेण व्यवस्था वेदितव्या।

इत्यन्नप्राशनकालः।

## अथ कर्णवेधकालः।

ज्योतिःशास्त्रे।

कार्त्तिके पौषमाघे वा चैत्रे फाल्गुनकेऽपि वा।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने॥
पुंनक्षत्रे शुभे चन्द्रे सुखे शीर्षोदयेऽपि वा।
दिनच्छिद्र-व्यतीपात-विष्टि-वैधृतिवर्जिते।
शिशोरजातदन्तस्य मातुरुत्सङ्गवर्त्तिनः।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया॥ इति।

हस्ताश्विनी-स्वाति-पुनर्वसौ च
तिष्येन्दु-चित्रा-हरि-रेवतीषु।
चन्द्रेऽनुकूले गुरु-शुक्रवारे
कर्णौ तु वेध्यावमरेज्यलग्ने॥

'अमरेज्यः' वृहस्पतिः।

तथा।

पुष्येऽनुराधा श्रवणे च मैत्रे
पौष्णादितौ लाब्दवसावसार्के।
शुध्यन्ति वेधाद्विरजो भवन्ति
नो पीड्यते जातु शिशुः कदाचित्॥
शुभ्यत्यर्कदिने श्रुतं प्रशमति खादार्द्रता कर्णयोः
सौरे बन्धुविभिन्नता श्रवणयोः षष्ठे सुते पुष्यति।

इति कर्णवेधकालः॥

---

## अथ चूडाकर्म्मकालः।

तत्र सोमः।

संवत्सरे चूडाकरणं।

विष्णुः।

तृतीयेऽब्दे चूडाकरणं।

लौगाक्षिः।

तृतीयवर्षस्य भूयिष्ठे गते चूडां कारयेत्।

बृहस्पतिः।

चूडाकर्म्म त्रिवार्षिके।

बैजवापः।

त्रिवर्षे चूडाकरणम्।

पारस्करः।

संवत्सरस्य चूडाकरणं तृतीये वाऽप्रतिहते।

मनुः।

चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

आश्वलायनसूत्रे।

संवत्सरे चूडाकर्म्म तृतीये वा वर्षे।

यमः।

ततः संवत्सरे पूर्णे चूडाकर्म्म विधीयते।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

शङ्ख-लिखितौ।

तृतीये वर्षे चूड़ाकर्म पञ्चमेऽपि वा ।

शङ्ख-याज्ञवल्क्यौ ।

चूड़ाकर्म यथाकुलं ।

आश्वलायनगृह्ये ।

तृतीये वर्षे चौलं यथाकुलधर्मं वा ।

लौगाक्षिः ।

शुक्लपक्षस्य पुण्याहे पर्वणि वा चूड़ाकरणम् ।

वैजवापगृह्ये ।

उदगयने आपूर्य्यमाणपक्षे पुण्याहे चूड़ाकर्म ।

आश्वलायनगृह्ये ।

उदगयने आपूर्य्यमाणपक्षे कल्याणे नक्षत्रे चूड़ाकर्म ।

आपस्तम्बः ।

जन्मावधि तृतीये वर्षे चौलं पुनर्वसाविति ।

[illegible] ।

आश्विनं श्रवणं स्वाती चित्रा पुष्य-पुनर्वसू ।
धनिष्ठा-रेवती-ज्येष्ठा-मृग-हस्तेषु कारयेत् ।
वार-नक्षत्रयोगेषु शुभेषु करणेषु च ॥
हस्तात्रयं मृगशिरः श्रवणत्रयञ्च
पुष्याश्विनी-च-शुभभानि पुनर्वसौ च ।
क्षौरे तु कर्म्मणि सिताम्बुदक्षके च
शुक्लानि चोडुपतिना यदि सत्यतारा ॥

विषयविशेषः वर्षे नक्षत्रे ज्ञेयः ।

तथाच ज्योतिःशास्त्रे।

नृपाज्ञया ब्राह्मणसम्मते च
बन्धस्य मोक्षे क्रतु-दीक्षणे च।
विवाहकाले मृत-सूतके च
सर्व्वेषु शस्तं क्षुरकर्म्म तेषु॥

'तेषु' नक्षत्रेषु।

इति चूड़ाकरणकालः॥

---

## अथ चूड़ाकर्म्मनिषिद्धकालः।

व्यासः।

नक्षत्रे न तु कुर्व्वीत यस्मिन् जातो भवेन्नरः।
न प्रोष्ठपदयोः कार्य्यं नैवाग्नेयेषु भारत।
दारुणेषु च सर्व्वेषु दुष्टतारन्तु वर्जयेत्॥
वारं शनैश्चरादित्य-भौमानां रात्रिमेव च।
तिथिं प्रतिपदं रिक्तां विष्टिञ्चैव विवर्जयेत्॥

इति चूड़ाकर्मनिषिद्धकालः।

---

## अथ विद्यारम्भकालः।

तत्र मार्कण्डेयः।

प्राप्ते तु पञ्चमे वर्षे अप्रसुप्ते जनार्दने।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीं॥

रिक्तां पञ्चदशीञ्चैव सौरि-भौमदिनं तथा।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत्॥
पूजयित्वा हरिं लक्ष्मीं देवीं चापि सरस्वतीम्।
स्वविद्यासूत्रकारांश्च स्वां विद्याञ्च विशेषतः॥
ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत्।
अष्टमीद्वितयं चैव पक्षान्ते च दिनत्रयं॥
आशौच इन्द्रयात्रायां भूकम्पे राहुदर्शने।
अतीते चाप्यहोरात्रमुल्कापाते तथैव च॥ इति।

इति विद्यारम्भकालः।

---

## अथोपनयनकालः।

अथ लौगाक्षिः।

सप्तमे वर्षे ब्राह्मणस्योपनयनं, नवमे राजन्यस्यैकादशे वैश्यस्य।

बौधायनः।

गर्भादिसंख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेत्, तदधिकेषु च राजन्यं, तस्मादधिकेषु च वैश्यं।

शङ्ख-लिखितौ।

गर्भाष्टमे ब्राह्मणमुपनयेत् राजन्यमेकादशे द्वादशे वैश्यम्।

पैठीनसिः।

गर्भपञ्चमे ब्राह्मणमुपनयेत् गर्भाष्टमे वा, गर्भैकादशे राजन्यं गर्भद्वादशे वैश्यं गर्भषोडशे वा।

देवलः।

प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे उपनयनार्हो भवति।

मनु-शंखौ।

गर्भाष्टमेषु कुर्वन्ति ब्राह्मणस्योपनायनं।
एकादशे क्षत्रियस्य वैश्यस्य द्वादशे स्मृतं॥

विष्णुः।

गर्भाष्टमाब्दे कुर्वीत ब्राह्मणस्योपनायनं।
गर्भैकादशे राज्ञो गर्भस्य द्वादशे विशः॥

विश्वामित्र-याज्ञवल्क्यौ।

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनं।
राज्ञामेकादशे सैके विशामेके यथाकुलं॥

उपनयनं ब्राह्मणस्य गर्भग्रहणादारभ्य जन्मतो वाष्टमे वर्षे कार्य्यं, एकेन सह वर्त्तते इति सैकं तस्मिन्नेकादशे द्वादश इत्यर्थः, एके त्वाचार्या मन्यन्ते, यथाकुलं उपनयनं कार्यमित्यर्थः, अन्ये त्वेवं व्याचक्षते, कुलस्थित्या गर्भाष्टमादिष्ववस्थां केचिन्मन्यन्ते, अत्र केचिदुपनायन-शब्देनैवोपनयनमभिधीयत इत्याहुः, तदयुक्तं, उपनयनविषयप्रयो-जकव्यापारस्योपनायनशब्दवाच्यत्वात् अव्यवधाने कारणाभावात्।

अत एवाह बुधः।

गर्भाष्टमे वर्षे वसन्ते ब्राह्मणो आत्मानमुपनाययेत। एकादशे क्षत्रियो ग्रीष्मे द्वादशे वैश्योवर्षासु। तस्मादुपनायनादुपनयनमपि विधीयते।

बृहस्पतिः।

गर्भाष्टमेऽब्दे विप्रस्य क्षत्रस्यैकादशे तथा ।
वैश्यस्य द्वादशे वर्षे कार्यं मौञ्जीनिबन्धनं ॥

उपनयनं प्रकृत्य शङ्ख-लिखितौ ।

द्विजातीनां वसन्तो ग्रीष्मः शरद्दितिकालः ।

वसन्तोग्रीष्मः शरद्दिति ऋतवोवर्णानुपूर्व्येण ।

आपस्तम्बः ।

वसन्ते ब्राह्मणमुपनयेत् ग्रीष्मे राजन्यं शरदि वैश्यं ।

तथा माघादयः पञ्च मासा उपनयने ग्राह्याः ।

तथाच ज्योतिःशास्त्रे ।

माघादिषु तु मासेषु मौञ्जी पञ्चसु शस्यते ।

एतच्च वर्णत्रयसाधारणं, तत्र युक्तं, तथैव ।

चातुर्वेदस्तः शुभदोऽग्रजानां
ग्रीष्मोनृपाणाञ्च शरद्विशाञ्च ।
व्रतस्य बन्धे यदिवाखिलानां
माघादयः पञ्च भवन्ति मासाः ॥

एतच्च सर्ववर्णेषु चातुर्विध्यं ।

अत उक्तं रत्नकोशे ।

यदि मासविशेषेण सर्वस्येष्टस्य पुष्कल ।
उपनीतस्य विप्रस्य श्रवणं मृत्युरेव च ॥

यजुःशाखिनां वर्त्तत एवोपनयनं पुनर्वसुनक्षत्रं नियमार्थेता-
दित्युक्तं ।

धर्मभाष्ये ।

वैश्ये वैशाखे वसन्ते च ।

तथाच श्रुतिः ।

मधुश्च माधवश्च वासन्तिकावृतू यदा मीन-मेषयोर्वसन्तः ।

तथाच ज्योतिःशास्त्रे ।

मृगादिराशिद्वयभानुभोगात्
षडर्त्तवः स्युः शिशिरो वसन्तः ।
ग्रीष्मश्च वर्षा च शरच्च तद्वत्
हेमन्तनामा कथितोऽत्र षष्ठः ॥

'मृगः' मकरः ।

बौधायनः ।

मीन-मेषयोर्मेष-वृषभयोर्वा वसन्तः ।

काम्योपनयनकालमाह गौतमः ।

नवमे पञ्चमे वा काम्यं गर्भादिसङ्ख्या वर्षाणां ।

एतच्च ब्राह्मणविषयं ।

यदाहाङ्गिराः ।

ब्रह्मवर्चसकामस्य पञ्चमेऽब्देऽप्यजन्मनः ।
आयुःकामस्य नवमे कार्यं मौञ्जीनिबन्धनं ॥

मनुः ।

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।

क्षत्रिय-वैश्ययोस्तु काम्योपनयनकालमाहाङ्गिराः ।

षष्ठे तथा द्वादशे च राज्ञो वृद्धिबलायुषोः ।
ईहायुषोस्तु वैश्यस्य अष्टमे च चतुर्दशे ॥

'ईहा' इच्छादिविषयचेष्टा । अत्र पूर्वोक्तेष्व क्रम आदरणीयः । तथाच मनुः ।

राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ।

आपस्तम्बः ।

अथ काम्याः, सप्तमे ब्रह्मवर्चसकामं, अष्टमे आयुःकामं, नवमे तेजःकामं, दशमे अन्नाद्यकामं, एकादशे इन्द्रियकामं, द्वादशे पशु-कामं, एतच्च वर्णत्रयसाधारणं तदुपनयनानन्तरमस्य विधानादित्युक्तं तद्भाष्ये । तदयुक्तं । ब्रह्मवर्चसकामस्येत्यादिपूर्वप्रदर्शितमन्वङ्गिर-सोर्वचनविरोधात्तस्मात् आद्यविधिद्वयमत्र ब्राह्मणविषयमुत्तरन्तु वि-धिचतुष्टयं बाधकाभावाद्वर्णत्रयसाधारणमिति द्रष्टव्यं ।

ज्योतिःशास्त्रे ।

हस्तत्रये पुष्य-धनिष्ठयोश्च
पौष्णाश्वि-सौम्यादिति-विष्णुभेषु ।
शस्ते तिथौ चन्द्रबलेन युक्ते
कार्यौ द्विजानां व्रतबन्ध-मोक्षौ ॥

गुरुर्भृगुसुतो भूमिपुत्रः शशधरात्मजः ।
स्युरेते ऋग्यजुःसामाथर्वणामधिपाः क्रमात् ॥
शाखाधिपे बलिनि केन्द्रगते तु मौञ्जी-
बन्धस्तदीयदिवसेऽथ शुभाशये च ।
अस्मिन् बलेन रहिते तु गुणैर्द्विजानां
आदर्शवच्चरति प्रवदन्ति तज्ज्ञाः ॥

केन्द्रशब्दो व्याख्यातः प्रागादावारम्भकालनिरूपणे ।

एतच्चं शुभतिथौ व्रतबन्धराशिबलेन स्यात् द्विजानां मौञ्जी-बन्धः स्वरभवेदमत्र क्रियाहीनः(१) ।

भवेत्क्रूरैर्ग्रहैः पापः पाण्डु-यक्ष्मामयान्वितः ।
मूर्खः शुक्रादिभोगेषु क्रमेणोदयवर्त्तिषु ॥
षट्कर्मकृत्प्रवरधीः सुरराज्यपुण्यः
स्वाध्यायितो भृगुसुतेऽतिसुखी धनी च ।
त्वध्यापकः शशिसुते रविजेऽन्यसेवी
राजोपजीव्यहिमरोचिषि कर्कटस्थे ॥
शस्त्राजीवी निपुणोवैश्यवृत्तिस्तु जायते ।
कण्टकस्थायिनि चौरीलग्ने व्रतबन्धने ॥
गुरौ केन्द्रे गते शुक्रे नव-पञ्चमवर्त्तिनि ।
चन्द्र-शुक्रांशगे सर्व्वे सर्व्ववेदी भवेन्नरः ॥
सप्तांशगे क्षत्रोविषयात् साधाज्ञवेगुरुद्रोही ।
विद्यार्थी शौचसंयुक्तः षष्ठेऽष्टमगे वसुः शशिनि ॥
जीवे सार्के निर्गुणो वित्तहीनः
क्रूरः सौरेश्चान्यगश्चापि सौम्यः ।
भानोः पुत्रे नाभावः स्या-
त्कुजेन्दुः सौम्यवत्सर्व्वदा मे(२) ॥

रत्नकोषे ।

---

(१) एतच्च इत्यादिः क्रियाहीन इत्यन्तः पाठः सर्व्वेष्वस्मत्सङ्गृहीतादर्श-पुस्तकेषु एकजातीय एव वर्त्तते परन्त्वयं सर्व्वांशे न परिशुद्धः ।

(२) सप्तांशग इत्यादिः सर्व्वदा मे इत्यन्तः पाठः आदर्शपुस्तकानाम-परिशुद्धत्वेन न सम्यक् परिशोधितः ।

नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।
कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे ॥

राशेः प्रथमभागस्थितः सूर्य्यः 'निरंशः' ।

चयोदशीचतुष्कञ्च सप्तम्यादिचयं तथा ।
चतुर्थी काकिनी प्रोक्ता अष्टावेते गलग्रहाः ॥

इत्युपनयनविहित-निषेधकालौ ।

---

## अथोपनयनगौणकालाः ।

तत्र मनुः ।

आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥

आङ्त्वमभिविधौ ।

आह व्यासः ।

औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिपरोऽन्यः स्याच्चतुर्विंशतिमः परः ॥

अवन्तिमिहिरोऽपि ।

छन्दःसुपदाक्षरवदथ समुदाय उपनयनं ।

ब्राह्मणस्य गायत्र्योपनयनं तस्याश्चैकस्मिन् पादेऽष्टाक्षराणि

एवं च समुदाये षोडशे वर्षे पूर्णे उपनयनं ।

एतच्चाभिविधौ उपपद्यते ।

अस्याप्यतिक्रमे पातित्यं यत्तदाह यमः ।

सावित्रीपतिता व्रात्याः परिहार्य्याः प्रयत्नतः ।

याज्ञवल्क्यः।

आ षोड़शाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्म-क्षत्र-विशां काल उपनायनिकः परः॥
अत ऊर्द्ध्वं पतन्त्येते सर्व्वधर्म्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृताः क्रमात्॥

शङ्ख-लिखितौ।

आ षोड़शाद्ब्राह्मणस्यानतीतः कालो भवति आ द्वाविंशाद्राजन्यस्य आ चतुर्विंशाद्वैश्यस्यातो निष्क्रान्तकालाः पतन्तीति श्रुतिः। पूर्व्वपूर्व्वोक्तरकालातिक्रमेषु पतिता भवन्ति व्रात्याः।

मनुः।

षोड़शाब्दानि विप्रस्य राजन्यस्य द्विविंशतिः।
विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता।
नातिवर्त्तेत सावित्री अत ऊर्द्ध्वं निवर्त्तते॥
विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्याः सर्व्वधर्म्मबहिष्कृताः॥

गौतमः।

आ षोड़शाद्ब्राह्मणस्य नात्ययः आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाच्च वैश्यस्य।

बौधायनः।

आ षोड़शाद्द्वाविंशाच्चतुर्विंशादनत्ययः।

पैठीनसिः।

द्वाविंश-षोड़श-चतुर्विंशतिवत्सरातीता विहस्तकाला भवन्ति।

ब्राह्मण-क्षत्रियविशाम्भेदकालो व्याख्यातः ।

यमः ।

आ षोड़शात् तथा वर्षाद्ब्राह्मणस्याकृतात्मनः ।
सावित्री नातिवर्त्तेत अत ऊर्द्ध्वं निवर्त्तते ॥
आ द्वाविंशात् क्षत्रियस्य त्रिष्टुप्छन्दो निवर्त्तते ।
अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥

इत्युपनयनगौणकालः ।

---

## अथानध्यायनिर्णयः ।

तत्रानध्यायाध्ययने दोषमाह लिखितः ।

छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितम् ॥
तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशोबलम् ।
सर्वमादाय गच्छन्ति वर्जयन्तीप्सितं फलम् ॥

मनुः ।

छिद्रेष्वेवावतिष्ठन्ति ये केचित्पुरुषादयः ।
तपस्त्रां घ्नन्ति तद्ब्रह्म ब्राह्मणस्याल्पमेधसः ॥
तत्काले तस्य रक्षांसि श्रियं ब्रह्म यशोबलं ।
सर्वमादाय गच्छन्ति येऽनध्यायेष्वधीयते ॥

हारीतः ।

छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ।

विंघन्ति राक्षसास्तेषु तस्मादेतानि वर्जयेत् ॥

विष्णुः ।

यस्मादनध्यायादधीतवेदमाप्नं न फलप्रदम् तथानध्यायेऽध्ययने-नायुषः परिक्षयो गुरु-शिष्ययोश्च तस्मादनध्यायान् वर्जयेत् ।

इन्द्र-नारदसंवादे ।

अनध्यायेष्वधीयानान् ब्रह्म किं न हनिष्यसि ।
असुरास्ते दुरात्मानो ब्रह्मघ्ना ब्रह्मदूषकाः ॥
अनध्यायेष्वधीयन्ते न ते यान्ति स्ववैदिकं ।
मृताः स्वर्गं न गच्छन्ति किं नारद न ते हताः ॥

यमः ।

छिद्राण्येतानि द्विजातीनां अनध्यायान् मनीषिणः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितं ॥
आयुः प्रजां पशून्मेधां कृतमित्यकृतञ्च तत् ।
अनध्यायेष्वभ्यसता तेन ब्रह्म हतन्तथा ॥

तथा ।

अनध्यायेष्वध्ययने प्रज्ञामायुः प्रजां स्त्रियः ।
ब्रह्म वीर्यं श्रियन्तेजो निहन्तति यमः स्वयं ॥
मन्त्रवीर्यक्षयभयादिन्द्रो वज्रेण हन्ति च ।
ब्रह्मराक्षसतां याति नरत्वं न पुनर्भवेत् ॥
आयुरस्य निकृन्तामि प्रजां मेधां हराम्यहं ।
य उच्छिष्टाः प्रवदन्ति स्वाध्यायान् वाप्यधीयते ॥
अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।

घ्नन्ति पञ्चदश्यौ नेषां तस्मात् पर्वाणि वर्जयेत् ॥
प्रजापतौ हि तिष्ठन्ति सर्वा विद्याः सुपर्वसु ।
तस्माद्धर्मार्थकामो वा नैताः पर्वसु कीर्त्तयेत् ॥

मनुः ।

अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्द्दशी ।
ब्रह्माष्टमी-पौर्णमास्यौ तस्मात्ताः परिवर्जयेत् ॥

गौतमः ।

अमावास्यायामहोरात्रं त्र्यहं वा यदा द्वे अमावास्ये तदा त्र्यह-मनध्यायः ।

हारीतः ।

प्रतिपत्सु चतुर्द्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्यायेऽद्य शर्व्वर्यां नाधीयीत कथञ्चन ॥

स्मृत्यन्तरे च ।

श्वोऽनध्याये अद्य रात्रावनध्यायः एकानध्याययुग्मेषु तत्पररात्रे नानध्यायः अनध्याययुग्मात् पूर्वदिवात्पररात्रे चेत्येके ।

पारस्करः ।

वाते अमावास्यायामिति ।

सर्वानध्याये शुचिप्रमित्यनुवृत्तौ याज्ञवल्क्यः ।

पञ्चदश्यां चतुर्द्दश्यां अष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य वा ॥

'राहुसूतके' चन्द्र-सूर्य्योपरागे ।

अत्र च त्रिरात्रकालिकाहोरात्राणां विकल्पः ।

तथाच मनुः।

प्रतिगृह्य द्विजोविद्वानेकोद्दिष्टस्य केतनं।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञोराहोश्च सूतके॥
यावदेकोद्दिष्टस्यगन्धोलेपश्च तिष्ठति।
विप्रस्य विदुषोदेहे तावद्ब्रह्म न कीर्त्तयेत्॥

धूप-चन्दन-गन्धादि यावत्तिष्ठति तावदनध्यायः, 'केतनं' निमन्त्रणं, एकमुद्दिश्य एकोद्दिष्टं।

शङ्खः।

उपाध्याये राजनि च श्रोत्रिये च मृते सब्रह्मचारिणि चन्द्रार्कयोः राहुदर्शने शक्रध्वजप्रपतने आचार्ये च मृते त्रिरात्रं।

गौतमः।

आकालिकनिर्घात-भूकम्प-राहुदर्शनोल्कापातेषु ऋतुसन्धिषु प्रत्यास्तमिते अहमनध्यायमाहुः।

'ऋतुसन्धिषु' ऋतूनां वसन्तादीनां सन्धिषु प्रतिपत्सु।

तथाच रामायणे रामं प्रति हनुमद्वाक्यं।

या स्वभावेन तन्वङ्गी त्वद्वियोगाच्च कर्षिता।
प्रतिपत्पाठशीलस्य विद्येव तनुताङ्गता॥

लोकगौतमः।

प्रदोषे च चतुर्दश्यां नाध्येयं प्रतिपत्सु च।
अमावास्याष्टकायुक्ते सन्ध्ययोरुभयोरपि।
अमावास्याप्रतिपदि क्षिप्रं विद्या प्रणश्यति॥

अन्हयोः सन्धिः 'आह्निकं', तद्युक्तं प्रतिग्रहं भुक्तिमनध्याय इत्यर्थः।[१]

तथाच वशिष्ठः ।

प्रत्यान्याप्यपि चाश्नाति भक्त्वा यथान्यच्चाह्निकं भवेत् ।
प्रतिग्रहेऽप्यनध्यायः पाण्यास्याः ब्राह्मणाः स्मृताः ॥

एतच्चैकोद्दिष्टव्यतिरिक्तविषयं तत्र पूर्वोदाहृतमनुवचनेन त्रिरात्रविधानात् ।

गौतमः ।

आह्निमामकालिकं भोक्तृणां प्रतिगृहीतॄणां च अशनाद्यआहू-योगे च ततश्चाकालिकाहोरात्रयोर्विकल्पः ।

स्मृत्यन्तरे ।

नवश्राद्धभुक्तौ तु अन्नजरणपर्यन्तं ।

मनुः ।

प्राणि वा यदि वाप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत् ।
तदालभ्याप्यनध्यायः पाण्यास्या हि द्विजाः स्मृताः ॥

हारीतः ।

पञ्चदश्यां चतुर्दश्यामष्टकासु महोत्सवे ।
प्रदोषे च त्रयोदश्यामष्टम्यां प्रतिपद्यपि ॥

पुराणात् ।

नैधाकामस्त्रयोदश्यां चतुर्थ्यांचैव सर्वदा ।
समग्रवान्तु प्रदोषे तु न स्मरेन्नापि कीर्त्तयेत् ॥

---

(१) अत्राह्निकशब्दव्याख्यानेन पूर्वं आह्निकशब्दघटितः कश्चित् पाठः पतितः प्रतिभाति ।

प्रजापतिः।

षष्ठी च द्वादशी चैव अर्द्धरात्रोनताडिकाः।
प्रदोषे न त्वधीयीत तृतीया नवनाडिकाः॥

अर्द्धरात्रघटिकायां नेत्यर्थः। नवनाडिका निशायामिति शेषं।
प्रदोषे' निशाप्रथमप्रहरे।

गौतमः।

निशायां चतुर्मुहूर्त्तं।

एतच्च चयोदशीविषयं।

तथाचोशनाः।

चयोदश्यां प्रथमांश्चतुर्थामान् नाधीयीतेति।

दक्षः।

प्रदोषपश्चिमौ यामौ वेदाभ्यासरतो नयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते॥

आपस्तम्बः।

श्रावण्यां पौर्णमास्यां अध्यायमुपाकृत्य मासम्प्रदोषे नाधीयीतेति।

उदयेऽस्तमये वापि मुहूर्त्तत्त्रयगामि यत्।
भेदितं तदहोरात्रं अनध्यायविदोविदुरिति॥

शास्त्रविषयमेतत्।

दिनार्द्धेकमुहूर्त्तं वा या तिथिः क्षयगामिनी।
त्रिमुहूर्त्ताधिका ज्ञेया या तिथिर्वृद्धिगामिनी।
नक्तं तिथिवदृष्याख्यं विपरीतमथोद्वये॥

इति वचनात्।

केचिदाहुः क्वचिद्देशे यावल्लेदितनाडिकाः ।
तावदेव त्वनध्यायोन तस्मिन्नदिनान्तरे ॥
उपवास-व्रतादीनां तिथीनाहुस्तथैव ते ।
चतुर्थ्यां पूर्वरात्रेषु नवनाडिषु दर्शने ॥
नाध्येयं पूर्वरात्रे स्यात् सप्तमी च त्रयोदशी ।
अर्द्धरात्रात्परं स्याच्चेदध्येयं पूर्वरात्रके ॥

नाधीयीतेत्यनुषङ्गो शङ्कः ।

अष्टम्यां प्रदोष इति ।

पैठीनसिः ।

शुक्लचतुर्दश्यां सर्वासु चाष्टमीषु नक्तमनध्यायोऽष्टकावर्ज्जं ।

पुराणात् ।

महानवमी द्वादशी च माघमासस्य सप्तमी ।
अपठन्तं तथा कृष्ण ध्रुवं विद्या विनाशयेत् ॥

नृसिंहपुराणात् ।

महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाक्षयतृतीयायां शिष्यं नाध्यापयेद्बुधः ।
माघमासे तु सप्तम्यां रथाख्यायान्तु वर्जयेत् ॥

'महानवमी' अश्वयुक्शुक्लपक्षस्य । 'महाद्वादशी' कार्त्तिकशुक्लपक्षस्य ।

स्मृत्यन्तरे ।

भाद्रपदे मघा-भरण्योरनध्यायः वक्ष्यमाणयोरेकादशी-द्वादश्योश्च आषाढी-कार्त्तिकी-फाल्गुनीचमीपञ्चद्वितीयासु च अपरपक्षान्ते तथा द्वितीयायां च ।

माघीचीतेत्यनुहत्तौ गौतमः।

कार्त्तिकी-फाल्गुन्याषाढीपौर्णमासीप्रभृतिभिरात्रमित्यर्थः[१]।

अष्टकाशब्देनाष्टकाकर्माङ्गभूतसप्तम्यादिभिरात्रमुपलक्ष्यते।

अथाष्टकां मघान्तामेवानध्यायनिमित्तामेवाह्नः।

पैठीनसिः।

प्रौष्ठप्रभृतयः कृष्णे भवास्तिस्रोऽष्टका मार्गशिरःप्रभृतय इत्येके।

शौनकस्तु।

हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्याह।

मनुः।

अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु।

नारदीये।

अयने विषुवे चैव शयने बोधने हरेः।

अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु॥

मन्वादयो युगादयश्च तन्निर्णये दर्शिताः।

निशाद्वयं दिवा रात्रौ संक्रमे दिवसद्वयं।

अनध्यायं प्रकुर्वीत यावत्सोपपदा तिथिः॥

तथा।

सिता ज्येष्ठे द्वितीया तु आश्विने दशमी सिता।

चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः॥

अहरित्यनुहत्तौ याज्ञवल्क्यः।

---

(१) ईदृशव्याख्यानेन पूर्व्वं गौतमोक्तः पाठः लिपिकरप्रमादात् पतितः इत्यनुमीयते।

उपाकर्म्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते इति ।

स्मृत्यन्तरे ।

वेदसमापने प्रथमसन्ध्यासु तदहोरात्रं परेद्युरनध्यायः, द्वितीयादिसन्ध्यासु तु द्युनिशं काण्डोपक्रमणे वामादेवस्य काण्डसमापने वापिढकस्य मनुष्यप्रकृतीनाञ्च देवानां यजुर्भुक्तेऽत्येकपर्युषितेऽस्वाध्यायेऽरात्रं समासेन वानध्यायेन, तथौषधिवनस्पतिमूलफलैर्यस्काण्डमुपायं कुर्वीत यस्य वानुवाक्यं कुर्वीत न तदहरधीयीतोपाकरण-समापनयोश्च ।

मनुः ।

यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ।
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतमिति ॥

उभयतोदिवसा रात्रिः पक्षिणी, एतेषां पक्षाणां स्वगृह्यानुसारेण व्यवस्था ।

मनुः ।

विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥

एतेषु विद्युदादिषु प्रत्येकमाकालिकं निमित्तकालादारभ्य अपरेद्युर्यावत् स एव कालस्तावदनध्याय इत्यर्थः । अत्र विद्युदादिषये वर्षाभ्योऽन्यत्र सन्ध्याकालेऽनध्यायः ।

यदाह स एव ।

एतानभ्युदितान् विद्यात् यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायं अनृतौ चाभ्रदर्शने ॥

'प्रादुष्करणं' विहरणं, तेन न सन्ध्याकालव्यवस्था ।

आकालिकेत्यनुवृत्तौ गौतमः ।

स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु उल्कायां च सर्वदाकालिक एवानध्यायः ।

यदाहापस्तम्बः ।

उल्कायामभ्युत्पाते च सर्वासां विद्यानामाकालिकः ।

मनुः ।

चौरैरुपद्रुते ग्रामे संभ्रमे चाग्निकारिते ।
आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च ॥

'अद्भुतेषु' रुधिरवर्षेषु ।

यथाह वशिष्ठः ।

दिक्पर्वतानां दाहाखेदभङ्गप्रपातेषूपल-रुधिर-पांशुवर्षेष्वाकालिकं । एतत् प्रबलपांशुविषयम् ।

याज्ञवल्क्यवचनन्त्वाकालिकानध्यायप्रतिपादकमल्पपांशुविषयं ।

स्मृत्यन्तरे ।

अभ्युत्पाते चाकालवृष्टौ चाकालिकोऽनध्यायः ।

शङ्खः ।

निर्घात-भूमिकम्पोल्कापात-दिग्दाह-पांशु-शोणित-मांसास्थि-क-सदधिजाज-गौरवर्षेषु स्वस्त्ययनं कृत्वाभ्यञ्जनाकृष्टवान्सममदुःखप्रदर्शनेष्वेकोद्दिष्टसूतकमृतकेष्वायं प्रायश्चित्तं कृत्वा ब्राह्मणगमनेष्वादौ निदत्वानुज्ञाप्याधीयीरन् ।

विद्युदादिषयोगपद्ये तु त्र्यहमनध्यायः ।

तथाच त्रिरात्रमित्यनुवृत्तौ गौतमः ।

वर्षविद्युत्स्तनयित्नुसन्निपात इति ।

एतद्वर्षाकालादन्यत्र ।

यदाह्वापस्तम्बः ।

विद्युत्स्तनयित्नुवृष्टिस्वपर्त्तौ यत्र सन्निपातेषु त्र्यहमनध्यायः यावद्भूमिर्व्युदकेत्येके[१] एकेन द्वाभ्यां चैतेषामाकालम् ।

अत्र भरद्वाजोऽपि ।

अभ्युत्पाते पांशुवर्षे ग्रामेऽनध्ययनं भवेत् ।

आकालिकं त्रिरात्रन्तु सविद्युत्स्तनयित्नुके ॥

पैठीनसिः ।

एकादशाहं भुक्त्वा रात्राविन्द्रधनुर्दृष्ट्वा वज्रपतनादाचार्यमरणात् सूर्याचन्द्रमसोरुपप्लवात्केतुदर्शन-निर्घात-भूमिचलनोदकेष्वेकस्मिन् त्रिरात्रं । श्रोत्रियमरणे सन्ध्यास्तमिते करकापतने नीलशोणित-प्रादुर्भावे च ।

यदा तु वर्षास्वेव सन्ध्यायां विद्युत्स्तनितञ्च तदा सज्योतिर-नध्यायः ।

तथाच मनुः ।

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने ।

सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥

प्रातःसन्ध्यायां निमित्तोत्पादे सज्योतिर्यावत्सूर्यस्तावद्देवानध्या-

---

(१) यावद्भूमिरनुदकेत्येक इति ख० ।

योर्दिवैवेत्यर्थः । अपरस्यां तु यावन्नक्षत्राणि तावदेव। 'शेषे' वृष्टौ, यथा दिवानध्यायस्तथा रात्रावपीत्यर्थः ।

हारीतः स्तनिते विशेषमाह ।

सायंसन्ध्यास्तनिते रात्रौ नाधीयीरन्, प्रातःसन्ध्यास्तनिते तदहोरात्रम् ।

आपस्तम्बः ।

सन्धौ घनस्तनिते रात्रौ स्वप्नपर्यन्तं विद्युत्सुषसि यावता वा कृष्णा रोहिणी वा सर्पते शम्याप्रासाद्विजानीयादेतस्मिन् काले विद्योतमानायां सप्रदोषमहरनध्यायोऽह्नोऽपररात्रे स्तनयित्नुनार्द्धरात्रादित्येके गवाश्वावरोधा इति ।

'सन्धौ' अहोरात्रसन्धिलक्षितकाले, 'घनस्तनिते' मेघध्वाने, रात्रिमनन्तरां नाधीयीत 'स्वप्नपर्य्यन्तं' स्वप्नान्तं यावत्, अन्येद्युरुत्थानादित्यर्थः । 'उषसि' उषस्यपररात्रे, 'विद्योतमानायां विद्युति', अथवा शम्याख्यप्रासपरिमिते देशे स्थिता गौः कृष्णा लोहिता वा सर्पते यदा तदा प्रदोषसहितमहरनध्यायोऽह्नोऽपररात्रे स्तनयित्नुना गर्जितेन निमित्तेन सप्रदोषमहरनध्याय इत्यर्थः(१) ।

निर्घातादिषु वर्षास्वाकालिकोऽनध्यायो मनुनोक्तः ।

निर्घाते भूमिचलने ज्योतिषां चोपसर्जने ।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥

---

(१) आपस्तम्बग्रन्थादुद्धृतः पाठः तद्व्याख्यापाठश्च आदर्शपुस्तक एव मुद्रितः, परन्त्वयं न सम्यक् परिस्फुटत्वेन प्रतिभाति ।

'निर्घातः' आन्तरिक्षोध्वनिविशेषः, 'ज्योतिषामुपसर्जनं' सूर्या-चन्द्रमसोः परिवेषः, ग्रहयुद्धादि वा ।

याज्ञवल्क्यः ।

सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥

'द्युनिशं' अहोरात्रं । ततश्चाकालिकाहोरात्रयोश्च विकल्पः ।

यत्तु मनुवचनं ।

शक्रध्वजनिपाते च उल्कापाते तथैव च ।
अनध्यायस्त्रिरात्रन्तु भूमिकम्पे तथैवच ॥ इति ।

तदुल्का-विद्युतोः सहभावे वेदितव्यं, उल्का-विद्युत्समासे त्रिरात्रं, "कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने । एतौ वर्ज्यावनध्यायावध्या-यज्ञाः प्रचक्षते" ॥ कर्णमन्तरेण श्रवणासम्भवादतिशयोऽत्र विवक्षितः, दिवा वातसमूहन इति वा पाठः ।

याज्ञवल्क्यः ।

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरु-बन्धुषु ।

गुरुरत्राचार्यो न मुख्यः तत्र दशाहविधानात्, "त्रिरात्रमाहु-राशौचं आचार्ये संस्थिते सति"। बन्धवोऽत्रासपिण्डा ग्राह्याः सपिण्डेषु दशाहविधानात् ।

शिष्यर्त्विगादिषु वसिष्ठेनाहोरात्रमुक्तं ।

आचार्यपुत्रशिष्यभार्यास्वहोरात्रमृत्विगयोनिसम्बन्धेषु ।

'अयोनिसम्बन्धाः' मातुलादयः ।

अहोरात्रमित्यनुवृत्तौ गोभिलः ।

सब्रह्मचारिणि प्रेते प्रेते भूमिपताविति ।

अत्यन्तरे प्रवासनुगमनपरिचरणेषु चकोरप्रवदर्शने चाहोरात्रं।

यमः ।

न गर्जिते नास्तमिते तथा चटचटायिते ।
न चन्द्रार्कोपरागे तु न राजव्यसने तथा ।
समानविद्ये च मृते तथा सब्रह्मचारिणि ॥

श्वादीनामध्येतृमध्यगमनेन गौतमेनानध्ययनमुक्तं ।

अन्तरा गमने पुनरुपसदनं नकुलसर्प-मण्डूक-मार्जाराणां त्र्यह-मुपवासो विप्रस्य प्राणायामो घृतप्राशनं चेतरेषां श्मशानाध्ययने चैवं येन केनचिदन्तरा गमने कृते उपसदनं कार्यं ।

'उपसदनं' पाणिना पाणिमुपसंगृह्येत्यादिना यत्प्रत्यहं विहितं पुनस्तदेव कार्यं, मार्जारान्तरागमने शिष्योपाध्याययोस्त्र्यहमुपवासाः सहवासौ भवतोऽपि चिरात्रमेव ।

तथाच हारीतः ।

श्व-गोमायु-मार्जार-सर्प-नकुल-मूषिकानुष्ठानावेतेषामेवाधीया-नानामन्तरा गमने चिरात्रमुपवासः त्र्यहञ्च विनिवसेदित्युक्तत्वात् ।
तथाच त्र्यहमनध्यायः ।

त्र्यहमुपवासासमर्थे तु वसिष्ठ आह ।

मार्जार-नकुल-व्याघ्राणां त्र्यहोरात्रमनाभोजनमिति प्रकृत उप-वासः मार्जारान्तरगमने घृतं प्राश्य त्र्यहमुपवसेत् ।

आपस्तम्बः चाण्डालादिश्रवणे त्र्यहमनध्ययनमाह ।

चण्डाल-श्वपाक-प्रयस्य च नरमासाम् अनध्याय इत्यनुवर्त्तते ।

हस्तिव्याघ्रयोरन्तरा गमने संवत्सरमनध्याय इत्याह स एव।

यदि हस्ती संवत्सरो व्याघ्रस्तथैव च।

याज्ञवल्क्यः।

पश्वादिगमनेनाहोरात्रमनध्ययनमाह।

पशु-मण्डूक-नकुल-श्वाहि-मार्जार-मूषकैः।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये॥

शक्रपातोच्छ्रयकालश्च पूर्वं दर्शितः।

पुराणात्।

माघि भाद्रपदे राजन् शक्रयष्टिप्रवर्त्तनं।
उत्थापनं प्रविष्टं यत् तदानध्याय उच्यते॥

मनुः।

पशु-मण्डूक-मार्जार-श्व-सर्प-नकुलाखुभिः।
अन्तरा गमने विद्यादनध्यायमहर्निशं॥

अन्ये त्वाहुः।

काकोलूक-कुक्कुट-मूषक-मण्डूकाद्यन्तरागमने सति दिवहितयं दिवान्ते रात्रौ चेद्राव्यन्तमनध्यायः। शूद्र-मूषक-सर्प-नकुलादौ अहोरात्रं श्व-मार्जारयोश्च, प्रथमाध्ययने तु श्व-नकुल-सर्प-मण्डूक-मार्जाराणां त्र्यहमुपवासो विप्रवासश्च। आरण्यमार्जार-सर्प-नकुल-पञ्चमजात्यादौ त्रिरात्रं। खर-वाराहोष्ट्रादिचण्डालादिसूतिकोदक्योत्सवादौ मासं। अवि-गवयाजादिव्याघ्र-नास्तिकादौ त्रिमासं। गज-गण्ड-सारस-सिंह-व्याघ्र-महापापि-कृतघ्नादेश्चाब्दमनध्यायः, स्वाध्यायस्य प्रवचने प्रवर्त्तमानेऽन्तरा गतौ व्याधि-व्याधि-मृत्यु-विघ्न-

पापानि गुरु-शिष्ययोः।

स्मृत्यन्तरे।

सर्वकुत्सितगन्धे च परिवाते सभासु च।

अभ्यक्ते स्नानकाले च मध्यमेदेऽतिकम्पने॥

गो-विप्ररोधने सर्वरात्रेषु आतुरपङ्क्तिषु।

शाल्मलस्य मधूकस्य कोविदार-कपित्थयोः।

श्लेष्मातकस्य च्छायायाञ्चेति तात्कालिकान् विदुः॥

याज्ञवल्क्यः।

श्व-क्रोष्टु-गर्दभोलूक-साम-वाणार्त्तनिस्वने।

अमेध्यशवशूद्रान्त्यश्मशानपतिताग्निके॥

देशे शुचावात्मनि च विद्युत्स्तनितसंप्लवे।

भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते॥

पांशुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु।

धावतः पूतिगन्धे च शिष्टे च गृहमागते॥

खरोष्ट्र-यान-हस्त्यश्व-नौ-वृक्षेरिणरोहणे।

सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः॥

श्वादीनां शब्दे श्रूयमाणे तावत्कालमनध्यायः, 'क्रोष्टा' गोमायुः,

सामशब्दे तु ऋग्यजुषोरनध्यायः।

तदाह यमः।

सामशब्देनर्ग्-यजुषी .मारुते वाति वायति।

मनुरपि।

सामध्वनौ ऋग्यजुषी नाधीयीत कदाचन।

अथ हेतुमाह ।

ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः ।

सामवेदः स्मृतः पित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥

अङ्गिराः ।

अग्न्यानिकानां देवानां सामवेदेन नित्यशः ।

क्रियते यजनं यस्मात् तस्मात् तस्याशुचिर्ध्वनिः ॥

अर्थवादमात्रमेतत् ।

तदाह स एव ।

यस्मात् ध्वनिरमूर्त्तोऽयं मुख्यार्थो नैव विद्यते ।

तस्य तस्मान्निदानमात्रं प्रोक्तमिदमर्थवादेन निदानं प्रतिषेध-निमित्तमात्रं ।

एवमृगादिनिस्वने साम्नामनध्यायः ।

तथाचापस्तम्बः ।

शाखान्तरध्वनौ च साम्नामनध्यायः ।

'वाणः' वीणाविशेषः । 'आर्त्तः' दुःखितः ।

मनुरपि ।

नीहारे वाणशब्दे च सन्ध्ययोरुभयोरपि ।

'नीहारे' धूमिकायां ।

गौतमः ।

वाण-भेरी-मृदङ्ग-गर्दार्त्तशब्देषु ।

'गर्दः' शकटं ।

अनध्यायानुवृत्तौ बौधायनः ।

नृत्य-गीत-वादित्र-रुदितशब्देषु तावन्तं कालमार्त्ते च।

गोभिलः।

गीत-वादित्ररुदितानि वा तेषु तत्तत्कालं।

आपस्तम्बः।

श्व-गर्द्दभनादाः सालावृक-हस्ति-काकोलूकशब्दाः सर्व्ववादित्र-शब्दा रोदन-गीतसामशब्दाश्च एतेषु तत्कालमनध्यायः।

शल्येत्यादीनां 'अन्तिके' समीपे, 'अन्त्याः' शूद्रनिकृष्टाः।

विष्णुरपि।

न शूद्र-पतितयोः समीपे न देवायतने श्मशाने चतुष्पथे शुष्को-ऽर्द्धकाले पीठोपहतपादोनाचान्तो न विरक्तोनाजीर्णः।

प्रचेताः।

चतुष्पथ-महापथसंक्रमोद्यानेषु न देवसमीपेऽधीयीत।

मनुः।

नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि च।
वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च॥

'अन्तः' समीपं, 'मैथुनं वासः' येन सह मैथुनमाचरितं तद्वासः परिधायेत्यर्थः, एतदनिर्णिक्तवासोविषयं।

अतएव यमः।

वाससापि ह्यनिर्णिक्ते मैथुनाचरिते सदा।

वशिष्ठः।

मैथुनव्यपेतायां शय्यायां वाससा मैथुनव्यपेतेनानिर्णिक्तेन ग्रामा-न्तरे छर्दितस्य छर्दिते सद्योरात्रमनध्यायः।

गौतमः ।

सकल्योपाचित-वेदसमाप्ति-च्छर्दि-श्राद्ध-मनुष्ययज्ञ-भोजनेष्वहोरात्रं। अभ्युत्पातः 'उपाचितः', 'मनुष्ययज्ञः' याचादिनिमित्तं ग्राम-भोजनं। मनुष्यप्रसूतीनाञ्च शुभौ चाहोरात्रं स्वप्नान्तमित्येके ।

घृतं प्राश्य नाधीयीतेत्यापस्तम्बः ।

छर्दयित्वा स्वप्नान्ते सर्पिर्वा प्राश्य ।

'स्वप्नान्तं' ओदयादित्यर्थः ।

मनुः ।

नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च।
धर्मनैपुण्यकामानां पूतिगन्धेषु सर्वतः॥

ये गृहीतविद्यास्ते धर्मनैपुण्यकामाः, इतरे विद्यानैपुण्यकामाः तेषां ग्रामेऽध्ययनं विरुद्धं।

अतएव वसिष्ठः ।

नगरे तु कामं गोमयपर्युषिते परिलिखिते वेति ।

अतएव मनुराह .

अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो रुद्यमाने समवाये जनस्य च ॥

'वृषलः' अधार्मिकः "न शूद्रजनसन्निधाविति शूद्रसन्निधानेऽध्ययनस्य तेनैव निषिद्धत्वात् ।

वसिष्ठोऽपि ।

सन्ध्यास्वाशौचे दिवाकीर्त्यमन्त इति ।

'दिवाकीर्त्यमन्ते' चाण्डालग्रामे नाधीयीतेत्यर्थः ।

गौतमः।

नित्यमेके नगरे।

प्रचेताः।

चतुष्पथ-महापथेषु राजोद्यानेषु न देवसमीपेऽधीयीत।

गौतमः।

श्मशान-ग्राम-महापथाशौचेष्विति।

श्मशाने तु विशेषमाहापस्तम्बः।

श्मशाने सर्वतः शम्याप्रासात् ग्रामेणाध्यवसिते क्षेत्रेण वा नान-ध्यायोऽज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत। श्मशानवत् शूद्र-पतितौ समानागार इत्येके। शूद्रायान्तु प्रेक्षण-प्रतिप्रेक्षणयो-रेवानध्यायः। तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने विद्युत्-स्तनयित्नुसंप्लवे।

न वृक्षस्थो न तीर्थस्थो नाप्सु नौषु सभासु च।
बहुसंकीर्णमध्ये च नाधीयीत कदाचन॥

शङ्खः।

नाधीयीताभियुक्तोऽपि यानगो न च गोगतः।
देवायतन-वल्मीक-श्मशान-वनसन्निधौ॥

मनुः।

नाधीयीताश्वमारूढ़ो न वृक्षं न च हस्तिनं।
न नावं न खरं नोष्ट्रं नेरिणस्थोन यानगः॥
शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकां।
नाधीयीतामिषञ्जग्ध्वा सूतकाद्यन्नमेव च॥

न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

'ईरिणं' ऊषरं । 'प्रौढ़पादः' अवसक्थिका-जान्वोर्मध्यस्य च वस्त्रादिना वेष्टनं । 'भुक्तमात्रे' यावदार्द्रपाणिरित्यर्थः ।

उदके तु न धर्मार्थं जपनिषेधः किं तर्हि अपूर्वग्रहणार्थं, एते त्वादरार्थाः, नान्येष्वनध्यायेषु मानसाभ्यनुज्ञेति केचित् । अपरे तु मानसमपीच्छन्ति ।

तथाच बौधायनः ।

अन्येषु चाद्भुतोत्पातेष्वनध्यायोऽन्यत्र मानसात् ।

'मानसः' विजन-मरणयोरनध्यायः ।

मनुः ।

उदके मध्यरात्रौ च विण्मूत्रे परिवर्जयेत् ।
उच्छिष्टः श्राद्धभुक्तौ च मनसापि न चिन्तयेत् ॥

गौतमः ।

ऊर्द्धं भोजनादुत्सवे प्राधीतस्य च उत्सवे उपनयनादूर्ध्वं भोजनादहोरात्रमनध्यायः ।

'प्राधीतस्य' अध्ययने प्रथमं प्रवृत्तस्य, भोजनादूर्द्धमनुत्सवेऽपि पूर्ववदनध्यायः ।

स्मृत्यन्तरे ।

शोभनस्तदे शोभनदिवसे वानध्यायः विवाह-मौञ्जीबन्धन-प्रतिष्ठोद्यापनादिषु मार्जनसंमार्ष्टिः सपिण्ड-सगोत्राणामनध्यायः । यज्ञे चानुबन्धात् ऋत्विजामाचार्याणाञ्च ।

मनुः।

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा।

श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेत् द्विजः॥

यमः।

शिवारुतं तथा श्रुत्वा सन्ध्ययोर्न द्विजोत्तमः।

नापराह्णे न मध्याह्ने नार्द्धरात्रे कदाचन॥

शिष्टे च गृहमागते तदनुज्ञावधिरनध्यायः।

तथाच यमः।

आगतञ्चातिथिं दृष्ट्वा नाधीयीतेव बुद्धिमान्।

अभ्यनुज्ञापिते तस्मिन्नध्येयं तु प्रयत्नतः॥

मनुः.

अतिथिञ्चाननुज्ञाप्य मारुते वाति वायति।

रुधिरे च श्रुते गात्रात् शस्त्रेण च परिक्षते॥

ब्राह्मणागमनेऽर्थादीनि दत्त्वाभ्यनुज्ञाप्याधीयीरन्।

आपस्तम्बः।

ब्रह्म श्रोष्यमाणो मलवद्वाससेच्छन् सम्भाषितुं संयतोऽध्येतुर्ब्राह्मणान् सम्भाष्यतया सम्भाषेत सम्भाषित्वा ब्राह्मणे नैव सम्भाष्याधीयीत, तथा श्रोत्रियाद्यागमेऽधिजिगांसमानोऽधीयानोवानुज्ञाप्याधीयीताध्यापयेद्वा गुरुसन्निधौ वाधीहि भो इत्युक्तोऽधीयीताध्यापयेद्वोभयतः उपसंग्रहणमधिजिगांसमानस्याधीत्य वाधीयानेषु वा यत्रान्योव्यपेयादेतमेव शब्दमुत्सृज्याधीयीत।

तथामृतावस्यदर्शनेऽप्यनध्यायमाह।

गौतमः ।

अभ्रदर्शने चापर्त्ताविति ।

'अभ्रं' जलधरोमेघः ।

यमः ।

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदार-कपित्थयोः ॥

यत्तु मनुनोक्तं ।

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः ॥ इति ।

तद्ब्रह्मयज्ञाध्ययनविषयं ।

तथाच ब्रह्मयज्ञं प्रकृत्य तैत्तिरीयकाः समामनन्ति ।

तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश-इति ।

अतएव मनुरपि ।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

'वेदोपकरणानि' अङ्गानि, 'नित्यस्वाध्यायः' ब्रह्मयज्ञसम्बन्धी, होममन्त्रग्रहणं वषिट्कारादिमन्त्राणामप्युपलक्षणं ।

नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रन्तु तत् स्मृतं ।
ब्रह्माहुतिहुतिं पुण्यमनध्यायवषट्कृतं ।
अपूर्वग्रहणार्थे चानध्यायो न तु कर्मणि ॥

प्रयोगपारिजातेऽपि ।

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च।
नानध्यायोभवेद्देवं ग्रहणे चाह यो स्मृतः[१] ॥ इति।

पुराणात्।

शिष्योऽध्ययनञ्च कुर्वन्ननध्यायान् विवर्जयेत्।
अध्यापनञ्चापि कुर्वन् अनध्यायान् विवर्जयेत् ॥

मनुः।

इमान्नित्यमनध्यायानधीयानो विवर्जयेत्।
अध्यापनञ्च कुर्वाणः शिष्याणां विधिपूर्वकं ॥

तथा।

प्रणवव्याहृतीनाञ्च सावित्र्याः शिरसः सदा।
नित्ये नैमित्तिके कार्य्ये व्रते यज्ञे क्रतौ तथा ॥
प्रक्रान्ते कामकार्य्ये च नानध्यायाः स्मृतास्तथा।
देवतार्च्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥

तथा।

चतुर्द्दश्यष्टमी-पर्व-प्रतिपत्स्वेव सर्वदा।
दुर्मेधसामनध्यायस्त्वन्तरा गमनेषु च।
तच विस्मृतिशीलानां बहुवेदप्रपाठिनां ॥
चतुर्द्दश्यष्टमी-पर्व-प्रतिपद्वर्जितेषु च।
वेदाङ्ग-न्याय-मीमांसा-धर्मशास्त्राणि चाभ्यसेत् ॥

गौतमः।

प्रतिविद्यं यावत्समामनन्ति तथा चतुष्पथे भोजनोत्तरकालं

(१) "ग्रहणे चाह यो स्मृतः" इत्ययं पाठः न समीचीनो विभाति।

छन्दोगानामनध्यायः, तथाच प्राग्भोजनीयात् प्रादादधीयारण्य-गेयानि ।

आपस्तम्बः ।

यथोक्तमन्यदप्यपरिषत्स्वपि ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसकल-विद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये अनध्यायकालनिर्णयः ।

---

## अथ केशान्तकर्मकालः।

तत्र याज्ञवल्क्यः।

केशान्तश्चैव षोड़शे।

'केशान्तः' गोदानाख्यं कर्म, एतच्च ब्राह्मणविषयं।

यदाह मनुः।

केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥

ज्योतिःशास्त्रे।

यान्युक्तानि चौरेषु भानि तान्येव कृताकरणे।
उपनयने गोदाने केशान्ते च प्रशस्तानि॥

इति केशान्तकर्मकालः।

---

## अथ ब्रह्मचर्य्यकालविधिः।

तत्रापस्तम्बः।

उपेतस्याचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि पादो-नमर्द्धेन त्रिभिर्वा द्वादशावरार्द्धं न ब्रह्मचारिणोवरोपवासोऽस्ति। त्रिभिः पादैरूनं द्वादशवर्षाणीत्यर्थः, एतच्चाशक्तविषयं।

यदाह देवलः।

अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदव्रतचर्य्यामातिष्ठेत अशक्तश्चेत् षट्त्रिंशद्वार्षिकीं चतुर्विंशतिवार्षिकीं चेति।

एतत्प्रतिवेदविषयं।

यदाह यमः।

चरेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥

बौधायनोऽपि ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यमाचरेत्, चतुर्विंशति द्वादश वा प्रतिवेदं संवत्सरार्द्धं वा प्रतिग्रहणाद्वा जीवितस्यास्थिरत्वात् कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ।

पैठीनसिः ।

द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्यञ्चरेत् प्रतिद्वादशं वा सर्वेषु ग्रहणान्ते वा ।

शङ्ख-लिखितौ ।

द्वादश द्वादशवर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावत् ब्रह्मचर्यमाचरेत् ।

मनुः ।

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतं ।
तदर्द्धिकं पादिकं वापि ग्रहणान्तिकमेव वा ॥

अस्यार्थः ।

त्रैविद्यं ऋग्यजुःसामाख्यवेदत्रयविषयं, तत् षट्त्रिंशदाब्दिकं कार्य्यमेव प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्यमित्युक्तं भवति, अर्द्धिकपक्षे प्रतिवेदं षड्वर्षाणि, पादिकपक्षे तु त्रीण्येव ।

याज्ञवल्क्यः ।

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।

ग्रहणान्तिकमित्येके ।

इति ब्रह्मचर्यकालनिर्णयः ।

## अथ समावर्त्तनकालः।

तत्र दक्षः।

स्वीकरोति यदा वेदं धत्ते वेदव्रतानि च।
ब्रह्मचारी भवेत्तावत्ततः पश्चाद्गृही भवेत्॥

वेदस्वीकरणं वेदार्थविचारस्याप्युपलक्षणं।

तथाच स्मृत्यन्तरे।

वेदमधीत्य छन्दोविषयानर्थान् बुद्ध्वा स्नायात्।

तथाच व्यासः।

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुं।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति॥
यथा पशुर्भारवाही न तस्य लभते फलं।
द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते॥
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत्।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा॥
योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत्।
स सान्वयः पशुसमः[१] पात्रतां न प्रपद्यते॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः।
स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानचिह्नितः।
श्रुतहीनधनः सोऽपि यजेतामुत्र तद्व्रजेत्॥

तथा।

ज्ञानं कर्म च संयुक्तं मनुना कथितं यथा।

---

(१) खरसमः इति ख०।

अधीतं व्रतसंयुक्तं तथा श्रेष्ठं न केवलं ॥
पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
ऋक्पादमप्यधीत्यान्तर्न्यायतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

एतत्समर्थविषयं एकैकसमाप्तावपि स्नानविधानात् ।

तच्च हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्या-व्रतस्नातकश्चेति ।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः, यस्तु समाप्य व्रतानि असमाप्य वेदं स व्रतस्नातकः, यः पुनरुभयं समाप्य स विद्या-व्रतस्नातकः ।

याज्ञवल्क्यः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

आपस्तम्बस्त्वाचार्यास्त्येके[१] तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्याव्रतेन चेत्येके, आधानाद्युपरिष्टात्पञ्चविषयमुदकमुपस्पृश्य नग्निपक्षाङ्गिरस्नायोगस्नानावसितिकः संवत्सरमेतद्व्रतञ्चरेत् एतदष्टाचत्वारिंशत्सम्मितमित्याचक्षते ।

व्यासः ।

गुरुशुश्रूषया विद्यां समाप्य विधिवत् द्विजः ।

(१) पाठोऽयं न समीचीनो विभाति ।

52-3

स्नायीत तदनुज्ञातो दत्त्वाऽस्मै दक्षिणां हि गां ॥

गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञातस्य स्नानमिति ।

विद्यान्ते गुरुरर्थेन हेतुना 'निमन्त्र्यः' प्रष्टव्यः, कोऽर्थस्तुभ्यन्दातव्यः इति पृष्टः स खलु यं ब्रूयात्तमर्थमाचार्याय दत्त्वा स्नायाद्गुरुणा तदनुज्ञया वेत्यर्थः ।

बुधोऽपि ।

गुरुणानुज्ञातः स्नायादिति ।

इति समावर्त्तनकालः ।

---

## अथाश्रमकालनिर्णयः ।

तत्र ।

चतुर्णामाश्रमाणां समुच्चयो विकल्पश्च तत्र समुच्चयं प्रकृत्य मनुराह ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रनिषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिं ॥

'गृहस्थप्रभवाः' तदुपजीविनः । 'क्रमश' इति प्रातिलोम्यं निषिद्धं ।

तथाच दक्षः ।

त्रयाणामानुलोम्यन्तु प्रातिलोम्यन्न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।

न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥

तेन मृतभार्य्येण पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यं, तत्र च ब्रह्मचारि-गृहाश्रमशब्दावुत्तरोत्तराश्रमिणः पूर्व्वपूर्व्वाश्रमाना-श्रयणप्रतिपादनपरौ, अन्यथा "प्रातिलोम्यं न विद्यते" इति वचन-मविवक्षितं स्यात् ।

कूर्म्मपुराणे ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थोयतिस्तथा ।

क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥

वानप्रस्थाश्रमङ्गत्वा न गृहं प्रविशेत्पुनः ।

न सन्यासी वने वासं ब्रह्मचर्य्यञ्च साधकः ॥

पुराणात् ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।

अप्रमत्तो द्विजातेन मार्गाः पुच कुवर्त्मना ॥

आपस्तम्बः।

चत्वार आश्रमा गार्हस्थमाचार्य्यकुलवासः संन्यासोवानप्रस्थमिति। तेषु सर्व्वेषु यथोपदेशमव्यग्रोवर्त्तमान आश्रमं गच्छति, तेषु सर्व्वेषु वर्त्तमान इति समुच्चयोदर्शितः ।

जावालश्रुतिश्च चतुर्णां त्रयाणां द्वयोर्वा समुच्चय इत्याह ।

ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति ।

समुच्चये कालविशेषाकाङ्क्षायामाह मनुः ।

चतुर्थमायुषोभागमुषित्वा सगुरोर्द्विजः ।

द्वितीयमायुषोभागं क्षतदारोवसेद्गृहे ॥
वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषोभागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥

"शतायुर्वै पुरुष इति श्रुत्याभिहितमायुषश्चतुर्थोभागः पञ्चविंशतिवर्षाणि ।

गौतमस्तु विकल्पमाह ।

तस्याश्रमविकल्पमेके ब्रुवते ।

अयन्तु विकल्पोव्रतचर्याश्रमव्यतिरिक्तविषयः ।

वशिष्ठः ।

चत्वार आश्रमा ब्रह्मचारी गृहस्थोवानप्रस्थः परिव्राजकस्तेषां वेदमधीत्य वेदौ वेदान् वा विशीर्णब्रह्मचर्यमिच्छेत्तमाविशेत् ।

वेदान् वेदौ वेति पक्षौ फलभूयस्त्वमभिप्रेत्य, वेदमधीत्याविप्लुतब्रह्मचर्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तं 'आविशेत्' आश्रयेत्तत्रैव निष्ठां यायादित्यर्थः ।

वामनपुराणे ।

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्सङ्कल्पपूर्वकम् ॥
वैखानसोवाथ भवेत्परिव्राड्थ वेच्छया ।
गुरवे तु वरं दत्त्वा यायाद्गुर्वनुमोदितः ।
गृहं वनं वोपवसेद्व्रजेद्वापि द्विजोत्तमः ॥

उशनाः ।

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं ।

आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥

अयञ्च विकल्पः समुच्चयानुष्ठानरहितानां वेदितव्यः ।

इत्याश्रमकालनिर्णयः ।

---

## अथोद्वाहविकल्पः ।

तत्र वृहस्पतिः ।

वेदानधीत्य विधिना समावृत्तोऽप्लुतव्रतः ।

समानामुद्वहेत्पत्नीं यशः-शील-वयो-गुणैः ॥

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ।

अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥

गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणां ।

सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥

वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।

अविशीर्णब्रह्मचर्यो दारान् कुर्वीत धर्मतः ॥

अत्र नैष्ठिकानन्तरं शङ्ख-लिखितौ ।

अथानुज्ञातो गुरुणाद्युपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादि-
नोद्वाहेन ।

दक्षः ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।

ब्रह्मचारी भवेत्तावदूर्द्ध्वं स्नातोगृही भवेत् ॥

अनधीत्य द्विजोवेदान् स्नात्वोद्वाह्य यथा तथा ।

अधीते ब्रह्मचर्येण यावद्वेदं गुरोर्गृहे ॥

युग्मेऽब्दे सम्पदा विद्या-धर्म-कामायुषां सदा ।
भर्त्तुरिष्टाभवत्योजे वर्षे कन्या लसंशयम् ॥
माघमासे भवेदूढ़ा कन्या सौभाग्यसंयुता ।
फाल्गुनोढ़ा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् ॥
धर्मयुक्ता भवेज्ज्यैष्ठे धनिनी कार्त्तिके भवेत् ।
देवपूजारता नित्यं मासे स्यात् सोमदैवते ॥
उक्तवर्ज्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि ।
विवाहं कन्यका या स्यात् सुत-सौभाग्यवर्जिता ॥
सितपक्षे तु यशसा प्रकाशयति सा कुलम् ।
कन्योढ़ा लसिताद्ये च अशेषे चेन्निदर्शना[१] ॥

तथा ।

शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणं ।

वशिष्ठः ।

आपूर्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु ।
इतरेषां तु वर्णानां कृष्णपक्षे विधीयते ॥

व्यासः ।

उपायनोपरिक्तासु तिथिषु स्यादमर्हिता ।
दुर्भगा चेति शेषासु सुत-सौभाग्यसंयुता ॥

तथा ।

कल्याणभाविता प्रीतिः सौभाग्यं धनसंचयः ।

---

(१) पाठोऽयं आदर्शपुस्तकेषूपलब्धः परन्त्वयं न समीचीनः ।

सुखार्थी बहुविज्ञानि शौच-सौख्यप्रकीर्त्तयः ॥
शोकामयौ सुदः सौख्यं भाग्यमेवात्मजादयः ।
उपद्रवाः पूर्णफलं प्रोक्ते प्रतिपदादयः ॥

तथा ।

गुरु-शुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तुश्चित्तानुसारिणी ॥
अर्क-तत्पुत्र-भौमानां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥
अष्टवर्गगतोऽनिष्टस्थानप्राप्तग्रहप्रदः ।
यदा तदा तद्दिवसे विवाहो न प्रशस्यते ॥
यस्य दिवसे प्रोक्तं ग्रहस्य सदसत्फलं ।
तदशेषं तदीयायां होरायामपि निर्दिशेत् ॥
प्रशस्तं जन्मताराश्च केचिदाहुस्तथापरे ।
द्वितारं जन्मनक्षत्रे त्यक्ता शेषां[1] फलप्रदं ॥
अर्कादीनां दिने युक्तं यत्फलं तद्विलग्नगे ।
तद्वर्गेऽपि भवेत्कालं होरायान्तु विशेषतः ॥
आदित्याद्यन्यवारेषु चतोरर्कादिनस्य च ।
यथाहोऽधिपतिस्तस्य वदन्तीति महर्षयः ॥
दिवसे फलमेतेषां यथवे यदिहोदितं ।
तस्मात्सर्वयत्नाद्देषु यद्देवाविकलं भवेत् ॥

---

(१) त्यक्ता शेषां इत्ययं पाठो न समीचीनः ।

तिर्य्यक्पञ्चोर्द्धगाः पञ्च रेखे द्वे द्वे च कोणगे।
शङ्करेखादिभिर्न्यस्य भानि तत्र प्रदक्षिणं॥
कृत्तिकादीनि यत्रस्मिन्नेकराशिस्थितं ग्रहं।
नक्षत्रमन्तुना विद्धं विवाहे स्यादशोभनं॥

तथा।

मैत्रं पित्र्यं तथा वैश्वं ब्रह्म-नैर्ऋतदैवतं।
अहिर्बुध्न्यार्य्यमा वापि पौष्ण-धातृ-निशाकराः॥

तथा।

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च।
षड्भागशेषेष्वन्येषु नक्षत्रेषु न शस्यते।
रेवत्यर्द्धचतुर्भागे विवाहः प्राणनाशनः।
स्वाम्यजेषु त्रिषु सदा पाणिग्रहणमिष्यते॥

तथा।

हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती।
रोहिणी सौम्य-मैत्रञ्च शुभं पाणिग्रहे सदा॥
त्यजेद्विषुवतं यत्नाद्व्यतीपातायनं तथा।
उत्पातदूषितञ्चर्क्षं वैधृतिञ्च विशेषतः॥

वात्स्यः।

सावित्र्यानिलसंयुक्तान् मुहूर्त्तानपि निर्द्दिशेत्।
समानदैवतैस्तुल्यं नक्षत्रैः फलमादिशेत्॥
मुहूर्त्तेष्वभिजिद्दर्शं शुद्धाहे कालचिन्तकः।
अष्टमो दिवसस्यैव योऽभिजित्संज्ञितः क्षणः॥

स ब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः ।
उपग्रहोदयाद्यैश्च पापैस्तैर्न हि बध्यते ॥

तथा ।

वैवाहिकर्क्षदैवत्यमुहूर्त्तेष्वपि जायते ।
पाणिग्रहः कुमारीणामभीष्टार्थफलप्रदः ॥

वैधव्यन्दिनबान्धवस्य जगतीसूनोरपत्यक्षयः
सौम्यस्यार्थपरिच्युतिः सुरगुरोर्दास्यं तथा दुःखिता
प्राव्रज्यं भृगुनन्दिनः सुतिरपि त्यागश्च सौरेः पुन-
र्नारीणां गणिकात्वमेव तमसः केतोश्च वैधाद्वधः ॥

सारावल्यां ।

सर्वेऽप्यनुकूलाः शशि-सूर्यौ नैव गोचरविशुद्धौ ।
अप्यूढा शक्रधूर्य्यमस्य धनदस्य वा कुलटा ॥

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।
वर्जयेत्सर्वकर्माणि व्रत-स्वाध्ययनानि वा ॥

गुरौ न जन्माष्टमगे विवाहः
शनैश्चरे जन्मगते तथैव ।
न चाष्टमे मीनकरे च कुर्याद्-
रवौ वराक्षेधनगे प्रयत्नात् ॥

ग्रहणद्वयमध्यस्थं ग्रहणादौ सप्तरात्रमपि हन्तं ।
यात्रा-विवाहसमयं मनसापि न चिन्तयेत् प्राज्ञः ॥

व्रतबन्धं द्विजातीनां उद्वाहं सुन्दरीषु च ।
गुरावस्तमिते नित्यं न कुर्याद्भार्गवे तथा ॥

विवाहमपि नेच्छन्ति मुनयः काश्यपादयः ।
यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः ।
तथा सिंहगते जीवे विवाहे बादरायणः ॥

वशिष्ठः ।

विवाहे व्रतबन्धे च यात्रायां व्रतकर्मणि ।
गुरावस्तमिते शुक्रे आतस्य परिणीयते ॥
गुरुर्नष्टः पतिं हन्याच्छुक्रोनष्टस्तु कन्यकां ।
चन्द्रे नष्ट उभौ हन्ति विवाहे तौ विवर्जयेत् ॥
पश्चादभ्युदितोबालो दशाहं प्राग्दिनचयं ।
पचं वृद्धस्तु पूर्व्वेण पञ्चाहं पश्चिमे सितः ॥
विचित्तमुपयाति नाशमन्त-प्रतापौ दक्षिणे त्वयने ।

वराहः ।

देशाचारस्तावदादौ विचिन्त्यो-
देशे देशे या स्थितिः सैव कार्या ।
लोके दुष्टं पण्डिता वर्जयन्ति
दैवज्ञोऽलोकमार्गेण यायात् ॥
वृहस्पतौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः ।
रवौ शुभस्थे च वदन्ति गौडाः
न गोचरोमालवके प्रमाणं ॥
गौडाः सूर्यबलं प्राहुर्दाक्षिणात्या गुरोर्बलं ।
मालवा लग्नमिच्छन्ति लाटानां स्थानमन्वयं ॥

ताराबलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः ।
तथोत्तरामौकुलवन्तिकष्टाः
माण्डव्य-तिक्तौर-तुषारकेषु ॥
ग्रहर्क्ष-योगास्तिथि-वार-योगाः
शुभाशुभा ये कथिताः प्रभूताः ।
वङ्गेषु तत्प्रोक्तफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः ॥

सारावल्यां ।

षष्ठोविलग्नाद्रविरष्टमो वा
भागो मुहूर्त्ता यदि युज्यते च ।
सूर्येन्दु-ताराबलसम्प्रयुक्ता
गोधूलिका सर्वफलप्रदायी ॥

लग्नशुद्धिर्यदा न स्याद्यौवनन्तु प्रशस्यते ।
तदा तु सर्ववर्णानां कालोगोधूलिकः स्मृतः ॥
राशिर्न ज्ञायते यस्य नापि लग्नस्य निश्चयः ।
लग्ने सूर्यबली यस्मिन् तत्र सर्वं प्रशस्यते ॥
सौरस्त्वेकबलोज्ञेयो माहेयोद्विबलः स्मृतः ।
त्रिबलस्तु बुधोज्ञेयश्चतुर्गुणबलोगुरुः ॥
शुक्रः पञ्चबलोज्ञेयश्चन्द्रः षड्बल उच्यते ।
सर्वग्रहबलैर्नित्यं तुल्य एवं दिवाकरः ॥
यात्रा विवाहकालेषु कार्येषु विविधेषु च ।

यत्र सूर्य्यबलं नास्ति नास्ति सर्वं ततोबलं ॥
पुंसामर्कः स्मृतो योनिर्योषितामस्तद्युतिः।
अतोनृ-योषितोराप्तं बलं चन्द्र-प्रभाकृतं ॥
यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ।
दोषास्तत्र प्रलीयन्ते यदि स्युः सर्वतोऽपगाः ॥
नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥
द्वादश-दशम-चतुर्थे जन्मनि षष्ठाष्टमे हतीये च।
प्राप्ता पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥
सिंहे च भगदैवत्ये गुरौ पुत्रवती भवेत्।
अत्यन्तसुभगा साध्वी धन-धान्य-पतिप्रिया ॥

वात्स्यायनः।

पक्ष-तिथि-क्षण-करण-लग्नेन्द्वर्क-लग्न-ताराभ्यः।
पाणिग्रहणे योज्यास्तत्त्वविदेकादशपदार्थाः ॥

विवाहकर्म नेच्छन्ति प्रसुप्ते शार्ङ्गधन्वनि।
एतावच्च गतानान्तु माण्डव्याद्या महर्षयः ॥

सिंहस्थिते सुरगुरावधिमासके च
ज्येष्ठे तथाद्यतनुजस्य तथा सुतायाः।
कुर्वीत नार्क-गुरुनीचगयोर्विलग्न-
जन्मक्षयोश्च निखिलान्यपि मङ्गलानि ॥

रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात्।
भौमेन म्रियते चोरैः शुक्रे पापं समाचरेत् ॥

रङ्गनिपुणा सौम्ये त्यक्तलज्जा रतिप्रिया ।
पतिमन्यं भजेत् क्षिप्रं केतुचन्द्रमसाश्रिते ॥
गुरुचन्द्रस आश्रिते तिष्ठेद्यदि चलान्वितः ।
धन-सौभाग्य-पुत्राश्च लभते नाच संशयः ॥
मणि-मुक्ता-प्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुमता श्रिष्टा गुरुणा यदि वीक्ष्यते ॥
सा तु भर्त्तुः प्रिया नित्यं बुधे चन्द्रेऽथ सप्तमे ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
दृष्टे चन्द्रे च भौमे च न कुर्य्याद् याभिभाषणं[१] ।
वन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥

वशिष्ठः ।

मरणं चाप्यसन्तोषं दास्यं दौःशील्यमेव च ।
चन्द्रयोगे ग्रहाः कुर्य्यूरवि-रक्तार्कि-भार्गवाः ॥
नैपुण्यं कुलपूज्यत्वं पौंश्चल्यं व्याधिमेव च ।
बुध-जीवयुताः कुर्युः कर्म्मश्चैव यथाक्रमात् ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा ग्रहणैः सहितः पुनः ।
दारिद्र्यं मरणं वापि कन्यायाः कुरुते ध्रुवं ॥
प्रजात्यन्यजने नारी नैरिकावरभूषिता ।
विदेशं वा व्रजेच्चन्द्रः सौम्यैश्चैव युतः शशी ॥
लग्नानां मिथुनः श्रेष्ठस्ततः कन्या ततस्तुला ।
तथा मेषविलग्नाद्या विवाहे मध्यमाः स्मृताः ॥

(१) न कुर्य्यादाभिभाषणमिति क० ।

अन्ये द्विचतुरादीनामंशा ग्राह्या मनीषिभिः ।
युग्म-कन्या-तुलायान्तु न स्वांशो न परांशकः ॥
सुहृदः सौम्यषड्वर्गाः स्वसौम्यनिरीक्षितः ।
यो वा विवाहकालेषु प्रवेशे शुभकर्मणि ॥
शाश्वतं कुरुते जारं शुक्र-जीवसमागमे ।
जीव-भास्करयोः ख्यातं मतस्थं कुरुते पतिं ॥
देवेश-सौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा ।
करोति तस्करं जारं कन्या नैवात्र संशयः ॥
विवाहांशः स्वनाशेन यदुद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽन्यांशे यथैवं योषितस्ततः ॥
द्वाम-तृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रस्य ।
यच्छन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥

व्यासः ।

मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः ।
तेषां कन्या तुला चैव मिथुनश्च प्रदृश्यते ॥
कन्या-तुलासु मेषेषु स्वप्रेष्वन्यांशके न तु ।
अतोंऽशके फलं कृत्स्नं वदतो मे निशामय ॥
तेषां चकोटकन्यान्यकुमारगतमानसा ।
वृता वृषभगे चात्र युग्मांशे शीलसंयुता ॥
वेश्या कुलीरभागे स्यात् तीव्ररोषा तथैव च ।
सत्त्वमस्ता सिंहांशे पितृवेश्मरता तथा ॥
रूप-शील-गुणोपेता कन्यांशे स्यात् कुमारिका ।

चण्डान्विता तुलग्नांशे दुःशीला मकरान्विता ॥
वेश्या कुम्भकुलीराख्ये वृश्चिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृग-कुम्भ-चापांशके ।
सुदुष्टा ग्राम्यचण्डा स्यात् कन्या नात्र च संशयः ॥

गर्गः ।

अधिमासककालाव्दोषान्तुपचायनोद्भवान् ।
मुहूर्त्त-करणोपेतांस्तिथ्युत्पातभवांश्च यान् ॥
षडष्टिं दुराधर्षां द्रेक्काणांशकराशिजान् ।
गुरु-शुक्रबुधाहन्ति लग्ने सम्यग्व्यवस्थिताः ॥

आचार्य्यः ।

लग्नराशियुक्तो जामित्रगतश्च वर्जितोराहुः ।
लग्नस्थे वैधव्यं जामित्रगते च कन्यकामरणम् ॥
राशियुक्ते प्रव्रज्यास्ता न चितये सदा वर्ज्यं ।
प्रान्त्यलग्ने मृत्युः स्याद्धनहानिर्द्वितीयगे ॥
दुश्चिक्योऽर्थविवृद्धिः स्याद्बन्धुनाशश्चतुर्थगे ।
सुतनाशः सुतस्थे स्याद्गृहवृद्धिस्तथाष्टिरे ॥
जामित्रस्थे च वैधव्यं चायुर्वृद्धिस्तथाष्टमे ।
धर्मगे धनहानिः स्यात् कर्मगेऽर्के विशीलता ॥
लाभः स्यादायगे भानौ व्ययोद्वादशगे भवेत् ।
चन्द्रे व्ययप्रिया लग्ने द्वितीये धनिनी भवेत् ॥
तृतीये सुभगा साध्वी बन्धौ बन्धुप्रिया भवेत् ।
सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ॥

जायास्थे सपत्नी स्याच्छत्योर्मृत्युमवाप्नुयात् ।
कन्या प्रजावती धर्मे विकारस्थारकर्मणि ॥
भर्तृप्रियोपयुक्ता च शशिन्येकादशस्थिते ।
वर्गाणी द्वादशे च स्यात् कन्यका शीतद्युतिः शशी ॥
अनिष्टग्रहणं याती प्रशस्तफलदः शशी ।
सौम्यांशकस्थो मैत्रेण दृश्यते चेद्बलीयसा ॥
वैधव्यं लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ।
अग्नि-चौरभयार्त्ता स्यात् द्वितीयस्थे धरासुते ॥
तृतीयस्थेऽर्थसम्पन्ना बन्धुदुष्टा चतुर्थगे ।
पुत्रहीना सुतस्थे स्याद्रिगे सुतभागिनी ॥
सप्तमस्थे महीपुत्रे पुंश्चली बलसंयुता ।
असृक्स्रावं धरासूनौ पुत्रस्थे कन्यकाप्नुयात् ॥
नवमे भर्तृविद्विष्टा दशमे कुहकप्रिया ।
धनान्विता तथायस्थे नष्टार्था व्ययगे भवेत् ॥
लग्नस्थे चन्द्रपुत्रे स्याद्धर्मज्ञा सुप्रजा स्थिरा[१] ।
स्वकुटुम्बरता नित्यं धनस्थे सोमनन्दने ॥
श्वश्रू-श्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ।
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ॥
बहुपुत्रा सुतस्थे स्याद्धतशत्रुस्तथारिगे ।
कष्टामापदमाप्नोति पुत्रहानिं तथैव च ॥
सप्तमस्थेऽष्टमस्थे च रोगार्त्ता दुःखभागिनी ।

---

(१) स्थितेति ख० ।

तपोरता धर्मगे स्वाम्नायाग्नौता च कर्मणा ॥
सुत-भृत्य-धनोपेता भौमे द्वादशगे भवेत् ।
कन्या सद्व्ययसंयुक्ता शशाङ्कतनये सदा ॥
गुरौ लग्नगते कन्या धर्मशीला बहुप्रजा ।
सुदीर्घमायुराप्नोति निधनं निधने भवेत् ॥
अतिप्रमुदिता जीवे दृश्चिकस्थे भवेत्सदा ।
सबन्धुवृद्धिं जानीयात् सर्वकामगुणान्विताम् ॥
सुशीलस्था चतुर्थस्थे पञ्चमस्थे बहुप्रजा ।
सपत्नीयुक्ता षष्ठस्थे बहुमूला स्ववेश्मनि ॥
विरूपा दुर्भगा स्वार्था व्यनक्ति विमलं यशः ।
सुतकर्मसु संसिद्धिं प्राप्नोति दशमे गुरौ ॥
विचित्रमाल्याभरणा पुत्रयुक्ता च कन्यका ।
सुवर्ण-मणि-वस्त्राढ्या भवत्येकादशे गुरौ ॥
व्ययस्थे सततोदारा ददात्यर्थमतन्द्रिता ।
आयुर्धर्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ॥
प्रभूतगुणयुक्ता स्वात्मपणा च धनाश्रिते ।
पुंश्चली देवररता कन्या शुक्रे तृतीयगे ॥
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ।
नित्यं चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ॥
पत्युश्च बन्धुवर्गस्याविराद्ध्या षष्ठगे भृगौ ।
बन्धकी सप्तमस्थे स्याद्भार्गवे लोकगर्हिता ॥
व्याध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ।

भार्गवे नवमस्थे च धर्मयुक्ता प्रियंवदा ॥
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ।
विधवार्थान्विता त्याज्या भवत्येकादशे भृगौ ॥
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ।
सौरे लग्नगते कन्या पुंश्चली दुर्भगा कृशा ॥
निर्धना कृपणा दीना धर्मस्थार्कात्मजे भवेत् ।
पुनर्हीनार्तिदुःखार्ता चक्षूरोगेण च पीडिता ॥
पञ्चमस्थे कुपुत्रा स्यात् षष्ठस्थे हतबान्धवा ।
गर्भस्रावार्दिता नित्यं सप्तमस्थेऽर्कनन्दने ॥
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मरता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थ-सप्तमस्थस्य मृत्यु-वैधव्यकृद्भवेत् ।
राहुर्गेहेष्वथान्येषु निष्फलः स्यात्प्रचिन्तितः ॥
पञ्च पाञ्चिपदे दोषान् वर्जयेदेव चिन्तकः ।
दारिद्र्यं मृत्यु-वैधव्यं पौंश्चल्यमनपत्यताम् ॥
अष्टमाषार्द्रमाघास्य तीर्थे चार्थे शुभाशुभाः ।
लग्नस्य पञ्चमस्थानाच्छुभस्थानस्थितान् ग्रहान् ।
कार्यो विवाहो निर्दोषः कालो यस्मात्सुदुर्लभः ॥
मूर्त्तिकर्मात्मजस्वस्थत्रिकोणगते गुरौ ।
भार्गवे च विनश्यन्ति सर्वे दोषा विलग्नगे ॥
त्यक्त्वा च व्यय-नैधनानि तु सदा सौम्यग्रहाः सच्छुभं
सोमस्यास्तरपूजितः शशधरो दुश्चिक्यलाभार्थगः ।

पापस्य ×××× चन्द्रभवनं प्राप्ता क्षितेर्नन्दनं
मुक्ता नैव भवेत् स वर्ज्जितमथो पाणिग्रहेष्विष्टदा[१] ॥
यो जन्मनि जन्मदशाद्यष्टमराशिस्थितो भवेत् खचरः ।
स विवाहलग्नवर्त्ती शुभोऽप्यशुभं ददाति फलम् ॥

शौनकः ।

पञ्चभिरिष्टं रिष्टस्य पुष्टमनिष्टमाद्दिष्टं ।
स्नानादिवलसमेतैश्चतुर्भिरपि चर्ण्णैः ॥

मर्केऽलुकूले सुरपूजिते च
दृष्टिं प्रपन्ने भृगुनन्दने च ।
भवन्ति नार्य्यः सुत-सौख्य-सम्पत्-
सौभाग्यभाजः कृतस्तुपचाः ॥
यत्रालये सूर्य्यविधूनमर्द्दे
शृङ्गाटके भूमिसुते कुले च ।
उपप्लवप्रापिनि चन्द्रमस्ये
प्राप्ते च पापान्तरगे च चन्द्रे ॥
प्रशान्तयोर्वा परिवेशिणोर्वा
पाणिग्रहः खण्डितविम्बयोर्वा ।
शीतोष्णभासोर्विपरीतखेट-
कवन्धकाजालिकयोर्निरस्तः ॥

पराशरः ।

दुग्धपदस्युक्कवपाते क्षमधनक्तन्ते वक्रुक्रोतोधे ।

(१) श्लोकोऽयं आदर्शानुरूप एव मुद्रितः परमयं न समीचीनो भाति ।

द्वादशस्तु परिणये अष्टपञ्चषष्ट्यिमपूर्वे घटिका ॥

वात्स्यः ।

तावच्चाचं चिवचिकं चचतुचचमायुतं ।

इत्युद्वाहकालः ।

---

## अथ वैवाहिककर्मकालः ।

वात्स्यः ।

कचलदचयवाङ्कुरमच्चपचदेदिवर्पकाचविनं ।

तत्सम्भिगतागतमध्ये वैवाहिके कुर्य्यात् ॥

वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे ।

आमिचराशौ कन्याया लग्ने शुभसमन्विते ।

चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

इति वैवाहिककर्मकालः ।

---

## अथ परिणयनकालनिर्णयः ।

तत्र बृहस्पतिः ।

पितुर्गेहेतु या कन्या रजः पश्यत्यसंस्कृता ।

भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

यस्तां विवाहयेत्कन्यां ब्राह्मणोमदमोहितः ।

असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

वृषलीकण्ठलीना यो ब्राह्मणोमदमोहितः ।

सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

आपस्तम्बः ।

प्राप्ते च द्वादशे वर्षे रजस्त्रीणां प्रवर्त्तते ।
यस्यां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
त्रिंशद्वर्षोदशाब्दान्तु भार्य्यां विन्दति नग्निकां ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुः ।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयं ॥

इति परिणयनकालनिर्णयः ।

---

## अथ देयकन्याकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

संवर्त्तः ।

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

अथ 'वृषली' लक्षणा ।

तथाच देवलः ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

दृषस्मृतिरपि ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

विष्णुः ।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा भवेत् वृषली ज्ञेया तत्पतिश्च न दुष्यति ॥

एतच्च प्रायिकं, कासाञ्चिदर्वागेव रजोदर्शनात् ।

अतएव यमः ।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥

यत्पुनर्यम-पराशरापस्तम्बैरुक्तं ।

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितं ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्त्तते ॥

एतदपि प्रायिकं, कासाञ्चित्तत्रापि रजोदर्शनाभावात् ।

अतएवाह मनुः ।

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

एवञ्च रजोदर्शनात्पूर्वं विवाह इत्युक्तं भवति ।

तथाच गौतमः ।

प्रदानामाप्र्तोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके ।

यमः।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्।

वशिष्ठः।

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता।

ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति॥

संग्रहे।

यावच्चेलं न गृह्णाति यावत्क्रीडति पांशुभिः।

यावद्दोषं न जानाति तावद्भवति नग्निका॥

अमरसिंहः।

नग्निकानागतार्त्तवेति।

अङ्गिराः।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।

दशवर्षा भवेत्कन्या तत ऊर्ध्वं रजस्वला॥

अव्यञ्जना तु या प्रोक्ता कुचहीना तु नग्निका॥

व्यञ्जनेषु च जातेषु सोमो भुङ्क्ते तु कन्यकां।

पयोधरेषु गन्धर्वा वह्निर्भुङ्क्ते रजस्वलां॥

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्।

विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः॥

बृहस्पतिः।

व्यञ्जने तु कुचं वन्यात्पितरम् वन्यात् पयोधरे।

वन्यादिष्टञ्च पूर्त्तञ्च प्राप्ते रजसि कन्यका॥

पराशरः।

माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च।

पचोऽपि[१] नरकं याति दृष्ट्वा कन्यां रजस्वलां॥

पैठीनसिः।

यावन्नोद्भिद्येते स्तनौ तावद्देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देया।

याज्ञवल्क्यः।

अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ।

नारदः।

यावन्तश्चर्तवस्तस्याः समतीयुः पतिना विना।

तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति तां॥

यत्पुनर्मनुनोक्तं।

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि।

न चैवैनां प्रयच्छेत गुणहीनाय कर्हिचित्॥

तद्गुणवति सम्भवति गुणहीनाय न दद्यादित्येवंपरं, न पुनर्गुणहीननिषेधार्थं।

अत आह यमः।

दद्याद्गुणवते कन्यां नग्निकामेव प्रज्ञितः।

न तेव गुणहीनाय नोपरुन्ध्याद्रजस्वलां॥

इति देयकन्याकालनिर्णयः।

---

(१) पचते इति म०।

## अथ स्वयम्वरकालनिर्णयः ।

यमः ।

कन्या द्वादशमे वर्षे प्रदातुर्न गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत् स्वयं ॥

मनुरपि ।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिं ।
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयं ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

सोऽपि न पापमाप्नोतीत्यर्थः ।

बौधायनः ।

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

'सदृशे' गुणवति ।

वशिष्ठः ।

कुमारी ऋतुमती त्रीणि त्रीणि वर्षाण्युपासीत, ऊर्ध्वं त्रिवर्षेभ्यः पतिं विन्देत तुल्यं ।

यत्तु गौतमेनोक्तं ।

त्रीनृतूनतीत्य स्वयं युज्यते ।

यच्च विष्णुनोक्तं ।

ऋतुत्रयमुपासीव कन्या कुर्यात् स्वयम्वरं ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनस्तथा ॥

तदृतुत्रयादर्वाक्निषेधपरं, यदा तु न वर्षत्रयमवस्थातुमलं तदा ऋतुत्रयादूर्ध्वमपि वरयेत्।

कात्यायनः।

वरयित्वा तु यः कश्चित्प्रणश्येत् पुरुषो यदा।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पतिं॥

'रक्तागमान्' ऋतून्।

नारदः।

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरं॥

'प्रतिगृह्य' वरयित्वा।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयम्वरविधायकं पूर्वोदाहृतविष्णु-गौतम-नारद-कात्यायनवचनसमानार्थत्वेन व्याचक्षते, तदयुक्तं। तत्र हि पितुरदानं प्रकृतं न तु वरयितुर्देशान्तरगमनं मरणं वा तस्मात् क्रमानुरोधात्पूर्वैव व्याख्या श्रेयसी। यदा तु नैवं कश्चित्तत्कन्या राजानमाव्रजेत्, ऋतुत्रया तत्र वरं परीक्ष्य वरयेत् स्वयं, कश्चि-द्दाता स्वज्ञेषु मध्ये।

याज्ञवल्क्यः।

गम्यन्त्वभावे दातॄणां कन्या कुर्यात् स्वयम्वरं।

'गम्यं' गमनार्हं।

इति स्वयम्वरकालनिर्णयः।

---

## अथ चतुर्थाश्रमस्वीकारकालनिर्णयः ।

उषित्वैवं ततः सम्यक् तृतीयं त्वाश्रमं प्रति ।
चतुर्थमाश्रमं गच्छेत् कृतहोमो जितेन्द्रियः ॥

मत्स्यपुराणे ।

चतुर्थं त्वायुषः शेषं प्रमथित्वा प्रमं व्रजेत् ।
वैश्व-होम-मथाप्याद्य वानप्रस्थोमुनिस्ततः ॥
आश्रमादाश्रमं सद्यः पूतो भवति कर्मभिः ।
सोऽपि तस्य पिता तादृक् क्रमेण सुसमाहितः ॥
वानप्रस्थं समासाद्य चतुर्थाश्रममभ्यगात् ।
वने चरन्निवर्त्तैव[१] तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्तसङ्गः परिव्रजेत् ॥

तृतीयं भागमिति यावता कालेन तपःसिद्धिः विषयाभिलाषस्य निवर्त्तते तावद्विवक्षितः, न हि सुखस्तृतीयः कालो न यावति च यद्यपि मद्दाशेषः तदा तदा संवेष्यते तदा परिव्रजेदित्यर्थः ।

आश्रमादाश्रमं गत्वा कृतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजेत्प्रेत्य वर्द्धते ॥

समुच्चयपक्षाश्रयमेतत्, यदा ब्रह्मचर्याश्रम-वानप्रस्थाश्रमौ कृत्वो-भयभावस्वकालानुष्ठानेन जितेन्द्रियः तदा प्रव्रजन्वर्द्धेत इति पूर्वाश्रम-धर्मानुवादः ।

मार्कण्डेयपुराणे ।

अनुत्पाद्य सुतान्देवानसन्तर्प्य पितॄंस्तथा ।

(१) वनेष्वनुविहृत्यैवेति ख० ।

भुक्ताहींच कथं मौख्यात् स्वर्गतिं गन्तुमिच्छसि ॥

कालिकापुराणे।

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः।
ऋणानि त्रीण्यपाकृत्य इष्ट्वा यज्ञैश्च संन्यसेत्॥
गुरुणानुमतः स्नात्वा सदारो वै द्विजोत्तमः।
अनुत्पाद्य सुतं नैव ब्राह्मणः प्रव्रजेद्गृहात्॥

ब्रह्मवैवर्त्ते।

ऋणत्रयापाकरणमविधायाजितेन्द्रियः।
राग-द्वेषावनिर्जित्य मोक्षमिच्छन् पतत्यधः॥

मनुः।

ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः॥

मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते, अतएव मोक्षं सेवमान इत्युक्तिः।

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः।
इष्ट्वा तु शक्तितो यज्ञैर्मनोमोक्षे निवेशयेत्॥
अनधीत्य द्विजोवेदं अनुत्पाद्य तथात्मजान्।
अनिष्ट्वा चैव यज्ञैस्तु मोक्षमिच्छन् व्रजत्यधः॥

समुच्चयपक्षमित्येतत्पक्षनिन्दावचनं न पुनः प्रतिषेधः उदितानुदितहोमवत्, अन्यथा "यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेदिति प्रत्यक्षश्रावाच्छ्रुतिविरोधः स्यात्।" "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः

एष वा अनुयोगः पुत्रो यज्ञो ब्रह्मचारी वासीति एतत्तैत्तिरीय-श्रुतिवचनमपि समुच्चयपक्षाश्रयमेव ।

मनु-त्रिखितौ ।

वनवासादूर्द्धं शान्तस्य परिणतवयसः कामतः परिव्रजनमेवाग्नि-मात्मन्यारोप्य व्यपगतभय-लोभ-मोह-क्रोध-शोक-द्रोह-मद-मत्सर-कलुषश्लोषितवेदनावच्छिन्नमनसः सद्यश्चनियतं भवति तस्माद्यद-हरेवोपावीत यदहरेव संन्यसेत् सर्वारम्भपरिग्रहानुत्सृज्य ।

विष्णुपुराणात् ।

पुत्र-द्रव्य-कलत्रेषु त्यक्तस्नेहो नराधिपः ।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥
दिवा हिंस्ये च भोगे तु विषये पञ्चलक्षणे ।
दृष्टानुश्राविके चैव विरक्तः संन्यसेद्वनात् ॥

कूर्मपुराणे ।

किञ्चिच्छ्रेयस्करतमं लोकेऽस्मिन् ब्रह्मवत्तमाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥
आराध्य तपसा देवं योगिनं परमेश्वरम् ।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥
वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकं ।
व्याधिद्विष्टोविरक्तो वा नातुरोवाथ दुःखितः ॥
आतुराणां विशेषोऽस्ति न विधिर्न च सत्क्रिया ।
प्रैषमात्रस्तु सन्न्यास आतुराणां विधीयते ॥
उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिगोचरे ।

भयभीतस्य सन्न्यासं अङ्गिरा मुनिरब्रवीत् ॥
विरक्तः सन्न्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ।
यथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेत्तथा ।
प्रकर्त्तुमसमर्थोऽपि जुहोति यजतिक्रियाः ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्न्यसेत् द्विजः ।
सर्वेषामेव वैराग्यं जायते सर्ववस्तुषु ।
तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत् ॥

यमः ।

चीर्णवेदव्रतो विद्वान् ब्राह्मणो मोक्षमाश्रयेत् ।
समः सर्वेषु भूतेषु कृतकृत्यः परिव्रजेत् ॥
पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनाद्वा धूतपापो वा परं पन्थानमाश्रयेत् ॥

कूर्मपुराणे ।

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
यत् व्रजेत् ब्रह्मचर्यादौ यदीच्छेत्परमाङ्गतिं ॥
दारानाहृत्य विधिवद्यथावद्विविधैर्मखैः ।
यजेदुत्पादयेत्पुत्रान् विरक्तो यदि सन्न्यसेत् ॥
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजं ।
न गार्हस्थ्यं गृहीत्वा तु सन्न्यसेत् बुद्धिमान् द्विजः ॥
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तदैव सन्न्यसेद्विद्वानर्निष्ट्वैव विचारयेत् ॥

प्रथमाद्वाश्रमाद्वापि विरक्तो भवसागरात्।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्॥
अथ तृतीयं वयआप्य ऽवस्थाश्रममुत्तमं।
चतुर्थमायुषोभागं तत्स्थो वापि परिव्रजेत्॥
इति चतुर्थाश्रमकालनिर्णयः।

---

## अथाग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

तत्र मनु-शातातपौ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

स च सोदरोभ्राता नान्यो नान्यमातृजः। एतद्देवोत्तरच स्फुटीभविष्यति, तथा पतितोन्मत्त-नपुंसकान्ध-बधिर-मूक-जड़-कुब्ज-कुणि-श्विति-राजयक्ष्मोदराद्यसाध्यमहारोगाभिभूत-नास्तिक-ग्रामयोगिप्रव्रजितचिरकालप्रोषितेषु एतेष्वदोष इत्यवगन्तव्यं। एतेषां परिणयाद्यधिकारस्याविद्यमानत्वात्।

अत एव छन्दोगपरिशिष्टे कात्यायनः।

देशान्तरस्थ-क्लीवैकवृषणांश्च सहोदरान्।
वेश्यातिसक्तांश्च पतित-शूद्रतुल्यातिरोगिणः॥
जड़-मूकान्ध-बधिर-कुब्ज-वामन-कुण्ठकान्।
अतिवृद्धानदारांश्च कृषिसक्तान् नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुलटोन्मत्त-चोरांश्च परिविन्दन् न दुष्यति॥

शातातपः।

क्लीबे देशान्तरस्थे वा पतिते प्रव्रजिते तथा[१]।

योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

सुमन्तुः।

व्यसनासक्तचित्तो वा नास्तिको वाथ वाग्रजः।

कनीयान् धर्मकामस्तु आधानमथ कारयेत् ॥

पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा।

दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

यम-वाक्यत्वे।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः।

इति पाठः। 'परनारीसुतान्' दत्त-क्रीतकादिभ्रातॄन्।

वसिष्ठः।

अष्टौ दश-द्वादशवर्षाणि भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति,

अनिविष्टं मायोदरे, भवन्ति चात्र श्लोकाः।

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः।

न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीव एव वा।

राजयक्ष्मादियुक्तश्च न न्याय्यः स्यात् प्रतीक्षितुं ॥

षण्ढ-वामन-कुब्जान्ध-पतितोन्मत्त-कुण्डकान्।

(१) पतिते प्रजिते तथेति पाठे नाक्षराधिक्यदोषो भवितुमर्हतीति विभावनीयं।

रोगि-बधिर-मूकेषु न दोषः परिवेदने ॥

सुमन्तुः ।

ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

तथा वृद्धवशिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथं ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

एतच्चाधिकारिणि भ्रातरि अकुर्वति वेदितव्यं। अनधिकारिणि व्यतिक्रमाभावान्न तदनुज्ञाग्रहणं युज्यते ।

अतएव हारीतः ।

सोदराणान्तु सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

अस्यार्थः। सोदरेऽग्रजेऽधिकारिणि अकृतविवाहे विवाहमीहमाने सन्निहितेऽवतिष्ठति तदनुज्ञां गृहीत्वाधानवद्विवाहो न कदाचनापि कर्त्तव्यः।

यदाहोशनाः ।

पिता पितामहो यस्य अग्रजो वाथ कस्यचित् ।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

सुमन्तुः ।

पितुर्यस्य तु नाधीतं कथं पुत्रस्तु कारयेत् ।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

अथाप्यनुज्ञाते स्थिते वा शातातपः ।

अग्रजः परिविन्दन्ति कनिष्ठस्य या च कन्या विरूपिका ।

इत्यत्राधिकाररहिते भ्रातरीति पूर्ववचनादितिकृत्या ज्येष्ठोऽपि यतो न कनिष्ठस्य विवाहविघ्नहेतुर्भवितु मर्हतीति ।

इत्यग्निहोत्राधान-दारसंस्कारकालनिर्णयः ।

---

## अथावसथ्याधानकालनिर्णयः ।

तत्र कात्यायनः ।

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते ॥

अथ मेधिराजः ।

दाराग्निहोत्रसंयोगं यः कुर्यादग्रजे स्थिते ।

इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं भवति अग्न्यग्रहणेरन्यग्निहोत्रपरत्वादिति तदयुक्तं अन्याग्निहोत्रेर-म्नानात् ।

अतएवाह गार्ग्यः ।

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहं ।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत् ॥

ब्रह्मगर्भोऽपि ।

पालनाध्यापनेनैव अग्निसंसाधनेन च ।
उपासनं समादद्यात् अकाले परिवेदनम् ॥

'अकाले' अयथाविहितकाले ।

तथाच स्मृतिः।

आधानं विधिवद्वैश्यकुलभ्राद्यापि वा।
महानसाहरणोर्वा दार-दायादकालयोः॥

पारस्करः।

आवसथ्याधानं दारकाले दायादकाले एकेषां।

गौतमः।

पुत्रमुत्पाद्यावसथ्याधानं कृत्वातिथीन् संपूजयेत्।

व्यासः।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः॥
यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥

ज्येष्ठस्याधिकारित्व एतद्द्रष्टव्यं कनीयांस्तु कृताग्निहोत्रेऽपि ज्येष्ठे भ्रातरि वेदाध्ययनाभावतो नैवाग्निपरिग्रहमकुर्वन्नपि प्रत्यवायेन न संस्पृश्यते।

अत्र गर्गः।

पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना॥

अनधीतवेदस्यापि समावर्तनविवाहः सत्यव्रतेन दर्शितः।

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा।
अधीते ब्रह्मचर्येण स्वाङ्गं वेदं गुरोर्गृहे॥

इत्यावसथ्याधानकालनिर्णयः।

## अथाग्निहोत्रकालः।

तत्र कात्यायनः।

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥
रात्रेस्तु षोडशे भागे ग्रह-नक्षत्रभूषिते।
कालं त्वनुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥
रेखामात्रं प्रदृश्येत रश्मिभिश्च समन्वितः।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्॥

मनुः।

सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।

बौधायनः।

आसायं कर्मणः प्रातरा प्रातः सायकर्मणः।
आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरात्॥

बौधायनीयपरिशिष्टे।

आपत्सोढ़ स प्राजापत्यः सायंहोमे अग्निहोत्रियां पयाम्ले समस्त-होमानपाये तथा द्विरात्रीय-मक्षाणयो द्विमासाद्वैमासायाग्निहोत्र-मनुद्धुत्तमासावासेर आमयाध्यासीवार्धमासायाग्निहोत्रं जुहुयात् उपवेत्येऽहनि प्रातःसायं चतुर्हम चतुर्गृहीतानि प्रातश्चतुर्हम[१]।

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परमयं न समीचीन प्रति-भाति।

चतुर्द्दशग्रहणमुपलक्षणार्थं, कदाचित् पञ्चदशापि भवन्ति कदाचिच्चतुर्द्दशोनानि कदाचित् षोडशानि ।

मरीचिः ।

पञ्चहोमानथोद्दिश्य गत्वा कश्चान्निवर्त्तते ।
होमं पुनः प्रकुर्वीत भवेच्च न स दोषभाक् ॥

इत्यग्निहोत्रकालनिर्णयः ।

---

## अथ प्रासादाद्यारम्भकालः ।

यथाकालं शुभं ज्ञात्वा सदा भवनमाचरेत् ।
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥
वैशाखे धन-रत्नानि ज्यैष्ठे मृत्युस्तथैव च ।
आषाढ़े भृत्य-रत्नानि पशुवर्गमवाप्नुयात् ॥
श्रावणे भृत्यलाभश्च हानिर्भाद्रपदे भवेत् ।
पत्नीनाश आश्विने स्यात्कार्त्तिके धन-धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतोभयम् ॥

'भक्तं' भक्ष्यमात्रोपलक्षणं ।

लाभश्च बहवो विन्द्यादग्निं माघे विनिर्द्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥

विश्वकर्म्ममते ।

चैत्रे शोकाकुलो भर्त्ता वैशाखे च धनान्वितः ।
ज्यैष्ठे मृती विपद्येत नश्यन्ति पशवः शुचौ ॥
श्रावणे धनवृद्धिः स्यान्नभस्ये न वसेद्गृही ।

कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।

'सहस्यः' पौषः ।

माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा ॥

तथा वशिष्ठे ।

व्याधिः शोकोभवेच्चैत्रे वैशाखे धनरत्नयुक् ।
गो-महिष्यादिभिर्युक्तो गृहमेधी सदैव हि ॥
ज्येष्ठे मृत्युमवाप्नोति आषाढे पशुनाशनम् ।
भृत्यलाभः सुरत्नानि लाभोऽर्थस्य तथैव च ॥
श्रावणे भृत्यलाभस्तु धनवृद्धिरनाकुला ।
मासि भाद्रपदे गेहं दुःखदं जायते ध्रुवम् ॥
तत्र सर्वस्वहानिस्तु भवेत्तद्गृहमेधिनः ।
आश्विने तु भवेन्नित्यं पत्नीनाशस्तथा कलिः ॥
कार्त्तिके त्वातुरं धान्यं भृत्यनाशोऽप्यहर्निशम् ।
अत एव प्रशस्यन्ते प्रासादारम्भणे स्मृताः ॥
मार्गशीर्षे गृहारम्भो धनलाभसुखप्रदः ।
भक्ष्यं वै विविधं तत्र वस्त्राद्यादिसुरत्नकम् ॥
वास्तुलाभः शुभश्चात्र प्रजालाभो महानपि ।
मित्राणां चैव पुत्राणां स्त्रीणां लाभः परोभवेत् ॥
पौषे भीतिः परिज्ञेया तस्कराणां सुदारुणा ।
धन-धान्यादिलाभः स्यात् पुत्र-मित्रादिसम्पदः ॥
माघे वह्निभयं ज्ञेयं सर्वसन्तापकारकम् ।

फाल्गुने चैव विज्ञेयो लाभः काञ्चनजः शुभः ॥
पुत्रलाभो भवाश्च सुख-सौख्यसंयुतः ।
इति मासफलं प्रोक्तं चैविध्यमधुना ब्रुवे ।
उत्तमं मध्यमञ्चैव कनिष्ठञ्चेति तत् त्रिधा ॥
वैशाखे श्रावणे चैव मार्गशीर्षे च फाल्गुने ।
उत्तमास्ते समाख्याताः कथ्यन्ते मध्यमास्तथा ।
आषाढ़े कार्त्तिके पुष्ये मध्यमाश्चेति कीर्त्तिताः ॥
कनिष्ठांस्तान् समाख्यास्ये निम्नामय समासतः ।
चैत्रो ज्येष्ठो नभस्यः स्तुरीषोमाघाः कनिष्ठकाः ॥

'ईषः' आश्विनः ।

फलमेषां समासेन कथितं तत्परिस्फुटम् ।

अपराजितपृच्छायाम् ।

रवौ कन्या-तुलासंस्थे वास्तौ पूर्वे शिरः स्थितम् ।

'अलिः' वृश्चिकः ।

चापे च मकरे कुम्भे दक्षिणेन व्यवस्थितम् ।
आदित्यवारयोगेन स वास्तुः चरति क्रमात् ॥
यत्र भानुः शिरस्तत्र लक्षितव्यं रविक्रमात् ।
देवागारं गृहञ्चैव न कुर्यात्कीर्त्तयन्बुधम् ॥
मृत्युरोगभयानि स्युः प्रशस्तं कुक्षिसम्मुखम् ।
तुला-वृश्चिक-कन्यासु भास्करो यदि संस्थितः ।
न तदा प्राङ्मुखं कुर्यात् गृहं भवति निष्फलम् ॥
धनुर्मकर-कुम्भेषु यदा तिष्ठति भास्करः ।

तदा याम्यमुखं वेश्म राज-चोराग्निभीतिदम् ॥
मीने मेषे वृषे प्रत्यङ्मुखं शोकभयावहम् ।
मिथुने कर्कटे सिंहे न कुर्याच्चोत्तराननम् ।
तथा कृतं भवेद्वेश्म दोष-शोक-भयावहम् ॥

विश्वकर्मा ।

रवौ कन्या-तुलालिस्थे गृहं वारुणदिङ्मुखम् ।
न कुर्यात्तद्धि शून्यं स्यात्तच्च दुष्टं भवेत् प्रभो ॥
दक्षिणाभिमुखं कुम्भ-मृगचापस्थिते रवौ ।
कुर्वीत निष्फलं तस्मात् नृपदण्ड-वधादिकृत् ॥
न मीन-वृष-मेषस्थे कुर्वीत प्राङ्मुखं रवौ ।
तद्धनघ्नं वणिक्क्षुद्रराजचोरादितस्ततः ॥
रवौ मिथुन-सिंहस्थे न कर्कस्थेऽप्युदङ्मुखम् ।
कुर्यात्तद्धि दरिद्रत्वं दद्याच्च व्यङ्गदोषताम् ॥

विश्वकर्मप्रोक्ते ।

अधुना कुम्भकीचक्रं रविचक्रायुधं भुवम् ।
रेखात्रयं प्रकर्त्तव्यं तत्र वै पूर्वपश्चिमम् ॥
दक्षिणोत्तरगन्तव्द्रेखैका वह्नि-वायुगा ।
ईश-नैर्ऋतगा चैका तत्र राशींस्तु विन्यसेत् ॥
क्रमादीशानरेखाद्या रेखाद्वादशकं भवेत् ।
तत्र कन्यादिसिंहान्ता राशयो द्वादश क्रमात् ॥
यत्र यत्र भवेद्भानुस्तत्र वास्तुशिरः स्थितम् ।
तत्स्थानात् सप्तमे राशौ वास्तोर्दृष्टिः पतेत् क्रमात् ॥

यद्रेखायां भवेत्सूर्यो वास्तुमस्तकसंयुतः ।
तद्रेखायपितं राशिं संमुखश्चैव दूषयेत् ॥
रविदृष्टिगतं राशिं जानीयात्त्वभिधामितम् ।
रविभुक्तस्तु यो राशिः स च दग्धः प्रकीर्त्तितः ॥
शिरःस्थिते न कर्त्तव्यं रवौ द्वारं कथञ्चन ।
यद्यज्ञानात्कृते तस्मिन् चयं स्याद्गृहमेधिनः ॥
वास्तुदृष्टिस्थिते राशौ यद्द्वारन्तु वेश्मनः ।
धननाशो भवेत्तत्र पुत्र-मित्र-पशुक्षयः ॥
रविरेखायके राशौ कृते रोगभयं भवेत् ।
रोग-चोरादिभिश्चैव वह्नि-राजकुलादिभिः ॥
रविदृष्टिगते राशौ यद्द्वारन्तु यत्र हि ।
तत्र संवसतो नित्यं रोग-दुःखं सुदारुणम् ॥
दग्धे द्वारे कृते नाशात्कर्त्तुः स्यात्कुलक्षयः ।
मकरे कुम्भगे भानौ सिंहगे कर्कटे तथा ।
पूर्वास्यं पश्चिमास्यञ्च तदा गेहं प्रकारयेत् ॥
फलमेतत् समुद्दिष्टं वर्णानां भवनाश्रयम् ।
कन्यादौ नारभेद्गेहं मनुष्यार्थी कदाचन ॥

कुण्डलीचक्रस्य फलितार्थमाह ।

फलोद्देशं प्रवक्ष्यामि प्रत्येकेन परिस्फुटम् ।
सुखवृद्धिस्तथा शान्तिः सर्वपापोपमर्दनम् ॥
वस्तुनाशस्तथा तस्मं मृत्युश्चे पशुमीदृशम् ।
भरिवक्षोभ्रदश्चैव पांशुभिश्च यतो व्ययो ॥

एवमादि फलं ज्ञेयं कुम्भे वै सर्वसाक्षि च ।
पुत्राः पौत्राः प्रवर्द्धन्ते लक्ष्मीरविचला भवेत् ॥
शूरश्च द्युतिमान्भर्त्ता सुख-सौभाग्यसंयुतः ।
सिंहे सविकलं सर्वमेवमादि फलं भवेत् ॥
हृष्टः पुष्टः सुसम्पन्नो बहुगात्रः श्रियान्वितः ।
भर्त्ता वै लभते सौख्यं कर्के च फलमीदृशम् ॥
मेषे वृषे तुलायाञ्च वृश्चिके च यदा रविः ।
उद्गास्नं व्रतञ्चैव प्रेतदाहं प्रकारयेत् ॥
एतेषान्तु क्रमेणैव फलमत्र वदाम्यहम् ।
शुभलक्ष्मीफलं सौख्यं पुत्र-पौत्रसमुद्भवे ॥
ब्रह्मभावी भवेन्नूनं सर्वसौभाग्यसंयुतः ।
एवमादि फलं मेषे भर्त्ता वै लभते चिरम् ॥
वृषे सौख्यं चिरा लक्ष्मीः पशुवृद्धिरनाकुला ।
पुत्राश्च बहवस्तस्य जायन्ते शोभनाः स्त्रियः ॥
एवमादि फलं भर्त्तुस्तत्र प्रोक्तं मनीषिभिः ।
तुलायां प्रोच्यते सम्यक् फलमिष्टतमं नृणाम् ॥
धनं धान्यं सुखं भोगो गोऽश्व-पुत्रसमुद्भवः ।
बहुमित्रास्तथा भृत्याः पशवः शोभना गृहे ॥
पुत्रराशिस्तथा भर्त्तुस्तुलायामीदृशं फलम् ।
स्थिता बन्धवः सम्यक् स्वकुले वृद्धिरेव च ॥
धनवान् भोगसम्पन्नो भर्त्ता चारुलाभान्वितः ।
एवमादि फलं तत्र वृश्चिके जायते ध्रुवम् ॥

मकर-कुम्भौ प्रतिष्ठेयौ प्रकाश्ये मन्दिरे स्थितौ ।
हरि-कर्कटकौ ज्ञेयौ प्रतीचीमुखवेश्मनः ॥

'हरिः' सिंहः ।

मेषोवृषस्तथा चैतौ सौम्यागारमुखे स्थितौ ।
तुला च वृश्चिकश्चैव दक्षिणस्यामुभौ स्थितौ ॥
कोणस्थानामथोवच्मे कन्यादीनां फलं यथा ।
यतः कन्यास्थितोध्वाङ्क्षो धनुर्धूमसमाश्रयात् ॥
शुनि मीन-चरे चैव मिथुनं सर्वदा श्रितम् ।
कन्यां प्राप्ते रवौ सम्यक् नारभेत गृहं सुधीः ॥
न चाङ्गिरत्र जायेत पुत्र-पौत्रपशुक्षयः ।
सर्वदार्त्तियुतोभर्त्ता वसेदत्र न संशयः ॥
धनुस्थिते रवौ कार्यं नैव गेहं कदाचन ।
शत्रुभिर्घात्यते तत्र जायन्ते हि न सम्पदः ॥
अथवा राजदण्डेन पीड्यतेऽसौ वसन् गृही ।
यदा भानुस्तु मीनस्थस्तदा गेहं न कारयेत् ॥
हतचेष्टाधिशोकाय भयाय विपुलाय च ।
अधीरत्वं तदा तत्र स्वामिनः स्याम्मीनतः फलम् ॥
मिथुनस्थो यदा भानुस्तदा वेश्म न कारयेत् ।
अग्निना दह्यते तद्वै वेश्म दुःखप्रदं सदा ॥
मीनस्थे वह्निदिग्भागे गृहारम्भोऽग्निजीविनाम् ।
मिथुने नामधारभ्य ईशे वश्याविनां स्थितः ॥
वायव्ये कन्यका श्रेष्ठा गृहारम्भः सुखप्रदः ।

खरोपजीविनां चैव वेश्यादीनां सदैव हि ॥
नैर्ऋत्यां कार्मुके च गृहारम्भः श्वपचां गृहे ।
इदानीं कथये वेश्म राशि-माससमागमम् ॥
चैत्रे मेषो भवेद्यत्र तत्र गेहं न कारयेत् ।
कृते व्याधिर्भयानच जायते गृहमेधिनाम् ।
ज्येष्ठे तु मिथुनं यत्र तत्र द्वैधं भवेत् सदा ॥

'द्वैधं' द्वन्द्वयुद्धमिति यावत् ।

आषाढे कर्कटो दुष्टो नभस्ये कन्यका तथा ।
आश्विने तु तुला दुष्टा वृश्चिकः कार्त्तिके तथा ॥
चापं मार्गे भवेद्दुष्टं तेन मार्गो न शोभनः ।
माघे कुम्भस्तु वै दुष्टस्तत्रारम्भो न शोभनः ॥
मासि मासाष्टकश्चेति दूषितं वै परस्परं ।
तेन चैषु न कर्त्तव्यं मन्दिरं शुभमिच्छता ॥

तथा ।

सिंहगं मेषगं चैव गुरुं यत्नेन वर्जयेत् ।
अस्तङ्गते गुरौ शुक्रे गृहारम्भो न शस्यते ।
नातिशीते निदाघान्ते गृहारम्भो भवेदिह ॥

विष्णुधर्मोत्तरे ।

प्रावृट्काले न कर्त्तव्यं वास्तुकर्म विजानता ।

तत्र ।

कृष्णपक्षान्ते त्रिभागे कृष्णैकादश्यामारभ्य दिनपञ्चके शुक्लपक्षाद्ये त्रिभागे शुक्लप्रतिपदमारभ्य दिनपञ्चके, एवं कृष्णैकादश्यामारभ्य दिनदशकं त्रिविधं भवति ।

तथा ।

चतुर्थीं नवमीञ्चैव वर्जयेच्च चतुर्दशीम् ।

विश्वकर्ममते ।

तिथयो यत्र शस्यन्ते याः शुभा वास्तुकर्मणि ।
शस्ते मासि सिते पक्षे प्रतिपच्च द्वितीयया ॥
तृतीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
एकादशी-त्रयोदश्यौ पूर्णमासी प्रकीर्त्तिता ॥
एताः पूर्णेति विख्याता नामतस्तिथयस्त्विमाः ।
चतुर्थ्यां वाथ नवम्यां वा दर्शायाञ्च विवर्जयेत् ॥
तत्र संवसतो यस्माद्भयमाध्याधिभयं भवेत् ।
तथा वाराः प्रशस्यन्ते रवि-भौमसुवर्जिताः ॥
दिग्दाहाशनि-निर्घातैरुत्पातैर्भयपीड़ितम् ।
ग्रहोपसृष्टं सन्ध्याख्यं व्यतीपातहतञ्च यत् ॥

'ग्रहोपसृष्टं' पापग्रहदूषितम् ।

चन्द्र-तारानुकूले भे कर्त्तुः कार्यं विजानता ।
ध्रुवाणि तानि शस्तानि प्राक्रवणेषूत्तं तथा ॥

'ध्रुवाणि' रोहिण्युत्तरात्रयं चेति ।

वायव्यं वैष्णवं पुष्यं पौष्णं सावित्रमेव च ।

मत्स्यपुराणे ।

वज्र-व्याघात-शूलेषु व्यतीपातातिगण्डयोः ।
विष्कुम्भ-गण्ड-परिघान् वज्रयोगेषु कारयेत् ॥

विश्वकर्ममते ।

अथ योगान् प्रवक्ष्यामि वर्जिता ये मनीषिभिः ।
अतिगण्डो व्यतीपातः परिघो वज्र एव च ॥
गण्डं शूलञ्च विष्कुम्भो व्याघातश्च सुदुःखदः ।
एतान् योगान् समावर्ज्य शुभावे तेषु चैव हि ॥
विष्कुम्भे घटिकास्तिस्रः पञ्च वा वर्जयेत्सुधीः ।
वज्रे तु घटिकास्तिस्रो नव वा परिवर्जयेत् ॥
अतिगण्डेषु वै षट्कं नव वा दोषदायकाः ।
गण्डे तु घटिकाः षष्ठा व्याघाते नव षट् च वा ॥
शूले तु घटिकाः पञ्च सप्त वा दोषदा मताः ।
वैधृतौ च व्यतीपाते घटिकाषष्टिरेव च ॥
परिघे घटिकास्त्रिंशत् षट्त्रिंशदथवा शुभाः ।
एतेषां घटिकाः शेषाः सर्वास्त्वन्याः शुभावहाः ॥
योगाः शुभावहाः कार्य्या यात्राद्यापनकर्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥

तथा ।

करणान्यथ वक्ष्यामि याव्यारम्भे शुभाय वै ।
तैतिलं वणिजं नागं वालवं करणान्तरम् ।
धन-धान्यकराणि स्युः श्रेयसे च सुखाय च ॥

विष्णुधर्मोत्तरे ।

अङ्गारकादिनं नाम करणं विष्टिसंज्ञकम् ।

वर्जयेदित्यनुषङ्गः ।

मत्स्यपुराणे ।

श्वेते मैत्रेऽथ माहेन्द्रे गन्धर्वे वाति विरोहणे ।
तथा वैराजसावित्रे मुहूर्त्ते ग्रहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्
स्तम्भोच्छ्रायादि कर्त्तव्यमन्यत्र परिवर्जयेत् ।
प्रासादेऽप्येवमेव स्यात् कूप-वापीषु चैव हि ॥

विश्वकर्ममते ।

मुहूर्त्तान् कथयिष्यामि यैः कृतैः सर्वसम्पदः ।
माहेन्द्रे रौहिणे चैव सावित्रे मित्रके तथा ॥
गन्धर्वेऽभिजिति श्वेते मुहूर्त्ते कारयेत् ग्रहान् ।
अथ साधारणान् ब्रूमो मुहूर्त्तान् सप्त चैव हि ॥
विराजोविजयः श्वेतः सावित्रो मैत्रिकोऽभिजित् ।
नन्दश्चेति समाख्याताः सर्वे सर्वार्थसिद्धिदाः ॥
अथ वारविशेषेण वर्जनीयान् ब्रवीमि ते ।
अर्यम्णोऽर्कं तु वैराज्यश्चन्द्रे वै ब्रह्मराक्षसौ ॥
पित्र्या ब्राह्मौ कुजे मष्टौ बुधे चैवाभिजित्तथा ।
पित्र्यब्राह्मौ तथा शुक्रे राक्षसाप्यौ बृहस्पतौ ।
भौजङ्गब्राह्मौ मुहूर्त्तौ तौ वर्जनीयौ शनैश्चरे ॥

विष्णुधर्मोत्तरे ।

स्थिरलग्ने स्थिरांशे च कर्त्तुश्चोपचयान्विते ।

'स्थिरलग्नानि' वृष-सिंह-वृश्चिक-कुम्भाः । 'कर्त्तुः' कर्त्तृराशेः, 'उपचयान्विते' त्रिषडेकादशस्थानस्थिते ।

तथाच मात्स्ये ।

त्रिवर्जेकादशद्वादशमान्युपचयभवनान्यतोऽन्यथान्यानि ।

यत्र सौम्या ग्रहाः केन्द्रे त्रिकोणे चापि भार्गवः ।
पापाश्चोपचयस्थाने तस्मिन् कार्य्यं निवेशनम् ॥

वृहस्पति-शुक्र-बुध-चन्द्राः 'सौम्याः'। क्षीणेन्दु-रवि-मङ्गल-शनैश्चराः 'पापाः', संयुक्तो बुधश्च ।

तथाच लघुजातके ।

क्षीणेन्द्वर्क-यमाराः पापास्तैः संयुतः सौम्यः ।

'यमः' शनैश्चरः, 'आरः' मङ्गलः, 'सौम्यः' बुधः इति। 'केन्द्राणि' लग्नानि प्रथम-चतुर्थ-सप्तम-दशमस्थानानि।'त्रिकोणं' नवपञ्चमस्थानं।

तथाच जातके ।

केन्द्रचतुष्टयं कण्टकञ्च लग्नात् सप्तदशचतुर्थानां सञ्ज्ञाः इति,
नवपञ्चमं त्रिकोणं नवर्क्षत्रिकोणं चेति ।
केन्द्रस्थं वर्जयेत्पापं सर्वयत्नेन कर्मसु ।
केन्द्रसौम्ययुतं देयं न तु शून्यं कदाचन ॥

विश्वकर्ममते ।

अथ लग्नं प्रवक्ष्यामि गृहारम्भे शुभाशयं ।
वृषो धनुस्तुला-कन्या मिथुनं कलशस्तथा ॥
लग्नान्येतानि शस्तानि गृह-प्रासादकर्मणि ।
कृतमेतेषु लग्नेषु सर्वसिद्धी भवेदिह ॥
एकादशे तृतीये च षष्ठे पापग्रहाः शुभाः ।
पापग्रहेऽष्टमे चैव मरणं प्राप्यते ध्रुवं ॥
चन्द्रार्कादिग्रहाः सर्वे स्वक्षेत्रे शुभदा गृहे ।

नीचगा न च नीचस्था न च तीक्ष्णांशुदूषिताः ॥

सूर्यादिग्रहाणां स्वक्षेत्राणि, सूर्यस्य सिंहः क्षेत्रं, सोमस्य कर्कः, भौमस्य मेष-वृश्चिकौ, बुधस्य मिथुन-कन्ये, गुरोर्धनुर्मीनौ, शुक्रस्य वृष-तुले, शनैश्चरस्य मकर-कुम्भाविति।

तदुक्तं लघुजातके ।

कुज-शुक्र-बुधेन्द्वर्क-ज्ञ-शुक्र-जीव-कुज-सौरि-शनि-गुरवः भेशा इति।

एते क्रमेण मेषादीनां द्वादशानां राशीनां ईश्वरा इत्यर्थः ।

'कुजः' मङ्गलः, 'ज्ञः' बुधः, 'जीवः' गुरुः, 'सौरिः' शनैश्चरः, 'भानि' राशयः, इति ।

तथोच्चं नीचञ्च परिभाषितं जातके ।

अज-वृष-मृगाङ्गना-कर्क-मीन-वणिजांशाः कथिता अर्कादुच्चाः दश अष्टाविंशति-तिथीन्द्रियसप्तविंशतिविंशतिरुच्चानीचं सप्तममिति।

अस्यार्थः मेषस्याद्या दशविंशांशा रवेरुच्चं। वृषस्याद्यास्त्रयस्त्रिंशांशाः सोमस्योच्चं। मकराद्या अष्टाविंशतिस्त्रिंशांशा मङ्गलस्योच्चं। एवं कन्यायाः पञ्चदशत्रिंशांशाः बुधस्योच्चं। कर्कटस्य पञ्च गुरोरुच्चं। मीनस्य सप्तविंशतिः शुक्रस्योच्चं । तुलाया विंशतिः शनेरुच्चं ।

एतत्सर्वं समालोच्य विबुध्य निपुणं सुधीः ।
आरभेत प्रयत्नेन वास्तुकर्म सुविस्तृतं ॥

इति वास्तुप्रकरणं ।

---

## अथ प्रतिष्ठाकालनिर्णयः ।

तत्र सामान्यतः प्रतिष्ठाकालनिर्णयः ।

विष्णुधर्मोत्तरे ।

वज्र उवाच ।

कस्मिन् काले तु कर्त्तव्या प्रतिष्ठा भृगुनन्दन ।

मार्कण्डेय उवाच ।

शृणु कालं प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।
यस्मिन् काले कृता या स्यात् फलसिद्धिप्रदायिनी ॥
धन-धान्यवती ख्याता वरदा च तदा भवेत् ।
दृढ़ा भवति विख्याता चित्रिवेश्ये गुरौ युते ॥
ऐन्द्रे तेजस्वती ख्याता भूतविग्रहकारिणी ।
तथाविधा तु सा ख्याता यदि दाहमवाप्नुयात् ॥
नित्याश्चर्ययुता लाङ्गे गम्यलोके तथैव च ।
अहिर्बुध्न्ये तथा नित्यं लोकानुग्रहकारिणी ॥
पित्र्ये विनाशमाप्नोति कर्त्तुश्च मरणावहा ।
सौम्ये सौम्या तथा कर्त्तुर्वरदा च तथा भवेत् ।
ऐन्द्राग्ने नाशमाप्नोति कर्त्तुः कृत्वा विनाशनं ॥
आश्विने श्रीमती भूत्वा तथा पुत्रमवाप्नुयात् ।
लोकाभिगम्या भाग्ये स्यात् कर्त्तुर्भाग्यवती भवेत् ॥
अप्युभेऽपि यदा कार्या प्रतिष्ठा मनुजोत्तम ।
यस्मिन् युगे तु यो नाथो यो यो देवः प्रकीर्त्तितः ।
धन धान्यवती ख्याता कर्त्तुः श्रेयोजयावहा ॥

प्रभवादिभिः पञ्चभिः संवत्सरैर्विष्ण्वादीनि युगानि द्वादश तच्चेवाभिहितानि ।

संवत्सराद्यवर्षेषु नित्यमाप्नोति ना भवेत् ।
परिपूर्वे तु भवन्ती लोककान्ता तथैव च ॥
इदापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धन-धान्यवती भवेत् ॥
इत्पूर्वे नाममाप्नोति कर्तुर्नाशवहा भवेत् ।
तथापि प्रभोर्नृत्यस्य समर्थे रोचिता भवेत् ॥

प्रभवादयः पञ्च क्रमेण संवत्सर-परिवत्सरेदावत्सरानुवत्सरेद्वत्सर-संज्ञकाः एवमङ्गिरादिपञ्चकञ्च क्रमेण संज्ञापञ्चकमेवमुत्तरत्रापीति तत्रैवाभिहितं ।

मत्स्यपुराणे ।

प्राप्य शुक्लं शुभं पक्षमतीते चोत्तरायणे ।

विष्णुधर्मोत्तरे ।

उत्तरे त्वयने सौम्या धनवृद्धिकरी भवेत् ।
तथापि सुप्ते देवेशे सर्वानर्थविवर्द्धिनी ॥
शिशिरे लोककान्ता सा पूजा च वसुधाधिप ।
ख्याता वसन्ते सौम्या च वरदा च तथा भवेत् ॥
ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्रावृट्‌काले तथा नाशं कर्त्ता वह समाप्नुयात् ॥

प्रावृट्‌कालनिषेधस्य शिवप्रतिष्ठाव्यतिरिक्तविषयः, शिवप्रतिष्ठायां तद्विधेः शिवप्रतिष्ठाकालनिर्णये दर्शितत्वात् ।

शरत्काले कृता नाशं शीघ्रमेव प्रपद्यते ।
हेमन्ते च यदा सौम्या धर्मवृद्धिकरी भवेत् ॥

माघे कर्त्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
शोकानन्दकरी चैत्रे वैशाखे वरसंयुता ॥
आज्ञायुता सदा ज्येष्ठे आषाढ़े धर्मवृद्धिदा ।
श्रावणे धनहीना स्यात् प्रौष्ठपादे विनश्यति ॥
आश्विने नाशमाप्नोति वज्रिणा कार्त्तिके तथा ।
सौम्ये सौभाग्यमतुलं पौषे पुष्टिरनुत्तमा ॥
दोषावहा तु माघे स्यात् कर्त्तुरात्मन एव च ।
चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

अथ माघमासनिषेधो विष्णुप्रतिष्ठाविषयः, विधिस्तु तद्व्यतिरिक्तदेवताप्रतिष्ठाविषयः, मार्गशीर्षमासविधिश्च विष्णुप्रतिष्ठाव्यतिरिक्तविषयः मार्गशीर्षमासनिषेधस्य विष्णुप्रतिष्ठाकालनिर्णये दर्शितत्वात् । श्रावणाश्विनमासनिषेधस्य विष्णुप्रतिष्ठाव्यतिरिक्तविषयः विष्णुप्रतिष्ठायामेतद्दयविधेस्तत्रैव दर्शितत्वात् ।

अपरे त्वाहुः "माघमासे सर्वदेवानामितिवचनात् विष्णुप्रतिष्ठापि तत्र कार्य्या माघमासादिनिषेधस्तु तत्तद्देवान्यविषयतत्प्रतिष्ठाविषयविशेषे ।

द्वितीये मध्यफलदा तृतीये च शुभप्रदा ।
धन-धान्यवती ख्याता वरदा च तथा भवेत् ।
यस्य पक्षस्य वृद्धिः स्यात् तस्मिन् शुभफलप्रदा(१) ॥
द्वितीयायां धनोपेता तृतीयायां वरप्रदा ।

---

(१) शुभपक्षा भवेदिति ख० ।

चतुर्थ्यां नाशमाप्नोति यमस्य क्षालमुखावहा ॥
विनायकस्य देवस्य तथा तच हितप्रदा ।
पञ्चम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत् ॥
षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ।
अष्टम्यां धान्यबहुला नवम्यां तु विनश्यति ॥
भद्रकाल्याः कृता तच कर्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा कृता ॥
एकादश्यां तथा पुण्या द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥
कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥
वृद्धत्स्पृशा च विज्ञेया तथा दोषवती नृप ।
दिग्दन्तरीक्षे भूमौ च उत्पातेन तु या युता ॥
कर्तुर्व्याधिप्रदा तच प्रतिष्ठा तु क्रिया भवेत् ।
तिथिहानौ क्षयोज्ञेयो वृद्धौ वृद्धिः प्रकीर्त्तिता ॥

मत्स्यपुराणे ।

पञ्चमी च द्वितीया च तृतीया चाष्टमी तथा ।
दशमी पौर्णमासी च कृता तु पञ्चदा भवेत् ॥

वामनपुराणे ।

तासु पक्षे सिते कार्य्या द्वितीया वै तिथिश्च च ।
द्वितीयायुर्मतिं दद्यात्तृतीया पुत्रसम्पदम् ॥
पञ्चमी च श्रियं नित्यं सप्तमी रोगनाशनम् ।

दशमी अमितहिता सौभाग्यञ्च त्रयोदशी ॥
नानाविधं धनं नूनं पौर्णमासी तिथिः सदा ।
एकविंशकरैर्नन्दा भद्रा पञ्चविंशाङ्गुभिः ॥
जया हि रामाश्विकाभैः रिक्ता वेद-षडेन्द्रियैः ।
बाण-द्विकृतिभिः पूर्णा शोनतुल्या हिता क्रमात् ॥
एते शुक्लेऽनुलोमाः कृष्णके च विलोमतः ।
ददातिरर्थं चातुर्थीलाभ-धनानि च ॥
सर्वे चार्कः शुभः शुक्रचन्द्रः शान्तिप्ररोहणे ।
कार्यो दशतुलाचार्यमौर्विंशयामयुग्मके ॥
मध्ये षटाविशेषका निर्दिष्टानां प्रधा—णा ।
पञ्चदशतुरासामाचतुराग्निकलेन तु ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी सूर्य्यदिने चन्द्रे क्षेमावहा भवेत् ।
भौमेऽग्निना प्रदह्येत बुधेन धनदा भवेत् ॥
गुरावपि साद्भुते नित्यं लोकानन्दकरी सिते ।
आचन्द्रार्कस्थिता सौरे प्रतिष्ठा समुदाहृता ॥

मत्स्यपुराणे ।

बुधो बृहस्पतिः शुक्रस्त्रयोवाराः शुभावहाः ।
एभिर्निरीक्षितं सद्म नवश्च प्रशस्यते ॥

वसुवचने ।

प्रीतिः सौभाग्यमायुष्मान् सुकर्मा शोभनो धृतिः ।
वृद्धिः सिद्धिः शुभः साध्योवरीयाञ्छिव-शुक्लकौ ।

ब्रह्मेन्द्रौ च ध्रुवं चेति योगाः तत्संज्ञकाः शुभाः ॥
ववश्च बालवश्चैव कौलवं तैतिलं तथा ।
गरश्च वणिजश्चैव शकुनिश्च चतुष्पदं ।
नागं किन्तुघ्नमप्याहु विष्टिरेवान्तु पर्वयोः ॥

विष्णुधर्मोत्तरे ।

शकुनी दोषजननी चतुष्पदे भयावहा ।
नागे भवति सौम्या च किन्तुघ्ने च शुभप्रदा ॥
कौलवे वरदा श्रेष्ठा तैतिले रोगनाशिनी ।
गराख्ये रोगजननी तथा वणिजि पुष्टिदा ।
विष्टौ मरणदा कर्तुरात्मदोषवती तथा ॥

मात्स्ये ।

आषाढे द्वे तथा मूलमुत्तराषाढमेव च ।
ज्येष्ठा-श्रवण-रोहिण्यः पूर्वाभाद्रपदा तथा ॥
हस्तोऽश्विनी रेवती च पुष्ये मृगशिरस्तथा ।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥

ज्योतिषसमुच्चये ।

पुष्यशुक्रोहिणीकाजस्रा मगाङोत्तरा द्विजे ।
पुनर्वस्वनुराधासु चित्रा ज्येष्ठा मघीशुचि ॥
धनिष्ठा श्रवणी वैश्वे युगे भाद्रपदे तथा ।
अश्विनी रेवती भद्रे स्वाति-फाल्गुनिकाद्वयम् ॥
चतुर्वर्गजया ज्येष्ठा मूलार्द्रा भरणी मघा ।
एतानि प्रतिष्ठामानां चत्वार्य्यैवाम्बजे तथा ॥

अथ-रोगकरास्तिस्रो रोहिणी भयवृद्धिदा ।
हस्तः सिद्धिप्रदोऽत्र आयुर्दाषाढयुग्मके ॥
पुनर्वसुः सुखं दद्यादनुराधा तु सम्पदः ।
चित्रा सर्वसुखं नित्यं ज्येष्ठा रोगविनाशकृत् ॥
धनिष्ठारिजयं दद्यात् ज्ञानदः श्रवणः सदा ।
पूर्वभाद्रपदा वृद्धिर्मङ्गमिचापि चाश्विनी ॥
रेवती पुष्टिदा नित्यं स्वाती कुर्य्याद्धनं बहु ।
फाल्गुनीद्वितयं वृद्धिर्भरणी रिपुभेदनम् ॥
आर्द्रा सौभाग्यसम्पत्तिर्मूलेऽथ नृपसत्क्रिया ।
मृगः शान्तिप्रदो नित्यं धन्या शतभिषं त्यजेत् ।
अश्लेषा कृत्तिका चैव विशाखा च शुभप्रदा ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी कृत्तिका च भूतनिग्रहकारिणी ।
किञ्चिन्मूला ततः काले न तदन्वितवर्ज्जिना ॥
सर्वैः सूर्य्यस्य सोमस्य कुमारस्य च या वरा ।
मङ्गलाय कृताश्चैव न दहन्ति च वर्ज्जिना ॥
प्राजापत्ये कृतो नित्यं लोकानुग्रहकारिणी ।
सौम्ये तु वरदा प्रोक्ता मूषकेषु विनश्यति ॥
आर्द्रायां कर्दमरवं क्षिप्रमेव प्रयच्छति ।
पुनर्वसौ विनाशस्य संस्कारस्याप्नुयात्पुनः ॥
वृद्धिं पुष्ये समाप्नोति धनेन यशसा तथा ।
अपि सर्पविनाशाय नागानां नाशकृद्भवेत् ॥

पित्र्योर्मरणदा कर्तुस्तथा नाशञ्च गच्छति ।
शोकगम्या भवेद्भाग्ये कर्तुर्नाशप्रदा तथा ॥
तथापि कामदेवस्य कर्तुः सौख्यप्रदा तथा ।
अर्यम्णे सुहृष्टा प्रोक्ता लोकानुग्रहकारिणी ॥
आयुर्दा च कृता हस्ते चित्रायां नाशमाप्नुयात् ।
नित्यैश्वर्ययुता लोके चित्रायाश्च चितप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ।
ऐन्द्राग्ने कर्तृनाशाय मैत्रे मित्रविवृद्धये ॥
ज्येष्ठायां तेजसा युक्ता धन-धान्यवती भवेत् ।
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥
आषे क्लेदमवाप्नोति वैश्वदेवे सुखप्रदा ।
श्रवणे धन-धान्याढ्या वासवे वसुसंयुता ॥
वारुणे शीघ्रनाशाय तथाप्ये मनुजोत्तम ।
अहिर्बुध्ने कृता प्रोक्ता कर्तुः सौख्यप्रदायिनी ॥
धन-धान्ययुता पौष्णे आश्विने योगनाशिनी ।
याम्ये मरणदा कर्तुरात्मनाशकरी तथा ॥
सार्कं चाच्छोकजननी सशौरे मृत्युदायिनी ।
सभौमे वह्निभयदा सतमस्के स्थिरा न तु ॥
केतुना धूमिते चर्क्षे वह्निदाहमवाप्नुयात् ।
केतूदये भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥
भौमोदये भवेद्येन तेन दह्येत वह्निना ।
सौरोदये भवेद्येन तेन कर्त्ता विनश्यति ॥

नवमे सपरीवेषे परचक्रभयं भवेत्।
उल्काहते विनाशाय सभूकम्पभयप्रदा॥
उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत्।
त्रिविधोत्पातयुक्ते भे न शुभा परिकीर्त्तिता॥
दिव्यकीर्त्तिविनाशाय भौमे चात्मविनाशिनी।
अन्तरीक्षे च विज्ञेया लोकनाशकरी तथा॥
सर्व्वभूत-व्यतीपातश्चश्चैकं विवर्ज्जयेत्।
शेषैर्द्दोषैस्तथायुक्ता यावद्वागमनाद्रवेः॥
जन्मनक्षत्रविहिता कर्त्तुः क्षेमङ्करी भवेत्।
सम्पत्करी द्वितीये च्यात्तृतीयेऽरिभयप्रदा॥
क्षेम्या चतुर्थे भवति पञ्चमे व्याधिवर्द्धिनी।
कार्य्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा॥
अष्टमे वरदा सौम्या नवमे श्रीविवर्द्धिनी।
कर्मणां साधिका प्रोक्ता जन्माच्चे दशमे शुभा॥
एकादशे शुभकरी द्वादशेऽरिभयप्रदा।
ज्ञेया त्रयोदशे क्षेम्या रोगदा च चतुर्दशे॥
तुष्टिदा पञ्चदशके षोडशे निधनप्रदा।
सप्तदशे भूतिकरी नन्दा[१] चाष्टादशे भवेत्॥
एकोनविंशतितमे कर्त्तुर्मरणदायिनी।
तथा द्वितीये धनदा तृतीयेऽरिभयप्रदा॥
चतुर्थे क्षेमजननी पञ्चमे रोगवर्द्धिनी।

---

(१) नन्दयतीति नन्दा सुखदेति यावत्।

षष्ठे अष्टमे सप्तमे दशमे ... धन-धान्यविवर्द्धिनी ॥
द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ।
द्वादशे नवमे चन्द्रे कर्त्तुर्दोषवती भवेत् ॥
जन्मस्थश्च तृतीयश्च षष्ठश्चैकादशस्तथा ।
दशमः सप्तमश्चैव यदा विष्णो भवेद्‌गुरुः ॥
पञ्चमैर्नवमैश्चैव द्वादशैर्वा तथाष्टमैः ।
चतुर्थे वा तृतीये वा क्रमात्पापात्फलं लभेत् ॥
विपर्य्ययेण वेधस्तेऽपापोऽपि शुभकृत्ततः ।
चन्द्राद्द्वादशगे सूर्य्ये द्वितीये वा भयप्रदा ॥
द्वादशे वा द्वितीये वा भौमे दाहमवाप्नुयात् ।
द्वादशे वा द्वितीये वा सौरे मरणदा भवेत् ॥
पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ।
एकस्मिंश्च यदा केन्द्रे चन्द्रमाश्च व्यवस्थितः ॥
केन्द्रपंचमधान्यस्थायुक्तं सूर्य्यारसूर्य्यजैः ।
तदा कर्त्तुर्विनाशाय प्रतिष्ठा खचराधिप ॥
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ।
ससौरे मृत्युदा ज्ञेया सराहौ निधनप्रदा ॥
नक्षत्रे सोपरागे तु कर्त्तुर्मरणदायिनी ।
परिलुप्ते[1] तथा चन्द्रे तथा ज्येष्ठान्त्यपादगे ।
पौष्णान्त्यपादगे चैव कर्त्तुर्निधनकारिणी ॥

---

(१) पाठोऽयं आदर्शपुस्तकम एव सन्निवेशितः परन्त्वयं न समीचीनो विभाति, परिग्रहे इत्ययं पाठो भवितुमर्हति ।

ज्योतिषसमुच्चये।

शनिर्जीवो नव-दीघु-सप्तस्थानेषु सर्वदा।
बुधः षष्ठाष्ट-तुर्येषु दिक्‌सप्त-नवराशितः॥
सप्त-त्रि-षष्ठ दशमः शशी शुभफलप्रदः।
रविर्दश-त्रिषट्‌संस्थो राहुस्त्रि-दशषष्ठगः॥
त्रि-षट्‌स्थानगताः शस्ता मन्दाङ्गारक-केतवः।
शुभाः क्रूराः सपापाश्च सर्वे एकादशास्तथा॥
एषां दृष्टिर्मुनी पूर्णा वार्द्धिकी पञ्च-भूतयोः।
पादिकी रामदिक्‌स्थाने वस्वब्ध्योः पादवर्जिता॥
द्वितीया चापदाख्या तु चतुर्थी क्षेमसंज्ञका।
षष्ठी च साधिका तारा अष्टमी शत्रुनाशिका।
नवमी चातिमित्रा स्यादेताः पञ्च फलप्रदाः॥

विष्णुधर्मोत्तरे।

जन्मराश्युदयेकर्तुः क्षिप्रं नाशकरी भवेत्।
द्वितीये धननाशाय तृतीये कार्य्यवृद्धिदा॥
चतुर्थे स्वजनाशाय पञ्चमे व्याधिदा भवेत्।
षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी॥
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी।
दशमे कर्मणां वृद्धौ लाभे लाभकरी भवेत्॥
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा तु तथा कृता।
जन्मलग्नोदये श्रेष्ठा धन-धान्यवती भवेत्॥
जन्मराशिफलं शेषं सर्वस्थानेषु निर्दिशेत्।

मेषोदये कृता क्षिप्रं नाशमाप्नोति पार्थिव ॥
वृषोदये स्थिरा प्रोक्ता धन-धान्यवती भवेत् ।
शोककान्ता च मिथुने बहुकल्याणकारिणी ॥
कुलीरे क्षिप्रं नाशः स्यात् सिंहे च सुदृढा भवेत् ।
कन्यायां शोककान्ता स्यात्तुलायां भवति स्थिरा ॥
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ।
मकरे क्षिप्रं नाशः स्यात् कुम्भे लग्ने दृढा भवेत् ॥
मीने गुणवहा कर्त्तुः कल्पे(१) शून्या तथा भवेत् ।
उषा स्यात् सूर्यदाभायां(२) सौम्या सौम्यस्य कीर्त्तिता ॥
पापग्रहस्य केन्द्रेण कर्त्तुर्नाशाय कीर्त्तिता ।
सौम्या पटस्य सुशुभं कर्त्तुर्भवति वृद्धिदा ॥
फलं यदेव लग्नेषु नवांशेषु तदेव तु ।
द्वादशांशेषु विज्ञेयं तदेव मनुजोत्तम ॥
कर्त्तुर्नाशाय विज्ञेया त्रिंशांशे सोम-सूर्ययोः ।
शतं जीवेत् प्रपौत्राणां(३) कर्त्तुः कल्पपदा भवेत् ॥
शुभमंशं महाराज लग्नं पापफले शुभं ।
लग्ने शुभतरे प्राप्ते पापमंशमशोभनं ॥
लग्नस्थे शोकदा कर्त्तुः कृता भवति भास्करे ।

---

(१) लग्नविशेषे इत्यर्थः ।
(२) सूर्यदाभायामित्ययं पाठः आदर्शपुस्तकेष्वेकरूप एव वर्त्तते पर-
न्वयं न समीचीनो विभाति ।
(३) प्रपौत्राणां शतं जीवेदित्यन्वयः ।

द्वितीयेऽर्थस्य हानिः स्यात् तृतीये धनसंयुता ॥
आयुःक्षयश्चतुर्थे स्यात् पञ्चमे सुतनाशनं ।
षष्ठे शत्रुविघातश्च दारिद्र्यं सप्तमे भवेत् ॥
मरणं चाष्टमे मासी नवमे धर्मपीड़नं ।
दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥
द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ।
चन्द्रे लग्नगते ज्ञेया सुदृढा मनुजोत्तम ॥
धनान्विता द्वितीये तु तृतीये लाभसंयुता ।
चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ॥
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ।
अष्टमे मरणायोक्ता नवमे धर्मपीड़नं ॥
दशमे धर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ।
व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥
अर्द्धबिम्बाधिके चन्द्रे शुभपक्षफलं भवेत् ।
अर्द्धबिम्बाधिके क्षीणे क्रमादस्य निबोध मे ॥
चन्द्रे लग्नगते ज्ञेया क्षिप्रं नाशो महीभुजां ।
द्वितीये च दरिद्रा स्यात् तृतीये धनसंयुता ॥
बन्धुधान्यं चतुर्थे स्यात् पुत्रनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥
अष्टमे मरणायोक्ता नवमे धर्मघातिनी ।
धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥
व्यये व्ययवती नित्यं दरिद्रा च तथा भवेत् ।

लग्ने मृत्युकरा भौमे तथा दारिद्र्यदा धने ॥
कीर्त्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥
अरिनाशस्तथा षष्ठे सप्तमेऽसौ विनश्यति ।
अष्टमे कर्त्तमरणं नवमे दशमच्युतिः ॥
दशमे कर्मसिद्धिः स्यात् लाभे लाभवती भवेत् ।
आयात्मजप्रणाशस्तथा व्यये कुर्य्याद्व्ययः सदा ॥
बुधलग्ने धनयुता द्वितीये च तथा भवेत् ।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥
कीर्त्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ।
सुखदा सप्तमे ज्ञेया हर्षदा च तथाष्टमे ॥
सौख्यदा नवमे राजन् दशमे कर्मवृद्धिदा ।
स्थिरलाभगते ज्ञेया व्ययगे धनसंयुता ॥
जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ।
वृद्धाख्यदा तृतीये स्यात् चतुर्थे धनसंयुता ॥
पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी ।
सप्तमे राज्यदा कर्त्तुरष्टमे च धनवृद्धिदा ॥
कीर्त्तिदा नवमे ज्ञेया दशमेऽर्थवृद्धिदा ।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥
लग्नस्थे नित्यदा शुक्रे सर्वकामप्रदा भवेत् ।
धनगे च धनं दद्यात् तृतीये भ्रातृवर्द्धिनी ॥
चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ।

षष्ठे पूज्या तथा शुक्रे सप्तमे धनवृद्धिदा ।
अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा(१) ॥
दशमे लोककान्ता स्यादरिनाशस्तथायने ।
तथा व्ययस्थे विज्ञेया बहुधे सधना तथा ॥
मृत्युदा लग्नगे सौरे दरिद्रा स्याद्द्वितीयगे ।
तृतीये धनलाभाय चतुर्थे कर्म्ममृत्युदा ॥
सुतगे सुतनाशः स्यादरिनाशस्तथारिगे ।
जायानाशस्तु जायास्थे मृत्युर्मृत्युपदोपगे ॥
धर्म्मगे धर्म्महानिः स्यात् कर्म्महानिस्तु कर्म्मगे ।
महालाभस्तु लाभस्थे व्ययगे च व्ययो भवेत् ॥
शून्यं विवर्जयेत् केन्द्रे तत्रैव नियोजयेत् ।
एवं ज्ञात्वा शुभं कालं प्रयत्नेन सुदैववित् ।
कुर्यात् प्रतिष्ठां यत्नेन दक्षीयाद्वधानतः ॥
शुभेऽह्नि पूर्वं यच्चार्च्चां तत्कालप्रतिमाञ्च यां ।
समाहपीठिकां गर्त्ते स्थापितां विनिवेशयेत् ।
तत्कालमेवं कुर्वीत नामावाश्चां समाहितः ॥

वचनसमुच्चये ।

पादादूनचतुर्थांशोभागः स्यान्मीन-मेषयोः ।
वृष-कुम्भौ च कुम्भाणौ चतसः पादवर्जिताः ॥
मकरे मिथुने चैव चापालि-हरि-कर्कटाः ।

---

(१) सुखप्रदेति ख० ।

पादोनाः षट्तुलाः कन्ये घटिकाः सार्द्धपञ्च तु ॥
केसरी च वृषः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरं धनुस्तुला-मेषाद्‌द्वियुग्मं मीन-कन्यके ।
कर्कटे कर्कटास्थित्र प्रवर्ज्याः कार्यनाशकाः ॥
स्थिरः शुभग्रहैर्दृष्टः मन्नोलग्नः शुभान्वितः ।
गुरु-शुक्र-बुधैर्युक्ते लग्ने दद्यात्तु नायुषी ॥
राज्यं सौख्यं बलं पुंसां देशधर्मादिकं बहु ।
प्रथमः सप्तमस्तुर्यो दशमः केन्द्र उच्यते ।
गुरु-शुक्र-बुधास्तत्र सर्वसिद्धिप्रदायकाः ॥
एकादश-चतुर्थस्था लग्नात् पापाः शुभप्रदाः ।
अतोऽन्येऽनिष्टकर्मार्थं योज्यास्तिथ्यादयो बुधैः ॥
सुयोगे शाश्वता धर्माः स्थिरायां पुष्टि-जीवितं ।
सुलग्ने च महाभागो विषुवे चेप्सितं फलं ॥
चन्द्रप्रीतिसुखे पुष्ये अयने च महातिथौ ।
वृद्धिरारोग्यमैश्वर्यं देवस्थापनतो भवेत् ॥
सन्ध्यागते तु लग्ने च सत्यस्तमितदुर्पथे ।
दुष्टपक्षे दुष्टलग्ने नक्षत्रेऽशुभसंयुते ॥
दुर्निमित्ते तथोत्पाते चन्द्र-सूर्योपमर्दने ।
एतेषु स्थापिता देवाः भय-दुर्भिक्ष-रोगदाः ।
तस्माद्विनं निरीक्ष्यादौ सर्वोपस्करमाहरेत् ॥

मत्स्यपुराणे ।

ग्रह-ताराबलं बुद्धा ग्रहपूजां विधाय च ।

निमित्तं शकुनं लब्ध्वा वर्जयित्वा क्षुधादिकं ॥
शुभकाले शुभस्थाने क्रूरग्रहविवर्जिते ।
लग्ने क्षणे च कुर्वीत प्रतिष्ठादिकमुत्तमं ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्थापनं कुर्याद्विधिदृष्टेन कर्मणा ॥

विष्णुधर्मोत्तरे ।

यस्मिन् ऋक्षे यद्देवोक्तं ऋक्षं भूपतिसत्तम ।
तद्देवेह ऋक्षं प्रोक्तं तन्मुहूर्त्तेऽपि यादव ॥
रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च ।
आप्यो वैश्वस्तथा ब्राह्मः कौवेरः शक्रदेवतः ॥
ऐन्द्राग्नेयो नैर्ऋतश्च वारुणश्च महीपते ।
अर्य्यमश्च तथाभाग्यो मुहूर्त्तास्तु दिवाकरः ॥
रौद्रोऽजपादहिर्बुध्नः पौष्ण आश्विन एव च ।
याम्योऽग्निदैवतश्चैव ब्राह्मः सौम्यस्तथैव च ॥
आदित्यो जीवदैवत्यो वैष्णवः सूर्यदैवतः ।
त्वाष्ट्रश्चैव याम्यश्च मुहूर्त्ता रात्रिचारिणः ॥

तथा ।

दिनमध्यगते सूर्ये मुहूर्त्तेऽभिजिदष्टमे ।
सर्वकामप्रदः स्यात् सर्वोपद्रववर्जितः ॥

ब्रह्मपुराणे ।

प्राजापत्ये तु प्रथमं ब्राह्मे चोत्थापनं भवेत् ।
मुहूर्त्ते स्थापनं कुर्यात् तेन ब्राह्मे विचक्षणः ॥

विष्णुधर्मोत्तरे ।

गुरावस्तमयं प्राप्ते नीचस्थे कर्त्तृघातिनी ।
तस्मादुच्चस्थे जीवे तु धन-धान्यकरी भवेत् ॥
ब्राह्मे रौद्रे कृता ज्ञेया प्राजापत्ये सुखावहा ।
स्वर्गलोकप्रदा स्वर्गे चक्रे चक्रप्रवर्त्तिनी ॥
वानस्पत्ये तु वरदा आप्ये धान्यविवर्द्धिनी ।
वायवे भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥
आग्नेये दाहमाप्नोति जीवमध्ये(?) दैवते तथा ।
सौरे भवति सुस्फीता चान्द्रे च वरदा तथा ॥
भग्यते सामदैवत्ये गोदेवे वृद्धिमाप्नुयात् ।
वैश्वे च पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥
कौमारे वृद्धिमाप्नोति पित्र्ये नाशं तथैव च ।
वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥
चपला वसुदैवत्ये याम्ये मृत्युप्रदा भवेत् ।
वाग्देवत्ये सदा वाग्मी भौमे च श्रीयुतो भवेत् ॥
धनगे धनसंयुक्तः सुदृढः प्रेतदैवते ॥
पृथ्वीदेवे कृता सौम्या शुभा स्वादेददैवते ।
पौरुषे च तथा रौवे बहुधर्मविवर्द्धिनी ।
कर्णोः सुखावहा चैव तथा लाङ्गुला भवेत् ॥

इति सामान्यप्रतिष्ठा ।

---

## अथ शिवप्रतिष्ठा ।

अथ ज्योतिषसमुच्चये ।

उत्तरायणगते भानौ लिङ्गस्थापनमुत्तमं ।
दक्षिणे लवने पूर्व्वं शिवपादे भयावहं ॥
अपरं स्थापनं नेष्टं तथा वै दक्षिणायने ।
अपरे स्थापिते लिङ्गे व्याधिना पीड्यते प्रजा ॥
कुमाराः स्वल्पपीड्यन्ते कन्यानाशश्च जायते ।
सुमहाशस्त्रकोपश्च तदा राज्ञां प्रजायते ॥
कर्त्तुः क्षयः सदा शोको राष्ट्रे भवति दारुणः ।
तस्मान्न स्थापयेद्देवं अपरे दक्षिणायने ॥
स्थापनन्तु प्रकर्त्तव्यं शिशिरादावृतुत्रये ।
प्रावृषि स्थापितं लिङ्गं भवेद्वरदयोगदं ॥
हेमन्ते ज्ञानदं लिङ्गं शिशिरे सर्वभूतिदं ।
लक्ष्मीप्रदं वसन्ते च ग्रीष्मे च जय-शान्तिदं ।
यतीनां सर्वकाले च लिङ्गस्थारोपणं मतं ॥

रत्नावल्यां ।

माघ-फाल्गुन-वैशाख-ज्येष्ठाषाढेषु पञ्चसु ।
मासेषु शुक्लपक्षेषु सकृष्णपक्षवर्जिते ॥
द्वितीया पञ्चमी षष्ठी सप्तमी नवमी तथा ।
द्वादश्येकादशी षष्ठा पूर्णिमा च त्रयोदशी ॥
गुरुः शुक्रो बुधः सोमोवरयेन्तु सुखावहं ।

आर्द्रा शतभिषा स्वाती रोहिणी श्रवणं तथः ॥
पूर्वाषाढोत्तराषाढा ज्येष्ठाश्लेषा च रेवती ।
चित्रा-हस्तौ धनिष्ठा स्यादनुराधा च सिद्धिदा ॥

लक्षणसमुच्चये ।

नक्षत्रे यत्र तत्रापि सर्वकालं द्विपक्षयोः ।
लिङ्गस्य स्थापनं शस्तं यतेः कामार्थिनो ध्रुवं ॥

रत्नावल्यां ।

सौभाग्यः शोभनायुष्मान् सिद्धः साध्यः शिवः शुभः ।
वृद्धिः प्रीतिर्धृतिः सिद्धिः ध्रुवः शुक्लः सुशोभनम् ॥
ववश्च बालवश्चैव कौलवश्चैतिलं शुभम् ।
मैषं परममैषश्च अन्यत्क्षेमं यथा शुभम् ॥
लग्नस्य वृश्चिकः सिंहो मेषोमिथुन-कर्कटौ ।
तथा कन्या तुला-कुम्भौ वृषभश्च प्रशस्यते ॥
रविहस्ते भवेत्सिद्धिः सोमे मृगशिरस्तथा ।
कृत्तिका भौमवारे स्यादनुराधा बुधे यदा ॥
रेवती भृगुसम्भवा शुक्रवारे पुनर्वसुः । ·
श्रवणं शनिवारे च सिद्धियोगाः शुभा मताः ॥
अम्भप्रश्नतयोऽथ षट्सप्तैकादशाः शुभाः ।
भौम-मन्दौ तृतीयौ च द्वि-सप्ताङ्क-शरैर्गुरुः ॥
अम्ब-तुर्य-रसाष्टस्थो दशस्थश्च शुभो बुधः ।
रव-सप्त-दशान्यस्थः शुक्रश्चाथ प्रयत्नतः ॥
चेषमध्ये ग्रहाः सर्वे यमकण्ठेति निश्चिताः ।

यस्मात् सर्वकार्याणां तस्मात्तेष्वनियोजयेत् ॥
क्षीणचन्द्रस्तथा मन्दः(१) कुजार्कौ तैर्युतो बुधः।
पापाः पापाश्रया यस्मात्तस्मात्तांश्च विवर्जयेत् ॥
केन्द्रस्थे च गुरौ शुक्रे न सम्येन्दोर्यदा ग्रहाः।
नष्टचन्द्रे तथा शुक्रे गुरावस्तं गते सति।
प्रतिष्ठादिसमारम्भान् दूरयाणां विवर्जयेत् ॥
अन्यच्छुभतरं यस्मात् ज्योतिःशास्त्रविशारदः।
समालोक्य नियुञ्जीत सर्वसाध्यान्यथाचरेत् ॥

लक्षणसमुच्चये।

सुदिने शुक्लपक्षे च रविवारविभूषिते।
शुभनक्षत्रतारकायोगे शुभाख्ये करणान्विते ॥
दैत्ये दैवे प्रतिष्ठा स्यात्मिश्रे च सितपक्षके।
अद्वैते चैव कालेऽपि मन्त्र-मूर्त्तिप्रभेदतः ॥
दैता सिद्धाग्निको रौद्री शतं वर्षाणि तिष्ठति।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ॥
अद्वैता भैरवी या तु वाम-दक्षिणमध्यजा।
शताद्वार्द्धन्तु या तिष्ठेत् बाणलिङ्गस्वयम्भुवा ॥

इति शिवप्रतिष्ठा।

---

(१) निम्न इति ख०।

## अथ विष्णुप्रतिष्ठा ।

वैखानससंहितायां ।

अयने चोत्तरे कुर्याद्दिवसे वा नराग्निनतम् ।

देवीपुराणे वैखानससंहितायां ।

मार्गशीर्षक-माघौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
मासेषु फाल्गुनः श्रेष्ठः चैत्रो वैशाख एव च ।
तैषेऽप्यमयुक्तासे श्रावणे माघि वा भवेत् ॥

तन्त्रसारसंहितायां ।

प्रतिष्ठापर्विभिः प्रोक्ता या क्रमाद्दक्षतेऽथ वा ।
प्रतिपच्च द्वितीया च नवमी च त्रयोदशी ।
दशमी द्वादशी पूर्वे शुक्लपक्षे शुभान्विता ॥

महापद्मराणे ।

पौर्णमास्यां त्रयोदश्यां द्वादश्यां शुक्लपक्षतः ।
प्रतिपद्द्वितीयचोर्वा पञ्चम्यां दशम्यामपि ।
संहिताविधयश्चेता चाश्रयोगं प्रकुर्व ते ॥

वैखानससंहितायां :

श्रवणे चैव रोहिण्यां स्वात्यां हस्ते पुनर्वसौ ।
चित्रोत्तरेषु रेवत्यां अश्विने वारुणे तथा ॥
सौम्य-त्वाष्ट्रानुराधासु तिष्ये चैव विशेषतः ।
अन्यस्मिन् शुभर्क्षे वा यथोक्तगुणसंयुते ॥
अश्विनी-रोहिणीयोगे पुनर्वसौ च शुभतः ।

भरण्यां श्रवणे हस्ते रेवत्यामुत्तरासु च ।
त्रिषु नक्षत्रयोगेषु क्रमेणैषूत्तरायणे ॥

सागरसंहितायां ।

सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ।
एते सौम्या ग्रहाः प्रोक्ताः प्रतिष्ठा-योगकर्मणि ॥

'ग्रहाः' वाराः । 'सौम्याः' अनुकूलाः ।

महापञ्चरात्रे ।

सौम्ययुक्ते प्रशस्तदिने सोम-भार्गववासरे ।
ग्रहयोग एवं भवेत्प्रतिष्ठा-यज्ञकर्मणि ॥

वैखानससंहितायां नृसिंहपुराणे ।

पूर्वपक्षे शुभे काले स्थिरे चोर्ध्वमुखेऽपि भे ।
अनुकूले च लग्ने च हरिः स्थाप्योनरैस्तथा ॥
नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते ।
गुरु-शुक्र-बुधेन्दूनां एकवारयुते शुभे ॥
ग्रामस्य यजमानस्याप्यनुकूलेऽपि तत्र वै ।
चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च ।
सुप्रशस्ते मुहूर्त्ते वै प्रतिष्ठां कारयेद्गुरुः ॥

लक्षणसमुच्चये ।

सुदिने सितपक्षे च सुरवारसंभूषिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
दैते दैवे प्रतिष्ठा स्यात्मित्रे च सितपक्षके ।
चरैते चैव कृष्णे च मन्त्र-मूर्त्तिप्रभेदतः ॥

द्वैता सिद्धाग्निकी रौद्री शतवर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ।
अद्वैता भैरवी सा तु वाम-दक्षिणमध्यजा ॥

मधूककाष्ठप्रतिमाप्रतिष्ठाकालं वाराहपुराणे ।

शुक्लपक्षे तु द्वादश्यां नक्षत्रे रैवते तथा ।
तत्र संस्थापनं कुर्य्याद्भूमिसिद्ध्यर्थसाधनं ॥

इति विष्णुप्रतिष्ठाकालनिर्णयः ।

---

## अथ देवीप्रतिष्ठाकालः ।

देवीपुराणे ।

गुरौ मेषगते शुक्रे देवीञ्चाथ प्रतिष्ठपेत् ।
इहैव स भवेद्धन्यो मृतोगच्छेत्परम्पदम् ॥
तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता ।
तथा माघाश्विनौ मासावुत्तमौ परिकीर्त्तितौ ॥
देवी तत्र यदा शक्र-पांशुनापि प्रतिष्ठिता ।
भवते फलदा पुंसां कर्कस्थे च वृषस्थिते ॥
तथाच सिद्ध-गन्धर्वा नृपा वा राज्यकाङ्क्षिणः ।
ते यजन्तु यदा देवीं स्थापयित्वा विधानतः ॥
न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ।
मातृ-भैरव-वाराह-नरसिंह-त्रिविक्रमाः ।

मणिशालगुरव्यक्त्य स्नाप्या वै दक्षिणायने ॥

तथाच चतुःषष्टिप्रतिष्ठायाम्।

ब्रह्मोवाच।

स्थापनञ्च प्रवक्ष्यामि सर्वकामप्रसाधकम्।

सर्वकालं प्रकर्त्तव्यं दक्षपणे विशेषतः ॥

रात्रिरूपा यतो देवी दिवारूपो महेश्वरः।

अतः सकालपूजाभिः सिद्धिदा परमेश्वरी ॥

इति देवीप्रतिष्ठाकालनिर्णयः।

---

## अथ वापी-कूपादिप्रतिष्ठाकालः।

वह्निपुराणे।

वापी-कूप-तडागानां तस्मिन् काले विधिः स्मृतः।

सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥

कर्कटे पुत्रलाभस्तु सौख्यं तु मकरे भवेत्।

मीने यशोऽर्थलाभस्तु कुम्भे च सुवर्णकम् ॥

वृषे च मिथुने हानिर्वृश्चिके क्षयं भवेत्।

सिंहस्थिते कन्यायां तुलायां शाश्वती गतिः।

सिंहे मेषे धनलाभं सप्तमीव दिव गच्छति ॥

भविष्योत्तरपुराणे।

तस्मिन् यज्ञियवन्मूर्ते कार्त्तिके चविशेषतः ।
तडागस्य विधिः कार्य्यः खिरनक्षत्रयोगतः ॥
मुनयः केचिदिच्छन्ति अतीते चोत्तरायणे ।
न कालनियमस्तत्र सलिलं तत्र कारणम् ॥

इति वाप्यादिप्रतिष्ठाकालनिर्णयः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिष्ठाकालनिर्णयो नाम पञ्चदशोऽध्यायः ।

---

## अथ षोडशोऽध्यायः ।

### अथ दीक्षाकालः ।

तत्र नानादेवतादीक्षाकालः कालोत्तरे ।

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ वरः ।
तयोरसम्भवे वर्षा नान्यत्रापि प्रशस्यते ॥
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यालम्भनकर्मणि ।
कार्त्तिक्याञ्चैव वैशाख्यां सर्वामोरविदर्शने ॥

तत्रैव ।

चन्द्र-सूर्योपरागेषु षडशीतिमुखेषु च ।
ग्रह-नक्षत्रयोगेषु विषुवत्सुदिनेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥

कारणे ।

पूर्वाषाढे च माघे च आषाढे मृगशीर्षके ।
दीक्षां न कारयेद्धीमान् अन्यमासेषु कारयेत् ।
शुक्लपक्षे शुभर्क्षे च सुवार-तिथिभिर्युते ॥

क्रियाकाण्डशेखरे ।

न विना पर्व दीक्षा स्याद्दर्शास्तु मधु-पौषयोः ।
अन्यत्र तु सदा कार्य्या विशुद्धौ गुरु-शिष्ययोः ॥

वर्षादौ तु निमित्तानि प्रशस्तान्युपलक्षयेत् ॥

वर्षादिषु निषिद्धेष्वपि कालेषु कदाचिच्छुभशकुनाद्युपलम्भे सति दीक्षा कर्त्तव्येत्यर्थः ।

अश्विन्यादित्रयघोराद्रादर्शनं गुरुपर्व च ।
पवित्रका तिथिश्चापि दीक्षाकर्मविधौ वरा ॥

रत्नावल्याम् ।

चतुर्थीं नवमीं षष्ठीमष्टमीञ्च[1] चतुर्दशीम् ।
पूर्णमासीं विना शेषा सिता मुक्तौ मुमुक्षुषु ।
आदित्यं मङ्गलं सौरिं त्यक्त्वा वारास्तु भूतये ॥

सुप्रभेदे ।

सप्तम्याञ्च नवम्यां वा एकादश्यामथापि वा ।
दशम्याञ्च त्रयोदश्यां दीक्षाकर्म प्रशस्यते ॥

क्वचित्तु त्रयोदश्याममावास्यामिति पाठः ।

सितेन्दु-ज्ञ-गुरूणान्तु परीक्षेत गुणागुणैः ।
गुणैर्युक्तांस्तु संग्राह्य गुणहीनांस्तु वर्जयेत् ॥

कालोत्तरे ।

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च ।
पूर्णमास्यां प्रकर्त्तव्यं भूतिकामैः सिते सदा ॥
मुक्तिकामैः कृष्णपक्षे दत्त्विच्छित्कर्म चाचरेत् ।
दिनच्छिद्राणि मुक्त्वाथ चान्यान्यादिवयः स्मृताः ॥

तत्त्वसागरसंहितायाम् ।

---

(१) षष्ठीं पञ्चमीञ्चेति क० ।

तां तां तिथिं पुरालोच्य तदुक्तां तत्र दीक्षयेत्।

इन्द्र उवाच।

कस्य का तिथिरुद्दिष्टा विशेषं वद नारद।
सङ्क्षेपेणैव दीक्षायां विशेषावसरं तथा॥

नारद उवाच।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः।
चतुर्दशी शिवस्योक्ता वायः प्रोक्ता त्रयोदशी॥
द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका।
नित्यमार्गेषु पार्वत्या अष्टमी च चतुर्दशी॥
अष्टमी गणनाथस्य भानोः प्रोक्ता तु सप्तमी।
एवमुक्तास्तु संक्षेपात्तिथयः परिभाषिताः।
प्रपञ्चेन तिथीः सर्वाः पविचारोपणे स्मृताः।

कारणे।

पौष्णं रोहिण्यथादित्यं श्रवणञ्चाश्विनी तथा।
सावित्रं त्वाष्ट्र-वायव्ये नैर्ऋतं मैत्रमेव च॥
तिष्यं चित्तरार्द्रा तु श्रविष्ठा च चिजक्षभम्।
नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रत॥

रत्नावल्याम्।

चीण्युत्तराणि रोहिण्यः पुष्यर्कं मृगशीर्षकम्।
हस्तः स्वातिरनुराधा मघा मूलञ्च रेवती॥
अभिजिच्छ्रवणश्चेति शिवयोगे चतुर्दशी।
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः स्मृतः॥

सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः।
वरीयांश्च शिवः सिद्धोमह्मा ऐन्द्रश्च योगकाः॥
तिथ्यादि तानि सर्वाणि प्रशस्तानि विमुक्तये।
किन्तु देशिकसेकादौ शुभान्यन्यापि पूर्ववत्॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा।
पूर्वाभाद्रपदा ज्येष्ठा दशमी रोहिणी तथा॥
द्वादश्या सर्पनक्षत्रमर्यमणा च त्रयोदशी।
नक्षत्रजन्मा इत्येते देवानामपि नाशदाः॥

कारणे।

राशयश्च चराः श्रेष्ठा मध्यमाश्चोभये स्मृताः।
स्थिरश्च नैधनस्थाने ग्रहाः सर्वे विवर्जिताः।
आचार्य-शिष्ययोरानुकूल्यं शुभप्रदं भवेत्॥

क्रियाकाण्डशेखरे।

राश्यादिवर्गसंशुद्धिर्लग्नचन्द्रार्कयोरपि।
बलं गोचरशुद्धिश्च योगशास्त्रे प्रतीयताम्॥
लग्नदोष-ग्रहदोषाः सर्वे नश्यन्ति ते शुभे।
लग्नस्थे भार्गवे प्रौढे केन्द्रस्थे च वृहस्पतौ॥
इत्यादिनिपुणं वीक्ष्य दीक्षां मौमुक्षवीम्प्रति।
मौमुक्षवीं प्रति न तत्कालादिनियमः स्मृतः॥
मन्त्रवर्णेषु सिद्धान्ते सुसिद्धान्मेलयेद्बुधः।
वैवर्णवानुदासीनान् गणयेद्दशभिः पृथक्॥
सिद्धराशौ हरेद्भागं वसुभिर्भानुभिः स्वरैः।

शुद्धराशिस्तु यः प्रोक्तोवामे सङ्गोदिता हि वा ॥
रिपुराशिगतः प्रोक्तोमासोऽसौ परिकीर्त्तितः ।
हरेत्पञ्चदशं भागं तिथिज्ञानाय सन्नगम् ॥
मासि तस्मिंस्तथा यामे कुर्वीत ग्रहणं मनोः ।
ज्योतिःशास्त्रानुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥

अथ दीक्षार्थं प्रशस्तास्तिथीः प्रतिपाद्य तत्त्वसागरसंहितायाम् उक्तं हि ।

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणान्तु सङ्गलङ्ग उपस्थिते ।
तदनुज्ञा यदा लब्धा स दीक्षावसरोभवेत् ॥
ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि ।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥
प्राप्ता दीक्षा तदा ज्ञेया गुरौ च समुपस्थिते ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥

इति नानादेवदीक्षाकालः ।

---

## अथ विष्णुदीक्षाकालः ।

क्रतुपञ्चरात्रे ।

विज्ञाय नीतिप्रवणं हि शिष्य-
मुदग्गतौ तीक्ष्णकरस्य काले ।

सोमस्य हस्तौ शुभलग्नयुक्ते
सन्दीक्षयेद्वै कृपया गुरुस्तु ॥

महापञ्चरात्रे ।

द्वादश्यां शुक्लपक्षस्य सूर्य्यसंक्रमणे तथा ।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यायामथवा कालशुद्धिस्तु देशिकः ।
तदेकदिवसः पूर्वमधिवासनमारभेत् ॥

तन्त्रसागरसंहितायाम् ।

ब्रह्मणः पौर्णमासुक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी शिवे प्रोक्ता वायः प्रोक्ता चतुर्दशी ॥

सौरपञ्चरात्रे नवकदीक्षाविषये ।

दीक्षाविधौ वा नवके च काले
स्याद्द्वादशी पञ्चदशी तिथिस्तु ।
एकादशी पञ्चदशी तिथिर्वा
भवेच्चतुर्दश्यथवाष्टमी च ।
याचादिके योगविधौ प्रशस्ता
स्याद्देवतानां नवमी चतुर्थी ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये दीक्षाकालो नाम षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।

---

### अथ नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

विष्णुधर्मोत्तरे ।

कालश्च द्विविधोज्ञेयः स्थूल-सूक्ष्मोपलक्षितः ।
स्थूलश्च लौकिकोज्ञेयः सूक्ष्मश्चाध्यात्मिकस्तथा ॥
सर्वं स्थूले च कर्त्तव्यं स्थूलं कालविधिं शृणु ।
स्वस्थानकाक्षिनिमिषचतुर्थभागस्त्रुटिः स्मृतः ॥
तद्द्वयन्तु लवः प्रोक्तो निमेषस्तद्द्वयं भवेत् ।
निमेषाः पञ्चदश काष्ठाः त्रिंशत्काष्ठाः कला स्मृता ॥
त्रिंशत्कला मुहूर्त्तश्च तदेव घटिकाद्वयम् ।
सार्द्धाश्च नाडिकाः सप्त यामस्तत्सन्धिरुच्यते ।
सन्ध्ययोऽष्टौ समाख्याता अहोरात्रं विचक्षणैः ॥
यजनं प्रतिमानन्तु उत्तमन्त्वतिकीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामके ॥
यजनं मध्यमं मध्य उदयेऽस्तमनं समं ।
परार्द्धेषु कालेषु पूजयेत्तु विशेषतः ॥
द्विकालं वा त्रिकालं वा आत्मार्थं संप्रपूजयेत् ।
पूजारम्भाय यत्नतः सर्वं सन्ध्याविधिं कुरु ॥
सन्ध्यादिकर्मचाद्दोषाः कृते चेत्तु न दोषकः ।

पूर्वाह्णे चैव मध्याह्णे प्रदोषे बलिमाचरेत् ॥
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् ।
अर्द्धयामे बलिं कुर्य्यात् काम्यार्थी तु विशेषतः ॥
नित्योत्सवे च पूजायां तथा संवत्सरोत्सवे ।
कारयेत्तु विशेषेण अन्यथा नैव कारयेत् ॥
भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥
पूर्वाह्णात् समारभ्य यावत्तु दश नाडिकाः ।
मध्याह्न इति विज्ञेयः स्थापनारोपणादिषु ॥
मध्याह्नात्तु समारभ्य यावत्तु दश नाडिकाः ।
सायह्नाल इति प्रोक्तः प्रदोषमधुना शृणु ॥
अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥
प्रदोषान्तं समारभ्य त्रिपादेन त्रिनाडिकाः ।
अर्द्धयाम इति प्रोक्तस्त्वर्द्धरात्रमथोच्यते ॥
अर्द्धयामान्तमारभ्य यावत्तु दश नाडिकाः ।
अर्द्धरात्रमिति प्रोक्तं रात्रिनक्तमथोच्यते ॥
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिकाः ।
रात्रिनक्तमिति प्रोक्तं कालेवं सर्वमाचरेत् ॥
जलसंग्रहणं पुष्पसंग्रहं चयनं तथा ।
उदयादेव कर्त्तव्यं रात्र्यन्ते वा जलग्रहः ।
देवतास्थापनं तीर्थं प्रातःकाले समाचरेत् ॥

प्रातःकालात्समारभ्य यावद्वै दश नाडिकाः ।
तावत्तापि प्रकर्त्तव्यं तीर्थकार्यं प्रजापते ॥
अङ्कुरार्पणकार्यं तु यज्ञस्याधिवासनं ॥
यागञ्च प्रारभेद्धोमान् रत्नाद्येव प्रबन्धने ॥
स्नापने मोचने चैव गर्भन्यासे तथैव च ।
अधिवासनानि सर्वाणि मध्यरात्रे तु कारयेत् ॥
राज्यन्तये विशेषेण सर्वदेवक्रियार्थकं ।
कुर्यात्परं मध्याह्नं तद्राष्ट्रभनिवृत्तये ॥

इति नित्य-नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

---

## अथ विष्णुपूजाकालः ।

तत्र विष्णुधर्मोत्तरे ।

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिं ।
अपूज्य भोजनं कुर्वन् नरकाणि व्रजेन्नरः ॥

नारदीये ।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशवं ।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण सङ्क्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

निमित्तेषु च सर्वेषु तत्काले च विशेषतः ।
पूजयेद्देवदेवेशं सूर्य्यं सम्यग् यत्नतः ॥

इति विष्णुपूजाकालः ।

---

## अथ देवताविशेषपूजने तिथिविशेषाः ।

भविष्यत्पुराणे ब्राह्मीकल्पे ।

प्रतिपत्पावकी प्रोक्ता द्वितीया ब्रह्मणस्तु ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ॥
पञ्चमी नागराजानां षष्ठी स्कान्दी तिथिः स्मृता ।
सप्तमी सप्तसप्तेस्तु अष्टमूर्त्तेस्तथाष्टमी ॥
नवमी योगिनीनान्तु यमस्य दशमी तथा ।
एकादशी धनेशस्य द्वादशी चक्रिणस्तथा ॥
त्रयोदशी त्वनङ्गस्य भूतेशस्य चतुर्दशी ।
पौर्णमासी प्रजेशस्य पितॄणां दर्श उच्यते ॥

इति देवताविशेषपूजने तिथिविशेषाः ।

---

## अथ कामनाविशेषात्तिथ्यादिविशेषे देवताविशेषपूजा ।

भविष्यत्पुराणे ।

अग्निजिह्वा च ज्वाला च प्रतिपद्यन्नतं स्तनम् ।
हविषा सर्वधान्यानि प्राप्नुयादमितं धनम् ॥
ब्रह्माणञ्च द्वितीयायां संपूज्य ब्रह्मचारिणः ।

भोजयित्वा च विप्राणां सर्वेषां पारगो भवेत् ॥
तृतीयायां च वित्तेशं वित्तेशो जायते ध्रुवम् ।
क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्यात् चतुर्थ्यां सर्वकर्मसु ।
अविघ्नं विदुषां विप्र कार्यनाशश्च कर्हिचित् ॥
नागानिष्ठा च पञ्चम्यां न विषैरभिभूयते ।
स्त्रियं वा लभते पुत्रान् परांश्च श्रियमाप्नुयात् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मायावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूजयेत् देवं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो गोचूड़ाभरणो हरः ।
ज्ञानं ददाति विपुलं कामजान् यच्छते गुणान् ॥
मृत्युघ्ना धनदश्चैव पापघ्ना च सुपूजितः ।
दुर्गां संपूज्य दुर्गाणां नवम्यां तत्पेच्छया ।
संग्रामे व्यवहारे च सदा विजयमादिशेत् ॥
दशम्यां धर्मराजस्तु सर्वव्याधिहरो ध्रुवम् ।
नरकादपमृत्योश्च समुद्धरति मानवम् ॥
एकादश्यां यथोद्दिष्टा विश्वेदेवाः सुपूजिताः ।
प्रजां पुष्टिञ्च धान्यञ्च प्रयच्छन्ति महीं तथा ॥
द्वादश्यां पूजितो देवः सर्व्वैश्वर्य्यसमन्वितः ।
बहुपुत्रो बहुधनस्तथा जायाच संश्रयः ॥
त्रयोदश्याञ्च सम्पूज्य कामदेवं महाबलम् ।

पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् ॥
चतुर्दश्यां महादेव उमाकान्तो जगद्गुरुः ।
सम्पूजितो महाभक्त्या सर्व्वान् कामान् ददात्यसौ ॥
पौर्णमास्याञ्च यः सोमं पूजयेत् भक्तिमान् नरः ।
बहुपत्यं भवेत् तस्य इति मे निश्चिता मतिः ॥
अमायां पितरः पिण्डैरिष्टाः कुर्व्वन्ति सर्व्वदा ।
पूजां वृद्धिं धनं रक्षामायुष्यं बलमेव च ॥
उपवासं विनाप्येते भवन्तु फलप्रदाः ।
पूजिता जपहोमैश्च तोषिता भक्तितः सदा ॥
मूलमन्त्रास्तु संज्ञाभिरुक्तमन्त्राश्च कीर्त्तिताः ।
पूर्व्वञ्च पद्मपत्राः कर्त्तव्याश्च तिथीश्वराः ॥
एतेषाञ्च रूपाणि देवताकाण्डे व्याख्यातानि ।
गन्ध-पुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजा प्राये न कर्त्तव्या कृतापि न फलप्रदा ॥
आज्यधाराभिसिक्तैश्च दधि-क्षीराज्य-माक्षिकैः ।
यथोक्तफलदो होमो जपः शान्तेन चेतसा ॥
कृत्वा यज्ञं द्वयाब्दे च(१) फलान्येतानि भक्तितः ।
यथोक्तानि यथोक्तानि लभेतेष्वाधिकानि तु ॥
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ।
तेषां लोकेषु मनुजो यावतीह(२) तिथिः स्मृता ॥
इह तस्मात् परिभ्रष्टस्ततो जायते नरः ।

(१) द्वयब्दे चेति ख० ।	(२) यावत्येवेति ख० ।

सुहृपोधनवल्लभोनिर्व्विंतारिर्मंहीपतिः ।
स्त्रीपुत्रपुत्रको वापि जायते पुरुषोत्तमः ॥

कूर्म्मपुराणे ।

देवताभ्यर्च्चनं नृणामग्नेयाणौ जलाशनम् ।
अमावास्यां तिथिं प्राप्य यस्ताराधयते भवम् ।
ब्रह्माणं पूजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्द्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्व्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारस्त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे सर्व्वपापैः प्रमुच्यते ॥
अमावास्यामथावाप्य हरिश्च च पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्व्वपातकैः ॥
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ।
सप्तम्यामर्च्चयेद्भानुं मुच्यते सर्व्वपातकैः ॥
भरण्याञ्च चतुर्थ्याञ्च शनैश्चरदिने यमम् ।
पूजयेत् सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः ॥
एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥

विष्णुधर्म्मोत्तरे ।

मार्कण्डेय उवाच ।

कालं तवाहं वक्ष्यामि देवतापूजने पृथक् ।
संवत्सरेण सर्व्वेण सोपवासस्य सर्व्वदा ॥

ब्रह्माणं पूजयेत् देवं सततं प्रथमेऽहनि ।
पक्षद्वये महाभाग पञ्चदश्यामुपोषितः ॥
संवत्सरेण धर्म्मज्ञ विमानवरसुवर्णकम् ।
हंसयुक्तेन यानेन ब्रह्मलोकं प्रपद्यते ॥
चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद् भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम् ।
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥
कालस्यावयवाः सर्व्वे तस्मिन्नहनि पूजिताः ।
सम्वत्सरे च धर्म्मज्ञ सौख्यं दद्युरनुत्तमम् ॥
संवत्सराधिपं नागं तस्मिन्नहनि पूजयेत् ।
महाच सौख्यमाप्नोति स्वास्थ्यमत्यन्तमेव च ॥
तथाग्निं ब्रह्मणा सृष्टं त्रैलोक्ये प्रथमं द्विज ।
दक्षं प्रजापतिं नित्यं द्वितीयायामथार्च्चयेत् ।
फलमाप्नोति धर्म्मज्ञ गोमेधस्य न संशयः ॥
तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम् ।
नित्यमारोग्यमाप्नोति तथा रूपञ्च भार्गव ॥
शुक्लपक्षे द्वितीयायां बालचन्द्रस्य पूजनम् ।
कृत्वा दत्त्वा च लवणं प्राणाची सुभगो भवेत् ॥
याध्या द्वादश ये प्रोक्तास्तेषां कृत्वा तु पूजनम् ।
तृतीयायां महाभाग द्वादशाहफलं भवेत् ॥
तृतीयायां तदाभ्यर्च्य ब्रह्म-विष्णु-महेश्वरान् ।
पृथक् पृथक् महाभाग त्रिवर्गफलभाग् भवेत् ॥

चौम् लोकांश्च तदा नाम सम्यक् संपूज्य भक्तितः ।
ऐश्वर्यं महदाप्नोति गतिमग्र्याञ्च विन्दति ॥
तृतीया माघे शुक्ला या स्यात् श्रवणसंयुता ।
तस्यां संपूज्य गोविन्दं पुष्टिमग्र्यामवाप्नुयात् ॥
वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः ।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥
या तस्मात् कृत्तिकोपेता विशेषेण सुपूजिता ।
तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते ॥
अक्षया सा तिथिस्तस्मात् तस्यां सुकृतमक्षयम् ।
अक्षतैः पूजितो विष्णुस्तेन साप्यक्षया मता ॥
अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् ।
वरान् सुसंस्कृतांश्चैव हुत्वा चैव तथाक्षतान् ॥
विप्रेषु दत्त्वा तानेव तथा सक्तून् सुसंस्कृतान् ।
यवान्नं सुमहाभाग फलमक्षयमश्नुते ॥
एकामप्युक्तवत् कृत्वा तृतीयां भृगुनन्दन ।
एतामप्यतृतीयानां सर्वासान्तु फलं लभेत् ॥
प्रोक्तास्तु भृगवो नाम देवा द्वादश ये पुरा ।
चतुर्थ्यां पूजनं तेषां कृत्वा दिवमवाप्नुयात् ॥
यमराजपूजनं कृत्वा चतुर्थ्यामेव धार्मिकः ।
नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः ॥
विनायकमथाभ्यर्च्य चतुर्थ्यां यदुनन्दन ।
सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयात् ॥

निद्रां रतिं तथा श्रद्धां कीर्त्तिं मेधां सरस्वतीम् ।
प्रज्ञां पुष्टिं तथा कान्तिं तथैवाहनि पूजयेत् ॥
तत्प्रसादादवाप्नोति यथेष्टं मनुजोत्तम ।
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥
देवानां मातरः सर्वास्तत्र तथाह्नि पूजिताः ।
सर्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥
पञ्चम्यां पूजनं कृत्वा तथा च मनसा नरः ।
सौभाग्यं महदाप्नोति यशश्चाप्यथ विन्दति ॥
पञ्चम्यां पृथिवीं देवीं तथा संपूजयन्नरः ।
तामवाप्नोति यत्नेन नात्र कार्य्या विचारणा ॥
विश्वेदेवास्तु ये प्रोक्ताः पूर्वमेव मया द्वय ।
तेषां संपूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥
दृष्टं गन्धर्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ।
तथा चित्ररथं तेषां राजानन्तु विशेषतः ॥
देवभार्य्यास्तथा सर्वाः संपूज्य सुभगो भवेत् ।
दृष्ट्वा त्वप्सरसश्चैव तथा रूपमवाप्नुयात् ॥
दृष्टं नागं तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ।
वाहये पुष्करावर्त्तौ पञ्चम्यां सुखमारभेत् ॥
सर्वकामसमृद्धस्य यक्षस्य सुफलं भवेत् ।
तथा च पूजयेद्राजन् तथैव नलकूबरम् ॥
श्रियः संपूजनं कृत्वा पञ्चम्यां प्रयतः सदा ।
श्रियमाप्नोति विपुलां संवत्सरमथोदिताम् ॥

सर्वेषां नृप पश्चाच्च रतिं प्रीतिं सरस्वतीम्।
उमां मेधां भद्रकालीं तथा कात्यायनीमपि॥
धृतिं स्वाहां स्वधाम्वृद्धिं चनसूयां तथा क्षमाम्।
सुरभिं देवसेनाञ्च मेधां ज्योत्स्नां तथा शचीम्॥
गौरीं वरुणपत्नीञ्च यमपत्नीं तथैव च।
धूम्राख्यां सुमहाभागां मृत्युच्छायां तथैव च॥
अभीष्टदेवजननीं देवपत्नीं तथैव च।
पूजयेत् काममाप्नोति तथाप्येकामसंशयम्॥
ऐरावतञ्च गरुडमुच्चैःश्रवसमेव च।
चरञ्च वृषभञ्चैव शस्त्राण्यस्त्राणि यानि च।
तथा संपूजयेद्राजन् विजयं समुपाश्नुते॥
तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमी।
नागसम्पूजनं कृत्वा धनभागी भवेन्नरः॥
कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा।
चतुरात्मविनिर्दिष्टो भगवान् क्रौञ्चसूदनः॥
तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान्।
बालानां पूजनात् श्रेयो नरः प्राप्नोत्यसंशयम्॥
सप्तर्षीणां पूजनं तत्र कृत्वा तु सुखमाप्नुयात्।
स्कन्दपार्श्वचरान् राजन् रुद्रपार्श्वचरानपि।
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात्॥
कश्यपार्श्वांस्तथाभ्यर्च्य सूर्यपत्नीं सुवर्चसम्।
ईप्सितान् कामानवाप्नोति नात्र कार्या विचारणा॥

एवमेकोनपञ्चाशत् मरुतो नाम कीर्त्तिताः ।
तेषां सम्पूजनं कृत्वा सप्तम्यां दिवमाप्नुयात् ॥
इन्द्रस्य पूजां प्रेतस्य तद्दा कृत्वा सुखी भवेत् ।
पूजयित्वा तथाभीष्टां चरितं पुत्रभाग् भवेत् ॥
वह्निसम्पूजनं कृत्वा वह्निष्टोममवाप्नुयात् ।
वायोः सम्पूजनं कृत्वा प्राप्नोति परमां गतिम् ॥
सम्पूज्य च ऋषीन् सप्त सोमयज्ञास्तु ये स्मृताः ।
सद्यः प्राप्नोति तानेव गतिमग्र्याञ्च विन्दति ॥
सप्तम्यां चतुरास्यञ्च इष्टमभ्यर्च्चयेन्मुनिम् ।
स्वाध्यायफलमाप्नोति तदापि फलमश्नुते ॥
पूजयित्वा समुद्रांश्च द्वीपमध्ये तदा नरः ।
पातालस्थान् महाभाग भुवमाप्नोत्यभीप्सिताम् ॥
सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत् ।
धौद्रांश्चैव तथैवाग्र्यां गतिमप्रमितां लभेत् ॥
गङ्गां सप्तप्रकाराश्च तथा देवीं सरस्वतीम् ।
सप्त यज्ञानवाप्नोति नरः सम्पूज्य वै ध्रुवम् ॥
आदित्यं पूजयित्वा वै क्षिप्रं रोगैः प्रमुच्यते ।
सप्तम्यां चाद्यमेव गतिमग्र्याञ्च विन्दति ॥
एकानंशां तदा देवीं तथा सम्पूजयन्नरः ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥
नरेन्द्रपूजनं कृत्वा गतिमग्र्यां तथा लभेत् ।
अनन्तं प्रकृतजं पूजयित्वा सुखी भवेत् ॥

अष्टम्यां पूजनं कृत्वा वसूनां धर्म्मवित्तमः[1]।
नाकलोकमवाप्नोति वह्निश्च[2] मनसेप्सितम्॥
चतुष्पथेषु रथ्यासु तथैवोदूखलेषु च॥
गिरिशृङ्गेषु रथ्यासु नदीतीरेषु चाप्यथ।
गुहासु च नवां रथ्यां[3] पिशाचानां बलिं हरेत्॥
ब्रह्मादीनाञ्च देवानां कृत्वा सम्पूजनं ततः।
तेषां बलिं विनिक्षिप्य क्षेममाप्नोति मानवः॥
आयुधं पूजयित्वा तु तदा विजयमाप्नुयात्।
दशम्यां पूजयित्वा वै विश्वदेवांस्तथा दश।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥
तथा सम्पूजयेद्राजन् तथैव च दिशो दश।
क्रियासु फलमाप्नोति यत्र यत्राभिजायते॥
धर्मं सम्पूज्य देवेशं सर्वसत्त्वसुखावहम्।
धर्म्मां गतिमवाप्नोति धर्म्मस्य फलमेव च॥
एकादश्यान्तु संपूज्य रुद्रानेकादश प्रभो।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते॥
तथा सर्वगतान् रुद्रान् सुदा[4] सर्वांश्च पूजयेत्।
सर्व्वान् कामानवाप्नोति सर्व्वेनानपराजितान्॥
तथा च द्वादशादित्यान् द्वादश्यां पूजयेन्नरः।

---

(१) धर्म्मवित्तमत इति ख०। (२) वह्निं चेप्सनवित्त क्षिप्तमिति क्वचित्पाठः
(३) रथ्यां प्राप्येत्यर्थः। (४) सदेति ग०।

द्वादश्यां संयवाप्नोति गतिमग्र्याञ्च विन्दति ॥
द्वादश्यां देवदेवेशं पूजयित्वा जनाधिपम् ।
पुण्डरीकमवाप्नोति वरुणं वाद्रवां पतिम् ॥
सर्व्वदेवेश्वरं शक्रं पूजयित्वा तथा नरः ।
सर्व्वान् कामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥
विष्णोः संपूजनं कृत्वा कामानाप्नोत्यभीप्सितान् ।
दशमेधं फलं प्राप्य गतिमग्र्याञ्च विन्दति ॥
त्रयोदश्यामथाभ्यर्च्य कामदेवं जगत्पतिम् ।
सौभाग्यं महदाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रशुक्लत्रयोदश्यां कामदेवमथार्च्चयेत् ।
अर्च्चनात् सर्व्वमाप्नोति फलं संवत्सरोदितम् ॥
यक्षाणां राक्षसानाञ्च चतुर्द्दश्यान्तु पूजनम् ।
कृत्वा चेममवाप्नोति क्रियाशाफल्यमेव च ॥
पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम् ।
बहुवित्तमवाप्नोति फलं संवत्सरोदितम् ॥
शङ्ख-पद्मौ तथाभ्यर्च्य निधाने यक्षपूजिते ।
मणिभद्रं तथाभ्यर्च्य धनं प्राप्नोत्यसंशयम् ॥
पूजयित्वा महादेवं सर्व्वान् कामानवाप्नुयात् ।
माघमासे चतुर्द्दश्यां कृष्णपक्षे विशेषतः ॥
तथा पितृगणान् राजन् पौर्णमास्यां तु पूजयेत् ।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
श्राद्धं कृत्वा तथा राजन् सर्व्वान् कामानवाप्नुयात् ।

सर्वेमिन्दुं तथाभ्यर्च्य सौभाग्यं महदाप्नुयात् ॥
शुक्रं ग्रहमथाभ्यर्च्य नक्षत्रमथवा नृप ।
तस्मात् क्षेममवाप्नोति कामांश्च यदुनन्दन ॥
मासनामः च नक्षत्रं करणं योगमेव च ।
पूजयित्वा तथा राजन् सौभाग्यं महदाप्नुयात् ॥
सोपवासस्तु नक्षत्रं नक्षत्रेशमथार्चयेत् ।
नक्षत्रवामभागे च तस्मात् काममवाप्नुयात् ॥
कार्त्तिकेयं महाभागं कृत्तिकास्वर्चयेन्नरः ।
अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत् ॥
कृत्तिकासु तथाभ्यर्च्य वह्निं विजयमाप्नुयात् ।
भोगिनं नागमभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ॥
कामदेवमथाभ्यर्च्य भार्य्यं सौभाग्यमाप्नुयात् ।
सावित्रे च तथा हस्ते ब्रह्मा सायुज्यमाप्नुयात् ॥
इन्द्रपदार्चितं देवं तन्मानं धनमेव च ।
गन्धर्वं वा यक्षं वापि तस्मात् कामानवाप्नुयात् ॥
कृष्णपक्षे चतुर्दश्यां महाकालमथार्चयेत् ।
सर्वान् कामानवाप्नोति तथैवं नात्र संशयः ॥
महेश्वरं मातृगणं तथा वह्निं प्रपूजयेत् ।
एकां वा मातरं राजन् काममाप्नोत्यभीप्सितम् ॥
तथा तुम्बुरुगन्धर्वपञ्चकं पूजयेन्नरः ।
सर्वत्र जयमाप्नोति नात्र कार्य्या विचारणा ॥
कृत्तिकासु नरोऽभ्यर्च्य स्कन्दपार्षदांस्तथा ।

आरोग्यं महदाप्नोति सदा वा मनसेप्सितम् ॥
नृसिंहप्रतिमाञ्चैव पूर्वयत्नं समर्चयेत् ।
नरो माहात्म्यान् राजन् सर्वकाममनोरमान् ॥
एकां वा मातरं राजन् कामानाप्नोत्यभीप्सितान् ।
सामर्थ्यमवाप्नोति पूजयित्वा सरस्वतीम् ॥
देवानां मानवानाञ्च तत्पदा ये तथापरे ।
तेषां सम्पूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥
करणे वा मुहूर्त्ते वा यथावद् देवमर्चयेत् ।
तस्मात् काममवाप्नोति गतिमभ्याञ्च विन्दति ॥
चैत्रमासमथारभ्य यथोक्तेऽह्नि नरः सदा ।
इष्टदेवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥
संवत्सरेण धर्मज्ञ नक्षत्रे यदि वा तिथौ ।
एतेषु सर्वधर्मज्ञ सोपवासः समाहितः ॥
संवत्सरे चायने वा ऋतौ मासे च तद्दले ।
नक्षत्रे संयतः पूजां कृत्वा तल्लाभिनः सदा ।
तावत्कालं महाभाग तस्मात् काममवाप्नुयात् ॥
चैत्रात् समारभ्य महानुभाव
रोपेत वर्षं सुरमर्चयानः ।
तस्मेह तोषात् परमं च कामम्
आप्नोति चक्रात् यदुवंशचन्द्र ॥
इति कामनाविशेषेण तिथ्यादिविशेषे देवताविशेषपूजा।

---

## अथ कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

देवता यत्र नक्षत्रे यदा दृष्टिविता तदा ।
अवस्थो यत्रदेवस्तु तदा स फलभाग् भवेत् ॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम् ।
नक्षत्राणि च सर्वाणि यथाशैव पृथक् पृथक् ॥
अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ।
व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीड़ितः ॥
भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः ।
तथा गन्धादिभिः शुभैरपमृत्योर्विमुच्यते ॥
अनलः कृत्तिकायान्तु यष्टिं सम्पूजितः पराम् ।
[१]रक्तमाल्यादिभिर्दद्यात् हुतहोमेन च ध्रुवम् ॥
रक्तः प्रजापतिः पूज्य रक्तान् दद्यात्पशूंस्तथा ।
रोहिण्यां देवमापूज्य दद्याच्च हरिद्वराम् ॥
मृगशीर्षे तथा सोमं जयमारोग्यमेव च ।
आर्द्रायान्तु शिवं पूज्य पश्चूत् विजयमश्नुते ॥
सितैः पद्मादिभिर्द्रव्यैर्देवत्वं पयसा च वै ।
पुनर्वसौ चाप्यदितिं यदा सम्पूजनादिभिः ॥
यजेथा तर्पिता चैव तानेव परिरक्षति ।

(१) रक्तेति ग० ।

तिष्ये बृहस्पतिर्बुद्धिं ददाति विपुलं धनम् ॥
पान-गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः ।
तर्पितस्तु पितृगणो भक्ष्याद्यैर्मधुरैः शुभैः ॥
मघायां विजयन्दद्यात् पूर्वायान्तु भगस्तथा ।
भर्त्तारमीप्सितं कुर्य्यात् कन्यायाः पुरुषस्य च ॥
इष्ट अन्नानि चाप्नुवत्युत्तरस्यां तथार्य्यमा ।
पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥
गन्धैः पुष्पादिभिः सर्वैर्ददाति विपुलन्धनम् ।
राज्यं त्वष्टा च चित्रायां निस्सपत्नं प्रयच्छति ॥
स्वात्यां सन्तर्पितो वायुर्दद्यादायुर्बलं परम् ।
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूजयेत् ॥
धनं राज्यं बलं यशस्तेजांसि निवसेत् सदा ।
अनुराधां समासाद्य मित्रं सम्पूज्य भक्तितः ॥
प्रियो भवति सर्वेषां निश्चलं वित्तमाप्नुयात् ।
ज्येष्ठायां पूर्ववच्छक्रमिष्ट्वा पुष्टिमवाप्नुयात् ॥
गुणैः सर्वैश्च सम्पूज्य कर्मणा च धनेन च ।
मूले तु निर्ऋतिं सम्यक् भक्त्या सम्पूज्य पूर्ववत् ॥

इति कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

---

## अथ निमित्तनक्षत्रादेः संयोगविशेषे देवता-विशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
अल्पक्लेशं महापुण्यं नक्षत्र-तिथियौगिकम् ॥
शृणु कृष्णाष्टमीयोगं शिवयोगेषु चोत्तमम् ।
चतुर्वर्गस्य भाग्यस्य रमया भृगुवासरे ॥
देवयोगाद्यदा षष्ठी पुष्यर्क्षे रविवासरे ।
स्कन्दयागस्तदा कार्य्यः सर्वकामप्रसाधकः ॥
यदा तु सूर्य्यवारेण सप्तमी विजया तु सा ।
तदा सम्भवते भानोर्यागः सर्वगुणावहः ॥
शशिरिक्तासमायोगे चार्द्रर्क्षे मातृपूजनम् ।
माघांशाः कालिकायाश्च यष्टव्या विधिना मुने ।
सम्पूर्णं फलमाप्नोति स्वस्थाने खेचरो भवेत् ॥
पुष्येरिष्ट्वा यक्षं मन्त्रैः पूर्वाह्णे च पूर्ववत् ।
स पापात् मुच्यते क्षिप्रं शारीरात् मानसात्तथा ॥
आषाढास्तु तथा विद्यादुत्तराषाढयोगतः ।
विश्वान् सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति चात्मनः ॥
श्रावणे लक्षिते विष्णोः पुष्पैर्धूपैश्च भक्तितः ।
सन्तर्प्य शिवमाप्नोति धनं विजयमेव च ॥
धनिष्ठायां वसूनिष्ट्वा न भयं विद्यते क्वचित् ।
महान्तोऽपि तथा तेषां गन्ध-पुष्पादिभिः शुभैः ।

शरवन्तु समभ्यर्च्य व्याधिभिर्मुच्यते ध्रुवम् ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्य्यमेव च ।
अजं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्य्या विचारणा ॥
उत्तरायामहिर्बुध्नं पराम्तृतिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति सततं पशून् ॥
चितैः पुष्टिं स्थितिं चैव धृतिं विजयमेव च ।
अत चैते समाख्याता यज्ञाः सङ्क्षेपतो मया ॥
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ।
भक्त्या वित्तानुसारेण भवन्ति फलदा ध्रुवम् ॥
गन्तुं चेच्छेद् यदा ग्रामं यात्रायां ध्रुवमेव च ।
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् ।
एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपङ्कुर्य्याद्धोमङ्कुर्य्याद्यथेप्सितम् ॥
इति तिथिनक्षत्रादिसंयोगविशेषे देवताविशेषपूजा ।

---

## अथ पवित्रारोपणकालः ।

तत्र शिवपवित्रारोपणकालः ।
शिवधर्म्म-भविष्यपुराणयोः ।
पौर्णमास्यां तथा षष्ठ्यां शिवं सम्पूज्य यत्नतः ।

उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् ॥
पुनरेवं च कार्त्तिक्यां पूज्य शम्भुं समापयेत् ।
यतिभ्यो दक्षिणां दद्यात् सुवर्णादिपूर्विकाम् ॥
यः कुर्यात्तद्‌द्वयेवं चातुर्मास्यं पवित्रकम् ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥
पुत्रपौत्रादिभिर्युक्तश्चतुर्वेदश्च जायते ।
दयावान्तो सर्वद्रष्टा गुणरूपसमन्वितः ॥

शिवरहस्ये ।

पवित्रारोपणं शम्भोः कुर्य्यान्नभसि वा शुचौ ।
चतुर्द्दश्यामथाष्टम्यामभिषेच्य विधानतः ॥
श्रावणे प्रौष्ठपद्यां वा पवित्रारोपणन्तु यः ।
कुरुते नापवित्रं(१) तस्याब्दं संवत्सरान्तरा ।
शम्भोः पवित्रमारोप्य द्विजः सम्पूर्णतामियात् ॥
पवित्रान्तु पवित्रन्तु सार्थकं भृगुनन्दन ।
अपवित्रं पवित्रं स्यादैहिककर्मार्जितं नृणाम् ॥

कालोत्तरे ।

पूजां कृत्वा प्रकर्त्तव्यं नित्यमेव पवित्रकम् ।
अथवा नियमेनैव कुर्य्यान्मासद्वयान्तरे ॥
आषाढ़ान्ते चतुर्द्दश्यां नभस्य-नभसोस्तथा ।
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोः समम् ।
पवित्रारोपणं कार्य्यं न तु कालान्तरे उचितम् ॥

---

(१) अपवित्रमिति भावप्रधानोनिर्देशः अपवित्रत्वमित्यर्थः ।

एवं काले व्यतिक्रान्ते प्रायश्चित्तं समाचरेत् ।
भौतिकानां विशेषेण शुक्लपक्षे क्रमं विधिः ॥

'आषाढ़ान्ते चतुर्दश्यामिति पौर्णमास्यां चान्द्रमासविवक्षया आषाढ़शुक्लचतुर्दश्यामित्यर्थः ।

तथाच मोहचूडोत्तरे ।

आषाढ़स्य तथादिष्टा श्रावणस्य सितासिता ।
अष्टम्यां च चतुर्दश्यां तत्र गन्धपवित्रकम् ॥
चतुर्दश्यां प्रकर्त्तव्यं पवित्रं गन्धसंज्ञितम् ।
पवित्रमथ भक्तानामाषाढ़नियमः स्मृतः ॥

एवं सत्यपि विष्णुस्वापाभावे न कर्त्तव्यम्, किन्तु विष्णुस्वापानन्तरमेव कर्त्तव्यम् ।

उक्तञ्च ।

आषाढ़ेऽपि न कर्त्तव्यमसुप्ते मधुसूदने ।
कालोऽपवित्रतस्तत्र श्रूयतां विधिविस्तरः ॥
शुक्लाषाढ़चतुर्दश्यां कुर्याच्छ्रावण-भाद्रयोः ।
माघे चतुर्दश्यां पक्षयोरुभयोरपि ॥

नन्वाषाढ़चतुर्दश्यामित्यनेनैव(१) विष्णुस्वापानन्तरकालः स्वयमेव लभ्यते, तत्र किमिति असुप्त एव मधुसूदन इति । सत्यम् । किन्तु आषाढ़स्यापि द्विविधत्वात् सौरत्वेऽपि तत्र चान्द्रे कर्त्तव्यं स्यादिति पुनरधिकमासे सौरमासिककर्कटसङ्क्रान्त्यामेव विष्णुः स्वपितीत्येतदुक्तमिति न दोषः ।

---

(१) न आषाढ़चतुर्दश्यामित्यनेनैवेति ख० ।

उक्तञ्च ज्योतिःशास्त्रे ।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।

द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति ।

तथा ।

दर्शद्वयमतिक्रम्य यदा सङ्क्रमते रविः ।

अधिमासः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

इति वचनाच्च । पूर्वाषाढे पवित्रं न कुर्वीतेत्यभिप्रायः । यदा तु चैत्रादिषट्सु मासेष्वन्यतमस्मिन्नधिकमासे द्विराषाढः स्यात्तदा श्रावणे विष्णुस्वापः ।

तथाच ज्योतिःशास्त्रे ।

माधवादिषु षट्सु एकमासे दर्शद्वयं तदा द्विराषाढस्तदापि श्रावणे श्रावणे स्वपूः, अतस्तदा श्रावणादौ पवित्रारोपणं परं कार्य्यम् ।

उक्तञ्च मोहचौरोत्तरे ।

दीपादिस्थापनान्तञ्च पवित्रादि व्रतक्रतोः ।

पवित्रादि न कुर्वीत यदिच्छेच्छुभमात्मनः ॥

दर्शद्वयं भवेद्यच रविसङ्क्रान्तिवर्जितम् ।

अधिमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

लुप्तमासेऽधिमासे च कर्त्तव्यन्तु पवित्रकम् ।

सुप्ते चैव हृषीकेशे दोषभागन्यथा भवेत् ॥

ननु किं चान्द्रमासेन सौर एव ग्राह्यो भवेत् तथाधिकमासश्च ग्रहादिषु, नैवं । प्रायेण पवित्रारोपणे चान्द्र एव मासोऽभिमतो न तु सौरः, कन्यागते रवौ प्रायश्चित्ताभिधानात् ।

आषाढ़ादिषु मासेषु सुप्त एव जनार्दने ।
शुक्लपक्षेऽथवा कृष्णे प्रशस्ता सूपरोपणे ॥
रोगाभिवृद्धिसंयुक्तः प्रवासी राजपीड़ितः ।
शक्लमासचये यस्तु न कुर्यात् सूपरोपणम् ।
असौ कन्यागते भानौ यथा दृषाणुना युतम् ॥

'दृषाणुना' अघोरमन्त्रेण ।

कुर्यात् पवित्रकं प्रभोस्तस्यां न कथञ्चन ।
मलिम्लुचं परित्यज्य सर्वकर्मसु गर्हितम् ॥

कारणे ।

आषाढ़ादिचतुर्मासादन्यानि विवर्जयेत् ।
कर्त्तव्यं पक्षयोः शुक्ल-कृष्णयोरुभयोरपि ।
चतुर्दश्यामथाष्टम्यां रोपयेत्तु पवित्रकम् ॥

रत्नावल्यां ।

यदा लेकदिने प्रभोः पवित्राद्यं चिकीर्षति ।
कृतनित्यस्तदा सन्ध्यां कृत्वा नैमित्तिकीं सकृत् ॥
सम्यग्गन्धाधकं कृत्वा पवित्रं पूजयेन्नरः ।
यदा स्वल्पतिथिस्तत्र तदा तत्तिथिभागयोः ॥

यदा चतुर्दशी पौर्णमास्यां युक्ता तदा कालान्तरे ऽभिहितम् ।

यदा तत्रैव कर्त्तव्यं यदि व्यापतया तदा ।
गोदोहान्तरितं कृत्वा वाधिवासं पवित्रकम् ।
चतुर्दशीक्षणे कुर्याच्चैवं प्रेषतिथौ चरेत् ॥

सप्तम्यां वा त्रयोदश्यां कृत्वा गन्धपवित्रकम् ।
अष्टम्याञ्च चतुर्दश्यां कुर्य्यात् पवित्रकं तथा ॥
अपरेऽहनि कर्त्तव्यं सुपवित्रमिति स्थितिः ।
अथ द्वाभ्यां दिनेनैव कर्त्तव्यञ्चापरे जगुः ॥
अधिवासनयोद्याममपरेऽह्नि विधिक्रमम् ।
गोदोहान्तरितं कृत्वा यदि स्यात् व्यग्रमानसः ॥
चतुर्दशीक्षये कुर्यात् साधिवासं पवित्रकम् ।
सुपवित्रं पौर्णमास्यां तिथिभेदे त्वयं विधिः ।
अष्टम्यामपि बोद्धव्यः क्रमोऽयं सूत्ररोपणे ॥

इति शैवपवित्रारोपणकालः ।

---

## अथ विष्णुपवित्रारोपणकालः ।

तत्र पवित्रारोपणं कार्य्यं नित्यञ्च ।
तत्र विष्णुरहस्ये ।

पवित्रारोपणं विष्णोर्भुक्ति-मुक्तिप्रदायकम् ।
श्रीपुंकीर्त्तिप्रदं पुण्यं सुखसम्पद्गुणावहम् ॥
पुण्यानान्तु तथा पुण्यं सर्वपापहरन्तु वै ।
पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥
संवत्सरे नरो भक्त्या यदभ्यर्च्य जनार्द्दनम् ।
तत्फलं समवाप्नोति पवित्रारोपणेन तत् ॥
न करोति विधानेन पवित्रारोपणन्तु यः ।

तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ॥
तस्माद्भक्तिसमायुक्तैर्नरै-र्विष्णुपरायणैः ।
वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं हरेः ॥

मन्त्रप्रकाशे तु ।

पवित्रारोपणं वक्ष्ये वर्षपूजाफलप्रदम् ।
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ।
विधिना शास्त्रदृष्टेन यो न कुर्यात् पवित्रकम् ॥
वर्षे वर्षे ततः कार्य्यं विधिदृष्टेन कर्म्मणा ।
भक्त्या परमया युक्तो हरिप्रीत्यै पवित्रकम् ॥

तस्मादावश्यकं पवित्रारोपणकर्म्म शास्त्रस्य कामनानुसारेणायुरा-दीन्यपि फलानि भवन्तीति द्रष्टव्यम् ।

विष्णुरहस्ये ।

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
सिंहस्थे वा रवौ कार्य्यं कन्यायान्तु गतेऽथवा ।
तस्यामेव तिथौ सम्यक् तुलास्थे न कथञ्चन ॥

तथा ।

शरद्वर्षासु कुर्वीत पवित्रारोपणं शुभम् ।
द्वादश्यां श्रवणे वापि पञ्चम्यामथवा द्विज ।
चतुर्थ्यामेव कर्त्तव्यं चतुर्दश्यामथापि वा ॥

मन्त्रतन्त्रप्रकाशे ।

कर्कटकगते सूर्य्ये तथा सिंहगतेऽपि वा ।

द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात् पवित्रकम् ॥
अथ चेद्विप्रयोगेन मुख्यकालो न लभ्यते ।
कन्यास्थापि प्रकुर्वीत यावन्नोत्तिष्ठते हरिः ॥

सात्वतसंहितायाम् ।

तत्र मासचतुष्कस्य मध्ये कुर्याच्छुभे दिने ।
आषाढीपञ्चदश्यास्तु यावद्वै कार्त्तिकस्य च ॥

सम्पूर्णचन्द्रदिवसं इति ।

आकर्कोटकसङ्क्रान्तेस्तुलाभोगस्यावधि ।
कालान्तमस्य पक्षस्य सौरं मध्यमसंज्ञितम् ॥
एकादश्यादशम्योयचातुर्मास्योपलक्षितम् ।
कालान्तं वैष्णवं विद्धि उत्तमं सर्वसिद्धिदम् ॥
अप्राप्तेरस्य कालस्य त्वन्तरायेण केनचित् ।
निर्वाहणीयोऽप्यपरः कालस्त्वाश्रमवासिना ।
सम्पादयेच्चतुर्मध्ये विधिवद्योगपूर्वकम् ॥

इति विष्णुपवित्रारोपणकालः ।

---

## अथ नानादेवतापवित्रारोपणकालः ।

तत्र मासा वैष्णवोक्ता एव तिथिषु विशेषः ।

तत्त्वसागरसंहितायाम् ।

प्रतिपद्धनदस्योक्ता द्वितीया च श्रियो मता ।
तृतीया पार्वतीदेव्याश्चतुर्थी विघ्नहारिणः ॥

पञ्चमी श्रीशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु।
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी मता॥
मातॄणां नवमी प्रोक्ता वासवे[1] दशमी स्मृता।
एकादशी मुनीनाञ्च द्वादशी चक्रपाणिनः॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी।
पौर्णमासी सुरश्रेष्ठ पितॄणां कथिता तिथिः॥
देवादिष्वपुरभेदस्थाः कथिता तु चतुर्थिका।
अन्यासामपि शिष्टानामष्टमी नवमी स्मृता॥
तिथयश्च समाख्याताः पवित्रारोपणे शुभाः।
पञ्चम्यादिषु पर्वसु नित्यत्वेन समर्चयेत्॥
पवित्रारोपणं तत्र पृथक्स्नुषुप्ततयेरितम्।
भवेत् द्वयस्य सम्पत्ते देवस्यापि तथा भवेत्॥
यत्र तु स्वकतया देव प्रोक्तं तत्तत्तिथौ भवेत्।
इति कालः समाख्यातः शृणु सूर्य सुराधिप॥

विष्णुरहस्ये।

तिथयः सुविख्याताः पृथगुक्तास्तपोधनाः।
प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः॥
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः।
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य तु॥
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य तु।
सप्तमी भास्करे प्रोक्ता दुर्गायाश्चाष्टमी स्मृता॥

---

(१) वासुकेर्दशमी स्मृतेति क०।

मातॄणां नवमी प्रोक्ता दशमी वासुकेः स्मृता।
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी।
मम देव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता॥
यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य तु।
सर्वेषामेव देवानां कार्य्यन्तासु यथाविधि॥

तथाच कालोत्तरे।

विशेषेणोच्यते[1] वत्स प्रतिपत्प्रभृतिक्रमात्।
वह्नेस्तु ब्रह्मणो गौर्य्या गणेशादिषु पञ्चमी॥
षण्मुखस्य तु सूर्य्यस्य शिवस्याष्टमी सिता।
अम्बिकायाः स्मरान्तस्य रुद्रायाश्चक्रपाणिनः॥
कामस्य च त्रयोदश्यां चतुर्दश्यां शिवस्य च।
पितॄणाञ्चैव पूर्णायां गुरुयोगस्य कारयेत्॥
चतुर्दश्यामथाष्टम्यां पर्व साधारणं स्मृतम्॥

देवीपुराणे देवीमधिकृत्य।

अथवाषाढमासे तु श्रावणे वापि कारयेत्।
सप्तम्यां वा चयोदश्यामधिवासं सुराधिप॥
इति नानादेवतापवित्रारोपणकालः।

---

## अथ दमनकारोपणकालः।

देवीपुराणे ब्रह्मोवाच।

चैत्रादौ कारयेत् पूजां मम वत्स यथाविधि।

---

(१) विशेषेणोत्तरे इति ख०।

गन्धधूपार्घ्यनाद्यानैर्माल्याभिर्दमनोद्भवैः ॥
यष्टोमं पूजयेद्देवं सर्वकामानवाप्नुयात्।
सर्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥
उमां शिवं हुताशञ्च द्वितीयायान्तु पूजयेत्।
हविष्यान्नं नैवेद्यं देयं गन्धार्घ्यं पुनः।
फलमाप्नोति विप्रेन्द्र उभयोर्यत् प्रभाषितम् ॥
पञ्चम्यां पूजयेन्नागानन्तादीन् महोरगान्।
क्षीरं सर्पिश्च नैवेद्यं देयं सर्वविषापहम् ॥
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्व्वोपहारिकी।
इहैव सुखसौभाग्यमन्ते स्कन्दपदं व्रजेत् ॥
दशम्यां धर्मराजस्य पूजा कार्य्यातिगन्धिकी।
विगतारिर्निरातङ्क इह चान्ते परं पदम् ॥
एकादश्यामृषेः पूजा कार्य्या सर्व्वोपहारिकी।
धनवान् पुत्रवान् कान्त ऋषिलोके महीयते ॥
कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि।
रतिप्रीतिसमायुक्तमशोकमणिभूषितम् ॥
कुम्भे वा चित्रवस्त्रे वा लेख्यपात्रे पलादिभिः ॥
पौर्णमास्यां तथा कार्य्या सर्वकामसमृद्धये ॥
इन्द्राय वह्निमिश्राय काम्यिकं लभते फलम्।
चाटुमिष्टं प्रयच्छेद् यः सौभाग्यमतुलं लभेत् ॥

इति दमनकारोपणकालः।

---

## अथ मासविशेषेण पुष्पविशेषाः।

आषाढ़े विष्णु-कह्लारैरीप्सितं लभते फलम्।
नवमल्लिकया पूजा नभोमासि महाफला॥
कदम्बैश्चम्पकैरेवं नभस्ये सर्वकामदा।
आश्विने पद्मैः शतपत्रिकया पूजनं शुभम्॥
ईप्सितं लभते सर्वं सर्वकामफलप्रदम्।
माघ-फाल्गुनयोः पुष्पैः पूजनं कुन्द-कुड्मलैः।
चैत्रे दमनकेनापि पूजनं शतपत्रकैः॥
चम्पकैः कुसुमैर्वापि पूजनाच्च जगद्गुरोः।
पूर्णे संवत्सरे सर्वसिद्धिः समता भवेत्॥

भविष्यत्पुराणे।

पूजा चम्पक मालत्या इषेऽम्बुरुहदामभिः।

'इषे' आश्विने।

शतपत्रिकया पूजा कार्त्तिके सार्वकामिकी।
मार्गशीर्षोत्पलैः पूजा पुष्यैः स्यात् कुङ्कुमैः शुभा॥
माघेऽथ कुन्दकुसुमैर्मरुवकेन फाल्गुने।
शतपत्रिकया चैत्रे यः कुर्यात्सुरसत्तम।
लभते सर्वयज्ञानां सर्वदानफलं तथा॥

इति मासविशेषेण पुष्पविशेषाः।

---

## अथ रात्र्यादिभेदेन पुष्पभेदाः।

कमलानि कदम्बानि रात्रौ देयानि शङ्करे।

दिवाशेषाणि देयानि दिवारात्रौ च मल्लिकाः।
प्रहरन्निहते जाती करवीरमहर्निशम्॥

प्रहरमहर्निशं वा पूजायां ग्राह्यमनन्तरमुक्तारवीर्णमित्यर्थः।
कालिकाकारणयोः[1]।

नन्द्यावर्त्तं मियावर्त्तं श्वेतार्कं श्वेतपुष्पकम्।
पुन्नागं पङ्क्तिकं चोड्रं मालतीमुदये हरेत्॥
पङ्कजं बृहतीं व्याघ्रीं व्याघातं करवीरकम्।
उत्पलं पाटलीं द्रोणं मध्याह्ने तु प्रदापयेत्॥
चम्पकं वेदकं भद्रां धुत्तूरं वरकर्णिकाम्।
मालतीं मल्लिकाञ्चैव दापयेत्तु प्रदोषके॥
जातीं नीलोत्पलञ्चैव पुष्पं कुन्दं कदम्बकम्।
दिवर्णञ्चैव भद्रञ्च चतुर्यामे प्रदापयेत्॥
नीलोत्पलसमं पुष्पं न भूतं न भविष्यति।
कदम्बं जनकं जाती देयं ह्यार्धरात्रके।
अन्यपुष्पाणि सर्वाणि सन्ध्यसन्ध्यासु दापयेत्॥

इति रात्र्यादिभेदेन पुष्पभेदाः।

---

## अथ सार्वकालपुष्पाणि।

बिल्वपुष्पं शमीपुष्पं करवीरञ्च मालती।
कमलकं चम्पकञ्च यथः प्रीतिकरं मम॥
चम्पकाशोक-पुन्नागाः बकुलाराश्च तथा मम।

---

(१) कामिककारणयोरिति ख०।

सर्वदा द्विजशार्दूल ये चान्ये बहुगन्धिनः ।
एतैरपि पूजितो नित्यं प्रीतिं प्रीञ्च प्रयात्यहम् ॥
यैः कैर्वापीह कुसुमैर्जल-स्थलरुहैः शिवम् ।
संपूज्य प्रीणितो भक्त्या शिवलोके महीयते ॥

इति कालविशेषेण शिवपुष्पविशेषपूजनम् ।

---

अथ पुष्पादीनामभावे पत्रादिभिः पूजा कार्येऽति-निरूप्यते ।

स्कन्दपुराणे ।

अभावे पुष्पपत्राणामन्नाद्येनापि पूजयेत् ।
शालितण्डुलगोधूमैर्यवैर्वापि समर्चयेत् ।
गाणपत्यमवाप्नोति रुद्रलोके यथेप्सितम् ॥

भविष्यपुराणे ।

अभावेन हि[१] पुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यभावे तु फलान्यपि निवेदयेत् ॥
फलानामप्यभावे तु तृणगुल्मौषधीस्तदा ।
औषधीनामभावे तु भक्त्या भवति पूजितः ॥

इति पुष्पाद्यभावे पत्रादीनां पूजासाधनत्वं निरूपितम् ।

---

(१) अभावेनेत्यत्र विशेषणे तृतीया, पुष्पाभावविशिष्टः सन्नित्यर्थः ।

## अथ सामान्यतः क्षुद्रकर्मकालः।

नारायणीये।

कुलिकः स्थविरो योगस्तारा वैनाशिकः कुजः।
अष्टमोराशिरित्याद्याः कालाः स्युः क्षुद्रकर्मणीति॥

कुलिकस्तावत् शनैश्चराद्यादयः अष्टौ दिनाधिपमुख्योदयिनो दिवा सायं वा परार्द्धमुदितं कुलिकोदयाख्यम्[१]। प्रपञ्चितश्चायं विषहरप्रकरणे।

स्थविरोनाम

गुरुरव्यंशके चैवे तयोरेव दिनं यदि।
तद्दिने स्थांशके रिक्ते रोगर्णादिप्रतिक्रिया॥

ताराश्च

तिस्रश्च पूर्वा भरणी मघा च
पञ्चोग्रवीर्याणि वदन्ति तज्ज्ञाः।
रौद्रेन्द्र मूलो-रग-दैवतानि
क्रूराणि तेषूग्रपरिग्रहः स्यात्॥
वैनाशिकं वयोविंशं वराहमिहिरोदितम्।
द्वाविंशकन्तु मन्दाद्यैरष्टाशीत्येकशन्दितम्॥

'कुजः' अङ्गारकदिनम्, 'अष्टमोराशिः' उत्पत्तिकाले यस्मिन् राशौ चन्द्रो वर्त्तते तस्यैवाष्टमो राशिकालः। आदिशब्देन कला-तिथिवेलाग्रहणम्। तत्र कला नाम शुक्लपक्षे चन्द्रकला वर्द्धन्ते क्षीयन्ते च कृष्णपक्षे तत्रापि क्षयकालेऽष्टमीमारभ्यामावास्यापर्यन्तं

(१) पाठोऽयं आदर्शसम्मत एव मुद्रितः परन्त्वयं न समीचीनः।

कुर्य्यात्। 'तिथक्षः' चतुर्थ्यादयः, चन्द्रोदयमारभ्य पञ्चदशघटिकापर्य्यन्तं समुद्रस्य क्षोभो भवति या चन्द्रवेला, नाम तदा क्षौरादिकर्म न कुर्य्यात्। तदारभ्य पुनः पञ्चदशघटिकापर्य्यन्तं वेला नास्ति, तदा सर्व्वं कुर्य्यात्।

इति सामान्यतः क्षुद्रकर्मकालः।

## अथ वश्यादिकर्मविशेषेषु कालविशेषः कथ्यते।

मन्त्रतन्त्रप्रकाशे।

शिशिरादिष्वृतुष्वानं कर्म्माणं तत्र कथ्यते।
आचार्य्यैः कथितं पूर्व्वैः कर्म्मणां सिद्धिकारणम्॥
दिनादियामिनीमान्ते ऋतवः षड्व्यवस्थिताः।
शिशिराद्याः समारभ्य नाडीर्दश दश क्रमात्॥
आरक्तधवलो वासः शिशिरो वश्यकर्म्मणि।
उच्चाटनेऽथ विज्ञेयो वसन्तो लोहितो बुधा॥
ग्रीष्मो धूम्रशरीरश्च मारणे च नियुज्यते।
प्रावृट् धूम्रशरीरा तु स्तम्भने सा नियोजिता॥
शरत् कृष्णा मताकृष्टौ मन्त्रज्ञैर्गुरुपूजकैः।
हेमन्तो धवलो शुद्धः शान्तिकर्म्मादिकर्म्मकृत्॥

मन्त्रतन्त्रे।

शीकामयत्र जपेत्काले मन्त्रं पूर्वाह्णिकेऽथवा।
मध्याह्नरक्तमपं काले पूर्व्वाह्णिकेऽथवा॥
तथा काले च पूर्वाह्णे मध्याह्ने प्रजपेन्मनुम्।
आकर्षणे निशि शोभं चाक्रान्त् पूर्व्वान्तु तत् हिसेः॥

मन्त्रतन्त्रप्रकाशे ।

पूर्वाह्णे शुभदं कर्म शान्ते वापि निगद्यते ।
वश्योच्चाटनकं नाम चाकृष्टिः शान्तिकं तथा ।
आयुषो वर्द्धनञ्चेति षट्शुभानि प्रचक्षते ॥

मन्त्रतन्त्रे ।

प्रदोषो बुद्धिलाभाय सम्भ्रमञ्चापराह्णिकम् ।
विद्वेषाय जपेन्मन्त्रं मध्याह्ने तु ज्वराय च ॥
उच्चाटनार्थाय जपेन्मध्याह्नात् परतो नरम् ।
मारणं तु प्रकर्त्तव्यं यामादूर्द्धं तृतीयकात् ॥

इति वश्यावश्यादिकर्मविशेषेण कालविशेषः ।

---

## अथ विष्णुशयनादिकालनिर्णयः ।

तत्र भविष्यत्पुराणे ।

आभाकाषितपक्षेषु मैत्र-श्रवण-रेवती- ।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवः ॥

नारदीये ।

मैत्राद्यपादे स्वपितीह विष्णुः
श्रुतेश्च मध्ये परिवर्त्तनेति ।
पौष्णावसानेन सुरादिवन्द्या
प्रबुध्यते मासचतुष्टयेन ॥

अप्यर्कावेषु मासेषु मधुरे माधवस्य च ।

द्वादश्यां शुक्लपक्षे च प्रस्वापावर्त्तनोत्सवः ॥
पौष्णपौषे यदा नास्ति मैत्राद्यमपि नोनिशि ।
द्वादश्यामपि नो कुर्यात् उत्थानं शयनं हरेः ॥
द्वादश्यां तथा कुर्यादिति पठित्वा ।
निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥
विष्णुधर्म्मोत्तरे ।
विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
पुराणात् ।
उत्थाने शयने चैव तथा पार्श्वविवर्त्तने ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥
वाराहपुराणे ।
न पादनियमस्तत्र स्वापे वा परिवर्त्तने ।
पादयोगो यदा तत्र चक्षेणापि तदा भवेत् ॥
मत्स्यपुराणे ।
रेवतीचक्षपर्य्यन्तं मेघचन्द्रावलोकिते ।
उत्तिष्ठन्तं हृषीकेशं योगनिद्रा विमुञ्चति ॥
रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥
रेवत्यादिरथान्तो वा द्वादश्या च विना भवेत् ।
उभयोरप्यभावे तु सन्ध्यायां तु मयोत्सवः ॥

पुराणात्।

रेवत्यन्तो यदा राशौ प्राप्ते नारायणोत्सवे।

पादयोगमनादृत्य स एव प्रवर्त्तते॥

रेवत्यन्तो यदा राशौ गतः पादान्तरेऽपि च।

अपराह्णे तदा विष्णुर्योगनिद्रां अपोहति॥

रेवत्यन्तो यदा राशौ द्वादश्या च विना भवेत्।

उभयोरप्यभावः स्यात् सन्ध्यायां तु महोत्सवः॥

वाराहपुराणे।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।

आभाकाचितपक्षेषु शयनावर्त्तनादिकम्॥

अयमर्थः।

हरिशयनादौ शुक्ला द्वादशी आषाढ़-भाद्रपद-कार्त्तिकाना-मनुराधा-श्रवण-रेवतीनाम् आदिमध्यान्तपादयुक्ता रात्रिसन्ध्या दिवाक्षणयुक्ता च प्रशस्ता, यदा तु यथोपदर्शितकाले पादयोगो न प्राप्यते तदा द्वादशीनक्षत्रयोग आदरणीयात्[१]। पादयोरभ-योरुत्सवेन साम्यं विशेषः। दिवा रेवती-द्वादशीयोगे रात्रि-गामिनि नक्षत्रे शेषदिनान्ते विष्णोरुत्थानं यदा तु रेवत्या विना द्वादशी तदा द्वादशीसन्ध्यायामुत्थानादिकं भवति।

तदुक्तं।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।

आभाकाचितपक्षेषु शयनावर्त्तनादिकमिति॥

---

(१) आदरणीय इत्येवं पाठो युक्तः।

अथ केचिदाहुः।

यदि मैत्रादीनि नक्षत्राणि द्वादश्यां विहाय त्रयोदश्यां भवन्ति तदा चतुर्दश्यां तदनन्तराणि ज्येष्ठादीनि ततः पौर्णमास्यां तदनन्तराणि मूलादीनि, तथा सति आषाढ़ इति विरुध्येत तत्र नक्षत्रयुक्ता पौर्णमासी सन्निकृष्टेष्टादिग्रहणे: भाद्रपदमासस्य यथाकथञ्चित् प्राप्यते, "आद्योपान्तौ त्रिभौ ज्ञेयौ फाल्गुनस्य त्रिभो मतः। शेषा मासा द्विभा ज्ञेयाः"॥ इति वचनात्। न धनिष्ठा ज्येष्ठादौ हरिशयनादि भविष्यति।

यदुक्तं विष्णुधर्मोत्तरे।

मित्रे स्वापो द्विजोत्थानं सन्ध्यायां परिवर्त्तनम्।
पादयोगादन्यतिथौ द्वादश्यान्तु यथोगत इति॥

आचारसारे तु "द्वादश्यान्तु यथाक्रमा"दिति पठितम्। तेनान्यतिथिगतमैत्रादौ पादसम्बन्धे कटद्वादश्यां सन्धिसमये शयनादिक्रिया।

अत्र श्रीकरः प्राह[१] यदा गतकाले अमावस्याद्वयं भवति तदा मिथुनादितरेष्वाषाढ़ीभावात् सुप्तचन्द्रसूर्य्ये यद्वारशयन-रेवत्यादयो यदि वा चतुर्दश्यां भवन्ति तदापि अक्षरयोः सर्वोत्थानविलोकप्रसिद्धेस्तत्र दुर्लक्षनम्। तदा[२] दृष्टिके नक्षत्रप्राप्त्यनुसवे क्रियमाणे पञ्चममासप्राप्तौ "प्रबुध्यते मासचतुष्टयेनेत्यस्यानुपपत्तेः पादयोगादन्यथाव्ययय एव कल्पत्वादनादरणीयः। द्वादश्यां सन्धिसमय इति तु मायुरकथामयपेनोक्तम्। दिवा हि वैष्णवाना-

---

(१) श्रीकरमतं आदर्शसम्मतमेव मुद्रितं परमिदमादर्शदोषेणात्यन्ता-परिशुद्धमिति। (२) तत्रेति गचिह्नितपुस्तके पाठः।

मनुष्ठानं कल्पः माथुरस्य तदितरस्य तत्। माथुरो द्वादशी-पुरस्कारेण नक्षत्रसम्बन्धापेक्षणेन च इति तु नक्षत्रपादयोगपुर-स्कारेण द्वादश्यपेक्षाविरहेण च तिथिनक्षत्रमेलनं च पक्षद्वये प्रशस्तं तेन वैदिकशाखाविकल्पन्यायेनोपपत्तिः। तद्दायं तिथि-नक्षत्रयोगे-नानुष्ठानविकल्पः। कथं तर्हि हरिशङ्करयोः सहोत्थानेत्यस्य नान्या-तिथिरस्ति तस्मात् सर्वमनाकुलमिति। अत्र पण्डितपरितोषकृता दूषणमभिहितं अनुपपन्नमेतत्, तथा हि पादयोगादन्यतिथौ द्वाद-श्यामुपयोग इत्यस्य कोऽर्थः, द्वादश्या अन्या एकादशी त्रयोदशी एकादशी-द्वादशीतुल्यो च न तथा नक्षत्रसंयोग-पादयोगादरः। तदुक्तं विष्णुधर्मोत्तरे।

एकादश्यां द्वादश्यां च नित्यं सन्निहितो हरिः।
तत्र नक्षत्रसंयोगे पादयोगो न कारणमिति॥

अथ त्रयोदश्यामिति वक्तव्यं तथावत्याभाका इति विरुध्यते। न च कार्त्तिकशब्दोमासचतुष्टयप्रबोधनानुरोधेन प्राथिकः "आभाका-इत्यत्र वक्ष्यमाणप्रसिद्धस्य नियतलाभ्यासचतुष्टयेनेत्यस्यैव प्राथि-कानुवादत्वं युज्यते। तथा च कार्त्तिकोदयप्राप्तावुत्तरमासाश्रय-णेन कार्त्तिक एव विष्णुप्रबोधे सत्यपि मिथुनादित्ये स्वपने अधि-मासे सति पौर्णमासीद्वयस्य सम्भवात्। पञ्चभिरपि मासैरुत्थानं न विरुध्यते। अस्यापि द्विवर्षैर्मास इति षट्संख्योपपत्तिः, दिराषाढे विवेचकं दर्शयिष्यामः। न च हरि-शङ्करयोः सहोत्थानमिति लोक-प्रसिद्धिर्नियामिका, तस्याः शास्त्रप्रसिद्धितो दौर्बल्यात्। किञ्चैवं-वादिना प्रश्ने किं वाच्यं यदनुरोधात्कालप्रमाणं दृष्टादित्ये भवति

तदा किं तत्रैव हरिशयनं उताषाढ़ अपेक्षणीयः। तथापि चतुर्द्दश्यां नक्षत्रप्राप्तौ हरि-शङ्करयोः यद्दोत्थानमिति लोकप्रसिद्धिर्नि-र्मामिका, तस्याः शास्त्रं किं लोको न जानाति, मिथुनादित्ये वा चतुर्दश्यामनुराधाप्राप्तौ तत्राषाढ़शुक्लपौर्णमासीलक्षितमासापेक्षित-तयोत्थाने कथा युक्तापि हता तस्याश्रवणादाषाढ़प्रतिनियमात् श्रेष्ठादौ नक्षत्रलाभेऽपि शयनादिनिमित्तकरणं तदाधिमासपाता-यसम्भावात् विरापाढ़कल्पनमाश्रित्य तदनुष्ठानानन्तरव्यतिरेकेण तथाविधनक्षत्रप्राधान्यानुपपत्तेः यथापि भवति तथापि आभाका-दृत्यस्यावश्यादरणीयत्वं। किञ्चैवंवादिना आश्विनेऽपि लोकप्रसिद्धिं पुरस्कृत्य देवोत्थापनमभिदधता स्वयं लिखितमपि प्रसूतं यत्रापि द्विवर्षेमासो भवतीति तस्मादन्यथा वर्णनीयम्।

तच्च यदुक्तम्।

मिथ्रे स्वापोद्विवोत्थानं सन्ध्यायां परिवर्त्तनम्।
पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति॥

तस्यायमर्थः।

पादयोगादन्यस्यां यद्दोदश्यामपि पादयोगे सन्ध्यायां परिवर्त्त-नम्। द्वादश्यां नक्षत्रयोगे सति मिथ्रे स्वापोद्विवोत्थानं भवति। न पुनरुत्सवादिकमप्यन्यतिथौ नक्षत्रपादयोगादेवं सति आभाका-दृति मासचतुष्टयेनेति च दृश्यमुपपद्यते, एवञ्चैकादश्यामपि नक्षत्र-योगे वचनान्तरवशेन शयनाद्याचरणीयम्। यत्तु "द्वादश्यामेव तत् कुर्य्यादिति, तस्यापुरकत्वाश्रवणेन, यदि द्वादश्यां विनाथ एकादश्यां नक्षत्रलाभः तथापि द्वादशीवज्जितमय एव शयनादिकमनुष्ठेयम्।

यद्येकादश्यां नक्षत्रयोगो यदि वा द्वादश्यां सर्वथाभावाप्राप्तौ द्वादश्यां सन्निधत्ते श्रवणादिकं सन्ध्यायाश्च रात्रि-दिवसोभयात्मकत्वात् "निशि पापोदिवोत्थानमित्यपि नात्यन्तं विरुध्यत इति स एव मधुरमाधवकल्पेन नक्षत्रफलमस्तु एकादश्यां वा नक्षत्रप्राप्तौ प्रशस्ततमत्वेनान्यतरानुष्ठानं द्वादश्यां वापि कार्त्तिकाविरोधेनेत्युक्तमिति, तदेतदयुक्तं, "निशि पापोदिवोत्थानमिति वाक्ये भवदुक्तार्थस्वीकारे व्यवहितसम्बन्धप्रसङ्गात् अस्यार्थस्य वचनादप्रतीतेः तस्मात्तावामन्तराधिमासनिपाते तुला-वृश्चिकयोर्विकल्पेन दिवोत्थापनविधायकवचनस्य वक्ष्यमाणत्वात्। तदभिप्रायेणास्य वचनस्यार्जवेनोपपत्तेर्न भवदुक्तार्थस्वीकारे कारणमस्ति। तेन श्रीकराणां मतमेव साधु। कार्त्तिकशब्दस्य मुख्य एवाविकल्पाभिप्रायेणोपपद्यते। यच्च कार्त्तिकस्याधिमासत्वे शुद्धकार्त्तिक एव विष्णुप्रबोध इत्युक्तं तदपि विकल्पस्य वक्ष्यमाणत्वादयुक्तम्। तस्माद्यथोक्तमेव साधीयः।

भविष्योत्तरे।

प्राप्ते भाद्रपदे मासि एकादश्यां शुभे दिने।
कटदानं भवेद्विष्णोर्महापातकनाशनम्॥

'कटदानं' शयानस्य विष्णोरङ्गपरिवर्त्तिकरणम्।

तथा।

कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः।
मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विजः॥

वाराहपुराणे।

इयन्तु द्वादशी देव प्रबोधार्थन्तु निर्म्मिता।

तथैवा सर्वलोकानां हितार्थं शेषशायिना ॥

एवमन्येषामपि देवानां स्वीयस्वीयतिथिविशेषेण नक्षत्रविशेषेण च शयनाद्याचरणीयमिति ।

तदुक्तं मत्स्यपुराणे ।

यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या ।

तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकमिति ॥

केचित्तिथिविशेषेण केचिन्नक्षत्रविशेषेण सर्वेषां शयनादिकमाचरन्ति। प्रतिपदादिपञ्चदशतिथयो धनदादीनां देवानां, तत्रैकैव तिथिरनेक-देवताका यथा प्रतिपद्वैश्वानरस्य धनदस्य च। तत्रानुष्ठानविकल्प एवान्यायः सप्तविंशतिनक्षत्राण्यपि तस्यदैव व्यापीनीति गाणपत्या-दीनां नक्षत्रविशेषेण च शयनादिकमाचरणीयम्। नक्षत्रतिथिनियमं च रुद्रादीनां शयनादावाषाढ़ादौ नोत्सवः, न हि कदाचिच्चतुर्दश्या-माषाढ्यां रौद्रमार्द्रानक्षत्रं सम्भवति। एवमन्यत्रापि द्रष्टव्यम्। तस्मात्तिथिविशेषेणैव तेषां शयनादिकं विदेशे तु नक्षत्रविशेषेणापीति।

पूर्वेद्युरुपवासः स्यात् पूर्वाह्णे स्वापबोधयोः ।

अपराह्णे यदा तौ तु तदहर्नियमं विदुः ॥

पूर्वाह्णमारभ्य रात्रिविशेष एव पूर्वाह्ण एवेत्युच्यते दिवास्वापस्य निषेधात्। एवमेव च रात्रावुदयमाने तु गरुड़ध्वजे पूर्वेद्युरुपवासः स्यादपरेद्युर्धर्ममाचरेत् इति बोद्धव्यम्।

काश्यपपञ्चरात्रे।

अनुत्थाने च शयने मत्पार्श्वपरिवर्त्तने ।

यच्च बोदीचितः कश्चिदैष्णवो भक्तितत्परः ॥

अन्नं वा यदि भुञ्जीत फलमूलमथापि वा।
अपराधमहं तस्य न क्षमामि कदाचन।
क्षिपामि नरके घोरे दूनभुः संजायते क्षमाः॥

नैव यावद्भगवतो वासुदेवस्य शयनादिकालोऽवधारितः(१)। अधिमासनिपाते तु कर्कटे वृश्चिके च पुण्यादिकमाचरणीयमिति। तद्विधेः सङ्क्षेपादिकं विधीयते।

आह ज्योतिःपराशरः।

अतीते च द्वये सार्द्धे पञ्चपक्षे दिनद्वये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥
दिवसस्य हरत्यर्कः षष्टिभागस्तुतौ(२) ततः।
करोत्येकमहश्छेदं तथैवैकस्य चन्द्रमाः॥

एवं सूर्य्याचन्द्रमसौ उत्तरायणानन्तरं कालं दक्षिणायनात् प्राग्-वैशाखादौ गतिविशेषवशेनाधिमासं जनयतः। दक्षिणायनात् परः क्वचित्।

आह मरीचिः।

अधिमासो भवेद् यस्मिन् द्विराषाढो भवेत् तदा।
अमावास्याद्वयं दृष्ट्वा द्विराषाढं प्रकल्पयेत्॥

जाबालिः।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

---

(१) पाठोऽयं न पूर्व्वापरसङ्गतः। (२) पाठोऽयं आदर्शसम्मत एव मुद्रितः परमयं न समीचीनः, षष्टिभागस्तुर्वित्येव पाठो युज्यते।

कृष्णपक्षे दशम्यादौ मेषं गच्छेद्दिवाकरः ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

दशम्यादौ नवम्यामिति ।

तथा ।

माधवाद्येषु[1] मासेषु षट्सु दर्शद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

विष्णुः ।

अमावास्यामतिक्रम्य यदा सङ्क्रमते रविः ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
पञ्चम्यां कृष्णपक्षे च मेषं गच्छेद्दिवाकरः ।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

अत्रायं सङ्क्षेपार्थः । अधिमासो यदा दक्षिणायनात् प्राक् मेषादित्रिके पतति तदा द्विराषाढ़ः प्रथमवर्षे एव सम्पद्यते, तदा दक्षिणायनानन्तरं विष्णुः स्वपिति यदा कर्कटादित्रिके अधिमासः पतति तदा आगामिवर्षे शेषकर्कटादित्ये अवश्यमाषाढ़ीपौर्णमासी भवति तस्या वा आषाढ़त्वात् तत्रैव विष्णुः स्वपिति, द्विविधस्यापि च मासपातस्य नामावास्याद्वयादि स्मृतं, तथा च सति यदा कर्कटादित्रिके अमावास्याद्वयं भवति तदा शुक्लप्रतिपदि द्वितीयायां वा कन्यातुलासङ्क्रान्तिर्भवति, आगामिवर्षे मेषसङ्क्रान्तिरपि तथैव, प्रतिमासं सङ्क्रमणे च दिनद्वयवृद्ध्या पञ्चम्यां षड़शीतिमिथुनसङ्क्रान्तिर्भवति तदा द्विराषाढ़ं प्रकल्प्य कर्कटे-

(१) माध्रवाद्येष्विति ख० ।

ऽपमि शयनं न तु परमार्थतो द्विराषाढ़ः । तथाच गणितक्रम-क्षाणां मिथुनादित्ये भोगे अतीतेऽपि गम्यमाने भास्करे मिथुन-भाग एवादित्यस्य गणिते आषाढ़ेति न तत्त्वतो गणितामावास्या-दिनाभ्यां द्विराषाढ़ो गम्यते ।

तदाह सत्यः ।

श्रूयं त्यक्त्वा चतुर्थ्यन्ते षड़शीतिः स्थिते यदा ।
तदा दैवविदा चिन्त्यं द्विराषाढ़स्य कल्पनम् ॥

तथाच ज्योतिःशास्त्रे ।

शुक्लचतुर्थीमतिक्रम्य यदा सङ्क्रमते रविः ।
द्विराषाढ़ं प्रकल्प्यैव कर्कटादौ स्वपेद्धरिः ॥
प्रथमे च द्वितीये वा शुक्ले मेषमियाद्रविः ।
द्विराषाढ़क्रिया तावद्यावद्विष्णुप्रबोधनम् ॥

विष्णुः परकर्कटके स्वपेत् । शेषं शक्रोत्सवादि यथाकालमेव कार्य्यं । तथा हि ।

द्विराषाढ़विकल्पोऽयं वैकुण्ठशयनं प्रति ।
ध्वजस्तु(१) शतयज्वस्तु सिंह एव विधीयते ॥

बौधायनश्च ।

द्विराषाढ़क्रिया तावद् यावद्विष्णोः प्रबोधनम् ।
विशुद्धे तु हरौ कार्य्या सूर्य्यगत्यैव सा क्रिया ॥

यदा तु प्रथमे वर्षे द्विराषाढ़े कर्कटे हरिशयनं तदा कन्यायां

---

(१) अत्र ध्वजस्तु शतयज्वस्य इत्येवं पाठो युक्तः तथाच शतयज्वस्य शतक्रतो-रिन्द्रस्य ध्वजस्तु इन्द्रध्वजः सिंहे विधीयते इत्यन्वयः ।

परिवर्त्तनं शक्रोत्थापनञ्च, तुलायां दुर्गोत्सवः, वृश्चिके वासुदेवोत्थापनं।

यदाह विरिञ्चः।

दक्षिणाग्रामुखे भानौ स्वपेद्यदि हरिस्तदा।
कन्या-वृश्चिकयोरेव विवर्त्तन-विबोधने॥

तथा।

कर्कटके हरौ सुप्ते शक्रध्वजक्रियाश्विने।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्दनम्॥

इति। यदा तु प्रकल्प्यते द्विराषाढ़ः, यदा च स्वरूपतस्तदा शुक्लपक्षे श्रवणद्वये सति।

यथा कर्त्तव्यमाह मत्स्यः।

द्विराषाढ़े तु सम्प्राप्ते यदि सिंहे हरिः स्वपेत्।
परञ्च स्थापयेच्छक्रं कन्यायान्तु विसर्जयेत्॥

अथ कन्यायामेव श्रवणद्वयं भवति तदा नामादिश्रवणे शक्रोत्थापनं, अपरस्मिन् दुर्गोत्थापनं। तदाह।

सिंहकन्येऽथ पक्षे च शुक्लादेः पक्षसंयुते।
सिंहे परे शक्रमहः कन्यायां सिंह-दुर्गयोः[१]॥
शुक्लपक्षद्वये पूजा कल्पोऽयमपरः स्मृतः।
द्विराषाढ़स्य विवृद्धिः स्वपमाप्तिश्च तावता॥

कुत इत्यपेक्षायामाह।

शक्रध्वजोत्थापनञ्च विष्णोश्च परिवर्त्तनम्।
मासद्वयेन निर्द्दिष्टं प्रथमादि न कोविदैः॥

---

(१) वचनमिदं आदर्शग्रन्थानुगतमेव मुद्रितं परन्तु न सम्यक्।

दुर्गाधास्त्र त्रिभिर्मासैरधोमासं विनैव तत् ।
अधिमासनिपाते तु क्रमाद्विद्धादिकान् हरीन् ।
कन्या-तुला-वृश्चिकेषु क्रमशोत्थापयेद्ध्रुवम् ॥

अधिमासनिपात इत्यस्यायमपरोऽर्थः यदा कर्कटादिषु पौर्णमासीद्वयं भवति "अधिमासनिपाते तु क्रमाद्विद्धादिकान् हरीन्"। इति[१]।

तथा हि ।

आषाढद्वयसंयुक्तं पौर्णमासद्वयं यदा ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति।

तथाचोक्तं ।

वैशाखादितुलान्ते तु यदि पूर्णाद्वयं भवेत् ।
द्विराषाढः स विज्ञेयः शयनावर्त्तनादिषु ॥

वैशाखादीत्युपलक्षणं फाल्गुनद्वयस्यापि मासत्त्व विनष्टतया सम्भवात् तत्र फाल्गुनादावधिमासपाते कर्कटे हरिशयने सति मासचतुष्टयेनोत्थानं भवति कर्कटादिचतुष्टये लधिमासपातामिथुन एवाषाढ़ादा हरिशयने कृते श्रावणादीनामन्यत्र दैविके वृश्चिक एव कार्त्तिकमासो वर्त्तते तेन पञ्चभिरपि मासैरपैवोत्थानं "आभाकाषितपक्षेष्वित्यस्य बहुवचनत्वेनाधिकत्वात् "प्रबुध्यते मासचतुष्टयेनेत्यस्य प्रायिकाभिप्रायिकानुवादत्वात् एक एवासौ मासः ।

यदाह बादरायणः ।

एकमासस्थिते सूर्ये यदि स्यादधिमासकः ।

(१) इत्थं पाठः पूर्व्वापरसङ्गतिराहित्यात् न समीचीनः ।

एक एव हि मासोऽसौ[१] षष्टिभिर्दिवसैर्मतः ॥ इति।

एवं विरामाढ़फले प्राप्ते विरामाढ़ उच्यते न तु स्वरूपतो विराषाढ़ः एवं परिवर्त्तन-दुर्गोत्सवयोरपि बोद्धव्यं। तद्यथा मा-सयोरद्यं भाद्रपदोदयं भवति तदा देवशयनाशायनयोः कन्यायां शक्रोत्थापनम् परतः तस्याश्च मासेन दुर्गोत्थापनं मासद्वयेन विष्णोः। यदा त्वाश्विनोदयं भवति तदा सिंह एव शक्रोत्थापनं परिवर्त्तते तस्यान्मासद्वयेन दुर्गायाश्चयेण च षण्मेन च विष्णोरुत्थापनं, यदा तु कार्त्तिकोदयं भवति तदापि विराषाढ़ेन विराषाढ़करणं कर्कटे हरिशयनं शक्रोत्सवादि तु यथाकालमित्युक्तं। भविष्योत्तरे ऋधि-मासनिपातेऽपि तुलायामेव कृष्णोत्थापनमभिहितं।

मिथुनस्थे सहस्रांशौ स्थापयेन्मधुसूदनम्।
तुलायाश्च महाराज पुनरुत्थापयेत् तु तम्॥
अधिमासे प्रपतिते एष एव विधिक्रमः।
नान्यथा स्थापयेत्कृष्णं नान्यथोत्थापयेत्तथा॥

इत्यलमतिविस्तरेण।

ब्रह्माण्डपुराणे।

द्वादश्यान्तु सिते पक्षे मासे प्रौष्ठपदे तथा।
शक्रमुत्थापयेद्राजा विश्व-श्रवण-वासवे॥

'विश्वं' उत्तराषाढ़ा, 'वासवं' धनिष्ठा, श्रवणनक्षत्रपादे द्वादश्या योगः सुप्रशस्ततमः।

तदुक्तं।

(१) दिनमासोऽसाविति ख०।

वैष्णवादिगते चन्द्रे शक्रमुत्थापयेन्नृप ।
भरण्यामन्त्यपादे च निशि सुप्ते विसर्जयेत् ॥
अथवाद्यपादे च भरण्यां समवाप्नुवे ।
शक्रं प्रपातयेद्देवं यथा राजा न पश्यति ॥
सौर-भौमाधिपे वारे सूतके मृतकेऽपि वा ।
भूमिकम्पादिकोत्पाते शक्रं नैव प्रशंसयेत् ॥

निमित्तविशेषोपनिपाते तु भरण्यन्त्यपादानारभ्यैतदनुसन्धेयम् ।

अपि हडुवशिष्ठः ।

चन्द्रस्थगते भानौ यदा स्वापिति केशवः ।
अग्निपुत्रस्थे भानौ न चोत्थाप्यः पुरन्दरः ॥

'चन्द्रस्थं' कर्कटकः, 'अग्निपुत्रस्थं' कन्येति ।

अथवाह ।

द्विराषाढे च कन्यायां शक्रं नोत्थापयेद्यदि
राज्ञो राज्यं विनश्येत प्रजा चैव निपीड्यते ॥
काले तु स्थापिते शक्रे चिरं जीवति पार्थिवः ।
प्रजानामन्नवादेवं भवेद्दुग्धवती क्षितिः ॥ इति ।

शेषं द्विराषाढविवेकदर्शितमनुसन्धेयमिति ।

देवीपुराणे ।

प्रौष्ठपदेन चाष्टम्यां शुक्लायां शोभनर्क्षके ।
आश्विने वाथ शुक्लायां श्रावणे वा समुच्छ्रयेत् ॥

गर्गः ।

सिंहं गते दिनकरे सितपक्षपक्षे

पर्व्वांशपादमुपगच्छति वै प्रमाणे।
उत्तिष्ठते विविधमङ्गिरवन्द्यमध्ये
यान्यां ततो निशि निपीदति वज्रपाणिः॥ इति।

अथ च हरिशब्देन हरिदैवत्यं श्रवणनक्षत्रमुपलक्ष्यते।
भविष्योत्तरे।

राज्ञान्येनापि कर्त्तव्यो वर्षे वर्षे महोत्सवः।
इन्द्रध्वजसमुत्थानं महाद्रागकृतं यदि।
ततस्तु द्वादशे वर्षे कर्त्तव्यं नान्तरा पुनः॥

देवीपुराणे। सूर्य्यरथयात्रायाः कथञ्चिदकरणे द्वादशाब्द
शक्रध्वजः कर्त्तव्य इत्यभिधायोक्तम्।

इन्द्रध्वजस्य चाप्येवमुच्छ्रायो न कृतो यदि।
ततो द्वादशमे वर्षे कर्त्तव्यो नान्तरा पुनः॥
शक्रोत्सवो नभस्ये तु कार्य्यः सिंहगते रवौ।
द्वादश्यां शुक्लपक्षे तु नक्षत्रे विष्णुदैवते॥
तत्पातश्च भरण्यां श्रावणस्यामामिमतस्य तु।
अर्च्चयित्वा भगवतीं ततः शक्रो विसर्ज्जयेत्॥

भागवते।

कन्यायां कृष्णपक्षे तु पूजयित्वा खपेद्दिवा।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः॥
शुक्लपक्षे चतुर्थ्यां च देवीकेशविमोक्षणम्।
प्रातरेव तु पञ्चम्यां स्नापयेत्तु शुभैर्जलैः॥
सप्तम्यामम्बिकापूजा अष्टम्यां समुपोषणम्।

प्रताप नागरेणैव नवम्यां विधिवद्द्विजैः ॥
सम्प्रेषणं दशम्यान्तु क्रीड़ाकौतुकमङ्गलैः।
नीराजनं दशम्यान्तु बलवृद्धिकरं भवेत् ॥

वाराहे।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयन्।
उत्तरेणार्चनं कृत्वा श्रवणेन विसर्जयेत्।
मूलेन सकलां विल्वशाखामाहृत्य पूजयेत्॥
श्रवणपादो निशाभागे श्रवणस्य यदा भवेत्।
तदा देव्याः समुत्थानं नवम्यां दिनभागतः।
दशम्यां बलवृद्ध्यर्थं कुर्यान्नीराजनं नृप॥
स्वात्यादित्यतृतीयादौ सप्ताश्वाश्विने सति।
रक्षां कृत्वा दशम्यान्तु स्नात्वा नीराजयेत्तदा॥

नीराजनसंज्ञितां शान्तिं कुर्यादित्यर्थः।

आह व्यासः।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयेत्।
तदा देव्याः समुत्थानं नवम्यां न पुनर्दिवा॥
श्रवणपादो दिवाभागे श्रवणस्य यदा भवेत्।
तदा सम्प्रेषणं देव्या दशम्यां साधकोत्सवैः॥
रुयवर्षे तु मूलादौ नवम्यामाश्विने सिते।
चण्डिकामुपचारेण पूजयेद्राष्ट्रवृद्धये॥
पूर्वाषाढे तु कन्यायामुत्थानं नवयोषितः।
कुर्वतो क्षीयते राष्ट्रं प्रजा च विकला भवेत्॥ इति।

ब्रह्माण्डपुराणे।

तुलायां तिलतैलेन सायंसन्ध्यासमागमे।
आकाशदीपं यो दद्यान्मासमेकं निरन्तरम्।
सश्रीकाय श्रीपतये स श्रिया न वियुज्यते॥
दामोदराय नभसि तुलायां लोलया सह।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे॥

इति दीपदानमन्त्रः।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
सुखरात्रिस्वरूपा सा प्रदीपोज्ज्वलनाय वै॥
कुसुमकुसुमैर्गन्धैर्दीपैर्नीराजनाफलैः।
वसुर्वधूनववधूस्व[१] पृच्छेत् कुशलया गिरा॥
पूजयेच्च सदा लक्ष्मीमलक्ष्मीं मलनाशिनीम्।
जये पञ्चपताकानां ध्वजमेकं गृहे न्यसेत्॥

वाराहे।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले तदा विष्णुस्तुलायामथ वृश्चिके॥

लक्ष्मीप्रबोधः दीपालिकेति यस्य लोके प्रसिद्धिः।

कौमुदी यक्षरात्रिश्च कौमुमी फाल्गुनी तथा।
वासन्तिरिति विज्ञेया देशस्य महिमाश्रये॥
आश्विने पौर्णमास्याञ्च निशादेः कौतुकं स्मृतम्।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये॥

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्तु न समीचीनः। बन्धूर्बन्धूनवबन्धूंश्चेति पाठो युज्यते।

कार्त्तिके सितपक्षादौ तिथौ तु कुसुमांशुकैः।
यत्रार्चा यवराशिः स्यात् कार्य्या चेष्टसुखाय सा॥
माघशुक्लचतुर्थ्यान्तु वरमाराध्य च श्रियः।
पञ्चम्यां कुन्दकुसुमैः पूजा सा कौसुमी स्मृता॥
फाल्गुने पौर्णमास्यान्तु यदा वायविलायकः।
ज्ञेया सा फाल्गुनी लोके कार्य्या लोकसुखद्रुवे॥
चैत्राष्टम्यामशोकैस्तु चयोदश्यां स्मरार्चनम्।
तत्र कार्य्यमशोकार्थं ज्ञेया वायन्तिकेति सा॥

अथ ज्योतिःशास्त्रे।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले यदा विष्णुस्तल्पायामधिगच्छति।
उत्तिष्ठत्ययतो विष्णुः पश्चात् कृष्णचतुर्दशीम्॥

अथ भविष्यत्पुराणे।

स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत्।
प्रतिपद्ब्रह्मणश्चापि शुक्लमिश्रैः सदीपकैः।
वासोभिरक्षतैश्चापैर्गन्धैस्तद्ब्रह्मणः पदम्॥
पुष्पैर्गन्धैर्नैवेद्यैरात्मानं पूजयेद्बुधः।
तस्यां प्रतिपदायाञ्च स गच्छेद्ब्रह्मणः पदम्॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये विष्णुशयनादिकालनिर्णयो नाम सप्तदशोऽध्यायः।

---

## अथाष्टादशोऽध्यायः ।

---

### अथ विष्णुनामकीर्त्तने कालविशेषः ।

विष्णुधर्मोत्तरे वज्र उवाच ।

कस्मिन् काले तु देवस्य किं किं नाम प्रकीर्त्तयेत् ।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥

मार्कण्डेय उवाच ।

पुरुषं वासुदेवञ्च व्यासं सङ्कर्षणं प्रभुम् ।
प्रद्युम्नमनिरुद्धञ्च क्रमादेषु प्रकीर्त्तयेत् ।
वत्सभद्रं तथा कृष्णं कीर्त्तयेत दिनद्वये ॥
माधवं पुण्डरीकाक्षं तथा वै भोगशायिनम् ।
पद्मनाभं हृषीकेशं तथा देवं त्रिविक्रमम् ॥
क्रमेण राजशार्दूल वत्सरादिषु कीर्त्तयेत् ।
विष्णुञ्च मधुहन्तारं तथा देवं त्रिविक्रमम् ॥
वामनं श्रीधरञ्चैव हृषीकेशं तथैव च ।
दामोदरं पद्मनाभं केशवञ्च यदूत्तमम् ॥
नारायणं माधवञ्च गोविन्दञ्च तथा क्रमात् ।
चैत्रादिषु च मासेषु देवदेवमनुस्मरेत् ।
प्रद्युम्नमनिरुद्धञ्च पक्षयोः शुक्ल-कृष्णयोः ॥
शर्वः सर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
आदित्यादिषु वारेषु क्रमादेवमनुस्मरेत् ॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः॥
अव्यक्तः पुण्डरीकाक्षो विश्वकर्मा शुचिश्रवाः।
सम्भवो भावनोभर्त्ता प्रभवः प्रभुरीश्वरः॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
अथाद्यः शाश्वतो धाता कृष्णश्चेतानतुस्मरन्।
देवदेवस्य नामानि कथितानि च यादव॥
ब्रह्माणं श्रीपतिं विष्णुं कपिलं श्रीपतिं प्रभुम्।
दामोदरं हृषीकेशं गोविन्दं मधुसूदनम्॥
भूधरञ्जादिनं देवं शङ्खिनं पद्मिनं तथा।
चक्रिणञ्च महाराज प्रथमादिषु संस्मरेत्।
सर्वदा सर्वदेवानां देवदेवस्य यादव॥
नामानि सर्वाणि जनार्द्दनस्य
कालश्च सर्वः पुरुषप्रवीर।
तस्मात्सदा सर्वगतस्य नाम
ग्राह्यं यथेष्टं वरदस्य राजन्॥

वज्र उवाच।

कार्यारम्भे कथं कस्मिन् किं नाम परिकीर्त्तयेत्।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे॥

मार्कण्डेय उवाच।

चक्रिणं हलिनञ्चैव शार्ङ्गिणं खड्गिनं तथा।
क्षेमार्थी प्रवसन् राजन् दिक्षु प्राच्यादिषु स्मरेत्॥

अच्युतञ्चाधिकञ्चैव सर्व्वं सर्व्वेश्वरं प्रभुम्।
संस्मरेत् पुरुषं भक्त्या व्यवहारेषु सर्व्वदा॥
कूर्म्मं वाराहं मत्स्यं वा जलप्रतरणे स्मरेत्।
भ्राजिष्णुमग्निजनने जपेन्नाम त्वतन्द्रितः॥
संग्रामाभिमुखो गच्छन् संस्मरेदपराजितम्।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत्॥
नेत्रबाधासु सर्व्वासु हृषीकेशं तथैव च।
अच्युतञ्चामृतञ्चैव जपेदौषधकर्म्मणि॥
गरुडध्वजानुस्मरणादापद्भ्यो मुच्यते नरः।
ज्वरदुष्टशिरोरोगविषवीर्य्यं प्रशाम्यति॥
ग्रहनक्षत्रपीडासु देवबाधाटवीषु च।
दस्युवैरनिरोधेषु व्याघ्रसिंहादिसङ्कटे।
अन्धकारे तथा तीव्रे नरसिंहेति कीर्त्तयेत्॥
नारायणं शार्ङ्गधरं श्रीधरं गजमोक्षणम्।
वामनं खड्गिनञ्चैव दुःस्वप्नेषु तु संस्मरेत्॥
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम्।
बलभद्रन्तु युद्धार्थी कृष्यारम्भे हलायुधम्।
उत्तरणे वणिज्यार्थी श्रीरामभ्युदये नृप॥
जगतो मङ्गलं विष्णुं माङ्गल्येषु च कीर्त्तयेत्।
अग्निघातेष्वशेषेषु विश्वोकेषु तथा जपेत्(१)॥
उत्तिष्ठन् कीर्त्तयेद्विष्णुं प्रस्वापे माधवं नरः।

---

(१) विश्वोकेति तथा जपेदिति ख०।

भोजने चैव गोविन्दं सर्व्वत्र मधुसूदनम्॥
नारायणं सर्व्वकालं क्षुतप्रस्खलितादिषु।
स्नाने देवार्च्चने होमे प्रणिपाते प्रदक्षिणे॥
कीर्त्तयेद्वासुदेवञ्च अनुक्तेष्वपि यादवम्।
कार्य्यारम्भे तथा राजन् यथेष्टं नाम कीर्त्तयेत्॥
सर्व्वाणि नामानि हि तस्य राजन्
सर्व्वार्थसिद्धौ तु भवन्ति पुंसः।
तस्माद्यथेष्टं खलु देवनाम
सर्व्वेषु कार्य्येषु जपेत भक्त्या॥
इति विष्णुनामकीर्त्तने कालविशेषः।

---

## अथ मुख्यकालातिक्रमे कालाः।

ते च गौणा वाचनिकाश्चेति द्विप्रकाराः। तदेवं विचार्य्यते मुख्यकालासम्भवे गौणकालग्रहणं कार्य्यं न वेति, ननु को मुख्यः को वा गौणः। यो विहितः स मुख्यः। यथा वृद्धिश्राद्धादौ प्रातरादिः। यस्त्वविहितः तत्समीपवर्त्ती तेष्वेवाङ्गभावं नीयमानः सङ्गवादिः स गौणः। तदाह त्रिकाण्डमण्डनः।

स्वकालादुत्तरो गौणः कालः सर्व्वस्य कर्म्मणः।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि॥ इति।

अस्यार्थः पूर्व्वोत्तरयोः पूर्व्वस्य कर्म्मणो यः स्वकालस्तस्मादुपरितनः उपरितनकर्म्मकालाच्च पूर्व्वभावी पूर्व्वापरयोरन्तरालकाल इति यावत् सपूर्व्वस्मिन् कर्म्मणि गौणः। यद्वा यथोक्तान्तरालवदागामिक्रिया-

मुख्यकालस्यापि पूर्वस्मिन् कर्मणि गौणकालतां मन्यन्त इति। कथं पुनरुत्तरकर्मकालस्य पूर्वकर्मानुष्ठानाय पक्षमाश्रयुते यतः स्वकालात् प्रच्युतं पूर्वं कर्म तावद्विनष्टप्रायं उत्तरस्य स्वकालादप्रच्युतत्वाद्विनष्टरूपं तच यद्युत्तरकर्मकाले पूर्वं कर्म्म क्रियते तदा विनष्टसमाधानार्थं मविनष्टविनाशनं प्रसज्यते। तन्मृतजीवनाय जीवन्मरणमिव स्यात्। अत्र ब्रूमः। उत्तरे कर्मकाले द्वयोरवकाशे सतीदमुच्यते न पुनरसत्यपि तस्मिन्निति। ननु मुख्यकालसमीपवर्त्तिनः कालस्याभिधयाविनाभूतप्रवृत्तिलभ्यत्वाल्लाक्षणिकत्वमेवोचितं, सत्यमेवं, तथापि तत्कालोपलक्षणीभूतातपमाह्नवादिगुणोपनीतया लौकिक्या प्रातरादिशब्दप्रवृत्त्या तस्य गौणत्वमप्यस्त्येवेति गौणलोक्तिर्न विरुध्यते। ननु तदनुपदेशात्कथं पाक्षत्वमाश्रयते, प्रतिनिधिन्यायेनेति ब्रूमः। नन्वेवं तर्हि यथाकथञ्चित्स्वाङ्गस्याप्यधाङ्गादावपि कदाचित् प्रातरादित्यानि प्रसज्येरन्, किमत्रानिष्टं क्रियते एवं हि कदाचिदत्यन्तसाङ्गस्यवतः प्रचुरगौणप्रयोगवशिनः सङ्गवादेरभावात्, तदेवमस्मिन् संशये कश्चित् पूर्वाह्णे दैविकं श्राद्धमित्यादिकालसंयुक्तेषु वाक्येषु कालं प्रति कर्मणो गुणभावेन विधानं मत्वा प्रधानभूतविहितकालातिक्रमेण गुणभूतकर्मानुग्रहाय कालान्तरानुष्ठानं न कार्य्यमिति पूर्वपक्षमभिप्रेत्य सिद्धान्तितवान्, काले हि कर्म चोद्यते न कर्मणि कालः अतः कर्मणामेव प्राधान्यं कालमनूद्य कर्मणो विधानात्। ततः कर्म प्रति गुणभूतविहितकालातिक्रमे प्रधानभूतकर्मानुग्रहार्थं गौणकालेऽप्यनुष्ठानं कार्य्यं। कालहाने कर्मणोऽपि त्यागस्यान्याय्यत्वात्। न श्लोकच्छेदनं विना शेषभोजनमेव त्यज्यते। तदयुक्तम्। न तावत्कर्म-

गुणीभावेनात्र पूर्वपक्षो घटते कर्मणः फलसम्बन्धात्। फलवत्सन्निधावफलन्तदङ्गमिति न्यायेन कालस्यैवाङ्गत्वात्। न च कर्मणः कालार्थतया परार्थत्वात् फलश्रुतिरर्थवाद इति वाच्यम्। कालस्य फलवत्कर्मार्थत्वावगमात्, नापि कालगुणीभावोक्तः सिद्धान्तो घटते, असिद्धहेत्वाभासोपन्यासात्, न ह्यत्र कालानुवादेन कर्म विधीयते, कालस्यान्यतः प्राप्तिविरहात्। ननु कालस्य वाक्यान्तरेण प्राप्त्यभावेऽप्यमावास्यादिरूपेण लोकव्यवहारादेव ज्ञातस्यानुवादो भविष्यति। नैवम्। लोकसिद्धकालस्वरूपानुवादेन कर्मविधाने स्वयमफलत्वेन फलवत्कर्माङ्गत्वाभावेन च विधेरानर्थक्यप्रसङ्गात्। किं चास्मिन् कर्मण्युपदेश्यस्य कालस्य न कर्मान्तरसम्बन्धो घटते तस्यैतत्कर्मानुष्ठानेऽनन्तरमेवाऽनुष्ठितत्वात्। नन्वेवं तर्हि यजेत स्वर्गकाम इत्यत्रापि लोकादेवावगतं स्वर्गकामिनमनूद्य यागविधेरवधारणात् कथं न विध्यानर्थक्यं, उच्यते, यद्यपि स्वर्गकामस्योद्देश्यतया वाक्येऽन्वयः प्रतीयते तथापि भावनायाः प्रथमं भाव्यस्यापेक्षणात् पुरुषस्य च सिद्धरूपतया तदनर्हत्वात्स्वर्गकामपदेन कामनाविषयभूतः स्वर्ग एव साध्यत्वेन समर्प्यते स्वर्गकामस्तु पूर्वसिद्ध एवानूद्यते, यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ विशेष्याणामृत्विजां प्राप्तत्वादप्राप्तविशेषणमात्रपरत्वं वाच्यं एवमिहापि। तदुक्तं भट्टमिश्रैः।

अपेक्षितत्वात् भाव्यस्य कामशब्दा हि तत्पराः।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितमिति॥

अतः कालानुवादेन तत्र कर्मविधिरित्ययुक्तम्। तदेवं यथोक्तौ पूर्वोत्तरपक्षावयुक्तौ कौ च तर्हि तौ युक्तौ। उच्यते। तत्र तावत्पूर्वपक्षः नित्यं नैमित्तिकं चावश्यकत्वेन प्राप्ते तादृग्विधस्वरूपनिर्वाहार्थं यथा ब्रीह्यादित्युपक्रम्ये विहितासम्पत्तौ तत्सदृशप्रतिनिधिविधानं

कर्त्तव्यमिति सिद्धे मुख्यकालसम्पत्तौ गौणकालग्रहणं कार्य्यम् ।

तदाह विष्णुधर्म्मः ।

मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते ।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशोभवेदिति ॥

'ईदृशः' मुख्यकालसदृशः, अनेनास्य प्रतिनिधित्वेन योग्यता दर्शिता । स्मृतिप्रावपि गौणकालग्रहणं दर्शयन्ति ।

यथाकथञ्चित् कर्त्तव्यं नित्यं कर्म विजानता ।
न प्राप्नस्य विलोपोऽस्ति पैतृकस्य विशेषत इति ॥

तथा ।

दिवोदितानि कर्माणि प्रमादादकृतानि वै ।
यामिन्याः प्रहरं यावत्तावत् सर्व्वाणि कारयेत् ।
सन्धौ रात्रौ न कर्त्तव्यं श्राद्धं खलु विचक्षणैः॥ इत्यादि ।

सन्ध्यादिकालविशेषनिषेधस्य गौणत्वेन तत्कालग्रहणप्राप्तौ सत्या-मेवावकल्प्यते । नित्यनैमित्तिकेषु च यथा प्रकुर्यात् तथा कुर्या-दित्युपबन्धसामर्थ्यान्नित्यवदतस्ततोऽन्यान्यप्यङ्गान्यनित्यानि भवन्ति ।

तथाच पैठीनसिः ।

प्रधानस्याक्रियायामङ्गानि भवन्ति न भवन्ति चेति ।

ननु यदि मुख्यकालातिक्रमे गौणकालग्रहणं न विरुद्धम् तर्हि दर्शपूर्णमासपार्वणश्राद्धादीनाममावास्यादिविहितकालाभावे पञ्च-म्यादिषु कर्त्तव्यत्वं प्रसज्येत । का नामैषा प्रसक्तिरभिमतमेव हि गौणकालस्वीकारवादिनस्तदा तदनुष्ठानम् । एतच्च गौणकालग्रहणं न काम्येषु । तत्र हि सर्वाङ्गोपसंहारशक्तस्यैवाधिकारप्रतिपादनात् । गौणकालग्रहणे तु कर्म्मानुष्ठाने कश्चिद्विशेषश्चिकालस्मरणमोक्षप्रय-क्तादुच्यते ।

गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत् ।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥

कालान्तरोदितं कर्म एतेषु पूर्वोक्तलक्षणेषु गौणकालेष्वाचरेत् । पक्षान्तरमपि तेनैवोक्तं ।

.प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत् ।

अकृत्वेत्यत्र पूर्वकालताप्रतीतिरविवक्षिता । तदेवं गौणकालग्रहणे प्राप्तेऽभिधीयते सर्वत्र सप्तम्यन्तनिर्द्दिष्टस्य कालस्यानुपादेयत्वे सत्युद्देश्यैकस्वभावस्य निमित्तत्वेनाभिधानादधिकारिविशेषणत्वे विहितकालमन्तरेणाधिकाराभावात् कालान्तरे कृतमकृतमेव स्यादिति गौणकालग्रहणं न कार्य्यं विहितकालाभावेऽधिकाराभावः षाष्ठप्रथमाधिकरणे प्रापणाच्च निमित्तार्थेत्यत्र सूत्रे प्रतिपादितः ।

अत एव लौगाक्षिः ।

गणितात् ज्ञायते कालः काले तिष्ठन्ति देवताः ।
वरन्त्वेकाहुतिः काले नाकाले लक्षकोटयः ॥

यत्तु त्रिकाण्डमण्डनेन गौणकालग्रहणमुक्तं तत् पूर्वपक्षन्यायस्यैव सिद्धान्ततामभिमन्यमानेनोक्तमित्युपेक्षणीयं । यत्तु यथाकथञ्चिदित्यादिस्मरणं न तत्र गौणकालग्रहणं प्रतिपाद्यते किन्त्वपवादमेव । एतस्मादयमर्थोऽवगम्यते स्वकालप्राप्तस्य कर्मणो मुख्यद्रव्याद्यसम्पत्तिवशादिलोपोऽननुष्ठानं न कार्य्यम्, किन्तु स्वकाल एव यथाकथञ्चिन्मुख्यद्रव्यसदृशोपादानेन किञ्चिद्विकलमपि कर्त्तव्यमिति । यदपि "दिवोदितानि कर्माणीत्यादिवचनं न तेन सर्वेष्वपि कर्मसु सर्वेषां च गौणकालानां गौणकालयुक्त्या ग्रहणमुच्यते किन्तु केषुचिदेव कर्मसु किञ्चिदेव कालान्तरमनुकल्पत्वेन मुख्यकालवद्व्यापादप्राप्तमेव विधीयते। अतो नैतद्वचनबलेन संवत्सरर्त्तु-मास-तिथ्या-

दिकालविशेषविहितानि कर्माणि तत्तत्कालातिक्रमे कालान्तरेऽपि कर्तुं युज्यन्ते। यत्तु सन्ध्या-रात्र्योः श्राद्धनिषेधः सोऽपि रागतः प्राप्तस्य भक्षणादेरिव न्यायाभासोत्पादितमोहप्राप्तस्योपपद्यते। अथवा।

"द्रव्यं ब्राह्मणसम्पत्तिः श्राद्धं प्रतिदर्शितस्तथा।
अकाले यदि वा काले तीर्थश्राद्धं सदा नरैः॥

प्राप्तेरेव हि कर्त्तव्यम्"। इत्यादिभिरपराह्णादिव्यतिरिक्तकालप्राप्तस्य श्राद्धस्य सन्ध्यादिकालेष्वयं प्रतिषेधः। यत्तु मुख्यकालातिक्रमे नित्य-नैमित्तिकानां गौणकालेऽनुष्ठानं दृश्यते तत् क्वचित् शिष्ट-गर्हापरिहार-मनःपरितोषार्थं, क्वचिदनुकल्पत्वेन कालान्तरविधि-रित्यनवद्यम्। उपदिष्टकालातिक्रमे चाधिकाराभावादेव मुख्यद्रव्य-लोभान्मुख्यकालातिक्रमो न कार्य्यः, एतदेव च सन्देहपूर्वकमुपन्यस्य चिकाण्डमण्डनेन निर्णीतम्।

मुख्यकाले हि मुख्येन साधनं नैव लभ्यते।
तत्काल-द्रव्ययोः कस्य मुख्यत्वं गौणतापि वा॥
मुख्यकालमुपाश्रित्य गौणं मुख्यस्य साधनम्।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम्॥

तदेवमेतत्सिद्धं वचनमन्तरेण गौणकालग्रहणं न कार्य्यं सति तु वचने गौणस्य, तस्मात् परस्यापि ग्रहणं कार्य्यमिति।

इति श्रीमद्राजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसक-लविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णयः समाप्तः।

शिवमस्तु।

---